सर्वजघन्यो मिथ्यादृष्टौ सप्तोदयः, भङ्गानामत्रैका चतुर्विंशतिः, स एव भयोदययुक्तोऽष्टोदयो भवति, अथवा जुगुप्सया, अथवानन्तानुबन्धिना सप्तोदयो युक्तोऽष्टोदयो भवति, अत्र भङ्गानां चतुर्विंशतीनां त्रितयम्. भयजुगुप्सायुतः सप्तोदयो नवोदयो भवति, अथवा भयानन्तानुबन्धियुक्तोऽथवा जुगुप्सानन्तानुबन्धियुक्तो नवोदयो भवति, अत्रापि भङ्गानां चतुर्विंशतित्रिकं भयजुगुप्सानन्तानुबन्धिना युक्तः सप्तोदयो दशोदयो भवति, अत्रैका भङ्गानां चतुर्विंशतिः। एवं चतुर्ष्वप्युदयेष्वष्टौ चतुर्विंशतयो मिथ्यादृष्टाविति। सास्वादने चत्वारः क्रोधाः माना वा एवं माया लोभा वा वेदो युग्ममिति सप्तोदयः, भङ्गानामेका-चतुर्विंशतिः। भयप्रक्षेपात् स एवाष्टोदयो जुगुप्साप्रक्षेपाद्वाष्टोदयोऽत्र भङ्गानां चतुर्विंशतिद्विकम्। उभययुक्तसप्तोदयो नवोदयो भवति, भङ्गानामेका चतुर्विंशतिः। एवं सास्वादने चतस्रश्चतुर्विंशतयः। सम्यग्मिथ्यादृष्टौ अनन्तानुबन्ध्युदयो नास्ति; तत्स्थाने सम्यग्मिथ्यात्वस्य (प्रक्षेपो) भवति; शेषं सास्वादनवदिति। अविरतस्य क्रोधादीनामन्यतमत्रयं वेदो युग्ममिति षट्कोदयो ऽत्रैका चतुर्विंशतिः। स च भययुक्तः सप्तोदयोऽथवा जुगुप्सया युक्तोऽथवा वेदकसम्यक्त्वेन वा युक्तः सप्तोदयो भवति; अत्र त्रयं चतुर्विंशतिनाम्। भयजुगुप्साप्रक्षेपात् स एवाष्टोदयो भवति, भयसम्यक्त्वप्रक्षेपाद्वा जुगुप्सासम्यक्त्वप्रक्षेपाद्वाष्टोदयोऽत्र तिस्रो भङ्गानां चतुर्विंशतयः। षट्कोदयो भयजुगुप्सासम्यक्त्वयुक्तो नवोदयो भवति, भङ्गानामत्रैका चतुर्विंशतिरेवं चतुर्ष्वप्युदयेष्वष्टौ चतुर्विंशतयः देशविरते एत एवोदयाः द्वितीयकषायोदयरहिता वाच्याः। प्रमत्तेऽप्रमत्ते च द्वितीय (तृतीय) कषायोदयरहिता अविरतोदयास्तथैव वाच्याः अपूर्वकरणे एका चतुष्कोदयचतुर्विंशतिः द्वे पञ्चोदयचतुर्विंशतिके एका षट्कोदयचतुर्विंशतिरिति गाथार्थः॥ २६॥

**दसगाइसु चउवीसा एक्काछिक्कारदससगचउक्कं। एक्का य नवसयाइं सट्ठाइं एवमुदयाणं॥ २७॥**

भवन्ति, त एव पूर्वोक्ता द्वादश द्विकोदया अरतिशोकोदययुक्ता द्वादश चतुष्कोदया एवं चतुर्विंशतिः चतुष्कोदया भवन्ति। तत एव चतुर्विंशतिः चतुष्कोदया भययुक्ताः पञ्चोदया भवन्ति, तेऽपि जुगुप्सा युक्ताः षट्कोदयाः। एवं शेषेष्वपि पदवृद्ध्या चतुर्विंशतिः उदयविशेषा मन्तव्या इति गाथार्थः॥ २४॥

**अणसम्मभयदुगुंछाण उ(णो)दओ संभवे वि वा जम्हा। उदया चउवीसा विय एकेक्कगुणे अओ बहुहा॥**

व्याख्या—अनन्तानुबन्धिनां मिथ्यादृष्टौ विपाकोदयो वा भवति, यतस्तदुद्वलकस्य सम्यग्दृष्टेर्मिथ्यात्वप्राप्तस्यावलिकामात्रं कालं नोदयः स्यात्, सम्यक्त्वोदयोऽप्यविरतादीनामौपशमिकक्षायिकदृष्टीनां न भवति, वेदकदृष्टीनां भवत्येव, भयजुगुप्सयोस्तु मिथ्यादृष्ट्यादिषु अपूर्वकरणान्तेष्वध्रुवोदयित्वाद् भवत्युदयो न वा, अतोऽनेन कारणेनोदयास्तद्भवविकल्पाश्चतुर्विंशतयश्चैकैकगुणे बहुधा भवेयुरिति गाथार्थः॥ २५॥

तदेवानेकविधत्वं दर्शयति—

**मिच्छे सगाइचउरो सासणमीसे सगाइ तिण्णुदया। छप्पंचचउरपुव्वा चउरो तिअ(चउचउरो)अविरयाईणं२६**

व्याख्या—मिथ्यादृष्टौ सप्ताद्याश्चत्वारो भवन्त्युदयाः सप्त अष्ट नव दशेति। सास्वादनमिश्रयोः सप्तादयस्त्रय उदयाः सप्ताष्ट नवेति। अविरते षडाद्याश्चत्वारः, षट् सप्ताष्ट नवेति। देशविरते पञ्चाद्याश्चत्वारः पञ्च षट्सप्ताष्टेति। प्रमत्ते चतुष्काद्याश्चत्वारः चतुष्पञ्च षट् सप्तेति। अप्रमत्तेऽपि एवमेव चत्वारो गुणं प्रतिविशेषः। अपूर्वकरणेऽपि चतुष्काद्यास्त्रय उदयास्तस्य वेदकसम्यक्त्वाभावादिति। एत एवोदया भाव्यन्ते, अनन्तानुबन्धिरहितास्त्रिविधः क्रोधो मानो माया लोभो वा वेदो युग्मं मिथ्यात्वमेष

**इगिदुगचउ एगुत्तरआदसगं उदयमाहु मोहस्स । संजलणवेयहासरइभयदुगुंछतिकसायदिट्ठी य ॥ २३ ॥**

व्याख्या—एकद्विचतुरेकोत्तरमादशकमुदयमाहुः मोहनीयस्य नवोदयस्थानान्याचार्या ब्रूयुः, कथं ? सञ्ज्वलनान्यतमस्योदये एकम्, वेदान्यतमोदययुक्तस्य द्वितीयम्, सञ्ज्वलनवेदयोर्हास्यरत्युदययुक्तयोस्तृतीयम्, तत्रैव भयप्रक्षेपाच्चतुर्थम्, जुगुप्साप्रक्षेपात्पञ्चमम्, तृतीयकषायप्रक्षेपात् षष्ठम्, द्वितीयकषायप्रक्षेपात् सप्तमम्, प्रथमकषायप्रक्षेपादष्टमम्, दृष्टिप्रक्षेपान्नवमं स्थानमिति सामान्यदृष्टिनिर्देशान्मिथ्यात्वं (मिश्रं) सम्यक्त्वं वा यथासम्भवं वाच्यम्, चशब्दात् सास्वादनापूर्वकरणयोः अदृष्टित्वं च मन्तव्य मिति गाथार्थः ॥ २३ ॥

**दुगआइ दसंतुदया कसायभेया चउव्विहा ते उ । बारसहा वेयवसा अदुगा पुण जुगलओ दुगुणा ॥ २४ ॥**

व्याख्या—द्विकादयो दशान्ता उदयाः कषायभेदाच्चतुर्विधाः ते तु । द्वादशधा वेदवशादद्विकाः पुनः युगलतो द्विगुणा इति पदानि । पदार्थस्तु द्विकोदयाद्या अष्टावुदयाः, कषायाणां तु क्रोधादीनां चातुर्विध्याच्चतुर्विधा भवन्ति, पुनर्वेदत्रैविध्याद् द्वादशधा भवन्ति, अद्विका द्विकोदयरहिताः शेषाः सप्तोदया भूयो युगलद्वैविध्यात् द्विगुणाश्चतुर्विंशतिभङ्गा भवन्तीति । क्रोधादिचतुष्कं वेदत्रयं युग्मद्वयं अङ्कत्रयघाताच्चतुर्विंशतिभङ्गा एकद्विकोदयरहितोदयेषु भवन्ति, क्रोधादिभिः पुंवेदोदययुक्तैश्चत्वारः, स्त्रीवेदोदययुक्तैश्च, नपुंसकोदययुक्तैश्च, एवं द्वादश द्विकोदयाः । एवं च भङ्गकथनयैव वेदत्रयस्य बादरकषाये उदयः कथितो भवति, तुशब्दात् स च प्रथमपञ्चमभागे यदा पञ्चबन्धकः, न परतः, एकोदयस्य चातुर्विध्यात् । त एव द्वादश द्विगुणा इति भणता अपूर्वकरणं यावद्धास्यरत्यरतिशोकानामुदयो दर्शितो भवति । यतस्त एव द्वादश द्विकोदया हास्यरतियुक्ताश्चतुष्कोदया

व्याख्या—मोहनीयस्योत्कृष्टबन्धात् द्वाविंशतिसङ्ख्यात् मिथ्यात्वस्याबन्ध इति बन्धोपरमे एकविंशो बन्धो भवति सास्वादने। ततोऽपि प्रथमकषायाणां बन्धोपरमे (सम्यग्मिथ्यादृष्टौ अविरते च सप्तदशो बन्धः, ततोऽपि द्वितीयकषायाणां बन्धोपरमे) देशविरते त्रयोदशो बन्धः। ततोऽपि तृतीयकषायाणां बन्धोपरमे प्रमत्ताप्रमत्तापूर्वकरणेषु नवको बन्धः। अरतिशोकयोः प्रमत्ते बन्धोपरमः, 'अरईदुगं पमत्ते ठाइ' इति वचनात् 'चउक्कं नियट्टिम्मि' इति, हास्यरतिभयजुगुप्साचतुष्कमपूर्वकरणान्ते तिष्ठति, ऊर्ध्वं न बध्यत इत्यर्थः,। बादरकषायप्रथमपञ्चमभागान्ते पुंवेदस्य बन्धाभावः. ततो द्वित्रिचतुष्पञ्चमभागान्तेषु क्रोधादीनां क्रमेण बन्धोपरमः, कथमेतदनुक्तमप्यवसीयते,सुगममेतत्,क्वाऽन्यत्रोक्तत्वात्। '[१]पुंवेए अड वासा' सर्वजघन्या स्थितिस्तथापि सञ्ज्वलनस्थितेर्महती, अतोऽवगम्यते भिन्नकाले (त्वम)ऽविशुद्धपरिणामस्य (त्वं) च। [२]दो मासा इगि अद्धं अंतमुहुत्तं च" इति क्रोधादीनां स्थितिभेदाद् भिन्नकालत्वमुत्तरोत्तरविशुद्धिश्चावसीयते, अन्यत्र चतुर्णामपि स्थितिरविशेषादिति गाथार्थः॥ २१॥

देसूणपुव्वीकोडी नव तेरे सत्तरे उ तेत्तीसा। बावीसे भंगतिगं ठितिसेसेसुं मुहुत्तंतो॥ २२॥

व्याख्या—नवत्रयोदशयोरुत्कृष्टास्थितिर्देशोनपूर्वकोटिमात्रा भवति, यतस्तौ बन्धौ सर्वविरतदेशविरतयोः। सागरोपमाणां त्रयस्त्रिंशत् सप्तदश बन्धो भवति। द्वाविंशतिबन्धकाले भङ्गत्रयं भवति,अनाद्यपर्यवसितः, अनादिसपर्यवसितः, सादिसपर्यवसितः। शेषेषु पञ्चादिषु बन्धेष्वन्तर्मुहूर्तमात्रा स्थितिरुत्कृष्टा इति, इयमेव प्रागुक्तेषु जघन्या, पञ्चादिषु सामयिकी इति, उत्क्रमभणनादेकविंशबन्धे सास्वादनकालो यतः स तस्यैव भवतीति गाथार्थः॥ २२॥

---

१ द्वार ५ गाथ ४७। २ द्वार ५ गाथा ४८।

नैकद्वित्रिचतुर्थैकपञ्चाष्टनवमेषु भवन्ति। प्रथमे मिथ्यादृष्टिगुणे द्वाविंशो बन्धः,द्वितीये सास्वादनगुणे एकविंशो बन्धः,तृतीयचतुर्थगुणयोः सप्तदशो बन्धः, देशविरतगुणे पञ्चमे त्रयोदशो बन्धः, प्रमत्ताप्रमत्तापूर्वकरणेषु नवप्रकृत्यात्मको बन्धः, पञ्चचतुस्त्रिद्व्येकप्रकृतिबन्धा अनिवृत्तिबादरगुणे नवमे पञ्चविभागीकृते क्रमेण भवन्ति,पुंवेदस्य क्रोधादीनां च बन्धव्यवच्छेदादिति गाथार्थः॥१९॥

**हासरइअरइसोगाण बंधया आणवं दुहा सव्वे। वेयविभज्जंता पुण दुगइगवीसा छहा चउहा॥२०॥**

व्याख्या—हास्यरत्योररतिशोकयोश्च व्यत्यासाव्यत्यासेन 'आनवं' नवकबन्धं यावत्, सर्वेऽपि बन्धा द्विप्रकारा भवन्ति, यत एतेषु पञ्चस्वपि बन्धेषु युग्मयोर्नियमादेकेन भाव्यम्, नोभयेनेति। वेदत्रयेण भूयोऽपि विभज्यमानो द्वाविंशो बन्धः षोढा भवति, यतो वेदत्रयात् तत्रैकेन भाव्यम्। एकविंशस्तु चतुर्द्धा, भङ्गकसङ्ख्यानिगदनादेव ज्ञापयति, तत्राशुभस्य नपुंसकवेदस्य बन्धो नास्ति सप्तदश त्रयोदश नवबन्धा द्विधैव, अत्रापि भङ्गकसङ्ख्यानिगदनादेवावसीयते। स्त्रीवेदस्य बन्धव्यवच्छेदः सर्वबन्धेष्वर्थादुपपन्नः। प्रकृतीनां प्राकट्यमाह षोडशकषाया भयजुगुप्सामिथ्यात्वयुक्ता ध्रुवबन्धिन्य एकोनविंशतिप्रकृतयः वेदयुग्मान्यतरयुक्ता द्वाविंशतिर्भवन्ति। एवं वेदत्रयेण युग्मेन च भज्यमानानां प्रकृतीनां षड्द्वाविंशतयो भवन्ति मिथ्यादृष्टौ। सास्वादने तु ध्रुवबन्धिन्यो मिथ्यात्वरहिता हास्यरतिपुरुषवेदयुता प्रथमा एकविंशतिः, स्त्रीवेदव्यत्यासात् द्वितीया, अरतिशोकपुरुषयुक्ता ध्रुवा तृतीया एकविंशतिः, स्त्रीवेदेन चतुर्थी। सप्तदशत्रयोदशनवबन्धाः पुरुषवेदोपलक्षिता द्विधैव भवन्ति। अप्रमत्तापूर्वकरणयोर्नवकबन्धे एकविध एवारतिशोकयोरबन्धात्। पञ्चादयोऽप्येवमेवैकविधा इति गाथार्थः॥२०॥

**मिच्छाबंधिगवीसो सत्तर तेरो नवो कसायाणं। अरईदुगं पमत्ते ठाइ चउक्कं नियट्टिंमि॥२१॥**

तेरसमछट्ठएसुं सायासायाण बंधवोच्छेओ । संतउइण्णाइ पुणो सायासायाइ सव्वेसु ॥ १७ ॥

व्याख्या—त्रयोदशसु षट्सु गुणस्थानेषु आत्रयोदशमषष्ठगुणेषु यथासङ्ख्येन सातासातयोः बन्धव्यवच्छेदा भवति, बन्धस्योपरतिरित्यर्थः । सदुदयभावेन पुनः सातासाते सर्वष्वपि गुणेषु भवतः । भूयः सातासातोच्चारणं निरर्थकं व्यत्यासेन च कस्मात् क्रियते ? भूय उच्चारणमयोगिनोऽन्तसमये उभयसदुदयस्यानियमार्थम् । व्यत्यासोच्चारणं सातस्यैव बाहुल्येनान्तसमये सदुदय इति गाथार्थः ॥ १७ ॥

बंधइ उइण्णयं चिय इयरं वा दोवि संत चउभंगो । संतमुइण्णमबंधे दो दोण्णि दुसंत इइ अट्ठ ॥ १८ ॥

व्याख्या—यदेव वेद्यमुदीर्णं तदेव बध्नाति जीव इति द्वौ भङ्गौ, अन्यदुदीर्णमन्यद् बध्नाति एतावपि द्वावेवं चत्वार उभयसत्तया भवन्ति । सदेवोदीर्णं सातमसातं वाऽबन्धकस्यायोगिनोऽन्तसमयेऽन्यतरक्षयात् द्वावेवं षट्, द्वावन्यौ सातासातयोः सद्भावेनान्यतरोदयेन भवतोऽयोगिन एवोपान्त्यसमयं यावत्, एवं वेदनीयस्याष्टौ भङ्गाः असातबन्धोदययोरुभयं सत्प्रथमः, असातबन्धः सातोदय उभयं सत् द्वितीयः, सातबन्धोऽसातोदय उभयं सत् तृतीयः, सातबन्धोदययोरुभयं सच्चतुर्थः, अयोगिनोऽबन्धे सातोदयः उभयं सत्पञ्चमः, असातोदय उभयं सत्षष्ठः, सातं सदुदीर्णं सप्तमः, असातसदुदीर्णः अष्टमो भङ्ग इति गाथार्थः ॥ १८ ॥

दुगइगवीसा सत्तर तेरसनवपञ्चचउरतिदुएगो । बंधो इगिदुग चउत्थय पणउणवमेसु मोहस्स ॥ १९ ॥

व्याख्या—अल्पवक्तव्यान्युक्तानि षट्कर्म्माणि मोहनीयमारभ्यते तस्य च दश बन्धस्थानानि द्वाविंशः एकविंशःसप्तदश त्रयोदश नव पञ्च चतुस्त्रिद्व्येकबन्धः, बन्धशब्दः प्रत्येकं दशस्वपि सम्बन्धनीयः, विंशशब्द उभयत्र सम्बन्धनीयः, यथासङ्ख्ये-

व्याख्या—क्षपकश्रेण्यां बादरकषाये सूक्ष्मकषाये चतुर्बन्धके अबन्धके च क्षीणकषाये षट् प्रकृतयः सद्भावेन भवन्ति, चतसृणामुदयः, एवमेकादश भङ्गाः, सप्ततिकाकारमतेन । कर्म्मस्तवकारमतेन पञ्चानामप्युदयो भवति, ततश्च त्रयोदश भङ्गाः, एवं दर्शनावरणत्रिकसंवेध इति गाथार्थः ॥ १४ ॥

**बंधो आदुगदसमं उदओ पण चोद्दसं तु जा ठाणं । निच्चुच्चगोत्तकम्माण संतया होंति सव्वेसु ॥ १५ ॥**

व्याख्या—नीचैर्गोत्रोच्चैर्गोत्रकर्म्मणोराद्वितीयमादसमं च गुणं यावद्बन्धो यथासङ्ख्यं भवति । उदयस्तु आपञ्चममाचतुर्दशं च गुणं यावद् भवति यथासङ्ख्येन । उभयोरपि सत्कर्म्मता तु सर्वेष्वपि गुणेषु भवतीति गाथार्थः ॥ १५ ॥

**बंधइ ऊइण्णयं चिय इयरं वा दोवि संत चउभंगा । नीएसु तिसुवि पढमो अबंधगे दोण्णि उच्चुदए ॥१६॥**

व्याख्या—यदेव गोत्रमुदीर्णं तदेव बध्नाति, नीचैर्गोत्रमुच्चैर्गोत्रं वा द्वौ भङ्गौ, तयोरन्यद् बध्नाति, अन्यदुदीर्णं एतावपि द्वौ भङ्गौ, एवं चतुर्ष्वपि सद्भावेनोभयम्, सदुदयबन्धेषु, नीचैर्गोत्रमपि प्रथमः एकशेषत्वादेकवचनमबन्धकेषु द्वौ भङ्गौ उच्चैर्गोत्रोदयोपलक्षितौ एवं सप्त एत एव क्रमेण स्थाप्यन्ते सदुदयबन्धेषु नीचैर्गोत्रेण प्रथमः, यतो वाय्वग्निकायिकत्वं गतो जीवः उच्चैर्गोत्रं नीचैर्गोत्रभावेन परिणमयति ततः एकसत्ता भवति । नीचैर्गोत्रं बध्नाति, तदेवोदीर्णमुभयं सद्द्वितीयः । नीचैर्गोत्रं बध्नाति उच्चैर्गोत्रमुदीर्णमुभयं सत्तृतीयः । उच्चैर्गोत्रं बध्नाति नीचैर्गोत्रमुदीर्णमुभयं सच्चतुर्थः । उच्चैर्गोत्रं बध्नाति उदीर्णं चोच्चैर्गोत्रं उभयं सत्पञ्चमः । उपशान्तकषायादिष्वबन्धकेषूच्चैर्गोत्रोदयेनोभयसत्तया षष्ठः । अबन्धकस्यायोगिनो नीचैर्गोत्रक्षयादुच्चैर्गोत्रसदुदयेन सप्तमो भङ्ग इति गाथार्थः ॥ १६ ॥

यावद्बध्यते सातत्येन, यतः सम्यक्त्वसम्यमिथ्यात्वयोरियन्तं कालमेव स्थितिः, तदतिक्रान्तौ मिथ्यात्वेनावश्यं भाव्यम्, तस्मिंश्च सति नवविधो बन्ध इति। चतुर्विधबन्धस्तु समयादन्तर्मुहूर्त्तं सातत्येन भवति, यतोऽपूर्वकरणद्वितीयभागे चतुर्विधस्य प्रारम्भो भवति, तस्य चोपशमकस्य सामयिकी जघन्या स्थितिः, क्षपकश्रेण्यामन्तर्मुहूर्त्तम्, स चोत्कृष्टकाल इति गाथार्थः ॥ ११ ॥

दंसणसनिद्ददंसण उदओ समयं तु होइ जा खीणो। जाव पमत्तो नवण्ह उदओ छसु चउसु जा खीणो ॥१२॥

व्याख्या—दर्शनावरणस्य द्वे उदयस्थाने, चक्षुरादिदर्शनावरणचतुष्कस्य, निद्रापञ्चकान्यतमया युक्तस्य वा, अनयोः स्थानयोः क्षीणकषायगुणस्थानं यावदुदयो भवति, नास्त्यन्यो भेदः। समकम्—एककालम्, भिन्नकालं तु परिपाट्या यावत्प्रमत्तस्थानं तावन्नवानामपि प्रकृतीनामुदयो भवति, अप्रमत्तादारभ्य यावत् क्षीणकषायोपान्त्यसमयं तावत् स्त्यानर्द्धित्रिकक्षयात् षण्णामुदयो भवति, अन्तसमये तु तस्यैव चतसृणामुदयः, निद्राप्रचलयोस्तत्रासम्भवात्, तुशब्दस्यानेकार्थत्वात् क्षपकश्रेण्यां क्षपकाणां चतसृणामेवोदयः, तेषां तीव्रपरिणामत्वात् विशुद्धत्वाच्चेति गाथार्थः ॥ १२ ॥

चउपणउदओ बंधेसु तिसुवि अब्बंधगे वि उवसंते। नव संतं अट्ठेवं उइण्णसंताइ चउखीणे ॥ १३ ॥

व्याख्या—चतुर्णां पञ्चानां वा त्रिष्वपि बन्धेषु नवषट्चतुष्प्रकारेषूदयो भवति, अबन्धकेऽप्युपशान्ते एवमुपशमश्रेण्यां नवसद्भावेनाष्टौ भङ्गाः त्रयो बन्धकभेदाश्चतुर्थोऽबन्धकः उदयस्य द्वैविध्यादष्टौ भङ्गाः, क्षीणकषायान्तसमये चतुर्णामुदयः सत्कर्मता च नवमो भङ्ग इति गाथार्थः ॥ १३ ॥

खवगे सुहुमंमि चउबन्धगंमि अब्बंधगंमि खीणम्मि। छस्संतं चउरुदओ पंचण्हवि केइ इच्छंति ॥ १४ ॥

**नव छच्चउहा बज्झइ दुगट्ठदसमेसु दंसणावरणं। नव बायरंमि संतं छक्कं चउरो य खीणंमि ॥ १० ॥**

व्याख्या—दर्शनावरणस्य त्रीणि सद्बन्धस्थानानि, नवधा–नवप्रकारमविकलम्, षड्विधं–स्त्यानर्द्धित्रिकं विना, चतुर्द्धा–चतुष्प्रकारं दर्शनावरणं चक्षुरचक्षुरवधिकेवलदर्शनावरणमिति । तन्नवप्रकारं मिथ्यादृष्टिसास्वादनाभ्यां बध्यते द्वाभ्यामपीति । सम्यग्मिथ्यादृष्ट्यविरतदेशविरतप्रमत्ताप्रमत्तापूर्वकरणैः षड्विधं बध्यते । चकारस्य समुच्चयार्थस्याप्यनेकार्थत्वादष्टमगुणप्रथमत्रि(वि)भागं यावत् षड्विधं बध्यते । तत्स्थानाद्दशमगुणस्थानं यावच्चतुर्विधं बध्यते । 'नव नवसु होंति संता,[1] स्वार्थसिद्धौ ' नव वारयम्मि संत ' यद् भणति तत्क्षपकश्रेणीं ज्ञापयति । यदुपरितनानां तदधस्तनानां भवत्येव, अप्रतिषिद्धमेतच्च ज्ञापयति । ततश्चायमर्थः–नवविधमनिवृत्तिबादरकषायाद्यविभागं यावत् सद्भवति स्त्यानर्द्धित्रिके क्षीणे तस्यैव षड्विधं सूक्ष्मसम्परायक्षीणकषाययोश्च सद्भवति, क्षीणकषायचरमसमये एकं चतुर्विधं निद्राप्रचलाक्षयात् सद्भवति, उपशमश्रेण्यां तूपशान्तकषायं यावन्नवविधमपि सद्भवति, न तत्र त्रिविधस्यापि प्ररूपणा सम्भवति, तेन सूत्रे सा सूत्रकारेणानादृता इति गाथार्थः ॥ १० ॥

**नवभेए भंगतियं बे छावट्ठीउ छव्विहस्स ठिई । चउसमयाओ अंतो अंतमुहुत्ताउ नवछक्के ॥ ११ ॥**

व्याख्या—नवभेदे नवप्रकृत्यात्मके काले भङ्गत्रयं भवति अनाद्यपर्यवसानोऽभव्यानाम्, अनादिसपर्यवसानो भव्यानाम्, सादिसपर्यवसानो भ्रष्टसम्यक्त्वानाम्, जघन्यतोत्कृष्टता चास्मिन्नेव भङ्गे 'अंतमुहुत्ताउ णव छक्क' त्तिवचनात् अन्तर्मुहूर्त्ताद्यावत्पुद्गलपरावर्त्तार्द्धं देशोनं नवविधं बध्यते दर्शनावरणं सातत्येन इति । षड्विधं तु अन्तर्मुहूर्त्तादारभ्य द्वे षट्षष्ठीसागरोपमाणां

[1] नव नवसु भवन्ति सत्.

भङ्गा इत्येवमष्टाविंशतिः। प्रागुक्तभङ्गोच्चारणमाह–' [1]बंधो नत्थि नरयाउयं वेयइ नरयाउयं संतं १ तिरियाउयं बंधेइ नरयाउयं वेयति नरयतिरियाउसंतं २ बंधोवरमे णरयाउयं वेयइ तिरियणरयाउयं संतं ३ मणुयाउयं बंधइ निरयाउयं वेयइ नरयमणुयाउयं संतं ४ बंधोवरमे णरयाउयं वेयइ नरयमणुयाउयं संतं ५। एवं देवगतावपि, किन्तु नरकायुश्शब्दो देवायुःशब्देन परावर्त्तनीयः, नान्यो विशेषः २। [2]बंधो णत्थि तिरियाउं वेयइ तिरियाउयं संतं १ नरयाउयं बंधइ तिरियाउं वेयइ तिरियनिरयाउयं संतं २ बंधोवरमे तिरियाउयं वेयइ नरयतिरियाउयं संतं ३ तिरियाउयं बंधइ तिरियाउयं वेयइ तिरियतिरियाउयं संतं ४ बंधोवरमे तिरियाउयं वेयइ तिरियतिरियाउयं संतं ५, मणुयाउयं बंधइ तिरियाउयं वेयइ तिरियमणुयाउयं संतं ६ बंधोवरमे तिरियाउयं वेयइ तिरियमणुयाउयं संतं ७ देवाउयं बंधइ तिरियाउयं वेयइ तिरियदेवाउयं संतं ८ बंधोवरमे तिरियाउयं वेयइ तिरियदेवाउयं संतं ९ एते तिर्यग्गतौ नवभङ्गाः। एवं मनुष्यगतावपि, तिर्यग्मनुष्यायुषोर्व्यत्यासादिति गाथार्थः ॥ ९ ॥

---

१ बन्धो नास्ति, नरकायुष्कं वेदयति नरकायुष्कं सत् १ तिर्यगायुष्कं बध्नाति नरकायुष्कं वेदयति नरकतिर्यगायुषी सती २ बन्धोपरमे नरकायुष्कं वेदयति तिर्यग्नरकायुष्कं सत् ३ मनुष्यायुष्कं बध्नाति नरकमनुष्यायुष्कं सत् ४ बन्धोपरमे नरकायुष्कं वेदयति नरकमनुष्यायुष्कं सत् ५

२ बन्धो नास्ति तिर्यगायुः वेदयति तिर्यगायुष्कं सत् १ नरकायुष्कं बध्नाति तिर्यगायुः वेदयति तिर्यङ्नरकायुष्कं सत् २ बन्धोपरमे तिर्यगायुष्कं वेदयति नरकतिर्यगायुष्कं सत् ३ तिर्यगायुष्कं बध्नाति तिर्यक्तिर्यगायुष्कं सत् ४ बन्धोपरमे तिर्यगायुष्कं वेदयति तिर्यक्तिर्यगायुष्कं सत् ५ मनुष्यायुष्कं बध्नाति तिर्यगायुष्कं वेदयति तिर्यग्मनुष्यायुष्कं सत् ६ बन्धोपरमे तिर्यगायुष्कं वेदयति तिर्यग्मनुष्यायुष्कं सत् ७ देवायुष्कं बध्नाति तिर्यगायुष्कं वेदयति तिर्यग्देवायुष्कं सत् ८ बन्धोपरमे तिर्यगायुष्कं वेदयति तिर्यग्देवायुष्कं सत् ९

नाणंतरायबंधो आसुहुमं उदयसंतया खीणं । आइमदुगचउसत्तमनारयतिरिमणुसुराऊणं ॥ ७ ॥

व्याख्या—ज्ञानान्तराययोः सामस्त्येन सूक्ष्मसम्परायस्थानं यावद्बन्धोऽस्ति, न परतः । उदयसद्भावौ पुनः क्षीणकषायं यावदिति । नारकायुषो मिथ्यादृष्टिं यावत्तिर्यगायुषो यावत्सास्वादनम्, मनुष्यायुषोऽविरतं यावत्, देवायुषोऽप्रमत्तं यावत्बन्धो यथासङ्ख्येनेति गाथार्थः ॥ ७ ॥

नारयसुराउ उदओ चउ पंचमतिरि मणुस्स चोद्दसमं । आसम्मदेसजोगी उवसंता संतयाऊणं ॥ ८ ॥

व्याख्या—नारकदेवायुषोरुदयो अविरतगुणस्थानं यावत्तत्परतः तिर्यगायुषो देशविरतस्थानं यावन्मनुष्यायुषश्चतुर्दशगुणं यावदिति । नरकायुषोऽविरतसम्यग्दृष्टिं यावत्सत्ता तिर्यगायुषो देशविरतिं यावन्मनुष्यायुषस्त्वयोगिनं यावत्, देवायुषस्सत्तोपशान्तगुणं यावत्, यतो बद्धायुष्कस्य देवायुषा एवोपशमश्रेणी भवति, नान्येन इति गाथार्थः ॥ ८ ॥

आयुषः संवेधमाह—

अब्बंधे इगिसंतं दो दो बद्धाउ बज्झमाणाणं । चउसु वि एक्कस्सुदओ पण नव नव पंच इइ भेया ॥ ९ ॥

व्याख्या—आयुष्प्रकृतेरबन्धे चतसृष्वपि गतिष्वेकस्यायुषः सत्ता भवति, तद्गत्यभिधानचिह्नितस्य बद्धायुषां बद्ध्यमानायुषां च प्राणिनां द्वे द्वे आयुषी सद्भावेन भवतः, उत्तरभवायुषि बध्यमाने प्रथमद्व्यादिसमयेषु यद्दलमुपगृहीतं तदसम्पूर्णमपि आयुष्कर्मोच्यते, भाविनि भूतवदुपचारात्क्रियाकालनिष्ठाकालयोः कथञ्चिदभेदाददोषः । चतसृष्वपि गतिष्वेकस्यैवोदयः आयुषः तद्गत्युपलक्षितस्य भवति, "पञ्च नव नव पञ्चे"ति नरकादिषु भेदाः क्रमेण नरके पञ्च तिर्यङ्मनुष्ययोः नव नव, देवगतौ पञ्च

तिकर्म्मभिः सद्भिः सप्ताष्ट चत्वारि सदुदीर्णानि लभ्यन्त इति गाथार्थः ॥ ३ ॥

**बंधइ छ सत्त अट्ठ य मोहुदए सेसयाण एक्कं च । पत्तेयं संतेहिं बंधइ एगं छ सत्तट्ठ ॥ ४ ॥**

व्याख्या—मोहनीयस्योदये सति षडायुर्मोहवर्ज्जानि बध्नाति, सप्तायुर्वर्ज्जानि, अष्टौ वा । शेषाणां मोहवर्ज्जानामुदये एकं च वेदनीयम् । उदये बन्धसंवेधः । षट्सप्ताष्टानां बन्धे मोहस्योदयो भवति । शेषाणामुदयः एकस्य च बन्धे भवति । एवं बन्धेऽप्युदयसंवेधो भणनीयः, प्रत्येकं २ सद्भिश्चतुष्प्रकारमपि बन्धं बध्नाति, एकं षट्सप्ताष्टाविति, नास्त्यन्यो भेदः । सति बन्धसंवेधः । एवं चतुर्ष्वपि बन्धेषु सद्भावेन प्रत्येकं लभ्यन्ते इति गाथार्थः ॥ ४ ॥

**सत्तट्ठछब्बंधेसुं उदओ अट्ठण्ह होइ पयडीणं । सत्तण्ह चउण्हं वा उदओ सायस्स बंधंमि ॥ ५ ॥**

व्याख्या—षट्सप्ताष्टबन्धेष्वष्टानामपि कर्म्मणामुदयेन भाव्यम् । सद्वेदनीयबन्धे तु मोहनीयवर्ज्जानां सप्तानाम्, चतुर्णां अघातिकर्म्मणामुदयेन भाव्यम्, बन्धे उदयसंवेध इति गाथार्थः ॥ ५ ॥

बन्धोदयसत्संवेधोऽभिहितस्तत्स्थानान्याह—

**दो संतट्ठाणाइं बंधे उदए य ठाणयं एक्कं । वेयणियाउयगोएसेगं नाणंतराएसु ॥ ६ ॥**

व्याख्या—द्वे सत्स्थाने द्वौ सत्प्रकारावित्यर्थः, बन्धे उदये च एकं स्थानं वेदनीयायुर्गोत्रेषु । कथं ? सद्भावेन त्रयाणामपि एका प्रकृतिर्भवति, द्वे वा भवतः । उदये बन्धे वा सदैव एका प्रकृतिः । ज्ञानान्तराययोस्त्वेकं त्रिष्वपि स्थानम्, प्रकृतिपञ्चकस्य यौगपद्येन बन्धोदयसद्भावादिति गाथार्थः ॥ ६ ॥

साम्प्रतं सप्ततिकाक्रमेण बन्धावधानमाह—

**मूलुत्तरपगईणं साइअणाईपरूवणाणुगयं। भणियं बंधविहाणं अहुणा संवेहगं भणिमो ॥ १ ॥**

व्याख्या—मूलप्रकृतीनामुत्तरप्रकृतीनां च 'बन्धविधानं' बन्धप्रकारः 'साद्यनादी'ति, सादिअनादिध्रुवाध्रुवविकल्पैः प्ररूपणास्तदनुगतं भणितं बन्धविधानम्, 'अधुना' साम्प्रतं, संवेधगतं संवेधोऽस्य बध्यमानैः बन्धोदयसद्भिः सह भणामो वयमिति गाथार्थः ॥ १ ॥

**आउंमि अट्ठ मोहेट्ठ सत्त एक्कं च छाइ वा तइए। बज्झंतयंमि बज्झंति सेसएसुं छ सत्तट्ठ ॥ २ ॥**

व्याख्या—आयुषि बध्यमाने अष्टानामपि तत्साहचर्यान्नियमाद्बन्धो भवति मोहनीये बध्यमाने आयुर्वर्ज्जानां सप्तानां तद्युताना-मष्टानां वा बन्धो भवति। 'तृतीये' वेदनीये बध्यमाने षण्णां सप्तानामष्टानां वा बन्धो भवति। 'शेषेषु' ज्ञानदर्शनावरणनाम-गोत्रान्तरायेषु मोहायुर्वर्ज्जानि षट्, सप्त वायुर्वर्ज्जानि, पूर्व्वलानि अष्टौ वा जीवेन बन्ध्यत इति गाथार्थः ॥ २ ॥

उक्तः बन्धस्य बन्धेन सह संवेधः ॥

**मोहस्सुदए अट्ठ वि सत्त य लब्भन्ति सेसयाणुदए। सन्तोइणाणि अघाइयाणं अडसत्त चउरो य ॥ ३ ॥**

व्याख्या—मोहनीयस्योदये सति अष्टावपि सदुदीर्णानि लभ्यन्ते तद्वर्जानां त्रयाणां घातिकर्मणामुदये प्रत्येकं अष्टौ सप्त च सदुदीर्णानि लभ्यन्ते। अघातिकर्मणां वेद्यायुर्नामगोत्राणामुदयेऽष्टौ सदुदीर्णानि लभ्यन्ते, सप्त क्षीणकषाये, चत्वारि केवलिनो लभ्यन्ते। उदये सदुदयसंवेधो। मोहे सति अष्टावपि सदुदीर्णानि। शेषैर्घातिकर्मभिः सद्भिः अष्टौ सप्त च सदुदीर्णानि। अघा-

साम्प्रतं सर्वकरणाध्यवसायसङ्ख्यापरिज्ञानार्थमाह–

**ठितिबंधउदीरणतिविहसंकमे होंति संखगुणकमसो। अज्झवसाया एवं उवसामणमाइएसु कमा ॥ २ ॥**

व्याख्या—स्थितिबन्धाध्यवसायास्तीव्रमन्दकषायोदयविशेषजनिताः सर्वस्तोका भवन्ति, स्थितिग्रहणादनुभागबन्धोऽपि गृहीतः, प्रकृतिप्रदेशबन्धौ योगविशेषाद् भवत इत्यप्रधानौ, किमुक्तं भवति–बन्धनकरणाध्यवसायाः स्तोकाः, तेभ्य उदीरणाध्यवसायाः असंख्येयगुणास्तेभ्योऽपि सङ्क्रमाध्यवसायाः असंख्येयगुणाः, उद्वर्त्तनापवर्त्तनकरणे सङ्क्रमवदध्यवसायानाश्रित्य, तेन त्रिविधः सङ्क्रम उक्तः, सङ्क्रमाध्यवसायेभ्यः, उपशामनाध्यवसायाः असंख्येयगुणाः, तेभ्योऽपि णिधत्ताध्यवसायाः असंख्येयगुणाः, तेभ्योऽपि निकाचनाध्यवसायाः असंख्येयगुणाः, भवन्तीति गाथार्थः ॥ २ ॥

## उक्तान्यष्टापि करणानि तद्भणनादुक्ता कर्मप्रकृतिरिति

नश्च सभेदा वक्तव्याः, अयं पुनः विशेषः, निधत्तस्य कर्म्मणः सङ्क्रमोऽपि न भवति, उदीरणादयो न भवन्त्येव, किमुक्तं भवति-उद्वर्त्तनापवर्त्तनवर्ज्जानि करणानि न सम्भवन्ति, इतरा-निकाचना सापि देशोपशामना तुल्या भवत्येव, किन्तु तस्यामुद्वर्त्तनापवर्त्तनाकरणेऽपि न भवतः, किमुक्तं भवति,-सर्वकरणायोग्यं निकाचितं कर्म्म भवतीति गाथार्थः ॥ १ ॥

अप्रशस्तोपशामनादिषु यत्र गुणश्रेणी स्यात्, तत्र कर्म्मदलस्याल्पबहुत्वपरिज्ञापनार्थमाह—

गुणसेढिपएसग्गं थोवं उवसामियं असंखगुणं । एवं निहयनिकाइय अहापवत्तेण संकंतं ॥ २ ॥

व्याख्या—यस्य वा तस्य वा कर्म्मणो गुणश्रेणीप्रदेशाग्रं स्तोकम्, तस्माद्देशोपशान्तमसङ्ख्येयगुणम्, ततोऽपि निधत्तमसङ्ख्येयगुणम्, ततोऽपि निकाचितमसङ्ख्येयगुणम्, ततोऽपि यथाप्रवृत्तसङ्क्रमेण सङ्क्रान्तमसङ्ख्येयगुणमिति गाथार्थः ॥ २ ॥

भणिता निधत्तिर्निकाचना चेति ।

देशोपशामना भवति, का सा तीर्थंकरनामप्रकृतिरिति गाथार्थः ॥ ६ ॥

गता स्थित्युपशामना । साम्प्रतमनुभागप्रदेशयोर्देशोपशामनामतिदिशन्नाह—

**अणुभागपएसाणं सुभाण जा पुव्वमिच्छइयराणं । उक्कोसियरं अभविय एगेंदी देससमणाए ॥ ७ ॥**

॥ देसोवसामणा सम्मत्ता ॥

व्याख्या—अनुभागप्रदेशयोः देशोपशमना सङ्क्रमेण तुल्या, विशेषमाह–शुभानां यद्यपि सातवेदनीययशःकीर्त्युच्चैर्गोत्राणां अपूर्वकरणातीता उत्कृष्टं सङ्क्रमं कुर्वन्ति, तथापि देशोपशमनां सर्वशुभप्रकृतीनां अपूर्वकरण एव करोति, तदुपरि तस्या अभावादितरासामशुभप्रकृतीनां मिथ्यादृष्टिरेव करोति । यद्यपि ज्ञानावरणपञ्चकसञ्ज्वलनदर्शनचतुष्कनवनोकषायान्तरायपञ्चकानां सप्तविंशतिप्रकृतीनां जघन्यसङ्क्रमः स्वान्तेऽभिहितः, तथाप्यभव्यसिद्धिकैकेन्द्रिये जघन्या देशोपशामना वक्तव्येति विशेषः, प्रदेश सङ्क्रमोऽपि यासां प्रकृतीनामुत्कृष्टोऽपूर्वकरणोपरि कथितः, तासां देशोपशमनामधिकृत्यापूर्वकरण एव वक्तव्यः, जघन्याप्यभव्यैकेन्द्रिये वक्तव्येति विशेष इति गाथार्थः ॥ ७ ॥ उक्ता देशोपशामना,

---

निधत्तिकरणं निकाचनाकरणं च साम्प्रतमतिदिशति,

**देसुवसमणा तुल्ला होइ निहत्ती निकायणा नवरं । संकमणंवि निहत्तीए नत्थि सव्वाणि इयरीए ॥१॥**

व्याख्या—देशोपशामना तुल्या भवति, निधत्तिनिकाचना च उभयारपि तुल्या साद्यनादिप्ररूपणा, जघन्योत्कृष्टस्वामि-

न्तराययोः पञ्चप्रकृत्यात्मकम्, दर्शनावरणस्य नवप्रकृत्यात्मकम्, वेदनीयस्य द्विप्रकृत्यात्मकम्, देशोपशामनायोग्यम्। नामगोत्राध्रुवमोहायुःस्थानवर्ज्जानां शेषस्थानानां देशोपशामना चतुर्विधा भवति, उपशमश्रेणीतः पततः सादिः तत्स्थानमप्राप्त-स्यानादिरभव्यस्य ध्रुवा भव्यस्याध्रुवा मिथ्यादृष्टेः, सम्यक्त्वसंयमपञ्चेन्द्रियत्वैकेन्द्रियत्वप्राप्तौ नाम्नस्त्र्युत्तरशतद्व्यग्रशतप्रत्यूननवति-त्रिनवतिचतुरशीतित्र्यशीतिस्थानेषु सादिः, गोत्रस्योद्वलनमुद्वलनेनैकस्थानद्विस्थानयोः सादिरायुष्कबन्धापेक्षयायुष्कस्यैकस्था-नद्विस्थानयोः सादिश्चाध्रुवा, वेदकसम्यक्त्वप्राप्तौ वियोजितानन्तानुबन्धिबन्धकस्य वा मोहनीयस्य अष्टाविंशतिस्थाने सादिस्तस्यै-वोद्वलितसम्यक्त्वस्य सप्तविंशतिः सादिः, तस्यैवोद्वलितोभयदर्शनस्य षड्विंशतेः तस्यैवोद्वलितानन्तानुबन्धिनः चतुर्विंशतेः सादिः, सम्यक्त्वोत्पत्तावपूर्वकरणान्तसमये मिथ्यात्वस्य देशोपशमनाविरमे पञ्चविंशतेः, सप्तके क्षपिते एकविंशतेः सादिः, येषु सादिस्तेषु अध्रुवा च, षड्विंशतेरनादिरध्रुवा चेति गाथार्थः ॥ ५ ॥

उक्ता प्रकृत्युपशमना, स्थितेः देशोपशमनोच्यते—

**उवसामणा ठिईओ उक्कोसा संकमेण तुल्लाओ। इयराचि किंतु अभवे उव्वलगअपुव्वकरणेसु ॥ ६ ॥**

व्याख्या—देशोपशामना मूलोत्तरप्रकृतीनां स्थितेरुत्कृष्टा सङ्क्रमेण तुल्या, तुशब्दात्साद्यनादिप्ररूपणा च, इतरापि-जघन्यापि, सङ्क्रमतुल्या, किन्त्वियमभव्यैकेन्द्रियस्य वक्तव्या, यतस्तस्यैवातिजघन्या स्थितिर्भवति। उद्वलनप्रकृतीनां यस्तासां स्वोद्वलकः सोऽन्तिमे स्थितिखण्डे पल्योपमासङ्ख्येयभागमात्रे वर्त्तमानो जघन्यां देशोपशमनां करोति। एकेन्द्रियः आहारक-सप्तकसम्यक्त्वसम्यग्मिथ्यात्वानामपि स्वोद्वलकः। या मिथ्यादृष्टेः प्रायोग्या न भवति, तस्याः अपूर्वकरणान्तसमये जघन्या

व्याख्या—सादिः अनादिर्ध्रुवाध्रुवा एवं चतुर्विधाऽपि देशोपशामना भवति, मूलप्रकृतीनां उत्तरप्रकृतीनां चानादिसद्भाविनीनां यासामनादिसत्त्वेति। कथं ? उपशमश्रेणीतः प्रतिपततः सादिस्तत्स्थानमप्राप्तस्यानादिरभव्यस्य ध्रुवा भव्यस्याध्रुवेति। अध्रुवसत्प्रकृतीनां सादिरध्रुवा भावितैवेति गाथार्थः ॥ ४ ॥

प्रकृतिस्थानानां साद्यनादिप्ररूपणामाह—

**गोयाउयाण दोण्हं चउत्थछट्ठाण होइ छसत्तण्हं। साइयमाइचउद्धा सेसाणं एगठाणस्स ॥ ५ ॥**

व्याख्या—गोत्रायुषोर्द्वप्रकृतिस्थाने, उद्वलितगोत्रस्य अबद्धायुष्कस्य च एकप्रकृत्यात्मकं एकं स्थानम्, तद्व्यत्यये द्विप्रकृत्यात्मकं स्थानं द्वितीयम्। चतुर्थं मोहनीयं तस्य षट्प्रकृतिस्थानानि देशोपशामनायोग्यानि। अष्टाविंशतिस्थानं मिथ्यादृष्टिसास्वादनसम्यग्मिथ्यादृष्टिवेदकसम्यग्दृष्टिनां भवति। सप्तविंशतिस्थानं उद्वलितसम्यक्त्वस्य मिथ्यादृष्टेः सम्यग्मिथ्यादृष्टेर्वा भवति। षड्विंशतिस्थानं उद्वलितसम्यक्त्वसम्यग्मिथ्यात्वस्यानादिमिथ्यादृष्टेः वा भवति। पञ्चविंशतिस्थानं सम्यक्त्वोत्पत्तौ मिथ्यादृष्टेर्यदाऽपूर्वकरणान्तसमये मिथ्यात्वस्य देशोपशमना न स्यात् तदेति। चतुर्विंशतिस्थानं यदानन्तानुबन्धिन उद्वलनेऽपूर्वकरणस्यान्तःसमयस्तदा तेषां देशोपशमाभावाद् भवति,। क्षपणायोत्थितस्य वा अपूर्वकरणस्यान्तसमये चतुर्विंशतिस्थानम्। एकविंशतिस्थानं क्षपितसप्तकस्य तस्यैवोपशमश्रेणीपतितस्य वा। एवं मोहनीयस्य षट् स्थानानि देशोपशामनयोग्यानि भवन्ति, न शेषाणि। नाम्नः सप्त स्थानानि, प्रथमचतुष्काध्रुवत्रिकसंज्ञानि। शेषस्थानानि क्षपकश्रेण्यां सम्भवन्ति, देशोपशामना चोभयश्रेण्योरपि न भवति। शेषाणां ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामेकैकं प्रकृतिस्थानम्। ज्ञानावरणा-

साम्प्रतं देशोपशमना भण्यते—

**मूलुत्तरकम्माणं पगडिट्ठितिमादि होइ चउभेया । देसकरणेहिं देसं समेइ जं देससमणातो ॥ १ ॥**

व्याख्या—मूलोत्तरकर्म्माणि प्रकृतिस्थित्यनुभागप्रदेशभेदाच्चतुर्द्धा भवन्ति, देशकरणैः (णाभ्यां) यथाप्रवृत्तापूर्वकरणसंज्ञैः (ज्ञाभ्यां) देशं किञ्चिन्मात्रं प्रकृतिस्थित्यादीनां यत उपशामयति, अतो देशोपशामना भण्यते इति गाथार्थः ॥ १ ॥

तयोपशान्तानां प्रकृतिस्थित्यादीनां लक्षणमाह—

**उव्वट्टणओव्वट्टणसंकमकरणाइ होंति नण्णाइ । देसोवसामिय सा जा पुव्वो सव्वकम्माणं ॥ २ ॥**

व्याख्या— देशोपशमनयोपशान्तमपि उद्वर्त्तनापवर्तनसङ्क्रमणगम्यं कर्म्मदलं भवति, नान्येषां करणानाम् । तस्याश्च देशोपशमनायाः एकद्वित्रिचतुःपञ्चेन्द्रियनारकतिर्यग्देवमनुष्याः तेऽपि यावदपूर्वकरणान्तसमयं तावत् सर्वेऽपि स्वामिनः सर्वकर्म्मणां इति गाथार्थः ॥ २ ॥ एतदेव विशेषयति—

**खवगो उसामगो वा पढमकसायाण दंसणतिगस्स । देसोवसामगो सो अपुव्वकरणंतगो जाव ॥ ३ ॥**

व्याख्या—प्रथमकषायाणां वियोजने प्रथमसम्यक्त्वप्राप्तौ चतुर्गतिका अप्यपूर्वकरणान्तसमयं यावद्देशोपशामनां कुर्वन्ति नानिवृत्तिकरणकालम् । दर्शनत्रिकस्य क्षपका अविरतदेशविरतसर्वविरतापूर्वकरणान्तसमयं यावद्देशोपशामनां कुर्वन्ति, न परतः अशेषकर्मणामपि अपूर्वगुणस्थानात् परतो देशोपशामना न भवत्येवेति गाथार्थः ॥ ३ ॥

**साइयमाइचउद्धा देसुवसमणा अणाइसंतीणं । मूलुत्तरपगईणं साई अधुवाउ अधुवाओ ॥ ४ ॥**

सेढीपडिओ तम्हा छडावली सासणो वि देवेसु । एगभवे दुक्खुत्तो चरित्तमोहं उवसमेज्जा ॥ ९३ ॥

व्याख्या—तस्माच्छ्रेणीपातात् यः सास्वादनो भवति, (जघन्यत एकं समयमुत्कृष्टतः) षडावलिकाकालमनुभवति । सास्वादनोऽवश्यं तदन्तर्मृतो देवो भवति, यतोऽमरायुषा बद्धेन श्रेणीप्रतिपत्तिरिष्यते, नान्येन, एकस्मिन् भवे चारित्रमोहनीयं द्वे वारे उपशमयत्युत्कृष्टतो, न तृतीयवारेति । यस्तूपशान्तगुणस्थ एव कालं करोति सोऽनुभूयमानप्रकृतीनां गोपुच्छान्तःस्थ एवोदयावलिकां सर्वप्रकृतीनामनुभवति । अनुदयवतीषु द्वितीयस्थितेर्दलं गृहीत्वा उदयावलिकां करोतीति गाथार्थः ॥ ९३ ॥

एवं पुरुषवेदोदयेन श्रेणीप्रतिपन्नस्य विधिरभिहितः, साम्प्रतं स्त्रीनपुंसकोदयेन प्रतिपत्तयोरभिधीयते—

॥ उवसमकरणं सम्मत्तं ॥

दुचरिमसमए नियगोदयस्स इत्थीनपुंसगोण्णोण्णं । समयित्तु सत्त पच्छा किंतु नपुंसो कमारद्धे ॥ ९४ ॥

व्याख्या—स्त्रीवेदोदयेन श्रेणीसमारूढो नपुंसकवेदं प्रथममुपशामयति, पश्चात् स्त्रीवेदं यावत्स्वकोदयस्य द्विचरमसमयः तस्मिन् समयमात्रे प्रथमस्थितेरनुपशान्ते शेषे तूपशान्ते अवेदको नोकषायषट्कं पुरुषवेदं च युगपत्सप्ताप्युपशामयति, शेषं पुरुषवत् । नपुंसकवेदोदयेन श्रेणीं समारूढो नपुंसकवेदं स्त्रीवेदं च युगपदुपशमयितुमारम्भते, अन्योन्यं क्रमेणोपशमयतो यावद् द्विचरमा स्थितिः, तस्यां शेषायां अवेदकः सप्तकमुपशमयति, हास्यादिषट्कपुरुषवेदसंज्ञं शेषं पुरुषवेदवदिति गाथार्थः ॥ ९४ ॥

समाप्तं चोपशामनाकरणमिति,

व्याख्या—वेद्यमानसञ्ज्वलनकालादभ्यधिका मोहनीयगुणश्रेणी कालमधिकृत्य समारोहगुणश्रेणीमाश्रित्य तुल्या श्रेणी प्रतिपत्तिर्यस्य कषायस्योदये तस्य गुणश्रेणी तुल्या शेषकर्म्मभिः, शेषकर्म्मणां तु यदारोहत उक्तम्, प्रतिपततोऽपि तदेवाहीनातिरिक्तं भवतीति गाथार्थः ॥ ८९ ॥

**खवगुवसामगपच्चागयाण दुगुणो तहिं तहिं बंधो । अणुभागोऽणंतगुणो असुभाण सुभाण विवरीओ ॥ ९०॥**

व्याख्या—आदिमध्यावसानेषु क्षपकबन्धादुपशामको द्विगुणो बन्धः, तत्रैव प्रतिपततः तस्मादपि द्विगुणो बन्धः कालतो भवति । यः क्षपकस्यानुभागः स त[1]योरनन्तगुणोऽशुभप्रकृतीनां, शुभानां त्वनन्तभागतुल्यः, क्षपस्य स्तोकः, उपशामकस्य अनन्तगुणः, ततोऽप्यनन्तगुणः प्रतिपततोऽशुभकर्म्मणाम् । शुभानां विपरीतः, शेषविधिरुभयोरपि तुल्य इति गाथार्थः ॥ ८९ ॥

**परिवाडीए पडिउं पमत्तइयरत्तणे बहुं किचा । देसजई सम्मो वा सासणभावं च वए कोइ ॥ ८१ ॥**

व्याख्या—आरोहतः परिपाट्या प्रतिपतित्वा प्रमत्ताऽप्रमत्तत्वे बहून् वारान् कृत्वा ततो देशविरतत्वं वा अविरतत्वं वा सास्वादनत्वं वा कश्चिद् व्रजेदिति गाथार्थः ॥ ९१ ॥

**उवसमसम्मत्तद्धाअंतो आउक्खया धुवं देवो । जेण तिसु आउएसुं बद्धेसु न सेढिमारुहइ ॥ ९२ ॥**

व्याख्या—औपशमिकसम्यक्त्वकालादन्तर्मध्ये आयुःक्षयात् यो म्रियते सोऽवश्यं देवो भवति, यतो यस्मात्त्रिधायुष्केषु नारकतिर्यङ्मनुष्यसंज्ञेषु बद्धेषु न उपशमश्रेणीं समारोहतीति गाथार्थः ॥ ९३ ॥

---

१ उपशमश्रेण्यारोहप्रतिपततोः ।

व्याख्या—विलोमतः प्रतिपतन् अपकृष्य द्वितीयस्थितेः प्रथमस्थितिं करोति, संज्वलनलोभादिषु प्रकृतिषु विपाकोदयानुभवगम्यायुदयावलिकाप्रथमसमये प्रभूतं दलं निक्षिपति तदुपरितनेषु विशेषहीनं २ यावत्तदन्तसमयः, तदुपरितनसमयेष्वसंख्येयगुणं दलं निक्षिपतीति गाथार्थः ॥ ८६ ॥

**जावइया गुणसेढी उदयवई तासु हीणगं परओ । उदयावलीमकाउं गुणसेढिं कुणइ इयराणं ॥ ८७ ॥**

व्याख्या—यावत्समयैर्गुणश्रेणी तावत्समयेष्वसङ्ख्येयगुणदलनिक्षेपः उदयवतीषु तत्कालोदितप्रकृतिषु तत्परतो विशेषहीनदलनिक्षेपः, इतरासामनुदयवत्प्रकृतीनां उदयावलिकामकृत्वा गुणश्रेणीं करोति, तन्मस्तकोपरि समयेषु विशेषहीनं २ दलं क्षिपतीति गाथार्थः ॥ ८७ ॥

**संकमउदीरणाणं नत्थि विसेसो उ एत्थ पुव्वुत्तो । जं जत्थ उ वोच्छिण्णं जायं वा होइ तं तत्थ ८८ ॥**

व्याख्या—संक्रमोदीरणयोरत्र–प्रतिपाते, पूर्वोक्तो विशेपो नास्ति, आनूपूर्वी सङ्क्रमो यः समारोहति कथितः, सोऽत्र न भवति । षडावलिकापरतो बद्धस्य या उदीरणा प्रतिपादिता, साऽत्र न भवति, यतोऽत्र बन्धावलिकावसाने उदीरणा प्रभवति । यदत्र स्थाने अपगतं विनष्टं बन्धनं वा सङ्क्रमणं वा उद्वर्त्तनं वा अपवर्त्तनं वा उदीरणा वा देशोपशमनं वा आगालो वा निधत्तिर्वा निकाचनं वा तत्तत्र स्थाने भवति । जातं वा यद्यस्मिन् स्थाने रसस्थितिघातादि तत्तत्र स्थाने तद्विधमेव विपर्यस्तं भवतीति गाथार्थः ॥ ८८ ॥

**वेइज्जमाणसंजलणकालओ अहिगमोहगुणसेढी । पडिवत्तिकसाउदए तुल्ला सेसेहिं कम्मेहिं ॥ ८९ ॥**

व्याख्या—द्वितीयसमयोदयगतानां किट्टीनामसङ्ख्येयभागं मुञ्चति अधोऽपूर्वमसङ्ख्येयभागं गृण्हाति, एवं ग्रहणमोक्षं कुर्वन् यावत्सूक्ष्मरागचरमं समयमुपशमयति इति । द्वितीयस्थितिमपि पूर्ववदुपशामयति, समयोनद्व्यावलिकाबद्धं चोपशामयति। असङ्ख्येयगुणवृद्ध्यां सूक्ष्मरागचरसमये सर्वां द्वितीयां स्थितिं उपशमय्य उपशान्तगुणस्थानं प्राप्नोतीति । सूक्ष्मरागचरमसमये ज्ञानदर्शनावरणान्तरायाणां अन्तर्मुहूर्त्तको बन्धः, नामगोत्रयोः षोडशमुहूर्त्तिको वेदनीयस्य चतुर्विंशतिमुहूर्त्तिक इति गाथार्थः॥८३॥

**अंतोमुहुत्तमेत्तं तस्स वि संखेज्जभागतुल्लाओ । गुणसेढी सव्वद्धं तुल्ला य पएसकालेहिं ॥ ८४ ॥**

व्याख्या—अन्तर्मुहूर्त्तमात्रं तदुपशान्तगुणस्थानं तस्य तु गुणकालस्य सङ्ख्येयभागमात्रां गुणश्रेणीं करोति । सा च गुणश्रेणी परमाणुकालाभ्यामवस्थिता सर्वामुपशान्ताद्धां, तस्यावस्थितपरिणामत्वादिति गाथार्थः ॥ ८४ ॥

**करणाय णोवसंतं, संकमणोवट्टणं तु दिट्ठितिगं । मोत्तूण विलोमेणं परिवडई जा पमत्तो त्ति ॥ ८५ ॥**

व्याख्या—'करणाय' सङ्क्रमादिकरणार्थं करणगम्यं न भवत्युपशान्तं मोहनीयस्य प्रकृतिजालं, किं सर्वमपि नेत्याह—मुक्त्वा दृष्टित्रिकं सङ्क्रमणमपवर्त्तनं च दृष्टित्रिकवाह्यासु न भवति, यतः तस्मिन् काले मिथ्यात्वं सम्यग्मिथ्यात्वं च सम्यक्त्वे सङ्क्रामति, अपवर्त्तने तु त्रयाणामपि भवत्येव, तस्मादुपशान्तगुणस्थानादुपशान्ताद्धाक्षयेण विलोमतो यथारोहं प्रतिपतति, किं सर्वगुणेषु नेत्याह यावदप्रमत्तं यथाऽप्रमत्तादिगुणेषु स्थितिघातरसघातादिकं कुर्वन् श्रेणीं समारूढः तेषु तेषु स्थानेषु तत्तद्विदधत् क्रमेण प्रतिपतति नियमादन्येष्वनियमो देशविरतो वा अविरतो वा सास्वादनो वा भवति भूयस्तामेव श्रेणीं वा समारोहतीति गाथार्थः ॥८५॥

**ओकड्ढित्ता दलियं पढमठिइं कुणइ बिइयठितिहिंतो । उदयाइविसेसूणं आवलिउप्पिं असंखगुणं ॥८६॥**

**लोभस्स अणुवसंतं [1] किट्टी [2] उदयावलीय [3] पुव्वुत्तं । बायरगुणेण समगं दोण्णिवि लोभा समुवसंता ॥ ८१ ॥**

व्याख्या—तदा लोभस्यानुपशान्तं समयोनाद्यावलिकाकृताः किट्टयः उदयावलिका च बादरगुणेन समकं द्वावपि लोभावप्रत्याख्यानप्रत्याख्यानावरणौ समुपशान्तौ भवतः, स्थितिबन्धोऽपि लोभस्य तदा बादरकषायान्ते [4] अन्तर्मुहूर्तमानः, शेषघातिकर्मणां किञ्चिदूनं अहोरात्रं स्थितिबन्धः नामगोत्रवेदनीयानां किञ्चिदूनवर्षद्वयमिति गाथार्थः ॥ ८१ ॥

**सेसद्धं तणुरागो तावइया किट्टिओ उ पढमठिई । वज्जिय असंखभागं हिट्ठुवरिमुदीरए सेसा ॥ ८२ ॥**

व्याख्या—'शेषार्द्धं' शेषत्रिभागं सूक्ष्मरागो भवति, तावन्मात्राः किट्टयः प्रथमस्थितिः सूक्ष्मरागाद्धा तुल्या [5] आद्यवर्गमुदयावलिकागतं स्तिबुकसङ्क्रमेण सङ्क्रामयति, प्रथमसमयसूक्ष्मरागः किट्टीनामसङ्ख्येयभागमनुभवति, आद्यन्तसमयकिट्टीर्वर्जयित्वा शेषाः प्रथमसमये उदयमुपगच्छन्ति, प्रथमसमयकृतानामग्रस्थमसङ्ख्येयभागं मुक्त्वा चरमसमयकृतानां तु जघन्यकिट्टयादिकमसङ्ख्येयभागं मुक्त्वा शेषाः किट्टीरुदीरयति प्रथमसमयकृतानामधश्चरमसमयकृतानामुपर्यसङ्ख्येयभागं मुक्त्वा उदीरयतीति गाथार्थः ॥ ८२ ॥

**गेण्हंतो य मुयंतो असंखभागं तु चरिमसमयंमि । उवसामिय बीयठिइं उवसंतं लभइ गुणठाणं ॥८३॥**

---

१ द्वितीयस्थितिगतं किट्टीकृतं दलिकमिति. २ किट्टिकरणाद्धायाः शेषीभूता प्र. ३ समयोनावलिकाद्विकबद्धमिति प्र. ४ क्षपकापेक्षया द्विगुणस्थितेरेवमुक्तम्, तेन प्रवचनप्रसाधन्तर्मुहूर्तोक्तत्वेऽपि न क्षतिः, केवलं तत् क्षपकात् द्विगुणमन्तर्मुहूर्तस्यासङ्ख्येयभेदत्वात् । ५ किट्टिकरणाद्यान्तिमावलिकागतमिति प्र०

तीयसमयनिर्वर्त्तितानां सर्वकिट्टीनामसङ्ख्येयगुणत्वेनं प्रतिसमयं नेयम्, यावत्किट्टिकरणाद्धान्त्यसमयमिति । प्रथमसमयनिर्वर्त्तितानां किट्टीनां ( योऽनुभागस्तदपेक्षया ) यथोत्तरास्वनन्तभागमात्रोऽनुभागः, एवं यथोत्तरसमयनिवर्तितानामपि रसः । सर्वेषु समयेषु निर्वर्त्तिताः किट्टयो यास्तासां मध्ये मन्दरसास्तासां प्रभूतदलं भवति, यथोत्तरासु तद्रसोत्तरासु विशेषहीनं २ यावदुत्कृष्टरसा इति, एवं प्रतिसमयनिर्वर्त्तितानामपीति गाथार्थः ॥ ७८ ॥

द्वितीयसमयवर्तितेषु किट्टिषु—

**आइमसमयकयाणं मंदाईणं रसो अणंतगुणो । सव्वुक्कस्स रसावि हु उवरिमसमयस्सणंतंसे ॥ ७९ ॥**

व्याख्या—आद्यसमयनिर्वर्तितानां किट्टीनां या मन्दानुभागा किट्टी तस्या अन्या अनन्तगुणरसा, एवं यावदुत्कृष्टरसा एवं प्रतिसमयनिर्वर्त्तितानामपि ज्ञातव्यम् । प्रथमसमयनिर्वर्तितानां किट्टीनां सर्वमन्दानुभागा याः द्वितीयसमयनिर्वर्त्तितानां या सर्वोत्कृष्टरसा साप्यनन्तगुणहीनरसे'ति गाथार्थः ॥ ७९ ॥

**किट्टीकरणद्धाए तिसु आवलियासु समयहीणासु । न पडिग्गहया दोण्हवि सट्ठाणे उवसमिज्जंति ॥ ८० ॥**

व्याख्या—किट्टीकरणाद्धायास्तिसृष्वावलिकासु समयोनासु शेषासु संज्वलनलोभस्य प्रतिग्रहता न भवति स्वस्थाने इतरलोभयोः कर्मपरमाणवः उपशमं नीयन्ते, किट्टीकरणाद्धाया आवलिकाद्वितये शेषे आगलो न भवति, आवलिकाशेषायामुदयोदीरणाबन्धा न भवन्तीति गाथार्थः ॥ ८० ॥

---

१ अत्र किट्टीनां परस्परमल्पबहुत्वं प्रदेशानां बृहद्वृत्तितोऽवसेयमिति । प्रथमप्रेतनगाथाबृहद्वृत्तौ किट्टीकरणाद्धासङ्ख्येयभागगमनानन्तरं स्थितिबन्ध उक्तोऽत्र नोक्तः ।

त्रिकमुपशामयितुमारम्भयतीति गाथार्थः ॥ ७५ ॥

अप्पुव्वविसोहीए अणुभागोणूण विभयणं किट्टी । पढमसमयंमि रसफड्डवग्गणाणंतभागसमा ॥ ७६ ॥

व्याख्या—अश्वकर्णकरणाद्धायां वर्त्तमानोऽपूर्वया विशुद्ध्या पुर्व्वफड्डकेभ्यः प्रतिसमयं दलं गृहीत्वा अपूर्वाणि फड्डकानि निवर्त्तयति बन्धमाश्रित्यापूर्वेण रसेन करोति । ततः सङ्ख्येयेषु बन्धेष्वपगतेषु अश्वकर्णकरणाद्धा अतिक्रामति । ततः किट्टिकरणद्धा प्रवर्त्तते, अपूर्वविशुद्ध्या अनुभागपरमाण्वोर्यद्विभजनं तत्किट्टीकरणमिति । तस्याः किट्टिकरणाद्धायाः प्रथमसमये सञ्ज्वलनलोभस्य दिनपृथक्त्वमानो बन्धः, शेषकर्मणां वर्षपृथक्त्वमानो बन्धः । तस्याः किट्टिकरणाद्धायाः प्रथमसमये कियतीः किट्टीर्निर्वर्त्तयति, एतदुच्यते—एकस्मिन् स्पर्द्धके अनन्ता या रसवर्गणाः तासामनन्तभागतुल्याः किट्टीः प्रकरोति ता अप्यनन्ता इति गाथार्थः ॥ ७६ ॥

सव्वजहण्णगफड्डग अणंतगुणहाणिया उ ता रसओ । पइसमयमसंखंसो आइमसमया उ जावंतो ॥७७॥

व्याख्या—सर्वजघन्यानुभागस्पर्द्धकस्याधोऽनन्तगुणहीना रसतो अनुभागतो भवति, प्रतिसमयमसङ्ख्येयगुणहीनया श्रेण्या यथोत्तरसमयेष्वसङ्ख्येयभागतुल्याः किट्टीः करोति पूर्वसमयकिट्टिभ्यः असङ्ख्येयभागा यावत्किट्टिकरणाद्धान्तसमय इति गाथार्थः ॥ ७७ ॥

अणुसमयमसंखगुणं दलियमणंतंसओ उ अणुभागो । सव्वेसु मंदरसमाइयाण दलियं विसेसूणं ॥ ७८ ॥

व्याख्या—अणुसमयमिति प्रतिसमयमसङ्ख्येयगुणं दल भवति प्रथमसमयनिर्वर्त्तितकिट्टीनां यत्परमाण्वात्मक दल तद् द्वि-

चतुर्गुणः, यतः—स्वजघन्यबन्धस्तस्य मासिकः एवं शेषेष्वपि संज्वलनेषु भावना कर्त्तव्या । अन्येषु कर्मसु सङ्ख्येयगुणो बन्धः। यदा क्रोधस्यावेदको भवति, तदा संज्वलनमानस्यान्तर्मुहूर्त्तेन प्रथमस्थितिरसङ्ख्येयगुणनया वृद्ध्या विदधाति, ततोऽपि मानत्रिकमुपशामयितुमारम्भयति । संख्येयभागेनोनं बन्धादुत्तरबन्धं विदधाति । संज्वलनमानस्य समयोनत्र्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति । अप्रत्याख्यानप्रत्याख्यानमानौ संज्वलनमायायां सङ्क्रामन इत्यर्थः । द्व्यावलिकाशेषायां प्रथमस्थितावागालोऽपि न भवति । आवलिकाशेषायां उदयोदीरणबन्धा न भवन्ति । तस्मिन् काले मानद्वयमुपशान्तं भवति। मानसंज्वलनस्यापि प्रथमस्थित्यावलिकां समयोनद्व्यावलिकाबद्धं द्वितीयस्थितौ मुक्त्वा शेषमुपशान्तम्, मानमाययोः यदा द्विमासिको बन्धः, शेषकर्मणां सङ्ख्येयानि वर्षाणि तदा संज्वलनमायाया अन्तर्मुहूर्तेनासङ्ख्येयगुणवृद्ध्या प्रथमस्थितिं विदधाति, ततो मायात्रिकं चोपशामयितुमारम्भयति, तदप्येवमेव वक्तव्यमिति गाथार्थः ॥ ७३ ॥

**लोहस्स उ पढमठिइं बिइय ठिइओ उ कुणइ तिविभागं । दोसुं दलणिक्खेवो तइओ पुण किट्टिवेयद्धा ॥७४॥**

व्याख्या—सञ्ज्वलनलोभस्य प्रथमस्थितिं करोति, द्वितीयस्थितेः दलं गृहीत्वा २ तां च प्रथमस्थितिं त्रिविभागां द्वयोर्विभागयोर्दलनिक्षेपः तृतीयो विभागः किट्ट्यनुभवाद्धा संज्ञेति गाथार्थः ॥ ७४ ॥

**संताणि बज्झमाणगसरूवओ फड्डगाणि जं कुणइ । सा अस्सकण्णकरणद्धमज्झिमा किट्टिकरणद्धा ॥७५॥**

व्याख्या—'सन्ति' विद्यमानानि मायाकर्मदलानि बध्यमानसंज्वलनलोभस्वरूपेण फड्डकानि यत्करोति, साऽश्वकर्णकरणाद्धा प्रथमा भण्यते; द्वितीयो विभागः किट्टिकरणाद्धा संज्ञः, तृतीयाः किट्ट्यनुभवनाद्धा संज्ञः, प्रथमस्थित्यां निर्वर्त्तितायां लोभ-

शान्तदलमसङ्ख्येयगुणनया श्रेण्योपशमयति, यथाप्रवृत्तसङ्क्रमेणान्यासु च प्रकृतिषु सङ्क्रमयति, प्रथमसमये प्रभूतं यथोत्तरेषु विशेषहीनं २ क्रोधत्रिकोपशमाद्धायां अवेदको यावत्सर्वमुपशान्तमिति गाथार्थः ॥ ७० ॥

**अव्वेयपढमसमया कोहतिगं आढवेइ उवसमिउं । तिसु पडिगहया एक्का उदओ य उदीरणा बंधो ॥ ७१ ॥**

व्याख्या—यदाऽवेदकत्वं तस्मात्समयादारभ्य क्रोधत्रिकमुपशामयितुमारभते, समकमेव संज्वलनक्रोधस्य प्रथमस्थितेः समयोनासु तिसृष्वावलिकासु शेषासु प्रतिग्रहताऽपगच्छति, संज्वलनमाने क्रोधद्विकं सङ्क्रामतीत्यर्थः । आवलिकाद्विके शेषे आगालो न भवति, आवलिकायां उदयोदीरणाबन्धाः किन्तीत्यपगच्छन्ति । बन्धादुत्तरबन्धाः सर्वे संज्वलनस्योपशमाद्धायां सङ्ख्येयभागहीना यावत्तदन्तके बन्धश्चातुर्मासिक इति गाथार्थः ॥ ७१ ॥

**फिट्टंति आवलीए सेसाए सेसय तु पुरिससमं । एवं सेसकसाया वेयइ थिबुगेग आवलिया ॥ ७२ ॥**

व्याख्या—'फिट्टंति आवलीए' इति व्याख्यातम् । शेषं पुरुषवेदसमं, संज्वलनक्रोधस्य प्रथमस्थितौ आवलिकाशेषायां क्रोधद्विकमुपशान्तं भवति । तस्यापि प्रथमस्थित्यावलिका समयोनावलिकाद्विकबद्धं च मुक्त्वा शेषमुपशान्तं भवति । एवमनेनैव क्रमेण मानमायालोभान् उपशमयति । उदयावलिकाश्चोत्तरकषाये स्तिबुकसङ्क्रमेण सङ्क्रमय्यानुभवतीति गाथार्थः ॥ ७२ ॥

**चरिमुदयम्मि जहण्णो बंधो दुगुणो उ होइ उवसमगे । तयणंतरपगईए चउग्गुणोण्णेसु संखगुणो ॥७३॥**

व्याख्या—चरमोदयकाले संज्वलनानां यः क्षपकमाश्रित्य जघन्यबन्ध उक्तः, स उपशामके द्विगुणो भवति । तदनन्तर-प्रकृतौ चतुर्गुणो, यतः क्षपके क्रोधस्य मासद्वयं जघन्यो बन्धः, सचोपशमके मन्दपरिणामत्वाच्चातुर्मासिको भवति । मानस्य तदा

**नामगोयाण संखा बंधो वासा असंखिया नइए । तो सव्वाणवि संखा तत्तो संखेज्जगुणहाणी ॥ ६७ ॥**

व्याख्या—तस्मिन् काले नामगोत्रयोः सङ्ख्येय वार्षिकः स्थितिबन्धोऽसङ्ख्येयवार्षिको वेदनीयस्य ततः स्थितिबन्धसहस्रेष्वतीतेषु सर्वेषां कर्मणां सङ्ख्येयवार्षिको बन्धः सङ्ख्येयगुणहान्या इति गाथार्थः ॥ ६७ ॥

**जं समए उवसंतं छक्कं उदयट्ठिई तया सेसा । पुरिसे समऊणावलिदुगेण बंधं अणुवसंतं ॥ ६८ ॥**

व्याख्या—अनेन विधिना यस्मिन् समये षट्कमुपशान्तं जलार्द्रकुट्टितभूमिरजस्तुल्यं कर्मदलं जातम्, तदा पुरुषवेदस्योदयस्थितिरेका प्रथमस्थितेस्तिष्ठति समयोनद्विकावलिकाशेषायां प्रथमस्थितौ यत्पुरुषवेददलं बद्धं तत्तदा नाद्याप्युपशमं यातीति गाथार्थः ॥ ६८ ॥

**आगालेणं समगं पडिगहया फिडइ पुरिसवेयस्स । सोलसवासियबंधो चरिमो चरिमेण उदएण ॥ ६९ ॥**

व्याख्या—आगालो द्वितीयस्थितेर्दलमुदयस्थितौ निक्षिपति तेन समं तेन समकालं पुरुषवेदस्य प्रतिग्रहतान्यप्रकृतिभ्यो दलसङ्क्रमस्याधारतेति, सा 'फिडइ' इत्यपगच्छति विनश्यति । यदा षोडशवार्षिकः पुरुषवेदस्य बन्धः, तदा सञ्ज्वलनानां सङ्ख्येयवर्षसहस्राणि । अयं चरमबन्ध उदयेन षट्कस्योपशमचरमसमयेन (सहापगच्छति) इति गाथार्थः ॥ ६९ ॥

**तावइ कालेणं चिय पुरिसं उवसामए अवेदो सो । बंधो बत्तीससमा संजलणियराण उ सहस्सा ॥ ७० ॥**

व्याख्या—समयोनद्व्यावलिकाकालेन यद्बद्धं दलं तत्तावन्मात्रेणैव कालेनावेदको भूत्वोपशमयति । पुरुषवेदो यदोपशान्तस्तदा संज्वलनानां द्वात्रिंशद्वार्षिको बन्धः, 'इयराणं' ति मोहवर्जानां शेषकर्मणां सङ्ख्येयानि वर्षसहस्राणि । तत्र पुरुषवेदानुप-

व्याख्या—यथा बद्धं बद्धं कर्म बन्धावलिकायां गतायां याति उदीरणाम्, तथान्तरकरणे कृते तदनन्तरसमये यद्बद्धं कर्म तत्षडावलिकाकाल स्थितं यात्युदीरणामिति। 'पंडग' त्ति, नपुंसकवेदस्योपशामना सप्तमीति। असङ्ख्येयगुणनया प्रतिसमयमसङ्ख्येयगुणं २ प्रदेशाग्रं उपशमयति, तस्मादप्यसङ्ख्येयगुणमन्यासु प्रकृतिषु, संङ्क्रामयति, यत्प्रभृति मोहनीयस्य सङ्ख्येयवार्षिको बन्धः प्रारब्धस्ततः प्रभृति सङ्ख्येयगुणहीनं करोत्युत्तरं बन्धं, शेषकर्मणां असङ्ख्येयगुणहीनम्, सर्वकर्मणामुदीरणायाः उदयोऽप्यसङ्ख्येयगुणो यावन्न[1]पुंसकोपशामनान्तसमय इति गाथार्थः ॥ ६४ ॥

अंतरकरणपविट्ठो संखासंखंसमोहइयराणं। बंधादुत्तरबंधो एवं इत्थीएँ संखंसे ॥ ६५ ॥

व्याख्या—अन्तरकरणे प्रविष्टो जीवः बन्धादुत्तरबन्धं मोहनीयस्य सङ्ख्येयभागं करोतीतरासामसङ्ख्येयभागमिति। एवं नपुंसकोपशमकात् स्थितिसहस्रेष्वतीतेषु स्त्रीवेदं पूर्वविधिनोपशमयति, स्त्रीवेदस्य सङ्ख्येयभागे उपशान्ते यद् भवति तदाहेति गाथार्थः ॥ ६५ ॥

उवसंते घाईणं संखेज्जसमा परेण संखंसो। बंधो सत्तण्हेवं संखेज्जतमंमि उवसंते ॥ ६६ ॥

व्याख्या—सङ्ख्येयभागे स्त्रीवेदस्य उपशान्ते घातिकर्मणां ज्ञानदर्शनावरणानां सङ्ख्येयवार्षिकः स्थितिबन्धो भवति, परेण सङ्ख्येयगुणहान्या इति। एवं नपुंसकविधिना स्त्रीवेदे उपशान्ते सप्तानां च शेषनोकषायाणां सङ्ख्येयभागे उपशान्ते यद्भवति तदहेति गाथार्थः ॥ ६६ ॥

---

१ बृहद्वृत्तौ तु सामान्येनोक्तं न नपुंसकान्तसमय.

नोदयेन श्रेणिमुपस्थितस्य तत्तन्नामोच्चारणेन सर्वं तथेव वक्तव्यम्, शेषैकादशकपायाणां अष्टानां नोकषायाणां विहायोदयावलिकां अन्तरं करोति, उपर्यधः समविषमस्थितिकमिति गाथार्थः ॥ ६१ ॥

**अंतरकरणेण समं ठितिखंडगबंधगद्धनिप्फत्ती । अंतरकरणाणंतरसमए जायंति सत्त इमे ॥ ६२ ॥**

व्याख्या—अन्तरकरणेन समं तुल्यं स्थितिखण्डं पातयति, बन्धगद्धा अभिनवबन्धकालः किमुक्तं भवति, यावता कालेनान्तरं करोति, तावता कालेन स्थितिखण्डं पातयत्यभिनवबन्धं करोति, अन्तरकरणकाले रसघातसहस्राण्यतिक्रामन्ति, अन्तरदलस्य विधिरयं—यस्य कर्मणः तदानुभवनं वन्धश्च भवति, तस्यान्तरसत्कं प्रदेशाग्रं प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति, यथा पुरुपवेदोदयारूढः (पुरुपवेदस्य) यस्य पुनरुदयोऽस्ति न च बन्धः तस्यान्तरदलं प्रथमस्थितौ प्रक्षिपति, यथा स्त्रीनपुंसकवेदोदयारूढः (स्त्रीनपुंसकयोः) यस्य पुनरुदयो नास्ति वन्धोऽस्ति तस्यान्तरदल द्वितीयस्थितौ प्रक्षिपति, यथाक्रोधोदयारूढः शेपसञ्ज्वलनानामिति । यस्य पुनरुदयो वन्धश्च नास्ति तस्यान्तरदलं परप्रकृतिषु प्रक्षिपति, यथा द्वितीयतृतीयकषायाणाम् । अन्तरकरणानन्तरसमये—अन्तरकरणनिवृत्तिसमयादुत्तरसमये, जायन्ते—प्रादुर्भवन्ति, युगपदेककालं सप्ताधिकारा इति गाथार्थः ॥ ६२ ॥

**एगट्ठाणाणुभागो बंधो उदीरणा य संखसमा । अणुपुव्वीसंकमणं लोहस्स असंकमो मोहे ॥ ६३ ॥**

व्याख्या—'मोहे' मोहनीये, एकस्थानिकरससम्बन्धः, सङ्ख्येयवार्षिकस्थितिबन्धः, उदीरणा च सङ्ख्येयवार्षिका, आनुपूर्व्या सङ्क्रमणम्, सञ्ज्वलनलोभस्यासङ्क्रमणं भवतीति गाथार्थः ॥ ६३ ॥

**बद्धं बद्धं छसु आवलीसु उवरेणुदीरणं एइ । पंडगवेउ व समणा असंखगुणणाएँ जावंतं ॥ ६४ ॥**

लाभोहीणं पच्छा भोगअचक्खुसुयाण तो चक्खू । परिभोगमईणं तो विरियस्स असेढिगा घाई ॥ ५९ ॥

व्याख्या—पश्चात्स्थितिबन्धसहस्रेष्वतीतेषु लाभान्तरायावधिज्ञानदर्शनानां देशघातिरसेन बन्धं करोति, ततः स्थितिबन्धसहस्रेष्वतीतेषु भोगान्तरायाचक्षुर्दर्शनश्रुतज्ञानानां देशघातिरसेन बन्धं करोति, ततः सङ्ख्येयेषु स्थितिबन्धसहस्रेष्वतीतेषु चक्षुर्दर्शनस्य देशघातिरसेन बन्धं करोति, ततः सङ्ख्येयेषु स्थितिबन्धसहस्रेष्वतीतेषु परिभोगान्तरायमतिज्ञानयोः देशघातिरसेन बन्धं करोति, ततः स्थितिबन्धसहस्रेष्वतीतेषु वीर्यान्तरायस्य देशघातिरसेन बन्धं करोति, एतेषां पूर्वोक्तानां कर्म्मणां अश्रेणिगताः क्षपकोपशमश्रेणिवर्जिता जीवाः सर्वघातिरसेन बन्धं कुर्वन्तीति गाथार्थः ॥ ५९ ॥

संजमघाईण तओ अंतरमुदओ उ जाण दोण्हं तु । वेयकसायण्णयरे सोदयतुल्लाए पढमठिई ॥६०॥

व्याख्या—ततः स्थितिबन्धसहस्रेष्वतीतेषु संयमघातीनीनामेकविंशतिप्रकृतीनां अनन्तानुबन्धिवर्जकषायनोकषायाख्यानां अन्तरं प्रथमस्थितिं च करोति, वेदसञ्ज्वलनान्यतरयोः ययोर्द्वयोरुदयोऽस्ति तयोः स्वोदयतुल्यां प्रथमस्थितिं करोतीति गाथार्थः ॥ ६० ॥ आसां सप्तानां स्वोदयप्रमाणकालमाह—

थीअपुमोदयकाला संखेज्जगुणा उ पुरिसवेयस्स । तस्सवि विसेस अहिओ कोहे तत्तोवि जह कमसो ॥६१॥

व्याख्या—स्त्रीवेदनपुंसकवेदयोरुदयकालस्तुल्यो जघन्यश्च, तस्मात् पुरुषवेदस्य सङ्ख्येयगुणः, तस्मादपि संज्वलनक्रोधस्योदयकालो विशेषाधिकः, तस्मादपि यथोक्तं मानादिष्वपि विशेषाधिकः स्वोदयकालः, किमुक्तंभवति क्रोधोदयेन श्रेणिमुपस्थितस्य यावन्मात्रो द्वयोः क्रोधयोरुपशमकालः तावन्मात्रीं सञ्ज्वलनक्रोधस्य प्रथमस्थितिं करोति, एवं संज्वलनमा-

सङ्ख्येयभागमात्रं स्थितिबन्धं करोति, तं च ज्ञानावरणादीनां चतुर्णामप्यधोऽसङ्ख्येयगुणहीनमित्यर्थः, तेषा(षां सङ्)मसङ्ख्येयगुणो भूत्वा एकवारया एवमसङ्ख्येयगुणहीनो मोहनीयस्य बन्धो भवति, यथा बन्धस्तथा सत्कर्म्म च, [1]नामगोत्रयोः स्तोको मोहनीयस्य असङ्ख्येयगुणो ज्ञानावरणादीनामसङ्ख्येयगुणो बन्ध इति गाथार्थः ॥ ५६ ॥

**वीसगअसंखभागे मोहं पच्छाउ घाइ तइयस्स। वीसाण तओ घाइं असंखभागंमि बज्झंति ॥ ५७ ॥**

व्याख्या—ततः स्थितिबन्धसहस्रेष्वतीतेषु नामगोत्रयोरधो मोहनीयस्य एकवारयैव बन्धो [2]भवति। [3]सर्वस्तोको मोहनीये, तस्मादसङ्ख्येयगुणस्तुल्यश्च नामगोत्रयोः, घातिकर्मणामसंख्येयगुणस्तुल्यश्च। 'तइयस्स'त्ति वेदनीयस्यासङ्ख्येयगुणः। ततः स्थितिबन्धसहस्रेषु गतेषु 'वीसगाणं'ति नामगोत्रयोरेकप्रहारेणैव जातान्यधो घातीनि। मोहनीयस्य स्तोकबन्धः, शेषघातिकर्म्मणामसङ्ख्येयगुणो, नामगोत्रयोः असङ्ख्येयगुणो, वेदनीयस्याऽसङ्ख्येयगुणोऽनेन विधिना बध्यत इति गाथार्थः ॥ ५७ ॥

**अस्संखसमयबद्धाणुदीरणा होइ तंमि कालम्मि। देसे घाइरसं तो मणपज्जवअंतरायाणं ॥ ५८ ॥**

व्याख्या—यस्मिन् काले पल्योपमासङ्ख्येयभागमात्रं स्थितिबन्धं बध्नाति, तस्मिन् काले या बध्यमाना स्थितयः ताभ्यो याः समयादिहीना असङ्ख्येयसमयनिर्वर्त्तितास्तासामुदीरणा भवति, ततः स्थितिबन्धसहस्रेषु अतीतेषु देशघातिरसं मनःपर्यायज्ञानदानान्तराययोः बन्धं प्रति निर्वर्त्तयतीति गाथार्थः ॥ ५८ ॥

---

१ बृहद्वृत्तौ सत्कर्मापेक्षयाल्पबहुत्वमुक्तम्। २ अत्रत्यमल्पबहुत्वं बृहद्वृत्तितोऽवसेयम्। ३ ततः स्थितिबन्धसहस्रेषु गतेषु वेदनीयस्याधो जातानि घातीनि, तदनन्तरमिदमल्पबहुत्वम्।

**एवं तीसाण पुणो पल्लं मोहस्स होइ उ दिवड्ढं । एवं मोहे पल्लं सेसाणं पल्लसंखंसो ॥ ५४ ॥**

व्याख्या—'तीसाणं' ति, ज्ञानदर्शनावरणवेदनीयान्तरायाणां स्थितिबन्धसहस्रेष्वतीतेषु पल्योपमिकं बन्धं करोतीति। पल्योपममात्रे बन्धे सङ्ख्येयगुणहीनमन्यबन्धं तेषां करोति । मोहनीयस्य तु सार्द्धपल्योपमिकमित्येवं पूर्वक्रमेण स्थितिबन्धसहस्रेषु गतेषु मोहनीयस्य पल्योपमिको बन्धो भवति, तस्याप्युत्तरबन्धः सङ्ख्येयगुणहीनः, शेषाणां षण्णां कर्म्मणां पल्योपमा(म)सङ्ख्येयभागतुल्य इति गाथार्थः ॥ ५४ ॥

**वीसगतीसगमोहाण संतयं जह कमेण संखगुणं । पल्लअसंखेज्जंसो नामगोयाण तो बंधो ॥ ५५ ॥**

व्याख्या—'वीस'त्ति, विंशतिकोटाकोटिस्थितिकयोर्नामगोत्रयोः 'तीसग'त्ति त्रिंशत्कोटाकोटिस्थितिकानां ज्ञानदर्शनावरणान्तरायवेदनीयानां 'मोह'त्ति मोहनीयस्य सत्कर्म यथा क्रमेणा(ण) सङ्ख्येयगुणं भवति, नामगोत्रयोस्तुल्यं जघन्यं च, ज्ञानावरणादीनां चतुर्णां तुल्यम (ल्यं स) सङ्ख्येयगुणम्, तदपेक्षया मोहनीयस्या(स्य) सङ्ख्येयगुणम् । पल्योपमासङ्ख्येयभागमात्रो नामगोत्रयोस्ततो बन्धो [1]भवतीति गाथार्थः ॥ ५५ ॥

**एवं तीसाणंपि हु एक्कपहारेण मोहणीयस्स । तीसगअसंखभागो ठितिबंधो संतयं च भवे ॥ ५६ ॥**

व्याख्या—एवं नामगोत्रक्रमेण 'तीसाणं'ति ज्ञानदर्शनावरणान्तरायवेदनीयानां स्थितिबन्धसहस्रेषु गतेषु पल्योपमासङ्ख्येयभागमात्रो [2]भवतीति । पुनः प्रभूतेषु स्थितिबन्धसहस्रेषु गतेषु 'एकोपहारेण'त्ति एकया वारया मोहनीयस्यापि पल्योपमा-

१ अत्राल्पबहुत्वं बृहद्वृत्तितोऽवसेयम् । २ अत्रत्यमल्पबहुत्वं सत्कर्मापेक्षया बृहद्वृत्तितोऽवसेयम् ।

ठिइखंडं उक्कोसंपि तस्स पल्लस्स संखतमभागं । ठितिखंडं बहु सहस्सेसेक्केक्कं जं भणिस्सामो ॥ ५१ ॥

व्याख्या—स्थितिखण्डं उत्कृष्टमपि पल्योपमसङ्ख्येयभागमात्रं तस्य प्राक्तनबन्धस्य हापयित्वा २ अन्यं स्थितिबन्धं करोतीति शेषः, स्थितिखण्डसहस्रेष्वेवं गतेषु एकैकं करोति यत्तद् वयं भणिष्यामः, यद्यपि सप्तानामपि कर्मणां पल्योपमसङ्ख्येयभागोऽभिहितो घातः, तथापि नामगोत्रयोः स्तोको हीनस्थितित्वाद् ज्ञानदर्शनावरणान्तरायवेदनीयानां विशेषाधिको मोहनीयस्य तस्मादपि विशेषाधिक इति गाथार्थः ॥ ५१ ॥

करणाउ संखभागे सेसे (य) असण्णिमाइयाण समो । बंधो कमेण पल्लं वीसगतीसाण उ दिवड्ढं ॥ ५२॥

व्याख्या—तस्मादनिवृत्तिकरणात् सङ्ख्येयेषु भागेषु गतेष्वेकस्मिन् शेषे पञ्चेन्द्रियासंज्ञिबन्धतुल्यबन्धं बध्नाति, ततः स्थितिखण्डपृथक्त्वेषु गतेषु चतुरिन्द्रियबन्धतुल्यं बन्धं बध्नात, एवमनेन न्यायेन त्रिद्व्येकेन्द्रियबन्धतुल्यं बन्धं बध्नाति, ततः स्थितिबन्धसहस्रेष्वतीतेषु पल्योपमतुल्यो 'वीसगाणं' ति नामगोत्रयोः, 'तीसगाणं' ति, ज्ञानदर्शनावरणान्तरायवेदनीयानां सार्द्धपल्योपमिकस्थितिबन्धो भवतीति गाथार्थः ॥ ५२ ॥

मोहस्स दोण्णि पल्ला संतेवि हु एवमेव अप्पबहू । पलियमित्तंमि बंधे अण्णो संखेज्जगुणहीणो ॥ ५३ ॥

व्याख्या—मोहनीयस्य द्विपल्योपमिको बन्धः, सत्कर्मणि चाल्पबहुत्वं बन्धक्रमेण वक्तव्यम् । यद्यप्यन्तःकोटाकोटिः सप्तानामपि, तथापि नामगोत्रयोः स्तोकम्, वेदनीयघातिकर्म्मणां विशेषाधिकम्, मोहनीयस्य विशेषाधिकम्, पल्योपममात्रे बन्धे योऽन्यो बन्धः स सङ्ख्येयगुणहीनो भवति नामगोत्रयोः, शेषाणां सङ्ख्येयभग इति गाथार्थः ॥ ५३ ॥

केष्वेव बद्धायुष्कस्य भवति, अबद्धायुष्कस्तु क्षपकश्रेणिं करोति, यस्तु वेदकसम्यग्दृष्टिस्तस्य अनियमो बद्धायुष्कोऽबद्धायुष्को वा भवति, किन्तु यो वियोजितानन्तानुबन्धिकषायो भवति, स चतुर्विंशतिसत्कर्मा, तेष्ववियोजितेष्वष्टाविंशतिसत्कर्मा केषाञ्चित् । अनन्तानुबन्धिनो वियोज्य पश्चाद्दर्शनत्रिकमुपशमयति स च '[1]वेयगसम्मदिट्ठी' अस्यां गाथायां चारित्रलम्भार्होऽविरतादिस्त्रिविधः कथितः, तत्र यो दर्शनत्रिकमविरत उपशमयति तं भत्याह—

**अहवा दंसणमोहं पढमं उवसामइत्तु सामण्णो। ठिच्चा अणुदइयाणं पढमठिइं आवली नियमा ॥ ४८ ॥**

व्याख्या—क्षीणसप्तकश्चारित्रमोहमेवोपशमयति, अथवा दर्शनत्रिकं वेदकसम्यग्दृष्टिः प्रथममुपशमय्य प्राक्तनन्यायेन वा मिथ्यात्वसम्यग्मिथ्यात्वयोरावलिकामात्रा सम्यक्त्वस्य अन्तर्मुहूर्तिका प्रथमस्थितिर्नियमान्निश्चयेनेति गाथार्थः ॥ ४८ ॥

**पढमुवसमंव सेसं अंतमुहुत्ताउ तस्स विज्झाओ। संकेसविसोहीओ पमत्त इयरत्तणं बहुसो ॥ ४९ ॥**

व्याख्या—प्रथमसम्यक्त्वोपलम्भोपशमवच्छेषम् । अन्तर्मुहूर्तात् व्यतीताद् गुणसङ्क्रमावसाने विध्यातसङ्क्रमः सम्यक्त्वस्य भवति, एवं दर्शनत्रिके उपशान्ते सङ्क्लेशविशुद्धितः प्रमत्ताप्रमत्तत्वानि सहस्रशो विधाय यत्करोति तदुच्यत इति गाथार्थः ॥४९॥

**पुण तिण्णि व करणाइं करेइ तइयंमि एत्थ पुण भेओ। अंतो कोडाकोडी बंधं संतं च सत्तण्हं ॥ ५० ॥**

व्याख्या—चारित्रमोहनीयोपशमार्थं पुनस्त्रीण्यपि करणानि यथाप्रवृत्तापूर्वानिवृत्तिकरणाख्यानि करोति प्राग्वत् । किंतु अत्र तृतीयकरणे भेदः, अन्तःकोटाकोटीमानं बन्धं सत्कर्म च सप्तानामायुर्वर्जानां कर्मणां करणादौ भवतीति गाथार्थः ॥ ५० ॥

---

१ उ. क. २९

व्याख्या—मिथ्यात्वस्य चतुर्धा अजघन्या स्थित्युदीरणा भवति, कथं ? प्रथमसम्यक्त्वप्राप्तौ समयाधिकावलिकाशेषायां प्रथमस्थितौ जघन्या सादिः, तत्समयापगमे अध्रुवा, प्रतिपततोऽजघन्या सादिरध्रुवा, तत्स्थानमप्राप्तस्याऽनादिरभव्यस्य ध्रुवेति । ध्रुवोदयानां त्रिधा सादिवर्जा अजघन्योदीरणा, घातिध्रुवोदयानां घातिमूलप्रकृतिवत्, नामध्रुवोदयानां नामवदनादिर्ध्रुवाध्रुवेति । शेषविकल्पा द्विधा साद्यध्रुवास्ते च मूलप्रकृतिवद् भावनीयाः । शेषाणामध्रुवप्रकृतीनां सर्वे विकल्पाः साद्यध्रुवाः, उदये उदीरणासद्भावादुदयस्याप्यनियतित्वाद् भावित एवेति गाथार्थः ॥ २७ ॥

**सामित्तद्धाछेया इह ठिइसंकमेण तुल्लाओ । बाहुल्लेण विसेसं जं जाणं ताण तं वोच्छं ॥ २८ ॥**

व्याख्या—उत्कृष्टोदीरणासामित्वं जघन्योदीरणास्वामित्वं च अद्धा कालस्तच्छेदश्च यस्याः प्रकृतेः यावत्यः स्थितयः उदीरणायोग्या इति स्वामित्वमद्धाछेदश्च यथास्थितिसङ्क्रमे भणितः, तथावसेयो बाहुल्येन, विशेषस्तु यो यासां तं तासां वक्ष्येऽहमिति गाथार्थः ॥ २८ ॥

**अंतोमुहुत्तहीणा सम्मे मिस्संमि देहिमिच्छस्स । आवलिदुगेण हीणा बंधुक्कोसाण परमट्ठिई ॥ २९ ॥**

व्याख्या—सप्ततिकोटाकोटिप्रमाणा मिथ्यात्वस्थितिर्मिथ्यादृष्टिना सता या बद्धा तां तत्रैवान्तर्मुहूर्त्तं मध्यमपरिणामोऽनुभूय ततः सम्यक्त्वं गच्छति, सा च सम्यक्त्वस्थितौ सङ्क्रामति तस्योदयसङ्क्रमस्थितिकत्वादन्तर्मुहूर्त्तोना उत्कृष्टा स्थितिरुदीरणायोग्या, द्वितीयान्तर्मुहूर्त्तं सम्यक्त्वे स्थित्वा ततः सम्यग्मिथ्यात्वं गच्छति, ततोऽन्तर्मुहूर्त्तद्विकोनास्य भवति । उदये उत्कृष्टो बन्धो यासां भवति ता उदयबन्धोत्कृष्टाः, ताश्च षडशीतिसंख्याः स्थिरशुभवर्जा षट्चत्वारिंशद्ध्रुवोदयाः षोडशकषायाः त्रसदुस्वरादिचतस्रो

बन्धः तासामेवं, यतः उदयावलिकागतं नोदीर्यते दलं नाभिनवबद्धं एवमावलिकाद्वयं भावनीयमिति गाथार्थः ॥२५॥

साधनादिप्ररूपणामाह—

**वेयणियाऊण दुहा चउव्विहा मोहणीयअजहण्णा । पंचण्ह साइवज्जा सेसा सव्वेसु दुविगप्पा ॥ २६ ॥**

व्याख्या—वेदनीयायुषो द्विधा अजघन्या स्थित्युदीरणा भवति, कथं सर्वे जघन्यस्थितिका एकेन्द्रिया जघन्याया उदीरकाः, त एव प्रवर्द्धमानस्थितिका अजघन्यायाः, अतो द्वे अपि साद्यध्रुवे, सा समया(धिका)वलिकाशेषे आयुषो जघन्या सादिरध्रुवेति विशेषः । मोहनीयस्य चतुर्विधा अजघन्याः, कथं ? क्षपकस्य समयाधिकावलिकाशेषायां सञ्ज्वलनलोभस्थितौ जघन्या सादिस्तत्समया(तत्स्थाना)भावे अध्रुवा, उपशान्तस्थानात् प्रतिपततोऽजघन्या सापि सादिरध्रुवा भावितंव, उत्कृष्टानुत्कृष्टा च स्थित्युदीरणा परावर्त्तमानाध्यवसायेन भवति मिथ्यादृष्टौ, सापि सादिरध्रुवा, सङ्क्लेशविशुद्ध्योः प्रतिसमयमन्यथाभवनादिति । पञ्चानां ज्ञानदर्शनावरणनामगोत्रान्तरायाणां सादिवर्ज्जा त्रिधा अजघन्या स्थित्युदीरणा, कथं ? घातिनां यदा क्षीणकषायस्य ससमयावलिकामात्रा स्थितिर्भवति तदा जघन्या, सा च सादिरध्रुवा, तस्याः याभ्यधिका साऽजघन्या, उत्कृष्टा मिथ्यादृष्टौ, उत्कृष्टायाः सद्भावात् (प्रतिपतत) अनुत्कृष्टा सापि सादिरध्रुवा, अजघन्या पुनः सादिर्न भवति, जघन्यायाः अप्रतिपातात्, तत्स्थानमप्राप्तस्यानादिरभव्यस्य ध्रुवा, नामगोत्रयारप्येवमेव, किन्तु सयोग्यन्तसमये भणितव्या, शेषविकल्पा यथाकर्म प्रतिपादिता एवेति गाथार्थः ॥ २६ ॥

**मिच्छत्तस्स चउहा धुवोदयाणं तिहा उ अजहण्णा । सेसविगप्पा दुविहा सव्वविगप्पा उ सेसाणं ॥ २७ ॥**

विकल्पाः उदीरणायामपि तावन्त एव, ये (च) स्वामिनोऽभिहिताः गतिगुणाश्रयाः, उदीरणायामपि त एवेति गाथार्थः ॥२३॥

**मोत्तुं अजोगिठाणं सेसा नामस्स उदयवण्णेया। गोयस्स य सेसाणं उदीरणा जा पमत्तो त्ति ॥ २४ ॥**

॥ पगइउदीरणा सम्मत्ता ॥

व्याख्या—मुक्त्वा अयोगिस्थानोपलक्षितं उदयस्थानं अष्टप्रकृतिरूपं नवप्रकृतिरूपं वा, शेषाणि नाम्न उदयस्थानानि, विंशत्यादीनि दश सविकल्पानि उदयवत् उदीरणायामपि भवन्ति, गतिगुणाश्रयाः स्वामिनोऽपि त एव। गोत्रस्यापि अयोगिनो यः उच्चैर्गोत्रोदयः तं विहाय शेषं उदयवदुदीरणायामपि भवति। शेषयोर्वेदनीयायुषोर्यावत् प्रमत्तस्तावदुदीरणा भवत्युदयतुल्या, अप्रमत्तादिषूदयः शुद्ध एव। इतिशब्दाधिक्यात्त्रयाणामप्यायुषां (मनुष्यायुषोऽपि च) पर्यन्तावलिकायां उदय एव शुद्धो नोदीरणा इति गाथार्थः ॥ २४॥ ॥ उक्ता प्रकृत्युदीरणा ॥ स्थित्युदीरणामाह—

**पत्तोदयाए इयरा सह वेयइ ठिइउदीरणा एसा। बेआवलिया हीणा जावुक्कोसन्ति पाउग्गा ॥ २५ ॥**

व्याख्या—प्राप्तोदया स्थित्या सहेतरा अप्राप्तोदयाः स्थितीर्वीर्यप्रयोगेण यद्वेदयत्येषास्थित्युदीरणोच्यते—यद्यपि स्थितिसमयानां प्रक्षेपोऽनुभवनं वा नास्ति, तथापि तत्स्थितिकर्मपुद्गलानामेव स्थित्यभिधानं यथा ग्रामपञ्चकुले गते दण्डिते वा ग्रामो गतो दण्डितो वा भवति, न च तत्क्षेत्रस्य गमनं दण्डो वा सम्भवति, कियत्यः प्रकृतीनामुदीरणाप्रायोग्याः स्थितयो भवन्ति उत्कृष्टतः एतदाह—द्वाभ्यां आवलिकाभ्यां हीना यावदुत्कृष्टा स्थितिः, किमुक्तं भवति—उत्कृष्टस्थितौ यावन्तः स्थितिविशेषाः कालविशेषाः आवलिकाद्विकसमयैः हीना उत्कृष्टतः संभवन्ति। किं सर्वप्रकृतीनां? ननु बाहुल्यादेतदुच्यते उदये यासामुत्कृष्ट-

व्याख्या—अप्रमत्तादिगुणवन्त 'उत्तरतणुय' त्ति वैक्रियाहारकशरीरिणोऽसङ्ख्येयवर्षायुषश्च वर्जयित्वा शेषा जीवाः शेषनिद्राणां निद्रा२प्रचला२स्त्यानर्द्धीनामुदीरकाः 'सबन्धगंताः कसायाणं' ति अनन्तानुबन्धिनां सास्वादनान्ताः, द्वितीयकषायाणामविरतान्ताः, तृतीयानां देशविरतान्ताः, सञ्ज्वलनानां स्वबन्धं यावत् लोभस्याबन्धकोऽपि किञ्चित्कालमुदीरको भवतीति गाथार्थः ॥ २० ॥

हासरईसायाणं अंतमुहुत्तं तु आइमं देवा । इयराणं नेरइया उड्ढं परियत्तणविहीए ॥ २१ ॥

व्याख्या—हास्यरतिसातवेदनीयानामाद्यमन्तर्मुहूर्तमवश्यमुदीरका देवाः, इतरासामरतिशोकासातवेदनीयानां अवश्यं नारका उदीरकाः तदूर्ध्वं षण्णामप्यनियम इति गाथार्थः ॥ २१ ॥

हासाई छक्कस्स उ जाव अपुव्वो उदीरगा सव्वे । उदओ उदीरणा इव ओघेणं होइ नायव्वो ॥ २२ ॥

व्याख्या—हास्यादिषट्कस्य तु यावदपूर्वगुणस्थानं तावत्सर्वेऽप्युदीरकाः । सर्वासां प्रकृतीनां उदयोऽप्युदीरणावत् ओघतोऽविशेषेण भवति ज्ञातव्य इति गाथार्थः ॥ २२ ॥

पगइट्ठाणविगप्पा जे सामी होंति उदयमासज्ज । तेच्चिय उदीरणाए नायव्वा घातिकम्माणं ॥ २३ ॥

व्याख्या—प्रकृतीनां स्थानविकल्पा ये स्वामिनोऽभिहिता उदयमाश्रित्य त एव उदीरणायामपि ज्ञातव्या घातिकर्मणां किमुक्तंभवति, ज्ञानावरणीयस्य एकमुदयस्थानं पञ्चेति । दर्शनावरणस्य द्वे उदयस्थाने चत्वारि पञ्च वा । अन्तरायस्यैकं पञ्चप्रकृत्यात्मकम् । नव मोहनीयस्य एकद्विचतुःपञ्चषट्सप्ताष्टनवदशप्रकृत्यात्मकानि । उदीरणायामप्येतान्येव, एतेषामुदये यावन्तो

व्याख्या—उच्छ्वासस्योदीरका योगिनो भवन्ति, ये उच्छ्वासस्य उच्छ्वासपर्याप्त्या पर्याप्ताः, स्वरस्य तु भाषापर्याप्त्या यावन्नायोगित्वं मरणं वा गच्छन्ति ( तावत्तदुदीरकाः ) इति गाथार्थः ॥ १६ ॥

**नेरइया सुहुमतसा वज्जिय सुहुमा य तह अपज्जत्ता । जसकित्तुदीरगाइज्जसुभगनामाण सण्णिसुरा ॥१७॥**

व्याख्या—सर्वेऽपि नारकाः "सूक्ष्मत्रसा" इति वाय्वग्निकायिकाः, "सूक्ष्मा" इति सूक्ष्मनामकर्मोदयिनः, "अपर्याप्ता" इति सर्वेऽपि एकद्वित्रिचतुःपञ्चेन्द्रिया लब्ध्यपर्याप्तकाः, एतान् वर्जयित्वा यशःकीर्त्तेरुदीरका भवन्ति, आदेयशुभगनाम्नोः केचित् संज्ञिनो नरतिर्यञ्चो देवाश्च केचिदुदीरका इति गाथार्थः ॥ १७ ॥

**उच्चं चिय जइ अमरा केई मणुया व नीयमेवण्णे । चउगइया दुभगाई तित्थयरो केवली तित्थं ॥ १८ ॥**

व्याख्या—उच्चैर्गोत्रमेव यतयो अमरा उदीरयन्ति, नेतरत्, केचित्प्राकृतनरा अपि किञ्चित्कालम् । तदवशिष्टाः सर्वेऽपि नारकतिर्यञ्चो नीचमेवोदीरयन्ति, चतुर्गतिका अपि जीवास्तिस्रः प्रकृतीर्दुर्भगानादेयायशःकीर्त्त्यभिधाना उदीरयन्ति, तीर्थकरो यदा प्राप्तकेवलज्ञानो भवति, तदा तीर्थकरनाम उदीरयतीति गाथार्थः ॥ १८ ॥

**मोत्तूण खीणरागं इंदियपज्जत्तगा उदीरेंति । निद्दापयला सायासायाईं जे पमत्तत्ति ॥ १९ ॥**

व्याख्या—मुक्त्वा क्षीणरागं किमुक्तं भवति-क्षीणकषायान्तावलिकाकालं मुक्त्वा शेषं कालं तदारतो जीवा इन्द्रियपर्याप्त्या पर्याप्तका निद्राप्रचलयोरुदीरकाः, सातासातवेदनीये सर्वेऽपि ये प्रमत्तास्ते उदीरयन्तीति गाथार्थः ॥ १९ ॥

**अपमत्ताईं उत्तरतणूयअस्संखयाउ वज्जेत्ता । सेसनिद्दाणं सामी सबंधगंता कसायाणं ॥ २० ॥**

आइमसंघयणं चिय सेढीमारूढगा उदीरेंति । इयरे हुंडं छेवट्टगं तु विगला अपज्जत्ता ॥ १२ ॥

व्याख्या—क्षपकश्रेणीं प्रतिपन्नाः प्रथमसंहननमेवोदीरयन्ति न शेषाणि । इतरे एकेन्द्रियाः तिर्यञ्चो मनुष्याश्च हुण्डमुदीरयन्ति, द्वीन्द्रियादित्रसा लब्ध्यपर्याप्तकाश्च अन्त्यसंहननमिति गाथार्थः ॥ १२ ॥

वेउवियआहारगउदए न नरावि होंति संघयणी । पज्जत्तबायरेच्चिय आयवउद्दीरगो भोमो ॥ १३ ॥

व्याख्या—उत्तरवैक्रियाहारकयोरुदये न मनुष्याः, अपिशब्दात्तिर्यञ्चोऽपि संहननोदीरणावन्तो भवन्ति, पर्याप्तबादर एव पृथ्वीकायिक आतपस्योदीरको भवति, नान्यो जीव इति गाथार्थः ॥ १३ ॥

पुढवी-आउवणस्सइ बायरपज्जत्त उत्तरतणूय । विगलपणिंदियतिरिया उज्जोवुद्दीरगा भणिया ॥ १४ ॥

व्याख्या—पृथिव्यम्बुवनस्पतिकायिका बादरा लब्धिपर्याप्ताः उत्तरवैक्रियाहारकशरीरिणश्च विकलेन्द्रियाः पर्याप्ता उद्योतस्योदीरका भणिताः इति गाथार्थः ॥ १४ ॥

सगला सुगतिसराणं, पज्जत्तासंखवासदेवा य । इयराणं नेरइया, नरतिरि सुसरस्स विगला य ॥ १५ ॥

व्याख्या—"सकलाः" सम्पूर्णेन्द्रियाः, पर्याप्तास्तिर्यग्मनुष्याः प्रशस्तविहायोगतिसुस्वरयोरसङ्ख्येयवर्षायुषः सर्वदेवाश्चोदीरका भवन्ति । इतरयोरप्रशस्तविहायोगतिदुःस्वरयोः सर्वेऽपि नारका उदीरकाः नरतिर्यञ्चोऽपि, विकलाः पर्याप्ताः (केचन) सुस्वरस्योदीरकाः भूयोऽपि नरतिर्यग्ग्रहणं पञ्चेन्द्रियाणामनियमार्थमिति गाथार्थः ॥ १५ ॥

ऊसासस्स सरस्स य पज्जत्ता आणुपाणभासासु । जा ण निरुंभइ ते ताव होंति उद्दीरगा जोगा ॥ १६ ॥

आहारी सुरनारग सण्णी इयरे निलो उ पज्जत्तो । लद्धीएँ बायरोदीरगो उ वेउव्वियतणुस्स ॥ ८ ॥

व्याख्या—"आहारी"ति आहारपर्याप्त्या पर्याप्तकाः, सुरा नारकाश्च इतरे संज्ञिनो मनुष्यतिर्यञ्चः तुशब्दादुत्तरवैक्रियसप्तकस्योदीरकाः, 'अनिल' इति वायुकायिको लब्ध्या-( वैक्रियलब्ध्या सम्पन्नः ) पर्याप्तो बादरो वैक्रियषट्कस्योदीरको द्वितीयतुशब्दाद्दुर्भगनामोदयीति गाथार्थः ॥ ८ ॥

तदुवंगस्सवि तेच्चिय पवणं मोत्तूण केइ नरतिरिया । आहारसत्तगस्स वि कुणइ पमत्तो विउव्वन्ता ॥ ९ ॥

व्याख्या—वैक्रियोपाङ्गस्यापि त एव वायुकायिकं मुक्त्वा नरतिर्यञ्चः केचन यतः स्तोका उत्तरवैक्रियकारिणः । आहारकस्य-तु करोति प्रमत्तः, आहारपर्याप्त्या पर्याप्ततुशब्दाद्यस्तत्कारीति गाथार्थः ॥ ९ ॥

तेतीसं नामधुवोदयाण उदीरगा सजोगीओ । लोभस्स उ तणुकिट्टीण होंति तणुरागिणो जीवा ॥ १० ॥

व्याख्या—त्रयस्त्रिंशतां नामध्रुवोदयानां उदीरकाः सर्वे सयोगिनो भवन्ति, वर्णादिविंशतिकार्मणसप्तकं स्थिरशुभे सेतरे अगुरुलघु निर्माणं चेति । लोभस्य तनुकिट्टीनां सूक्ष्मविभागानां तुशब्दस्यैवकारार्थत्वात्, तनुरागिण एव जीवा उदीरका न शेषा रागवन्तोऽपीति गाथार्थः ॥ १० ॥

पंचिंदियपज्जत्ता नरतिरिचउरंसउसभपुव्वाणं । चउरंसमेव देवा उत्तरतणुभोगभूमा य ॥ ११ ॥

व्याख्या—पञ्चेन्द्रियाः शरीरपर्याप्त्या पर्याप्ता नरतिर्यञ्चः समचतुरस्रवज्रर्षभनाराचाद्यानां संस्थानसंहननानां उदीरकाः, देवाः समचतुरस्रसंस्थानस्यैवोदीरकाः, 'उत्तरतणु'त्ति आहारकोत्तरवैक्रियशरीरिणो मनुष्यतिर्यञ्चो भोगभूमिजाश्चोदीरका इति गाथार्थः

उत्तरप्रकृत्युदीरणास्वामिन आह—

**उवपरघायं साहारणं च इयरं तणूएँ पज्जत्ता। छउमत्था चउदंसणनाणावरणंतरायाणं ॥ ५ ॥**

व्याख्या—उपघातं परघातं साधारमितरच्च तन्वा पर्याप्तः छद्मस्थाश्चतुर्दर्शनज्ञानावरणान्तरायाणमिति पदानि। पदार्थस्तूपघात-पराघातसाधारणप्रत्येकनाम्नां तन्वा शरीरेण ये पर्याप्ता जीवास्ते उदीरका भवन्ति, यतः तासां चतसृणामपि शरीरप्राप्तावेवोदयो भवति। ज्ञानावरणान्तरायदशकदर्शन(नावरण)चतुष्काणां सर्वे छद्मस्था उदीरका इति गाथार्थः ॥ ५ ॥

**तसथावराइतिगतिगआउगईजातिदिट्ठिवेयाणं। तं नामा आणुपुव्वीणंपि किंतु ते अंतरगईए ॥ ६ ॥**

व्याख्या—त्रसनाम्नस्त्रसाः, बादरनाम्नो बादराः, पर्याप्तकस्य पर्याप्ताः, स्थावरस्य स्थावराः, सूक्ष्मस्य सूक्ष्माः, अपर्याप्तकस्य अपर्याप्तकाः, देवगत्यायुषोर्देवाः, मनुजगत्यायुषोर्मनुजाः, एवं नरकतिर्यग्गत्यायुषोरपि वक्तव्यम्, पञ्चेन्द्रियादिजातीनां क्रमशः पञ्चेन्द्रियादिजीवा उदीरकाः, मिथ्यात्वस्य मिथ्यादृष्टयः, सम्यग्मिथ्यात्वस्य सम्यग्मिथ्यादृष्टयः, सम्यक्त्वस्य क्षायोपशमिकसम्यग्दृष्टयः एवं पुंस्त्रीनपुंसकानां तद्वेदनामका एवोदीरकाः, गतिवदानुपूर्विकाणामपि, किन्तु तासां भवान्तरे नोभयत्रेति गाथार्थः ॥६॥

**आहारी उत्तरतणु नरतिरितव्वेयए पमोत्तूणं। उदीरंती उरलं ते चेव तसा उवंगं से ॥ ७ ॥**

व्याख्या—"आहारी"ति आहारकशरीरीति, "उत्तरतन्वि"ति वैक्रियशरीरिणो देवनारकास्तद्वेदिनो नरतिरश्चश्च मुक्त्वा शेषाः सर्वेऽपि जीवा एकद्वित्रिचतुष्पञ्चेन्द्रियाः औदारिकशरीरस्य सङ्घातनबन्धनस्योदीरकाः, एते चौदारिकशरीरोदीरका ये त्रसास्त एवोदारिकाङ्गोपाङ्गस्योदीरकाः, स्थावराणां तदुदयाभावादिति गाथार्थः ॥ ७ ॥

अधुवोदयाण दुविहा मिच्छस्स चउव्विहा तिहण्णासु । मूलुत्तरपगईणं भणामि उदीरगा एत्तो ॥ ३ ॥

व्याख्या—अध्रुवोदयानां द्विधा, मिथ्यात्वस्य चतुर्विधान्यासु मूलोत्तरप्रकृतीनां भणामि उदीरका अत इति पदानि। पदार्थस्तु दशोत्तरशतस्याध्रुवोदयस्य द्विधोदीरणा भवति, अध्रुवोदयत्वादेव भावितैव (भावनीया), मिथ्यात्वस्य चतुर्द्धा, कथं? सम्यक्त्वप्राप्तावधःप्रतिपततः सादिः, सम्यक्त्वमप्राप्तस्यानादि(रभव्यस्य ध्रुवा भव्यस्या)ध्रुवेति। "अन्यास्वि"ति सप्तचत्वारिंशतां ध्रुवोदयानां त्रिधेति, ज्ञानदर्शनावरणान्तरायप्रकृतीनां चतुर्दशानां मूलप्रकृतीनामिव भावनीया। वर्णादिविंशतिः अगुरुलघुनिर्माणं स्थिरशुभे सेतरे कार्मणसप्तक कार्मणतैजसशरीरे तयोरेव त्रीणि बन्धनानि (द्वे संघातने च) एषा नाम्नस्त्रयत्रिंशत् ध्रुवोदयाः संयोगिनि नामवत्त्रिधा भावनीयेति सादिर्नसंभवति, तस्मादप्रतिपातात् । मूलप्रकृतीनामुत्तरप्रकृतीनां चातः "उदीरका" उदीरणास्वामिनो भणामीति गाथार्थः ॥ ३ ॥

मूलप्रकृत्युदीरणास्वामिन आह—

घाईणं छउमत्था उदीरगा रागिणो उ मोहस्स । वेयाऊण पमत्ता सजोगिणो नामगोयाणं ॥ ४ ॥

व्याख्या—घातिनां छद्मस्था उदीरकाः, रागिणस्तु मोहनीयस्य। वेदनीयायुषोः प्रमत्ताः सयोगिनो नामगोत्रयोरिति पदानि। पदार्थस्तु घातिकर्मणां ज्ञानावरणदर्शनावरणान्तरायाणां सर्वे छद्मस्था उदीरकाः, थेरा भगवन्तः (?) सकषायाः छद्मस्थास्त एव मोहनीयस्योदारकाः, वेदनीयायुषोः सर्वे प्रमत्ताः, नामगोत्रयोः ये सयोगिनो मनोवाक्कायव्यापारवन्तः ते सर्वेऽप्युदीरणास्वामिनः इति गाथार्थः ॥ ४ ॥

साम्प्रत उदीरणाकरणमाह-

**जं करणेणोकड्ढिय दिज्जइ उदए उदीरणा एसा। पगतिठितिमाइचउहा मूलुत्तरभेयओ दुविहा॥ १॥**

व्याख्या---यत्करणेनापकृष्य दीयते उदये उदीरणा एषा प्रकृतिस्थित्यादिचतुर्द्धा, मूलोत्तरभेदतो द्विधेति पदानि, पदार्थस्तु यद्दलं परमाण्वात्मकं करणेन स्ववीर्यात्मकेनापकृष्यानुदितस्थितिभ्यः इत्यवगम्यते दीयते प्रक्षिप्यते उदये उदयप्राप्तस्थितौ, एषा उदीरणोच्यते, । एतल्लक्षणम्, तस्या एव भेदानाह-प्रकृतिस्थित्यनुभागप्रदेशविभागाच्चतुर्द्धा भवति, मूलोत्तरप्रकृतिभेदात्पुनर्द्विधेति गाथार्थः॥ १॥

मूलप्रकृतीनां साधनादिप्ररूपणामाह-

**वेयणियमोहणीयाण होइ चउहा उदीरणाउस्स। साई अधुवा सेसाण साइवज्जा भवे तिविहा॥२॥**

व्याख्या---वेदनीयमोहनीययोर्भवति चतुर्द्धा उदीरणा आयुषः। सादिरध्रुवा शेषाणां सादिवर्ज्जा भवेत् त्रिविधेति पदानि। पदार्थस्तु वेदनीयमोहनीययोः चतुर्द्धोदीरणा भवति, कथं अभव्येष्वनादिर्ध्रुवा, प्रमत्तसूक्ष्मसम्परायातीतेष्वध्रुवा, तयोरेव प्रतिपित्सोः सादिरिति भावयितव्या, आयुषः सादिरध्रुवा, यतः-सर्वायुषामन्तावलिका उदयेनैवानुभूयते, शेषाणां ज्ञानदर्शनावरणनामगोत्रान्तरायाणां सादिशेषा त्रिधा भवति, कथं ज्ञानदर्शनावरणान्तरायाणां समयाधिकावलिकाशेषे क्षीणकषायकाले अध्रुवा भवत्युदीरणा, तत्स्थानमप्राप्तानां ध्रुवानादिश्चेति। सयोगिनोऽन्तसमये नामगोत्रयोरेवमेव प्रतिपाताभावात् सादिर्न सम्भवतीति गाथार्थः॥ २॥ साम्प्रतमुत्तरप्रकृतीनामाह--

नायां च तुल्यः, प्रदेशगुणहान्यन्तरमाश्रित्यानन्तगुणः । द्वयोरपि अइत्थावणा तुल्या उद्वर्त्तनापवर्त्तनयोर्व्याघातादन्यत्र जघन्य-निक्षेपादनन्तगुणेति गाथार्थः ॥ १८ ॥

**तत्तो वाघायणुभागकंडगं एक्कवग्गणाहीणं । उक्कोसो निक्खेवो तुल्लो सविसेससंतं च ॥ १९ ॥**

व्याख्या—ततस्तस्या अइत्थावणातो व्याघाते यदुत्कृष्टमनुभागकण्डकं एकवर्गणया हीनं तदुद्वर्त्तनोत्कृष्टाइत्थावणातो ऽनन्तगुणं तस्मादप्युद्वर्त्तनाऽपवर्त्तनयोः य उत्कृष्टो निक्षेपः स विशेषाधिकस्तुल्यश्च, तस्मादुत्कृष्टस्थितिबन्धानुभागः, उत्कृष्टसत्स्थित्यनुभागोपि विशेषाधिको भवतीति गाथार्थः ॥ १९ ॥

**आबंधं उव्वट्टइ सव्वत्थोवट्टणाठितिरसाणं । किट्टीवज्जे उभयं किट्टिसुओवट्टणा एक्का ॥ २० ॥**

॥ उव्वट्टणोवट्टणाओ ॥

व्याख्या—'आबन्धं'ति यावद्बन्धोऽस्ति तावदुद्वर्त्तना भवत्यपवर्त्तना पुनः सर्वत्र बन्धे वाऽबन्धे वा स्थित्यनुभागयोः स्यादथवा 'आबन्धं' ति यावन्मात्रः स्थितिबन्धः तावन्मात्रस्य स्थितिसत्कर्मणः उद्वर्तना स्यात्, तदुपरितनस्य स्थित्युद्वर्तनाऽनुभागोद्वर्तना वा नेति । सर्वत्र अपवर्तना बध्यमाने तदारतः परतो वा स्थितेरनुभागस्य च भवति, किट्टीकृतवर्जदले उभयमपि भवति, किट्टीकृते त्वपवर्तना एवेति गाथार्थः ॥ २० ॥

। उद्वर्तनापवर्तनाकरणे समाप्ते ।

अइत्थावणाइयाओ सण्णाओ दुसुवि पुव्ववुत्ताओ । किंतु अणंतभिलावेण फड्डगा तासु वत्तव्वा ॥१७॥

व्याख्या—अइत्थावणा जघन्या उत्कृष्टा च, जघन्यो निक्षेपः उत्कृष्टश्च एवमाद्याः संज्ञा द्वयोरपि उद्वर्त्तनापवर्त्तनयोः स्थितिविषये या पूर्वं वर्णिता अत्रापि ता एव, किन्त्वनन्ताभिलापेन निक्षेपाइत्थावणासु स्पर्द्धकानि वक्तव्यानि, एतदेवोच्चारयति—उद्वर्त्तनायां स्तोको जघन्यनिक्षेपः, जघन्या अइत्थावणा तस्मादनन्तगुणा, तस्या उत्कृष्टनिक्षेपोऽनन्तगुणः, तस्मात्सर्वस्थित्यनुभागो विशेषाधिक इति । अपवर्त्तनायामपि प्रथमस्पर्द्धकं नापवर्त्यते, एवं तस्माद्यावदनन्तानि नापवर्त्यन्ते, किमुक्तंभवति, उदयावलिकायाः समयाधिकत्रिभागे निक्षेपः तस्यानन्तानि स्पर्द्धकानि नापवर्त्यन्ते, तदुपरि समयोनमावलिकात्रिभागद्वयं अइत्थावणा तस्या अप्यनन्तानि रसस्पर्द्धकानि तान्यपि नापवर्त्यन्ते, उदयावलिकोपरि या स्थितिस्तस्याः स्पर्द्धकान्यपवर्त्तयन्ति, तस्याः प्रतिसमयमइत्थावणा वर्द्धते यावदावलिकापूर्णा, ततो निक्षेपो वर्द्धते, स्थित्यपवर्त्तनायामिव । जघन्यो निक्षेपः, स्तोकस्तस्मादनन्तगुणा जघन्या अइत्थावणा, तस्या (व्याघातभावी) उत्कृष्टा अइत्थावणा विशेषाधिका (अनन्तगुणा) उत्कृष्टमनुभागकण्डकं तस्या अनन्तगुणं (विशेषाधिकम्) उत्कृष्टनिक्षेपो विशेषाधिकः, सर्वस्थित्यनुभागो विशेषाधिक इति गाथार्थः ॥ १७ ॥ इदानीं द्वयोरपि उद्वर्तनापवर्त्तनयोरल्पबहुलमाह—

थोवं पएसगुणहाणि अंतरे दुसुवि हीणनिक्खेवो । तुल्लो अणंतगुणिओ दुसुवि अइत्थावणा चेवं ॥१८॥

व्याख्या—स्तोकं स्वल्पं एकस्यां स्थितौ प्रदेशगुणस्थानान्तरे वा स्पर्द्धकं जातं, अथवा स्नेहप्रत्ययस्पर्द्धकस्य एकस्मिन्ननुभागाद्द्विगुणहानिस्थानान्तरेऽनुभागविशेषाः सर्वस्तोकाः, द्वयोरपि हीनो जघन्यो निक्षेपोऽनन्तगुणः तुल्यश्च, उद्वर्त्तनायामपवर्त्त-

स्थानानि डायस्थितिसंज्ञानि भवन्ति सा चोत्कृष्टतः किञ्चिदूनकर्म्मस्थितिप्रमाणा भवति, सा चोत्कृष्टं कण्डकमुच्यते, इयमुत्कृष्टा अइत्थावणा तदुपरितनस्थितिदलं इयन्ति स्थितिस्थानान्युल्लङ्घ्याधस्तनासु स्थितिषु निक्षिपति, ततः समयादिहान्या क्षीयमाणं २ पल्योपमासङ्ख्येयभागमात्रं जघन्यं कण्डकं भवति, तदुल्लङ्घ्य स्थितिघातकाले उपरितनस्थितिदलं निक्षिपति, तुशब्दादल्पबहुत्वं निक्षेपाइत्थावणाविषयं वक्तव्यम्। अपवर्त्तनायां जघन्यनिक्षेपः सर्वस्तोकः समयाधिकावलिकात्रिभागमात्रो यस्माज्जघन्या अइत्थावणा तस्माद् द्विगुणा त्रिसमयोना, यतः—सा आवलिकाया त्रिभागद्वयं समयोनं विघ्नं विना उत्कृष्टाऽइत्थावणाविशेषाधिका, यतः सा आवलिकामात्रा, कण्डकअइत्थावणा अस्या असङ्ख्येयगुणा उत्कृष्टो निक्षेपोऽस्या विशेषाधिकः, यतः—समयाधिकत्र्यावलिकोनपरमस्थितिप्रमाण इति गाथार्थः ॥ १५ ॥ उक्ता स्थित्यपवर्त्तना । साम्प्रतं अनुभागस्योद्वर्त्तनाऽभिधीयते—

**चरिमं नोवट्टिज्जइ जाव अणंताणि फड्डगाणि तओ। उस्सक्किय उव्वट्टइ उदया ओवट्टणा एवं ॥ १६ ॥**

व्याख्या—चरमस्पर्द्धकं नोद्वर्त्यते, एवं द्विचरमं त्रिचरमं चतुश्चरमं च नोद्वर्त्यते एवं यावदनन्तानि स्पर्द्धकानि प्रथमान्नोद्वर्त्यते किमुक्तं भवति, जघन्यस्थितिनिक्षेप आवलिकासङ्ख्येयभागमात्रस्थित्यग्रे, तदधःआवलिकामात्रा अइत्थावणा तात्स्थतिगतानि स्पर्द्धकानि सर्वाण्यपि नोद्वर्त्यन्ते, तदधःस्थितस्थितिस्पर्द्धकान्युद्वर्त्यन्ते, तानि चावलिकास्थितिस्पर्द्धकान्यनन्तान्युल्लङ्घ्य आवलिकासंख्येयभागमात्रस्थितिस्पर्द्धकेष्वनन्तेषु निक्षिपत्ययं जघन्यो निक्षेपः, ततो यथास्थित्युद्वर्त्तने अइत्थावणावस्थिता प्रतिसमयं निक्षेपो वर्द्धते, एवमनुभागोद्वर्त्तनेऽपि यावदुत्कृष्टो निक्षेपः। अपवर्तनामप्यत्रैवातिदिशति, यथोद्वर्तनास्थित्यग्रादवतीर्यते, तथापवर्त्तना उदयावलिकातः स्थित्यपवर्त्तनावदनुभागापवर्त्तना ऊर्ध्वमुखी नीयत इति गाथार्थः ॥ १६ ॥

**उदयावलिउवरित्थं ठाणं अहिकिच्च होइ अइहीणो । निक्खेवो सव्वोवरि ठिइठाणवसा भवे परमो ॥१२॥**

व्याख्या—उदयावलिकोपरितनं स्थितिस्थानमधिकृत्य सर्वजघन्यो निक्षेपोऽपवर्त्तनायां भवति, समयाधिकावलिकात्रिभागरूपः सर्वोपरितनस्थितिस्थानमधिकृत्य तद्वशात्परम उत्कृष्टो निक्षेपो भवतीति गाथार्थः ॥ १२ ॥

**समयाहियइत्थवणा बंधावलिया य मोत्तु निक्खेवो । कम्मठिइ बंधोदयआवलिया मोत्तु ओवट्टे ॥ १३ ॥**

व्याख्या—समयाधिकां अइत्थावणां बन्धावलिकां च मुक्त्वा—परित्यज्य, शेषासु-कर्मस्थितिषु निक्षेपो भवति; उत्कृष्टतोऽपवर्त्तमानायां यतो बध्धं यावद्बन्धावलिका न गता तावन्नापवर्त्तयति, अइत्थावणामुल्लङ्घ्य निक्षिपति अपवर्त्यमानस्थितौ निक्षेपाभावात्समयाधिकद्व्यावलिकोना स्थितिः निक्षेपः उत्कृष्टो भवतीति । कर्म्मणो या उत्कृष्टा स्थितिः सा बन्धोदयावलिकाबाह्या सर्वाप्यपवर्त्तनायोग्या यतो बन्धावलिकायां गतायां उदयावलिका बाह्यां अपवर्त्तयति, अइत्थावणावलिकायाः प्रतिसमयमपसर्पणादिति गाथार्थः ॥ १३ ॥निर्व्याघाते अपवर्त्तनोक्ता, साम्प्रतं व्याघातस्वरूपं व्याघातविधिं चाह—

**निव्वाघाए एवं ठिइघाओ एत्थ होइ वाघाओ । वाघाए समऊणं कंडगमइत्थावणा होइ ॥ १४ ॥**

व्याख्या—व्याघातं विना एवमेव पूर्वोक्तेन विधिनाऽपवर्त्तयति, व्याघातस्त्वत्र स्थितिघातः—स्थितिविनाशः तं कुर्वाणः किमइत्थापयति, व्याघाते समयोनं कण्डकमइत्थापयतीति गाथार्थः ॥ १४ ॥ तस्यैव कण्डकस्य जघन्योत्कृष्टप्रमाणमाह—

**उक्कोसं डाय ठिइं किंचूणा कंडगं जहण्णं तु । पल्लासंखंस डायठिईउ जत्तो परमबंधो ॥ १५ ॥**

व्याख्या—यतो यस्याः स्थितेरारभ्य उत्कृष्टं स्थितिबन्धं विधत्ते निर्मापयति, तस्या आरभ्योपरितनानि सर्वाण्यपि स्थिति-

एव स्थितेरपवर्त्तनं वक्ष्येऽहमिति। तुशब्दाधिक्यादल्पबहुत्वं वक्तव्यम्, जघन्याइत्थावणानिक्षेपौ तुल्यौ, यतो द्वावप्यावलिकाऽसंख्येयभागमात्रौ ताभ्यामुत्कृष्टा अइत्थावणा असंख्येयगुणा, यतः सोत्कृष्टाबाधा, अस्या अपि उत्कृष्टो निक्षेपोऽसंख्येयगुणः, यतः समयाधिकावलिकया साबाधया न्यूनोत्कृष्टस्थितिमानः स भवतीति गाथार्थः ॥ ८ ॥ उक्ता स्थित्युद्वर्त्तना, अपवर्त्तनामाह—

ओवट्टन्तो उ ठितिं उदयावलिबाहिरा ठिईठाणा । निरिकवइ से तिभागे समयहिगे लंघिउं सेसं ॥ ९ ॥

व्याख्या—स्थितीरपवर्त्तयन् उदयावलिकाबाह्यानि स्थितिस्थानानि अपवर्त्तयति, तदपवर्त्तितदलं कुत्र निक्षिपति तदाह—निक्षिपति स्वे त्रिभागे समयाधिके शेषमुल्लङ्घ्य किमुक्तं भवति,—उदयावलिकोपरि या स्थितिस्तस्या दलं स्वाधस्तनौ द्वौ त्रिभागौ समयोनौ तावुल्लङ्घ्य शेषसमयाधिके त्रिभागे निक्षिपत्ययं जघन्यनिक्षेपो जघन्योल्लङ्घना चेति गाथार्थः ॥ ९ ॥

उदयावलि उवरित्था एमेवोवट्टए ठिइट्ठाणा। जावावलियतिभागो समयहिगो सेसठितिणं तु ॥ १० ॥

व्याख्या—उदयावलिकोपरिस्थितान्येवमेवापवर्त्तयति स्थितिस्थानानि यावदावलिकात्रिभागं समयाधिकं किमुक्तंभवति प्रतिसमयं अइत्थाणावृद्धिमुपयाति यावदावलिकापूर्णा, अवशेषाणामपि स्थितीनां तुशब्दस्यैवकारार्थत्वात्तत्रैव समयाधिके आवलिकात्रिभागे निक्षेप इति गाथार्थः ॥ १० ॥

इच्छोवट्टणठिइठाणगाउ उल्लंघिऊण आवलियं । निक्खिवई तद्दलियं अह ठितिठाणेसु सव्वेसु ।.११॥

व्याख्या—यस्या यस्याः स्थितेरपवर्त्तनं कर्त्तुमीहते जीवः तस्मात् तस्मात्स्थानात् एवाइत्थावणावलिकामुल्लङ्घ्य तत्र स्थितिदलं निक्षिपति, तत्परत्रावस्थिताधःस्थितिस्थानेषु सर्वेष्विति गाथार्थः ॥ ११ ॥

व्याख्या—निर्व्याघाते तावदेवमेव विधिः प्रागुक्तः, व्याघातस्तु प्राक्तनसत्कर्मस्थितेरधिको योऽभिनवः समयादिना बन्धो भवति, स व्याघात इति । तत्रावलिकाऽसङ्ख्येयभागादारभ्य यावदावलिकाऽइत्थावणा भवति । कथं ? पूर्वस्थितेः समयाधिकेऽभिनवबन्धे प्राक्तनसत्कर्मणोऽन्त्या वा द्विचरमा वा स्थितिर्नोद्वर्त्यते, एवं यावद् (आवलिका अन्यश्चावलिकाया असख्येयभागो नोद्वर्त्यते, एवं) द्वित्रिचतुःसमयाधिकां यावदावलिकाऽसख्येयभागाधिकां (अभिनव) स्थितिं बध्नानस्यापि सत्कर्मणोऽन्त्यास्थितिर्नोद्वर्त्यते, एवं यावद् द्वितीयोऽसंख्येयभागः प्राक्तनसत्कर्मणोऽभ्यधिको न बध्यते तावदन्त्या स्थितिः नोद्वर्त्यते, यदा तु द्वावसंख्येयभागाऽवधिकावभिनवबन्धे बध्नाति, तदा प्राक्तनसत्कर्मान्तस्थितिमुद्वर्तयति, अइत्थावणारूपं प्रथमावलिकाऽसंख्येयभागमुल्लङ्घ्य द्वितीयासंख्येयभागे निक्षिपति, इयं जघन्या अइत्थावणा निक्षेपश्च व्याघातः, ततोऽभिनवबन्धस्य समयादिवृद्ध्या अइत्थावणावृद्धिमुपयाति, यावदावलिका सम्पूर्णा तत्परतो निक्षेपो वर्द्धत इति गाथार्थः ॥६॥ अमुमेवार्थं सूत्रकारः सूत्रेण व्यक्तीकरोति—

**आवलिदो संखंसा जइ वड्ढइ अहिणवो उ ठितिबंधो । उव्वट्टति तो चरिमा एवं जावलिअइत्थवणा ॥७॥**

व्याख्या—आवलिकाऽसंख्येयभागाभ्यां द्वाभ्यां यदाभ्यधिकाभिनवबन्धो भवति पूर्वसत्कर्मणः तदा प्राक्तनसत्कर्मणोऽन्त्यस्थितिमुद्वर्त्तयत्यसंख्येयभागमुल्लङ्घ्य द्विसीयासंख्येयभागे निक्षिपति, एवमभिनवबन्धस्य समयादिवृद्ध्या अइत्थावणावृद्धिमुपयाति, यावदावलिका इयमुत्कृष्टा अइत्थावणा व्याघात इति गाथार्थः ॥ ७ ॥

**अइत्थावणालियाए पुण्णाए वड्ढई तु निक्खेवो । ठितिउव्वट्टणमेवं एत्तो ओव्वट्टणं वोच्छं ॥ ८ ॥**

व्याख्या—अइत्थावणावलिकायां पूर्णायां ततः कर्मदलनिक्षेपो वृद्धिमुपयाति, एवमनेन विधिना स्थित्युद्वर्त्तना भवति, अतस्तस्या

निक्षिप्यते जघन्योऽयं दलनिक्षेपः, किमुक्तंभवति–आवलिकाऽसङ्ख्येयभागमात्रासु सावलिकासु सर्वोपरितनासु स्थितिषूद्वर्त्तनं नास्तीति भावः। उत्कृष्टतः स आवलिकाऽसङ्ख्येयभागः समयवृद्ध्या कियद्वर्धते ? समयोत्तरावलिकया साबाधया हीना यावदुत्कृष्टा कर्मस्थितिस्तावद्दलनिक्षेपो भवति, यतोऽबाधोपरिस्थस्थितीनामुद्वर्त्तना भवति, साऽप्यइत्थावणावलिकामुल्लङ्घ्य उद्वर्त्यमानायामपि स्थितौ न दलनिक्षेपो भवत्यतः समयाधिकाऽबाधावर्जितासु शेषासु सर्वस्थितिसूत्कृष्टो दलनिक्षेपो भवतीति गाथार्थः ॥३॥

**अब्बाहोवरिठाणगदलं पडुच्चेह परमनिक्खेवो। चरिमुव्वट्टणगाणं पडुच्च इह जायइ जहण्णो ॥ ४॥**

व्याख्या—अबाधोपरिस्थितिस्थानं प्रतीत्य इहोद्वर्त्तनाकारणे उत्कृष्टो दलनिक्षेपः, चरमं स्थितिस्थानं यस्मात्परतो नोद्वर्त्यते, तदाश्रित्य जघन्यो दलनिक्षेपो भवतीति गाथार्थः ॥ ४ ॥

यावन्मात्राः स्थितय उद्वर्त्तनायोग्यास्ता आह—

**उक्कोसगठितिबंधे बंधावलिया अबाहमेत्तं च। निक्खेवं च जहण्णं मोत्तुं उव्वट्टए सेसं ॥ ५ ॥**

व्याख्या—उत्कृष्टस्थितिबन्धे बन्धावलिकां अइत्थावणावलिकां अबाधामात्रं च चरिमनिक्षेपं च मुक्त्वा शेषं सर्वमप्युद्वर्त्तनायोग्यमुत्कृष्टस्थितिसमयसङ्घातं, यतो बन्धावलिकायां गतायां दलं करणगोचरीभवति, अबाधान्तर्गतमयोग्यं आवलिकाऽसङ्ख्येयभागमात्रं सावलिकं उत्कृष्टस्थित्यग्रस्थमप्युद्वर्त्तनाऽयोग्यम् , अतः शेषं स्थितिजातमुद्वर्त्तनायोग्यमिति गाथार्थः ॥ ५ ॥

निर्व्याघाते तावदयं विधिः, व्याघातस्वरूपं व्याघातविधिश्चात उच्यते—

**निव्वाघाए एवं वाघाओ संतकम्महिगबंधो। आवलिअसंखभागो जावावलि तत्थ अइत्थवणा ॥ ६ ॥**

उक्तं सङ्क्रमकरणम्, तृतीयचतुर्थे उद्वर्त्तनापवर्त्तनकरणे साम्प्रतमभिधीयते, ते द्वेऽपि स्थित्यनुभागविषये भवतः, तत्रापि प्रथमं स्थितेरुद्वर्त्तनापवर्त्तने भवतः, सूत्रक्रममाश्रित्य तावदुद्वर्त्तना भवति, सा चोच्यते—

उदयावलिबज्झाणं ठिईण उव्वट्टणा उ ठितिविसया। उक्कोसअबाहाओ जावावलि होअइत्थवणा ॥ १ ॥

व्याख्या—उदयावलिकाबाह्यानां स्थितीनामुद्वर्तना स्थितिविषया भवति. यतः उदयावलिकाप्रविष्टं दलं सर्वकरणासाध्यम्, अतस्तद्बाह्याः स्थितय उद्वर्त्यन्ते। किं सर्वा? नेत्याह स्वोत्कृष्टायाः अबाधायाः परतो याः स्थितयः ता उद्वर्त्यन्ते। एषैवोत्कृष्टा 'अइत्थावण' त्ति, उल्लङ्घना, तदारतो यावज्जघन्याऽबाधा तस्या अपि जघन्यतरा आवलिकामात्रा अइत्थावणा भवति, सा चोद्वर्त्तनास्थितीनामुपरि भवति, बध्यमानप्रकृतेर्याऽबाधा तया तुल्या वा हीना वा या स्थितिः सा सर्वप्रकृतीनां नोद्वर्त्यते अबाधाप्रविष्टत्वात् इति गाथार्थः ॥ १ ॥ निक्षेपविधिमाह—

इच्छियठितिठाणाओ आवलियं लंघिऊण तद्दलियं। सव्वेसु वि निक्खिप्पइ, ठितिठाणेसुं उवरिमेसु ॥२॥

व्याख्या—अबाधोपरि या काचिदीप्सिता स्थितिः, सा अइत्थावणावलिकोपरिमासु स्थितिषु सर्वास्वपि निक्षिप्यते, उपरितनास्वयं निक्षेपक्रम इति गाथार्थः ॥२॥ जघन्योत्कृष्टनिक्षेपप्रमाणकथनायाह—

आवलिअसंखभागाइ जाव कम्मट्ठितित्ति निक्खेवो। समयोत्तरावलीए साबाहाए भवे ऊणो ॥ ३ ॥

व्याख्या—आवलिकाऽसङ्ख्येयभागमात्रासु स्थितिषु जघन्यः कर्मदलनिक्षेपः, कथं? उत्कृष्टस्थित्यग्रादवतीर्यावलिकाऽसङ्ख्येयभागं सावलिकं ततो यकाधस्तना स्थितिस्तस्या दलं अइत्थावणावलिकामुल्लङ्घ्य उपरितनास्वावलिकासङ्ख्येयभागमात्रासु

व्याख्या---पुंवेदसञ्ज्वलनत्रिकाणाम्-पुंवेदक्रोधमानमायारूपाणां स्वबन्धान्तसमये यद्बद्धं तच्छुभमानस्य क्षपकश्रेण्यां सर्व-सङ्क्रमेण स्वस्यान्तिमे समये जघन्ययोगिनो जघन्यप्रदेशसङ्क्रमो भवति, कथं ? आसां चतसृणामपि बन्धव्यवच्छेदे (समयोन) आवलिकाबद्धं मुक्त्वा नान्यत्प्रदेशाग्रमस्ति, तच्च प्रतिसमयं क्षीयते, एवं यावच्चरमसमयबद्धस्य असङ्ख्येयभागः शेषो भवति, तत्सङ्क्रमयतो जघन्यः प्रदेशसङ्क्रमो भवतीति गाथार्थ ॥ ११९ ॥

॥ समाप्तं सङ्क्रमकरणमिति ॥

व्याख्या—एकेन्द्रियविकलेन्द्रियातपस्थावरसूक्ष्मापर्याप्तकसाधारणप्रकृतीनां(पञ्चाशीत्यधिकं)सागरोपमशतं यावदबध्वा कथं? षष्ठपृथिव्यां द्वाविंशत्यतराणि स्थित्वान्तर्मुहूर्त्तावशेषायुर्लब्धसम्यक्त्वो मनुष्यो जातः, तेनाप्रतिपतितेनैव चतुष्पल्योपमायुर्देवो जातः, ततोऽप्रतिपतितसम्यक्त्वो मनुष्यत्वे विरतिं लब्ध्वा ग्रैवेयकेष्वेकत्रिंशत्सागरोपमायुर्देवो जातः स तत्र मिथ्यात्वोदयेन भवं स्थित्वा शेषेऽन्तर्मुहूर्त्ते सम्यक्त्वं लब्ध्वा तदप्युत्कृष्टस्थितिं प्राग्वत् द्वात्रिंशदभ्यधिकसागरोपमशतं समनुपाल्य तदन्ते यथाप्रवृत्तकरणान्तसमये नवकस्यापि जघन्यप्रदेशसंक्रमं करोतीति गाथार्थः ॥ ११६ ॥

**दुसराइतिण्णि णीयऽसुभखगइसंघयणसंठियपुमाणं । सम्माजोगाणं सोलसण्ह सरिसं थिवेएणं ॥११७॥**

व्याख्या—दुःस्वरदुर्भगानादेयनीचैर्गोत्राशुभविहायोगतिसंहननसंस्थानाशुभपञ्चकनपुंसकवेदानां अमीषां षोडशानां प्रकृतीनां सम्यग्दृष्टिबन्धायोग्यानां स्त्रीवेदतुल्यं,किन्तु त्रिपल्योपमायुर्मनुष्येषु प्रथममुत्पादः,तदन्ते च सम्यक्त्वलाभो वक्तव्य इति गाथार्थः ११७

**समयाहिआवलीए आऊण जहण्णजोगबंधाणं । उक्कोसाऊ अंते नरतिरिया उरलसत्तस्स ॥ ११८ ॥**

व्याख्या—समयाधिकावलिका यदा अवशेषा सर्वायुषां जघन्ययोगबद्धानां भवति, तदा जघन्यप्रदेशसङ्क्रमो भवति स्वस्थाने, यतोऽन्यत्र तेषां सङ्क्रम एव नास्ति । उत्कृष्टायुरन्ते–त्रिपल्योपमान्ते नराः तिर्यञ्चो वा औदारिकसप्तकस्य जघन्यं प्रदेशसङ्क्रमं कुर्वन्तीति गाथार्थः ॥ ११८ ॥

**पुंसंजलणतिगाणं,जहण्णजोगिस्स खवगसेढीए । सगचरिमसमयबद्धं, जं छुभइ सगंतिमे समए॥११९॥(कु.६२४)**

॥ संक्रमकरणं समाप्तम् ॥

जघन्यप्रदेशसङ्क्रमः । मनुजद्विकोच्चैर्गोत्रयोरपि सूक्ष्मैकेन्द्रियबद्धयोः एवमेव तेनैव विधिना उद्वलने तेजस्कायिकेषु वायुकायिकेषु वा गतस्य जघन्यः प्रदेशसङ्क्रमो भवतीति गाथार्थः ॥ ११३ ॥

अणुवसमित्ता मोहं सायस्स असायअंतिमे बंधे । पणतीसा य सुभाणं अपुव्वकरणालिगा अंते ॥ ११४ ॥

व्याख्या—मोहनीयमनुपशमय्योपशमश्रेणीमकृत्वा सातस्य जघन्यः प्रदेशसङ्क्रमो भवति, असातबन्धान्तसमये, तत्परतः सातस्यैव प्रतिग्रहता यतः स्यात् । पञ्चत्रिंशत्प्रकृतीनां शुभानां त्रसादिदशकशुभवर्णैकादशकतैजससप्तकशुभविहायोगतिचतुरस्रागुरुलघूच्छ्वासनिर्माणपञ्चेन्द्रियजातिपराघातानां चाकृत्वोपशमश्रेणीं स क्षपितकर्मांशः पूर्वविधिना भूत्वा क्षपणायोत्थितोऽपूर्वकरणस्याद्यावलिकान्तसमये जघन्यप्रदेशसङ्क्रमं करोति, यतः परतो गुणसङ्क्रमो भवति, प्रथमसंहननस्यापि स्वबन्धान्तसमये तस्यैव भवतीति गाथार्थः ॥ ११४ ॥

तेवट्ठं उदधिसयं गेविज्जाणुत्तरेसबंधित्ता । तिरिदुगउज्जोयाइं अहापवत्तस्स अंतम्मि ॥ ११५ ॥

व्याख्या—त्रिषष्ठ्याभ्यधिकं सागरोपमशतं ग्रैवेयकानुत्तरदेवत्वेष्वबध्वा, कथं ? स क्षपितकर्मांशः त्रिपल्योपमायुष्केषु मनुजेषु देवद्विकं बध्नाति, ततः पल्योपमायुर्देवोऽप्रतिपतितसम्यक्त्वो मनुष्यभवानन्तरं ग्रैवेयकेष्वेकत्रिंशत्सागरोपमायुस्तत्र मिथ्यादृष्टित्वेन स्थित्वा ततोऽवशेषेऽन्तर्मुहूर्त्ते सम्यक्त्वं गृहीत्वा द्वात्रिंशदभ्यधिकं शतं सागरोपमाणामनुत्तरादिषु सुरेषु स्थित्वा ततस्तिर्यग्द्विकोद्योतानि यथाप्रवृत्तकरणान्तसमये विध्यातसंक्रमेण सङ्क्रामयति, तदा जघन्यसङ्क्रमस्तेषां भवतीति गाथार्थः ॥ ११५ ॥

इगिविगलायवथावरचउक्कमबंधिऊण पणसीयं । अयरसयं छट्ठीए बावीसियरे जहा पुव्वं ॥ ११६ ॥

सम्यग्मिथ्यात्वयोर्जघन्यसङ्क्रम इति गाथार्थः ॥ १०९ ॥

**संजोयणाण चउरुवसमित्तु संजोयइत्तु अप्पद्धं । छावट्ठिदुगं पालिय अहापवत्तस्स अंतंमि ॥ ११० ॥**

व्याख्या—चतस्रो वारा मोहनीयमुपशमय्य शुभभावात् पुद्गलशाटार्थं, ततो मिथ्यात्वं गत्वाऽल्पकालं संयोजयित्वा अनन्तानुबन्धिनो बध्वा, स्वल्पं चारित्रमोहनीयदलं सङ्क्राम्य, सम्यक्त्वं प्रतिपन्नः ततः द्वे षट्षष्टीसागरोपमाणां सम्यक्त्वमनुपाल्य क्षपणायोत्थितः, तस्य यथाप्रवृत्तकरणान्तसमयेऽनन्तानुबन्धिनां जघन्यः प्रदेशसङ्क्रमो भवतीति गाथार्थः ॥ ११० ॥

**हस्सं कालं बंधिय विरओ आहारमविरइं गंतुं । चिरओव्वलणे थोवो तित्थं बंधालिगा परओ ॥ १११ ॥**

व्याख्या—ह्रस्वं–स्तोकं कालमप्रमत्तो बध्वाहारकसप्तकं ततोऽविरतिं गत्वा अन्तर्मुहूर्त्तात् परतः चिरोद्वलनेन–पल्योपमासङ्ख्येयभागकालोद्वलनेन उद्वलयतो यो द्विचरमखण्डकान्तसमये परस्थाने क्षेपः स जघन्यसङ्क्रमः आहारकस्येति । तीर्थकरस्यापि बन्धावलिकापरतो जघन्यः प्रदेशः सङ्क्रमो भवति, यतो बन्धावलिप्रथमसामयिकं दलं तस्य तदा सङ्क्रामतीति गाथार्थः ॥१११॥

**वेउव्वेक्कारसगं उव्वलियं बंधिऊण अप्पद्धं । जेट्ठट्ठितिनरयाओ उव्वट्टित्ता अबंधित्ता ॥ ११२ ॥**

व्याख्या—देवद्विकं नरकद्विकं वैक्रियसप्तकं एतद् वैक्रियैकादशकं एकेन्द्रियेणोद्वलितं पञ्चेन्द्रियत्वेऽल्पकालं बध्वा ततः सप्तम्यां त्रयस्त्रिंशत्सागरोपमाण्यनुभूय तत उद्वृत्तः पञ्चेन्द्रियतिर्यक्ष्वबध्वेति गाथार्थः ॥ ११२ ॥

**थावरगसमुव्वलणे मणुदुगउच्चाणसुहुमबद्धाणं । एमेव समुव्वलणे तेऊवाऊसुवगयस्स ॥ ११३ ॥**

व्याख्या—ततस्तस्मात् स्थावरकायगतः तत्र चिरोद्वलनस्य द्विचरमखण्डकान्तसमये यः परस्थाने क्षेपः स वैक्रियैकादशकस्य

दर्शनवतो यदि ( अवधिद्विकरहितानां ) शेषाणां सप्तानां बन्धव्यवच्छेदो भवति, तदा संक्रम एव न भवति; कुतो जघन्यः प्रदेश संक्रमः तस्मात् (बन्धान्तसमये अवधिमतः) प्रवलक्षयोपशमत्वेन रूक्ष वाद्बहुपुद्गलशाटः, क्षीणशेषाः स्तोकाः सङ्क्रामन्ति। अवधिद्विके असति तद्द्विकस्यैव जघन्यः सङ्क्रमो बन्धान्तसमयग्रहणं अधस्तनस्थिति (तां संक्रमस्य) व्यपगमख्यापनार्थमिति गाथार्थः॥१०६॥

थीणतिगइत्थिमिच्छाण पालिया वेच्छसट्ठिसम्मत्तं। सगखवणाए जहण्णो अहापवत्तस्स चरिमंमि ॥१०७॥

व्याख्या—स्त्यानर्द्धित्रिकस्त्रीवेदमिथ्यात्वानां सम्यक्त्वं द्वेषट्पष्टीसागरोपमाणामनुपाल्य यतः तस्मिन् तेषामबन्धोऽनुपचयश्च, ततः किञ्चिच्छेषाणां क्षपणायोत्थिते यथाप्रवृत्तकरणान्तसमये यथाप्रवृत्तसङ्क्रमेण जघन्यः प्रदेशसङ्क्रमो भवति, अपूर्वकरणे गुणसङ्क्रमसम्भवात् स न लभ्यत इति गाथार्थः ॥ १०७ ॥

अरईसोगट्ठकसायअसुभधुववंधिअथिरतियगाणं। अस्सायस्स य चरिमे अहापवत्तस्स लहु खवगे ॥ १०८ ॥

व्याख्या—अरतिशोकमध्यमाष्टकपायाशुभध्रुवबन्धिकुवर्णनवकोपघातास्थिराशुभायशःकीर्त्त्यसातानां देशोनपूर्वकोटिकृततीव्र-संयमस्य क्षपकश्रेण्यां यथाप्रवृत्तकरणान्तसमये यथाप्रवृत्तसङ्क्रमेण जघन्यः प्रदेशसङ्क्रमो भवति, अपूर्वकरणे गुणसङ्क्रमसंभवात् स न लभ्यत इति गाथार्थः ॥ १०८ ॥

हस्सद्धं गुणपूरिय सम्मं मीसं च धरिय उक्कोसं। कालं मिच्छत्तगए चिरउव्वलगस्स चरिमंमि ॥ १०९ ॥

व्याख्या—सम्यक्त्वप्राप्तौ ह्रस्वं स्तोकं कालं गुणसङ्क्रमेण सम्यक्त्वसम्यग्मिथ्यात्वे मिथ्यात्वदलेनापूर्य ततो द्वे षट्पष्टी-सागरोपमाणामनुभूय ततो मिथ्यात्वं गतः चिरोद्वलनं—मन्दोद्वलनं ततः द्विचरमखण्डकान्तसमये यः परस्थाने क्षेपः स सम्यक्त्व-

**जोगोसु तो तसेसुं सम्मत्तमसंखवारसंपप्प । देसविरइं च सव्वं अणउव्वलणं च अट्ठवारा ॥ १०४ ॥**

व्याख्या—तस्मात्सूक्ष्मनिगोदकायादुद्वृत्तः सम्यक्त्वदेशविरतिसर्वविरतियोग्येषु त्रसेषु भूयो भूयो भूत्वेति वक्तव्यम्। तस्मिन् पल्योपमासङ्ख्येयभागमात्रे काले सम्यक्त्वं सङ्ख्यातीता वाराः सम्प्राप्य स्वल्पकालिकीं देशविरतिं चासङ्ख्येया वाराः सम्प्राप्य स्वल्पकालिकीं सर्वविरतिं प्रथमकषायोद्वलनं चाष्टौ वारा विधाय यः उपशमादिं (उपशम श्रेणिं चतुरो वारान्) करोति (स क्षपितकर्मांश उच्यते) सम्यक्त्वादिग्रहणं स्वल्पस्थितिबन्धज्ञापनार्थं अल्पस्थितौ स्वल्पाः पुद्गला भवन्ति, अशुभानां तत्प्राप्तौ पुद्गलाः घटन्ति चेति गाथार्थः ॥ १०४ ॥

**चउरुवसमित्तु मोहं लहुं खवेंतो भवे खवियकम्मो । पाएण तेण पगयं पडुच्च काओ वि सविसेसं ॥१०५॥**

व्याख्या—चतस्रः उपशमश्रेणीः कृत्वा ततोऽन्यस्मिन्भवे लघु शीघ्रं कर्माष्टकं क्षपयन् क्षपितकर्मांश इत्यभिधीयते, प्रायेण बाहुल्यतः, तेनेह जघन्यप्रदेशसङ्क्रमे प्रकृतमधिकारः काश्चित्प्रकृतीरधिकृत्य विशेषोऽपि वक्तव्य इति गाथार्थः॥ १०५ ॥

जघन्यस्वामित्वमाह—

**हासरइभयकुच्छाणं खीणंताणं च बंधचरिमंमि । समए अहापवत्तेण ओहिजुगले अणोहिस्स ॥ १०६ ॥**

व्याख्या—हास्यरतिभयजुगुप्सानां क्षीणकषायान्ते (च) यासामन्तो विनाशः ताः षोडश क्षीणकषायान्ताः ज्ञानावरणान्तराय-दर्शनषट्काख्या आसां विंशतेः स्वबन्धान्तसमये यथाप्रवृत्तसङ्क्रमेण जघन्यः प्रदेशसङ्क्रमो भवति । हास्यरतिभयजुगुप्सानिद्राप्रचलानां यतो बन्धे व्यवच्छिन्ने गुणसङ्क्रमेण सङ्क्रमो भवति, तत्र च प्रभूतदलमिति । अन्तरायस्य परतः सङ्क्रम एव नास्ति । अवधिज्ञान-

सर्वसङ्क्रमेणोत्कृष्टप्रदेशसङ्क्रमो लभ्यते, स्थावरातपोद्योतैकेन्द्रियजातीनां यथा नपुंसकस्य तथा तत्रैव मन्तव्य इति गाथार्थः॥१००॥

**तेत्तीसयरा पालिय अंतमुहुत्तूणगाइ सम्मत्तं । बंधित्तु सत्तमाओ निग्गमसमए नरदुगस्स ॥ १०१ ॥**

व्याख्या—अन्तर्मुहूर्त्तोनानि त्रयस्त्रिंशत्सागरोपमाणि सम्यक्त्वमनुपाल्य तत्प्रत्ययं मनुजद्विकं सम्पिण्ड्य ततः सप्तमपृथिव्यां अन्तर्मुहूर्त्तं मिथ्यात्वनिमित्ते तिर्यग्द्विके बद्ध्यमाने मनुजद्विकस्य स्वबन्धावलिकापरतः उत्कृष्टः प्रदेशसङ्क्रमो भवतीति गाथार्थः१०१

**तित्थयराहाराणं सुरगइनवगस्स थिरसुभाणं च । सुभधुवबंधीण तहा सगबंधा आलिगं गंतुं ॥ १०२ ॥**

॥ उक्कोससामित्तं ॥

व्याख्या—तीर्थंकराहारकाणां देवद्विकस्य वैक्रियसप्तकस्य स्थिरशुभयोश्च शुभध्रुवबन्धिनीनां च तैजससप्तकशुभवर्णैकादशकागुरुलघुनिर्माणाख्यानां तथेतिग्रहणाच्चतुरुपशामकस्य स्वबन्धावलिकापरत आसां यशःकीर्त्त्यामुत्कृष्टः प्रदेशसङ्क्रमो भवतीति गाथार्थः१०२

उक्तः उत्कृष्टप्रदेशसङ्क्रम इति । जघन्यस्वामित्वे क्षपितकर्मांशः प्रागेवाभिहितः, तत्स्वरूपकथनायाह—

**सुहुमेसु निगोएसुं कम्मठिर्ति पलियऽसंखभागूणं । वसिउं मंदकसाओ जहण्णजोगो उ जो एइ ॥ १०३ ॥**

व्याख्या—सूक्ष्मेषु निगोदेषु साधारणजीवेषु कर्मस्थितिसप्ततिसागरोपमकोटाकोटिप्रमाणां पल्योपमासङ्ख्येयभागोनां 'वसिउं'ति स्थित्वा मन्दकषायो जघन्ययोगश्च तुशब्दादभव्ययोग्यं जघन्यप्रदेशाग्रं कृत्वा यः कश्चिदागच्छति योग्येषु स्थानेष्विति । सूक्ष्मनिगोदग्रहणं स्वल्पायुर्ज्ञापनार्थमल्पायुषां प्रभूतजन्ममरणानि तद्वेदनार्त्तस्य प्रभूतपुद्गलशाटः, अल्पबलकषायत्वे अल्पपुद्गलग्रहणं गुणितकर्मांशस्य विपरीतोऽयमिति गाथार्थः ॥ १०३ ॥

रतः सङ्क्रमो न परतोऽस्ति। अपूर्वकरणगुणस्थाने यावद्यशःकीर्त्तेरेव केवलाया न बन्धस्तावत्सङ्क्रमः परतस्तस्या एव प्रतिग्रहतेति। यो गुणितकर्मांशो मोहनीयस्य चतस्रो वारा उपशामकः, स चोपशमो भवद्वयेन भवति, ततस्तृतीयभवे मिथ्यात्वं गतः सन् उच्चैर्गोत्रं गुणसङ्क्रमेण दलापूरितं तस्मिन्नपि भवे परावर्त्य परावर्त्य बद्धं ततः क्षपकश्रेणीं कर्त्तुकामो नीचैर्गोत्रस्य बन्धान्तसमये उच्चैर्गोत्रस्य उत्कृष्टप्रदेशसङ्क्रमं करोतीति गाथार्थः ॥ ९८ ॥

**परघायसगलतसचउ सुसराइति सासखगतिचउरंसं। सम्मधुवा रिसभजुया संकामइ विरचिया सम्मो॥९९॥**

व्याख्या—पराघातपञ्चेन्द्रियजातित्रसादिचतुष्कसुस्वरादित्रिकोच्छ्वासशुभविहायोगतिचतुरस्रसंस्थानाख्याः एता द्वादश सम्यग्दृष्टिशुभध्रुवसंज्ञाः प्रथमसंहननयुक्ताः सङ्क्रामयन्ति। विरचिताः सागरोपमद्वात्रिंशदधिकशतपद्धाः सम्यग्दृष्टिर्गुणितकर्मांश उत्कृष्टप्रदेशसङ्क्रमं गुणसंक्रमेण करोति। कथं? षट्षष्टिसागरोपमाणि सम्यक्त्वमनुपालयन् एता बध्नाति, ततोऽन्तर्मुहूर्त्तं सम्यग्मिथ्यात्वे स्थित्वा भूयः सम्यक्त्वमनुपालयन् षट्षष्टिसागरोपमाणि बध्नाति, एवं द्वात्रिंशदभ्यधिकमुदधिशतं बद्धाश्रिताः पूरिता एकार्थाः। ततोऽपूर्वकरणे यदा बन्धस्य व्यवच्छेदो भवति तदा बन्धावलिकापरतः यशःकीर्त्त्यां गुणसङ्क्रमेणासामुत्कृष्टः प्रदेशसङ्क्रमो भवति। प्रथमसंहननं तु देवभवे सदा बध्नाति, मनुजभवोनोऽतः तावन्मात्रो बन्धकालोऽस्य भवति, देवत्वाच्च्युतस्यावलिकापरतो देवभवायोग्यं बध्नानस्योत्कृष्टः प्रदेशसङ्क्रमो भवतीति गाथार्थः ॥ ९९ ॥

**नरयदुगस्सवि छोभे उ पुव्वकोडीपुहुत्तणिच्चियस्स। थावरउज्जोयायवएगिंदीणं नपुंससमं ॥ १०० ॥**

व्याख्या—पूर्वकोटिपृथक्त्वनिचितस्य पूर्वकोट्यायुस्तिर्यक्सप्तभवबद्धस्य नरकद्विकस्य अष्टमभवे क्षपकश्रेण्यां चरमसंछोभे

व्याख्या—भोगभूमिषु यो भूयो भूयः स्त्रीवेदं बध्वा सङ्क्लेशादापूर्यासङ्ख्येयवर्षाणि, ततः पल्योपमासङ्ख्येयभागे गते अकालमृत्युना मृत्वा स्तोकस्थितिषु देवेषूत्पन्नस्तत्रापि तदेव स्त्रीवेदमापूर्य मनुजेषूत्पन्नो लघुक्षपणायोत्थितो गुणितकर्मांशः चरमसंछोभे सर्वसङ्क्रमेणोत्कृष्टप्रदेशसङ्क्रमं स्त्रीवेदस्य करोतीति गाथार्थः ॥ ९५ ॥

**वरिसवरित्थिं पूरिय सम्मत्तमसंखवासियं लभिय। गंतुं मिच्छत्तमओ जहण्णदेवट्ठिइं भोच्चा ॥ ९६ ॥**

व्याख्या—वरिषवरो नपुंसकवेदः,तमीशाने प्रभूतकालं भूयो भूयो बध्वापूर्य ततः स्तोकसङ्ख्येयवर्षाण्यापूर्य ततः स्तोकसङ्ख्यायुष्केषु भूत्वाऽसङ्ख्येयवर्षायुष्केषु गत्वा स्त्रीवेदमसङ्ख्येयवर्षाण्यापूर्य ततस्तत्रैवासङ्ख्येयानि वर्षाणि सम्यक्त्वं लब्ध्वा तद्धेतुकं पुरुषवेदं बध्वा स्त्रीवेदनपुंसकयोर्दलं सङ्क्रम्य ततोऽन्ते मिथ्यात्वं गत्वा मृतो जघन्यदेवस्थितिं भुक्त्वेति गाथार्थः ॥९६॥

**आगंतुं लहुं पुरिसं संछुभमाणस्स पुरिसवेयस्स। तस्सेव सगे कोहस्स माणमायाणमवि कसिणो ॥ ९७ ॥**

व्याख्या—लघुस्थितिकदेवत्वादागतो लघुक्षपणायोत्थितो गुणितकर्मांशः स्वोपचितदलस्य यश्चरमक्षेपः तस्मिन् पुरुषवेदस्योत्कृष्टः प्रदेशसङ्क्रमो लभ्यते, न ह्यावलिकाबद्धस्यान्ते, यतस्तत्र स्तोकमिति। तस्यैव स्वके संछोभे क्रोधमानमायानामपि यदा कृत्स्नसङ्क्रमो भवति, तदा पुरुषवेदक्रमेणोत्कृष्टः प्रदेशसङ्क्रम इति गाथार्थः ॥ ९७ ॥

**चउरुवसमित्तु खिप्पं लोभजसाणं ससंकमस्संते। चउसमगो उच्चस्सा खवगो नीया चरिमबंधे ॥ ९८ ॥**

व्याख्या—चतस्रो वारा मोहनीयमुपशमय्य क्षिप्र—शीघ्रं सञ्ज्वलनलोभयशःकीर्त्योः स्वसङ्क्रमस्यान्ते गुणितकर्मांश उत्कृष्टं प्रदेशसङ्क्रमं करोति। उपशमश्रेणीग्रहणं तस्यां गुणसङ्क्रमेण ते द्वेऽपि प्रकृती आपूर्येते,स्वसङ्क्रमान्तविशेषण लोभस्यान्तरकरणादा-

स्यान्तसमये गुणसङ्क्रमेणोत्कृष्टः प्रदेशसङ्क्रमो भवति, स्वे स्वे चरमसंच्छोभे अशुभचतुर्विंशतिप्रकृतीनां मध्यमाष्टकषायस्त्यानर्द्धित्रिक-नामत्रयोदशकानां सर्वसङ्क्रमेण क्षपकवादरे गुणितकर्मांशे प्रदेशसङ्क्रम उत्कृष्टो भवतीति गाथार्थः ॥ ९१ ॥

**संछोभणाएँ दोण्हं मोहाणं वेयगस्स खणसेसे । उप्पाइय सम्मत्तं मिच्छत्तगए तमतमाए ॥ ९२ ॥**

व्याख्या—मिथ्यात्वसम्यग्मिथ्यात्वयोः स्वचरमसंछोभे क्षपकस्य सर्वसङ्क्रमेणोत्कृष्टः प्रदेशसङ्क्रमो भवति, वेदकस्य ‘खण-सेस’ त्ति अन्तर्मुहूर्त्तविशेषायुषि सप्तमनारके उत्पाद्य सम्यक्त्वं, गुणसङ्क्रमेणापूर्य स्वपुञ्जं मिथ्यात्वं गते उत्कृष्टः प्रदेशसङ्क्रमो लभ्यत इति गाथार्थः ॥ ९२ ॥

**भिण्णमुहुत्ते सेसे जोगकसाओक्कसाइ काऊण । संयोजणा विसंजोअगस्स संछोभणाएसिं ॥ ९३ ॥**

व्याख्या—स गुणितकर्मांशो नारकोऽन्तर्मुहूर्त्तविशेषे जीवते योगकषायोत्कृष्टत्वादिकानि पूर्वोपदिष्टानि कृत्वा ततः मास-सम्यक्त्वस्तस्य संयोजनावियोजकस्य चरमसंछोभे तेषां अनन्तानुबन्धिनां सर्वसङ्क्रमेणोत्कृष्टः प्रदेशसङ्क्रमो भवतीति गाथार्थः ॥९३॥

**ईसाणागयपुरिसस्स इत्थियाए व अट्ठवासाए । मासपुहुत्तब्भहिए नपुंसगे चरिमसंछोभे ॥ ९४ ॥**

व्याख्या—ईशानदेवो गुणितकर्मांशः सङ्क्लिष्ट एकेन्द्रियप्रायोग्येन बन्धेन सह नपुंसकवेदं भूयो बध्वा तस्माच्च्युतः, ततो मनुजलोके पुरुषत्वं स्त्रीत्वं वा प्रतिपन्नः, तस्य मासपृथक्त्वाभ्यधिकाष्टवार्षिकस्य क्षपणायोत्थितस्य चरमसंछोभे सर्वसङ्क्रमेण नपुंसकवेदस्योत्कृष्टप्रदेशसङ्क्रमो लभ्यत इति गाथार्थः ॥ ९४ ॥

**पूरित्तु भोगभूमिसु जीवियवासाणि संखियाणि तओ । हस्सठिईं देवागय लहु छोभे इत्थिवेयस्स ॥ ९५ ॥**

व्याख्या—योगस्थानविषये यवमध्यं कालमाश्रित्योत्कृष्टकालं तस्मादष्टसागयिकादुपर्यान्तर्मुहूर्त्तं स्थित्वा जीवितावसाने साधिकान्तर्मुहूर्त्तायुः यवमध्योपर्यसङ्ख्येयगुणवृद्ध्या वर्द्धितः, त्रिचरिमे द्विचरिमे च समये भवस्य कषायानन्तगुणवृद्ध्यापूर्य कर्मदलेन प्रकृतीरिति गाथार्थः ॥ ८८ ॥

**जोगुक्कोसं दुचरिमे चरिमसमये उवरिमसमयंमि । संपुण्णगुणियकम्मो पगयं तेणेह साभित्ते ॥ ८९ ॥**

व्याख्या—तद्भवद्विचरिमे चरिमे च समये योगोत्कृष्टं कषाययोगोत्कृष्टं तु एकसमये तद्भवद्विचरिमे भवति तुशब्दात्प्रभूतोद्वर्त्तनं स्वल्पापवर्त्तनं च यस्य कर्मस्थितीनां स नारकभवान्तसमये गुणितकर्मांशः तेनेह प्रकृतमहाधिकार उत्कृष्टस्वामित्वे इति गाथार्थः॥८९॥

**तत्तो तिरियागयआलिगोवरिं उरलएक्कवीसाए । सायं अणंतरं बंधिऊण आलीपरमसाए ॥ ९० ॥**

व्याख्या—तस्मान्नारकभवात्तिर्यक्ष्वागतः पञ्चेन्द्रियः पर्याप्तकः तिर्यक्षूत्पन्नस्तद्भवावलिकोपरितनसमये ज्ञानान्तरायदर्शनचतुष्कौदारिकसप्तकानामुत्कृष्टप्रदेशसङ्क्रमं करोति, यतो नारकभवान्तसमये यद्बद्धं तत्तिर्यग्भवावलिकायाः उपरि सङ्क्रामयति, इयन्मात्रदलसञ्चयो नान्यत्र लभ्यत इति । तस्मान्नारकभवादनन्तरभवे सातं स्वोत्कृष्टकालं बध्ध्वा बन्धावलिकापरतो बध्यमानाऽसाते यथाप्रवृत्तसङ्क्रमेण सङ्क्रामयति सचोत्कृष्टः सातस्य प्रदेशसङ्क्रम इति गाथार्थः ॥ ९० ॥

**कम्मचउक्के असुभाण वज्झमाणीण सुहुमरागंते । संछोभणंमि नियगे चउवीसाए नियट्टिस्स ॥ ९१ ॥**

व्याख्या—कर्मचतुष्के दर्शनावरणीयवेदनीयनामगोत्राख्ये या अशुभाः प्रकृतयः, तासां निद्राप्रचलासाताशुभसंहननसंस्थानकुवर्णनवकोपघाताशुभविहायोगत्यपर्याप्तकास्थिरादिषट्कनीचैर्गोत्राणां द्वात्रिंशतामबध्यमानानां क्षपकसूक्ष्मरागस्य गुणितकर्मांश-

माणेनोनां कर्मस्थितिं सागरोपमसप्ततिकोटाकोटिप्रमाणां यः कश्चिज्जीवो बादरपृथिवीपर्याप्तकत्वे दीर्घायुषाऽपर्याप्तकत्वे ह्रस्वायुषा उषित्वा उच्यमानविधिं करोति, स गुणितकर्मांशो भवतीति क्रिया सम्बन्धनीया। शेषैकेन्द्रियेभ्या बादरपृथिवीकायिकस्य प्रभूतमायुः तेनाव्यवच्छिन्नं प्रभूतकर्मपुद्गलग्रहणं वेदनासहिष्णुत्वं च तेन चासाटः, अपर्याप्तकग्रहणं दीर्घकायस्थितिप्रापणार्थं, तस्य ह्रस्वस्थितिग्रहणं हीनयोगस्थानज्ञापनार्थम् ,अत इतरस्य तैरुत्कृष्टैः प्रबलकर्मबन्धार्थं दीर्घायुर्ग्रहणम् , सूक्ष्माणां स्वल्पजीवितत्वात्प्रभूतजन्ममरणानि भवन्ति, तद्वेदनया चासकृत् कर्मपुद्गलसाटः, अतो बादरग्रहणं कृतमिति गाथार्थः ॥ ८५ ॥

**जोगकसाउक्कोसो बहुसो आउं जहण्णजोगेणं। बंधिय उवरिल्लासुं ठिइसु निसेगं बहुं किच्चा ॥ ८६ ॥**

व्याख्या—पर्याप्तकभवबाहुल्याद्योगैः कषायैश्चोत्कृष्टो बहुशो भूत्वा,आयुष्कं जघन्ययोगेन बन्धयित्वा,उपरितनासु कर्मस्थितिषु निषेकं प्रभूतं कृत्वा अधस्तनस्थितिषु स्तोकं तथापि विशेषहीनं विशेषहीनमपरित्यजन् यो वक्ष्यमाणविधिं करोति,स गुणितकर्मांशः उत्कृष्टयोगकषायग्रहणं प्रबलकर्मदलग्रहणार्थमिति गाथार्थः ॥ ८६ ॥

**बादरतसकालमेवं वसित्तु अंते य सत्तमखिईए। लहुपज्जत्तो बहुसो जोगकसायाहिओ होउं ॥ ८७ ॥**

व्याख्या—एवं पृथिवीकायिकविशेषणसमग्रं पृथिवीकायादुद्धृत्य त्रसकायस्थितिषूषित्वा त्रसेषु तदन्ते च सप्तमपृथिव्यां लघुपर्याप्तकः—स्तोककालपर्याप्तो, बहुशोऽनेकशो योग्यत्वप्राप्तौ तत्र भूत्वा अथवा तस्मिन्नेव भवे अनेकशो योगकषायाधिको भूत्वा दीर्घजीवितत्वयोगकषायोत्कटत्वख्यापकं सप्तमीग्रहणमिति गाथार्थः ॥ ८७ ॥

**जोगजवमज्झउवरिं मुहुत्तमच्छित्तु जीवियवसाणे। तिचरिमदुचरिमसमये पूरित्तु कसायमुक्कोसं ॥ ८८ ॥**

शस्य क्षपणायोत्थितस्य जघन्यः प्रदेशसङ्क्रमो भवति, स च सादिरध्रुवः। तस्यैव क्षपितकर्मांशस्योपशमश्रेण्यां अबन्धकस्य सर्वासां प्रकृतीनां सङ्क्रमाभावः, तस्मात्प्रतिपततोऽजघन्यः सादिः तत्स्थानमप्राप्तस्यानादिः ध्रुवाध्रुवौ प्राग्वत्। अनुत्कृष्टसङ्क्रमोऽपि चतुर्द्धा भवति, किं सर्वासां नेत्याह—वर्जयित्वौदारिकसप्तकं ज्ञानान्तरायदशकं दर्शनचतुष्कं, शेषपञ्चोत्तरशतस्य चतुर्विधः प्रदेशसङ्क्रमो भवति, कथं गुणितकर्मांशस्य क्षपणायोत्थितस्योत्कृष्टः प्रदेशसङ्क्रमो भवति, स च सादिरध्रुवः, अबन्धकस्य तस्यैवोपशमश्रेणीतः प्रतिपततोऽनुत्कृष्टः प्रदेशसङ्क्रमः सादिः तत्स्थानमप्राप्तस्यानादिः ध्रुवाध्रुवौ प्राग्वदिति गाथार्थः ॥ ८३ ॥

**सेसं साई अधुवं जहण्णसामी उ खवियकम्मंसो। ओरालाइसु मिच्छो उक्कोसगस्सगुणियकम्मो ॥ ८४ ॥**

व्याख्या—उक्तप्रकृतीनां यन्नोक्तं प्रदेशसङ्क्रमजातं अनुक्तप्रकृतीनां च तत्सर्वमपि साद्यध्रुवं भवति। कथं? षड्विंशत्युत्तरशते जघन्यस्य कारणमुक्तम्, उत्कृष्टानुत्कृष्टयोरपि पञ्चोत्तरशतस्य कारणमुक्तम्। औदारिकैकादशतेरुत्कृष्टानुत्कृष्टौ मिथ्यादृष्टौ भवतः, अतः सर्वासां साद्यध्रुवत्वं सुगमम्। अध्रुवसत्तीनां चाध्रुवत्वादेव चत्वारोऽपि प्रदेशसङ्क्रमाः साद्यध्रुवा भवन्ति। प्रदेशसङ्क्रमस्य जघन्यस्वामी सर्वप्रकृतीनां क्षपितकर्मांशः, उत्कृष्टः प्रदेशसङ्क्रमस्य तु गुणितकर्मांशः स्वामी, औदारिकैकादशतेः स एव गुणितकर्मांशो मिथ्यादृष्टिरिति गाथार्थः ॥ ८४ ॥

तस्यैव गुणितकर्मांशस्य स्वरूपकथनायाह—

**बायरतसकालूणं कम्मठिइं जो उ बायरपुढवीए। पज्जत्तापज्जत्तगदीहेयरआउगो वसिउं ॥ ८५ ॥**

व्याख्या—बादरत्रसग्रहणं सूक्ष्मत्रसव्युदासार्थम्, बादरत्रसानां कायस्थितिकालेन पूर्वकोटिपृथक्त्वाधिकसागरोपमद्विसहस्रप-

गुणमाणेणं दलियं हीरंतं थोवएण निट्ठाइ । कालस्संखगुणेणं अह विज्झा उव्वलणगाणं ॥ ८१ ॥

व्याख्या—चरमखण्डस्य गुणसङ्क्रमभानेन यद्यपहारः क्रियते ततोऽन्तर्मुहूर्त्तमात्रेण कालेन निष्ठां याति क्षीयत इत्यर्थः, तदेव दलं यथाप्रवृत्तसङ्क्रमप्रमाणेन ह्रियमाणपल्योपमासङ्ख्येयभागमात्रेण कालेन क्षयं याति, गुणसङ्क्रमादसङ्ख्येयगुणकालेनेति कृत्वा । विध्यातसङ्क्रमप्रमाणेनापि ह्रियमाणं तदेव दलं क्षेत्रतोऽङ्गुलासङ्ख्येयभागाकाशप्रदेशैः कालतोऽसङ्ख्येयोत्सर्प्पिण्यवसर्प्पिणीभिः क्षयं याति, यथाप्रवृत्तिकालादसङ्ख्येयगुण इति कृत्वा । द्विचरमखण्डकस्यान्तोद्वलनक्षेपप्रमाणेनापह्रियमाणं चरमखण्डकदलं अङ्गुलासङ्ख्येयभागमात्रेण कालेन निष्ठां याति यद्यपि· तथापि विध्यातकालादसङ्ख्येयगुण उद्वलनसङ्क्रमकालः चित्रत्वादङ्गुलासङ्ख्येयभागस्येति गाथार्थः ॥ ८१ ॥

जं दुचरिमस्स चरिमे सपरट्ठाणेसु देइ समयंमि । ते भागे जह कमसो अहापवत्तुव्वलणमाणे ॥ ८२ ॥

व्याख्या—उद्वलनसङ्क्रमे द्विचरमखण्डकस्य चरमप्रक्षेपे यद्ददाति स्वस्थाने दलं तद्यथाप्रवृत्तस्य प्रमाणम्, यत्पुनः परस्थाने ददाति, तदुद्वलनसङ्क्रमस्य प्रमाणमिति गाथार्थः ॥ ८२ ॥

मूलप्रकृतीनां परस्परसङ्क्रमाभावादुत्तरप्रकृतीनां साद्यनादिप्ररूपणामाह—

चउहा धुवछव्वीसगसयस्स अजहण्णसंकमो होइ । अणुक्कोसो विह्रु वज्जिय ओरालावरणनवविग्घं ॥ ८३ ॥

व्याख्या—मिथ्यात्वनीचैर्गोत्रयोः प्रतिग्रहाभावात्, सातासातयोः परावर्त्तकत्वात्, ध्रुवाणामप्यासां सर्वेऽपि प्रदेशसङ्क्रमाः सादि अध्रुवा भवन्ति, शेषध्रुवषड्विंशोत्तरशतस्याजघन्यः प्रदेशसङ्क्रमश्चतुर्द्धा भवति, कथं आसां सर्वासां प्रकृतीनां क्षपितकर्मा-

तिर्यगायुरुद्योतवर्ज्जितानां एकोनविंशतेः सास्वादनयोग्यानां यतो मिथ्यात्वानन्तानुबन्धिनस्तदारत एव अविरताद्याः क्षपयन्ति, आतपोद्योतेऽशुभे आयुषां परप्रकृतौ सङ्क्रम एव नास्ति अतस्तद्वर्ज्जनं कृतम्, अविरतस्याप्रत्याख्यानावरणचतुष्कं, देशविरतस्य प्रत्याख्यानावरणचतुष्कं प्रमत्तस्य षट्कं अस्थिराशुभायशःकीर्त्यसातारतिशोकाख्यं, आसां षट्चत्वारिंशत्प्रकृतीनां अपूर्वकरणादेरेव गुणकृतः सङ्क्रमो भवति निद्राद्विकोपघातकुवर्णनवकहास्यरतिभयजुगुप्सानां स्वबन्धव्यवच्छेदादारभ्य गुणसङ्क्रमो भवतीति गाथार्थः ॥७७॥

**चरमठिईए रइयं पइसमयमसंखियं पएसग्गं । ता छुभइ अण्णपगइं जावंते सव्वसंकामो ॥ ७८ ॥**

व्याख्या—चरमस्थितौ उद्वलनसङ्क्रमेण यद्रचितं दलं प्रदेशाग्रं तत् प्रतिसमयमसङ्ख्येयगुणश्रेण्या परप्रकृतौ तावच्छुभति सङ्क्रामति, यावद्द्विचरमः प्रक्षेपः, उद्वलनसङ्क्रमस्यान्तिमः पुनः सर्वसङ्क्रम उच्यत इति गाथार्थः ॥ ७८ ॥

**बाहिय अहापवत्तं सहेउणाहो गुणो व विज्झाओ । उव्वलणसंकमस्सवि कसिणो चरिमंमि खंडंमि॥७९॥**

व्याख्या—स्वहेतुना विबाध्य यथाप्रवृत्तसङ्क्रमं विध्यातसङ्क्रमो गुणसङ्क्रमो वा भवति, उद्वलनसङ्क्रमचरमखण्डस्य द्विचरमसङ्क्रमाच्चरमप्रक्षेपः सर्वसङ्क्रमो भवतीति गाथार्थः ॥७९॥ यद्यपि नायं सङ्क्रमकरणे सम्बध्यते तथाऽपि सङ्क्रमाऽधिकारेऽनुवर्त्तमाने स्तिबुकसङ्क्रमस्य लक्षणमाह—

**पिंडपगईण जा उदयसंगया तीएँ अणुदयगयाओ । संकामिऊण वेयइ जं एसो थिवुगसंकामो ॥ ८० ॥**

व्याख्या—पिण्डप्रकृतीनां गत्यादीनां चतुर्द्दशानां या अन्यतरा उदयसङ्गता उदयप्राप्ता तस्यामुदयगतायामनुदयप्राप्तां स्वपक्षप्रकृतौ सङ्क्रमय्यानुभवति, यथा मनुजगतौ शेषं गतित्रयं एकेन्द्रियजातौ जातिचतुष्कं स्तिबुकसङ्क्रमः प्रदेशानुभव इति गाथार्थः॥८०॥

कषायनवनोकषायसञ्ज्वलनत्रिकस्त्यानर्द्धित्रिकनामत्रयोदशकाख्या इति गाथार्थः ॥ ७४ ॥

**सम्ममीसाइं मिच्छो सुरदुगवेउव्विछक्कमेगिंदी । सुहमतसुच्चमणुदुगं अंतमुहुत्तेण अणियट्टी ॥ ७५ ॥**

व्याख्या—सम्यक्त्वसम्यग्मिथ्यात्वे मिथ्यादृष्टिरुद्वलयति, पञ्चनवतिसत्कर्मा देवद्विकमेकेन्द्रिय उद्वलयति, ततः स एव वैक्रियसप्तकं चतुष्कं वा सनरकद्विकमुद्वलयति, सूक्ष्मत्रसो वाय्वग्निकायिकः उच्चैर्गोत्रमुद्वलयति, पश्चान्मनुजद्विकमुद्वलयति प्रागुक्तविधिना। कालापवादमाह—पल्योपमासङ्ख्येयभागमात्रेण कालेन प्रागुद्वलनं कथितम्, अन्तर्मुहूर्त्तेनानिवृत्तिबादरः षट्त्रिंशत्प्रकृतीः उद्वलयतीति गाथार्थः ॥ ७५ ॥ यथाप्रवृत्तसङ्क्रमलक्षणमाह—

**संसारत्था जीवा सबंधजोगाण तद्दलपमाणा । संकामे तणुरूवं अहापवत्तीएँ तो णाम ॥ ७६ ॥**

व्याख्या—संसारे तिष्ठन्तीति संसारस्थाः के जीवाः ध्रुवबन्धिनीनां स्वबन्धयोग्यानां प्रकृतीनामध्रुवबन्धिन्यस्तु सर्वा अपि योग्या एव, तासां दलं तत्प्रमाणेन स्तोकात्स्तोकं तदनुरूपं सङ्क्रामयन्ति, यथाप्रवृत्त्या यथा यथा हीनमध्यमोत्कृष्टयोगानां प्रवृत्तिस्तथा तथा सङ्क्रामयन्ति कर्मदलमतोऽस्यैतन्नाम इति गाथार्थः ॥ ७६ ॥

गुणसङ्क्रमलक्षणमाह—

**असुभाण पएसग्गं बज्झंतीसुं असंखगुणणाए । सेढीएँ अपुव्वाई छुभंति गुणसंकमो एसो ॥ ७७ ॥**

व्याख्या—अशुभप्रकृतीनां प्रदेशाग्रं असङ्ख्येयगुणवृद्ध्या अपूर्वकरणप्रवृत्तेरपूर्वकरणाद्या अबध्यमानानां बध्यमानासु यत् कर्मदलं सङ्क्रामयन्त्येष गुणसङ्क्रम इति । कास्ताः मिथ्यात्वातपनरकायुर्वर्जानां मिथ्यादृष्टियोग्यानां त्रयोदशानां अनन्तानुबन्धि-

**खंडं दलं सठाणे समए समए असंखगुणणाए । सेढीए परठाणे विसेसहीणा इमं छुभइ ॥ ७१ ॥**

व्याख्या—उत्कीर्यमाणस्थितीनां प्रथमसमये स्तोकं दलमुत्किरति, तस्माद् द्वितीयसमयेऽसङ्ख्येयगुणं एवं तृतीयादिष्वप्य सङ्ख्येयगुणवृद्ध्या नेयम्, तच्च प्रथमसमयोत्कीर्णं कुत्र दीयते, तदाह परस्थाने स्तोकं स्वस्थाने तस्मादसङ्ख्येयगुण द्वितीयादिषु स्वस्थानेऽसङ्ख्येयगुणं परस्थाने विशेषहीनं दलं प्रक्षिपति, अनेन विधिना पल्योपममात्रस्थितीनां दलमन्तर्मुहूर्तेन निर्लेपयति, तच्छेपाण्यपि स्थितिखण्डान्येवमेव सङ्क्रामयतीति गाथार्थः ॥ ७१ ॥

**दुचरिमखंडस्स दलं चरिमे जं एइ सपरट्ठाणंमि । तम्माणेणस्स दलं पल्लंगुलसंखभागेहिं ॥ ७२ ॥**

व्याख्या—द्विचरमस्थितिखण्डकाच्चरमसमये यत्प्रदेशाग्रं स्वकीयचरमस्थितिखण्डके सङ्क्रामयतीति तन्मानेन चरमस्थितिखण्डस्य दलं प्रक्षिप्यमाणं २ पल्योपमासङ्ख्येयभागसमयैरन्यत्र नयति, परस्थाने यद्दीयते तन्मानेन असङ्ख्येयोत्सर्पिण्यवसर्पिणीसमयैरङ्गुलासङ्ख्येयभागमात्रैः क्षेत्रप्रदेशैर्वा अन्यत्र तद्दल नयति, तदपि चरमस्थितिखण्डकदलमसङ्ख्येयगुणवृद्ध्या परस्थाने उदयावलिकाबाह्यं नयति चरमस्थितिखण्डकस्य यश्चरमप्रक्षेपः स सर्वसङ्क्रम इति गाथार्थः ॥ ७२ ॥

उद्वलनविधिरुक्तः । उद्वलनप्रकृतीनां स्वामिनमाह—

**एवं उव्वलणाणं कमेण नासेइ अविरओहारं । सम्मोऽणमिच्छमीसे छत्तीसऽनियट्टिजामाया ॥ ७३ ॥**

व्याख्या—अनेनोद्वलनविधिना विनाशयत्यविरतो अन्तर्मुहूर्त्तात्परतः तत्सत्कर्माहारकसप्तकं उद्वलयति, सम्यग्दृष्टिर्देशविरतिसर्वविरतिगुणयुक्तो वा अनन्तानुबन्धिमिथ्यात्वसम्यग्मिथ्यात्वानि पूर्वविधिना, षट्त्रिंशत्प्रकृतीरनिवृत्तिबादर उद्वलयति मध्यमाष्ट-

प्रमाणं यावन्मात्रः प्रथमसमये (परप्रकृतौ) दलप्रक्षेपः तत्प्रमाणप्रक्षेपः प्रक्षिप्यमाणं प्रकृतेः शेषदलं अङ्गुलासङ्ख्येयभागेनान्यत्र सङ्क्रामयति किमुक्तं भवति, अङ्गुलासङ्ख्येयभागमात्रक्षेत्रप्रदेशप्रमाणैः प्रक्षेपैरसङ्ख्येयोत्सर्पिण्यवसर्पिणीप्रमाणैर्वा समयैः सर्वप्रकृतिदलं अन्यप्रकृतौ सङ्क्रामयतीति गाथार्थः ॥ ६८ ॥

उद्वलनसङ्क्रमलक्षणमाह–

**पलियस्स संखभागं अंतमुहुत्तेण तीए उव्वलइ । एवं पलियासंखिय भागेणं कुणइ निल्लेवं ॥ ६९ ॥**

व्याख्या—पल्योपमासङ्ख्येयभागमात्रस्थितेः खण्डमुत्किरति, विनाशयत्यन्तर्मुहूर्तेनाहारकादीनां प्रकृतीनां एवमनेन विधिना पल्योपमासङ्ख्येयभागमात्रेण कालेन करोति निर्लेपं सर्वदलसङ्क्रममिति गाथार्थः ॥ ६९ ॥

विशेषमाह–

**पढमाओ बीयखंडं विसेसहीणं ठिईए अवणेइ । एवं जाव दुचरिमं असंखगुणियंति अंतिमयं ॥ ७० ॥**

व्याख्या—प्रथमस्थितिखण्डात् द्वितीयं स्थितिखण्डं विशेषहीनं अन्तर्मुहूर्तेनापनयति–विनाशयति, एवमनेन विधिना यावद् द्विचरमं स्थितिखण्डं एवं कानिचित्स्थितिखण्डानि प्रथमादसङ्ख्येयभागहीनानि कानिचित्सङ्ख्येयभागहीनानि कानिचित्सङ्ख्येयगुणहीनानि कानिचिदसङ्ख्येयगुणहीनानि तुशब्दाद्दलमाश्रित्यान्तिमस्थितिखण्डं प्रथमादसङ्ख्येयगुणं स्थिति स्थानमाश्रित्यासङ्ख्येयभागमिति गाथार्थः ॥ ७० ॥

अतस्तस्यैव दलस्य प्रक्षेपविधिरुच्यते–

पञ्चेन्द्रियपर्याप्तशुभपरिणामेन वैक्रियनवकोच्चैर्गोत्रातपतीर्थङ्कराहारकसप्तकमनुजद्विकायुस्त्रिकाणां चतुर्विंशतिशुभप्रकृतीनां उत्कृष्टा-नुभागबन्धो भवति, अशुभपरिणामेन अशुभशेषषट्पञ्चाशत् प्रकृतीनां उत्कृष्टानुभागबन्धो भवति, सर्वासामपि जघन्यः सूक्ष्मैकेन्द्रिये हतानुभागसत्कर्मणि जघन्योऽपि भवति, अतश्चत्वारोऽप्यनुभागसङ्क्रमाः साद्यध्रुवा भाविता एव ॥ ६७ ॥ समाप्तोऽनुभागसङ्क्रम इति ॥

उक्तोऽनुभागसङ्क्रमः, अधुना प्रदेशसङ्क्रममाह तल्लक्षणमादावेवोच्यते—

**विज्झाउव्वलणअहापवत्तगुणसव्वसंकमेहि अणू । जं नेइ अण्णपगईं पएससंकामणं एयं ॥ ६७ ॥**

व्याख्या—विध्यातसङ्क्रम उद्वलनासङ्क्रमो यथाप्रवृत्तसङ्क्रमो गुणसङ्क्रमः सर्वसङ्क्रमश्च, एतैः पञ्चभिः सङ्क्रमैः कर्मपरमाणून् यन्नयन्त्यन्यप्रकृतिं तत्स्वरूपेण व्यवस्थापयति, प्रदेशसङ्क्रमणमेतदुच्यत इति गाथार्थः ॥ ६७ ॥

विध्यातसङ्क्रमस्य लक्षणमाह—

**जाण न बंधो जायइ आसव्वगुणं भवं च पगईणं । विज्झाओ ताणंगुलअसंखभागेण अण्णत्थ ॥ ६८ ॥**

व्याख्या—यासां प्रकृतीनां गुणं वा भवं वाश्रित्य बन्धो न जायते नोत्पद्यते, तासां विध्यातसङ्क्रमो भवति, एतद्भावयति वैक्रियैकादशकैकेन्द्रियविकलेन्द्रियजातयः सूक्ष्मत्रिकस्थावरातपप्रकृतयो मिथ्यात्वहेतौ सत्यपि नारकाः भवप्रत्ययं न बध्नन्ति, संहननषट्कं चतुरस्त्ररहितसंस्थानानि नपुंसकवेदमनुजद्विकौदारिकसप्तकतिर्यगेकान्तयोग्यादश दुर्भगादित्रिकनीचैर्गोत्राप्रशस्त-विहायोगतितीर्थङ्कराणां मिथ्यात्वाविरतिसम्यक्त्वहेतुभिर्युक्तास्तथाऽप्यसङ्ख्येयवर्षायुषस्तद्भवस्थाः, तद्भवप्रत्ययं न बन्धका भवन्ति, एवं देवेष्वपि भावना कर्त्तव्या, स च विध्यातसङ्क्रमः प्रायो यथाप्रवृत्तावसाने एवंविधप्रकृतीनां भवति, तस्य

ध्रुवाध्रुवौ प्राग्वदिति गाथार्थः ॥ ६६ ॥

**सुभधुवचउवीसाए होइ अणुक्कोससाइ परिवज्जो । उज्जोयरिसभओरालियाण चउहा दुहा सेसा ॥ ६७ ॥**

व्याख्या—शुभाश्च ताः ध्रुवाश्च शुभध्रुवाः, तस्याः शुभध्रुवचतुर्विंशतेरनुत्कृष्टानुभागसङ्क्रमः सादिवर्ज्जः त्रिविधो भवति, कास्ताः ! त्रसादिदशकसातपञ्चेन्द्रियजात्यगुरुलघूच्छ्वासनिर्माणप्रशस्तविहायोगतिचतुरस्रसंस्थानपराघातकार्मणतैजसशुभवर्णचतुष्कमिति चतुर्विंशतिः, शुभवर्णैकादशकं कार्मणसप्तकं ये तु गृण्हन्ति, तेषां षट्त्रिंशद् भव।त, उभयत्राप्यविरोधः। कथं ? त्रिविधः सङ्क्रमो भवति? एतद्भावयति–आसां क्षपकश्रेण्यां स्वबन्धकैः स्वान्तसमये उत्कृष्टानुभागो बद्धस्तं बन्धावलिकायाः परतस्तदुपारतनाः सयोग्यन्तसमयं यावदुत्कृष्टानुभागं सङ्क्रामयन्ति, अतोऽसौ सादिरध्रुवस्तदन्यः सर्वोऽप्यनुत्कृष्टः, तासां ध्रुवसद्भावादनादिः ध्रुवाध्रुवौ प्राग्वत्, । उद्योतप्रथमसंहननौदारिकसप्तकानां चतुर्द्धा भवति, कथमुद्योतवर्जानामष्टानां सम्यग्दृष्टिरत्यन्तविशुद्ध्यमानपणामो देव उत्कृष्टमनुभागं बध्नाति, बन्धावलिकापरतः स एव सङ्क्रामयति ! उद्योतस्य तु सप्तमपृथिव्यां नारकः सम्यक्त्वं प्रतिपत्तुकामः मिथ्यादृष्टिरुत्कृष्टमनुभागं बन्धावलिकायाः परतः स एव सङ्क्रामयति, जघन्यतोऽन्तर्मुहूर्त्तं उत्कृष्टं द्वेषट्षष्टीसागरोपमं ततोऽनुत्कृष्टः सादिः, तत्स्थानमप्राप्तस्यानादिर्ध्रुवाध्रुवौ प्राग्वत् ।, 'दुहा सेस'त्ति, उक्तानामुक्तशेषाः सङ्क्रमाः, अनुक्तानां प्रकृतीनां चत्वारोऽपि सङ्क्रमा द्विधाः, साद्यध्रुवा भवन्ति । कथं ? सप्तदशानां षोडशानां च जघन्यानुभागसङ्क्रमः प्रागेवाभिहितः, उत्कृष्टानुत्कृष्टौ मिथ्यादृष्टौ भवतोऽतः परावर्त्तकत्वात् साद्यध्रुवौ भावितौ एवमेव षट्त्रिंशत्प्रकृतीनां उत्कृष्टः प्रागुक्तो जघन्याजघन्यौ सूक्ष्मैकेन्द्रिये हतानुभागसत्कर्म्मणि भवतोऽतः साद्यध्रुवौ भावितौ एव शेषाणां सप्तदशषोडशनवषट्त्रिंशदूर्वजितानांअशातिप्रकृतीनां

वलिकायाः परतः सङ्क्रामयितुमारब्धः, यावदुदयावलिकाशेषा तावदुत्कृष्टानुभागं सङ्क्रामयति, ततस्तस्मिन्नष्टेऽनुत्कृष्टः सादिः, तत्स्थानमप्राप्तस्यानादिः ध्रुवाध्रुवौ प्राग्वत् इति गाथार्थः ॥ ६४ ॥

**साइयवज्जो वेयणियनामगोयाण होइ अणुकोसो । सव्वेसु सेस भेया साई अधुवा य अणुभागे ॥ ६५ ॥**

व्याख्या—सादिवर्जस्त्रिविधो वेदनीयनामगोत्राणां अनुत्कृष्टानुभागसङ्क्रमो भवति, कथं ? सूक्ष्मरागक्षपकेन वेदनीयनामगोत्राणां स्वान्तसमये यः सर्वोत्कृष्टोऽनुभागो बद्धः, स बन्धावलिकायाः परतो यावत्सयोगिचरमसमयः, तावत्सङ्क्रामयत्यतः सादिरध्रुवः, तच्छेषोऽनुत्कृष्टः, तेषामनादिसद्भावादनादिः, ध्रुवाध्रुवो प्राग्वत् । शेषाः मूलप्रकृतिषु ये भेदास्ते द्विविधाः सादिरध्रुवा भवन्ति, कथं ? घातिकर्मणां जघन्यभावना कृतैव, उत्कृष्टानुत्कृष्टयोः मिथ्यादृष्टौ परावर्त्तमानतया भावना सुगमैव, अघातिकर्मणामपि उत्कृष्टस्य भावनोक्ता, जघन्याजघन्यौ सूक्ष्मपर्याप्तकैकेन्द्रियस्य भवतोऽतः साद्यध्रुवौ तौ भावितावेवेति गाथार्थः ॥ ६५ ॥

**अजहण्णो चउभेओ पढमगसंजलणनोकसायाणं । साइयवज्जो सोच्चिय जाणं खवगो खवियमोहो ॥ ६६ ॥**

व्याख्या—अजघन्यानुभागसङ्क्रमोऽनन्तानुबन्धिसञ्ज्वलननोकषायाणां सप्तदशप्रकृतीनां चतुर्विधो भवत्यनन्तानुबन्धिवर्ज्जानां स्वक्षपकाणां जघन्यस्थितिसङ्क्रमकाले जघन्यानुभागसंक्रमो भवति, अनन्तानुबन्धिनां तूद्वलितबद्धानां बन्धावलिकायां गतायां जघन्यो भवति, तच्छेषोऽजघन्य उपशमश्रेण्यां उपशान्तकषायस्थानात् प्रतिपततः सादिस्त स्थानमप्राप्तस्यानादिः ध्रुवाध्रुवौ प्राग्वत्, सादिवर्ज्जत्रिविधोऽजघन्यानुभागसङ्क्रमो भवति, ज्ञानान्तरायदशकदर्शनषट्कानां षोडशानां । प्रकृतीनां कथं ? क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ जघन्यानुभागसङ्क्रमः, स च सादिरध्रुवः, तच्छेषोऽजघन्यः, तेषामनादिसद्भावादनादिः

कायाः परतश्चतुर्णामपि समयाधिकावलिकाशेषा तावज्जघन्यानुभागसङ्क्रमो भवतीति गाथार्थः ॥ ६२ ॥

**अणतित्थुव्वलणाणं संभवणा आवलिएँ परएणं। सेसाणं इगिसुहुमो घाइय अणुभागकम्मसो ॥ ६३ ॥**

व्याख्या—अनन्तानुबन्धिनां तीर्थङ्करस्य च उद्वलनप्रकृतीनां च नरकमनुजदेवद्विकवैक्रियाहारकसप्तकोच्चैर्गोत्राणां एकविंशति-सङ्ख्यानां जघन्यरसबन्धसम्भवात् बन्धावलिकायाः परतो जघन्यरससंक्रमं करोति, एकं समयम्। कोऽसाविति वैक्रियैकादशक-स्यासंज्ञिपञ्चेन्द्रियो, मनुष्यद्विकोच्चैर्गोत्राणां सूक्ष्मनिगोदः, आहारकसप्तकस्याप्रमत्तः, तीर्थङ्करस्याविरतसम्यग्दृष्टिरनन्तानुबन्धिनां पश्चात्कृतसम्यक्त्वो मिथ्यादृष्टिरुक्तशेषाणां सप्तनवतिप्रकृतीनामेकेन्द्रियसूक्ष्मत्रसः वाय्वग्निकायिको हि तत्तत्सत्कर्मा घातितानुभा-गकर्मांशः विनाशितानुभागसत्कर्मा तदधोऽनुभागबन्धकः तद्भवस्थोऽन्यभवस्थो वा जघन्यरससंक्रम करोतीति गाथार्थः ॥६३॥

उक्तं जघन्यस्वामित्वम्, तदनन्तरं साद्यनादिप्ररूपणामपि मूलप्रकृतीनामाह—

**साइयवज्जो अजहण्ण संकमो पढमदुइयचरिमाणं। मोहस्स चउविगप्पो आउसणुक्कोसओ चउहा ॥ ६४ ॥**

व्याख्या—सादिवर्जो जघन्यसङ्क्रमो ज्ञानदर्शनावरणान्तरायाणामनादिध्रुवाध्रुवभेदात् त्रिविधो भवति, कथ यतः—क्षीण-कषायस्य समयाधिकावलिकाशेषायां स्थितौ जघन्यानुभागसङ्क्रमो भवति, स च सादिरध्रुवः, तच्छेषोऽजघन्यः, तत्स्थानमप्राप्ता-नामनादिः, ध्रुवाध्रुवौ प्राग्वत्। मोहनीयस्याजघन्यः चतुर्विधः, कथं ? सूक्ष्मरागक्षपकस्य समयाधिकावलिकाशेषायां स्थितौ जघन्योऽनुभागसङ्क्रमः, स च सादिरध्रुवः, तच्छेषोऽजघन्यः क्षायिकदृष्टेरुपशान्तदृष्टेर्वा सर्वमोहनीयोपशमकस्य प्रतिपततः सादिः तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत्। आयुषश्चतुर्विधोऽनुत्कृष्टः सङ्क्रमः, कथमप्रमत्तो देवायुष्कस्योत्कृष्टानुभागं बद्ध्वा बन्धा-

सेसाणं असुभाणं केवलिणो जो उ होइ अणुभागो । तस्स अणंतो भागो असण्णिपंचेंदिए होइ ॥ ६० ॥

व्याख्या—शेपाणामघात्यशुभानां असाताद्यवर्जसंहननसंस्थानदशककुवर्णनवकाअस्थिरादिपट्कोपघातापर्याप्तकनीचैर्गोत्राशुभविहायोगतीनां त्रिंशत्प्रकृतीनां यः केवलिनः सयोगिनोऽनुभागस्तस्यानन्तभागोऽसंज्ञिनि पञ्चेन्द्रिये भवतीति गाथार्थः ॥ ६० ॥

सम्यग्दृष्टिमिथ्यादृष्टयः किलान्तर्मुहूर्त्तात्परतः सर्वप्रकृतानामनुभागघातं कुर्वन्ति, तन्निवारणार्थमाह—

सम्मदिट्ठी न हणइ सुभाणुभागं दु चेव दिट्ठीगं । सम्मत्तमोसगाणं उक्कोसं हणइ खवगो उ ॥ ६१ ॥

व्याख्या—सम्यग्दृष्टिः शुभप्रकृतीनां देवमनुजद्विकौदारिकवैक्रियाहारककार्मणसप्तकत्रसादिदशकशुभवर्णैकादशकपराघातपट्कसातपञ्चेन्द्रियजातिप्रथमसंहननसंस्थानागुरुलघुप्रशस्तविहायोगत्युच्चैर्गोत्राणां षट्पष्टिप्रकृतीनां यावद् द्वेषट्षष्टीसागरोपमाणां तावच्छुभानुभागं न विनाशयति, सम्यग्दृष्टयो मिथ्यादृष्टयः सम्यक्त्वसम्यग्मिथ्यात्वयोरशुभदृष्ट्योरपि नोत्कृष्टानुभागं विनाशयन्ति, अपि तु क्षपकः सम्यग्दृष्टिविनाशयत्युभयोरपि दृष्ट्योरिति गाथार्थः ॥ ६१ ॥

भावितमतेः साम्प्रतं जघन्यस्वामित्वमाह—

घाईणं जे खवगा जहण्णरससंकमस्स ते सामी । आऊण जहण्णठिई बंधाओ आवलीसेसा ॥ ६२ ॥

व्याख्या—घातिकर्मप्रकृतीनां ये यासां क्षपकास्ते तासां जघन्यरससङ्क्रमस्वामिनः नवनोकषायसञ्ज्वलनानां कृतान्तरकरणो बादरक्षपकः स्वक्षपणक्रमेण जघन्यसङ्क्रमं करोति, जघन्यस्थितिसङ्क्रमकाले ज्ञानान्तरायदर्शनपट्कानां क्षीणकपायः स्वामी । सम्यक्त्वसम्यग्मिथ्यात्वयोरपि यः स्वस्थितिवत् जघन्यसंक्रमं करोति, आयुषां सर्वजघन्यस्थित्यनुभागबन्धाद्बन्धावलि-

व्याख्या—बध्ध्वा सर्वोत्कृष्टरसस्पर्द्धकं बन्धावलिकायां गतायां तदुत्कृष्टरसं मनुष्योपपातिदेवाऽसंख्येयवर्षायुस्तिर्यङ्मनुष्यान् मुक्त्वाऽन्यश्चतुर्गतिको मिथ्यादृष्टिः सर्वाऽशुभप्रकृतीनां संक्रामयति, उत्कृष्टेनापि अन्तर्मुहूर्त्तं यतस्तस्मिन्नतीतेऽवश्यं तद्रसं शुभपरिणामेनान्यथा करोतीति गाथार्थः ॥ ५७ ॥

**आयावुज्जोवोरालपढमसंघयणमणदुगाऊणं । मिच्छा सम्मा य सामी सेसाणं जोगिसुभियाणं ॥ ५८ ॥**

व्याख्या—आतपोद्योतौदारिकसप्तकप्रथमसंहननमनुजद्विकानां आसां द्वादशप्रकृतीनां मिथ्यादृष्टयः सम्यग्दृष्टयो वा स्वामिनः । यद्यप्यातपोद्योतयोः मिथ्यादृष्टिना सतानुभाग उत्कृष्टः कृतः, तथापि सम्यग्दृष्टित्वे तयोरन्यासां च शुभप्रकृतीनां नानुभागमपवर्त्तयति । चतुर्णामपि आयुषामुत्कृष्टमनुभागं बध्ध्वा बन्धावलिकायाः परतः यावत्समयाधिकावलिकाशेषा तावदुत्कृष्टानुभागसङ्क्रमो भवति, शेषशुभप्रकृतीनां वैक्रियाहारककार्मणसप्तकानि त्रसादिदशकं शुभवर्णैकादशकं समचतुरस्रशुभविहायोगतिसातोच्चैर्गोत्रदेवद्विकपञ्चेन्द्रियजात्यगुरुलघुपराघातोच्छ्वासनिर्माणतीर्थङ्कराणां चतुष्पञ्चाशत्प्रकृतीनां सयोगी स्वान्तसमयं यावत् उत्कृष्टानुभागं सङ्क्रामयति, चशब्दादन्येऽपि स्वबन्धव्यवच्छेदादुपरिगुणस्था जीवा इति गाथार्थः ॥ ५८ ॥

भणितमुत्कृष्टसंक्रमस्वामित्वं, जघन्यसङ्क्रमपरिज्ञानार्थमाह—

**खवगस्संतरकरणे अकए घाईण जो उ अणुभागो । तस्स अणंतो भागो, सुहुमेगिंदिय कए थोवो ॥ ५९ ॥**

व्याख्या—क्षपकस्यान्तरकरणेऽकृते सर्वघातिदेशघातिप्रकृतीनां योऽनुभागः सम्भवति, तस्मादनन्तभागः सूक्ष्मैकेन्द्रियस्य भवति, कृतेऽन्तरकरणे पुनः सूक्ष्मैकेन्द्रियानुभागादपि स्तोकतरो भवतीति गाथार्थः ॥ ५९ ॥

व्याख्या—सर्वघाती जघन्यमध्यमोत्कृष्टोऽपि यः कश्चिद्रसः स सम्यग्मिथ्यात्वातपमनुष्यतिर्यगायुषां भवति, द्विस्थानिकश्च। प्रागुक्तौ नेह त्रिचतुःस्थानिकौ। एकस्थानिकरसस्पर्द्धकविशेषाः सर्वेऽपि द्विस्थानिकस्य केचित् सम्यक्त्वे 'तदितर'त्ति, सर्वघातिरसादन्यो देशघातिरसो भवति, किमुक्तं भवति, सम्यक्त्वं एकद्विस्थानिकदेशघातिरससंज्ञं शेषास्त्वन्यासु प्रकृतिषु यथाऽधस्तृतीयद्वारे बन्धमधिकृत्य अभिहितम्, तथा सङ्क्रमेऽपि भवतीति गाथार्थः ॥ ५४ ॥ उत्कृष्टजघन्यविधेः संशयापनोदायाह—

**दुट्ठाणोच्चिय जाणं ताणं उक्कोसओवि सो चेव। संकमइ वेयगे वि हु सेसासुक्कोसओ परमो ॥ ५५॥**

व्याख्या—याः प्रकृतयो द्विस्थानिकरसविषया एव, नान्यविषयाः सम्भवन्ति, तासां स एव द्विस्थानिक उत्कृष्टः सङ्क्रामति, यतस्तस्य स्पर्द्धकान्यसङ्ख्येयभेदभिन्नानि। वेदकसम्यक्त्वेऽपि द्विस्थानिक एवोत्कृष्टः। शेषप्रकृतिषूत्कृष्टश्चतुःस्थानिको रस इति गाथार्थः ॥ ५५ ॥

**एकट्ठाणजहण्णं संकमई पुरिससम्मसंजलणे। इयरासु दोट्ठाणि य जहण्णरससंकमे फड्डं ॥ ५६ ॥**

व्याख्या—एकस्थानिकस्य रसस्य सर्वजघन्यस्पर्द्धकं संक्रामति। किं सर्वासां नेत्याह—पुरुषवेदसम्यक्त्वसञ्ज्वलनानां जघन्यानुभागसंक्रमे इतरासामेतच्छेषाणां प्रकृतीनां द्विस्थानिकजघन्यरसस्पर्द्धकं जघन्यसंक्रमे संक्रामति। यद्यपि ज्ञानावरणचतुष्कदर्शनत्रिकान्तरायाणां एकस्थानिकस्पर्द्धकानि बन्धेऽभिहितानि, तथापि जघन्यसंक्रमे तानि न संक्रामन्तीति गाथार्थः ॥ ५६ ॥

उत्कृष्टरससंक्रमस्वामित्वमाह—

**बंधिय उक्कोसरसं आवलियाओ परेण संकामे। जावंतमुहुत्तमिच्छो असुभाणं सव्वपयडीणं ॥ ५७ ॥**

द्विधा, शेषाः सर्वासामपि द्विधा भवन्ति। कथं ? देवनारकमनुजद्विकवैक्रियाहारकसप्तकायुश्चतुष्कोच्चैर्गोत्रसम्यक्त्वसम्यग्मिथ्यात्व-तीर्थङ्कराणां अष्टाविंशत्यध्रुवप्रकृतीनां अध्रुवत्वादेव सर्वेऽपि सङ्क्रमाः साद्यध्रुवाः। ध्रुवसत्तीनां जघन्यस्य कारणं प्रागुक्तम्, उत्कृष्टानुत्कृष्टौ मिथ्यादृष्टौ भवतोऽतः सुगमाविति गाथार्थः ॥ ५१ ॥ उक्तः स्थितिसङ्क्रमः, अधुनाऽनुभागसङ्क्रममाह—

**ठितिसंकमोव्व तिविहो रसम्मि उवट्टणाइविन्नेओ। रसकारणओ नेयं घाइत्तविसेसणभिहाणं ॥५२॥**

व्याख्या—स्थितिसङ्क्रमवदसावनुभागे तद्विषये यः सङ्क्रमः सोऽपि त्रिविध उद्वर्त्तनादिभेदाद् ज्ञेयः, रसकारणतो रसहेतुकं ज्ञेयं, घातित्वविशेषणाभिधानं प्रकृतीनामिति गाथार्थः ॥ ५२ ॥ एतदेव स्पष्टयति—

**देसग्घाइरसेणं पगईओ होन्ति देसघाईओ। इयरेणियरा एमेव ठाणसन्नावि नेयव्वा ॥ ५३ ॥**

व्याख्या—देशघातिरसेन बन्धोदयोदीरणसङ्क्रमेषु हेतुभूतेन देशघात्यभिधानाः प्रकृतयो भवन्ति, ताश्च पञ्चविंशतिः 'नाणावरणचउक्कं' इत्यादिना कथिता एव, इतरेण-सर्वघातिना सर्वघातिन्यः प्रकृतयो भवन्ति, ता अपि 'केवलियणाणदंसण' इत्यादिना कथिता एवाधः, एवमेव स्थानसंज्ञापि घातिसंज्ञावद्विज्ञेया, 'आवरणमसव्वग्घं' इत्यादिना, सप्तदशानामेकद्वित्रिचतुःस्थानिकसंज्ञाविहिता शेषाणां तु द्वित्रिचतुःस्थानिकसंज्ञाभिहितेति गाथार्थः ॥ ५३ ॥

सम्यक्त्वसम्यग्मिथ्यात्वयोर्न तत्र संज्ञा विहिता तत्संज्ञार्थं सङ्क्रममधिकृत्य कासांश्चिद्विशेषार्थमाह—

**सव्वग्घाइदुठाणो मीसायवमणुयतिरियआऊणं। इगदुट्ठाणो सम्मंमि तदियरोण्णासु जहट्ठा ॥ ५४ ॥**

---

१ द्वा० ३. गा. १९। २ द्वा. ३ गा. १७। ३ द्वा. ३ गा. ३०।

धिकावलिकाशेषायां स्थितौ जघन्यः स्थितिसङ्क्रमः, अघातिकर्मणां सयोग्यन्तसमये जघन्यस्थितिसङ्क्रमोऽन्तर्मुहूर्त्तमात्रस्थितित्वात् तेषाम्। अतः सादिरध्रुवो जघन्यस्तदन्यः सर्वोऽप्यजघन्यः, स च सादिर्न भवति, तयोरप्रतिपातात् तत्स्थानमप्राप्तानामनादिः, ध्रुवाध्रुवौ प्राग्वत् । मोहनीयस्य चतुर्विधः, कथं क्षपकश्रेण्यां सूक्ष्मसम्परायस्य समयाधिकावलिकाशेषायां स्थितौ जघन्यः, स च सादिरध्रुवः, तदन्योऽजघन्यः, स च क्षायिकदृष्टेरुपशान्तस्योपशमश्रेणीतः प्रतिपततः सादिः तत्स्थानमप्राप्तस्यानादिः ध्रुवाध्रुवौ प्राग्वत्, । शेषविकल्पाः साद्यध्रुवाः सर्वकर्मणाम्। जघन्यस्य कारणमुक्तम्। उत्कृष्टस्थितिबन्धकानां मिथ्यादृष्टीनां उत्कृष्टः स्थितिसङ्क्रमः सादिः, तीव्रपरिणामात् पततामध्रुवोऽनुत्कृष्टस्तु तदा सादिः, सोऽप्युत्कृष्टबन्धे सत्यध्रुव इति गाथार्थः ॥ ५० ॥

उत्तरप्रकृतीनामाह—

**तिविहो धुवसंतीणं, चउव्वहो तह चरित्तमोहीणं । अजहन्नो सेसासुं दुविहा सेसावि दुविगप्पा ॥ ५१ ॥**

व्याख्या—ध्रुवं नित्यं सत्कर्म यासां ता ध्रुवसत्यः, तासां ध्रुवसतीनां त्रिंशदुत्तरशतप्रमाणानां त्रिविधो भवत्यजघन्यसङ्क्रमः, किं सर्वासां ? नेत्याह चारित्रमोहनीयप्रकृतीनां कषायनोकषायरूपाणां चतुर्विधो भवत्यजघन्यसङ्क्रम इति । कथं ? नामत्रयोदशकस्त्यानर्द्धित्रिकाणां बादरक्षपको, ज्ञानान्तरायदर्शनषट्कानां क्षीणकषायः, शेषध्रुवसतीनां सयोगी स्वान्तसमये जघन्यं स्थितिसङ्क्रमं करोति । स च सादिरध्रुवस्तदन्यः सर्वोऽप्यजघन्यस्तेषामप्रतिपातात् स च सादिर्न भवति, तत्स्थानमप्राप्तानामनादिः ध्रुवाध्रुवौ प्राग्वत् । कषायनोकषायाणां चतुर्विधः, कथं ? स्वस्वक्षपकाणां जघन्यः स च सादिरध्रुवः तच्छेषोऽजघन्यः, क्षीणदृष्टेरुपशान्तदृष्टेर्वोपशान्तस्योपशान्तानां असङ्क्रमात् प्रतिपततः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत् । अध्रुवसतीनामजघन्यो

क. प्र
संक्रम
करण

तिरिति । "अंतो जोगंतीणं"ति सयोग्यन्ते सत्ता यासां ताः सयोग्यन्तिकाः, तासां सर्वापवर्त्तनेनान्तर्मुहूर्त्तिकी स्थितिर्भवति, सा उदयावलिकारहिता जघन्यसंक्रमः। सावलिकः स एव यत्स्थितिः सर्वस्थितिरित्यर्थः । कियत्यस्ताः सयोग्यन्तिकाः नामत्रयोदशरहिता नामनवतिरुच्चैर्गोत्रनीचैर्गोत्रसातासातसहिताश्चतुर्णवतिः भवतीति । आह परः—आसां प्रकृतीनां समयाधिकावलिकाशेषायां स्थितावयोगिनि कस्मान्न जघन्यः सङ्क्रमोऽभिधीयते, क्षीणकषायस्येव स्वान्तर्वर्त्तिनीनां, अत्रोच्यते—स भगवान् अयोगी योगव्यापाररहितः निष्प्रकम्पो नाष्टानां करणानामेकमपि प्रवर्त्तयति, निष्क्रियत्वात्केवलमुदयप्राप्तान्यनुभवत्यतः सयोगिन्येव जघन्यसंक्रम इति। पल्योपमासङ्ख्येयभागस्त्वितरासां भणितशेषाणां, कास्ताः स्त्यानर्द्धित्रिकमिथ्यात्वसम्यग्मिथ्यात्वानन्तानुबन्धिमध्यमाष्टकषायस्त्रीनपुंसकवेदनामत्रयोदशकानां द्वात्रिंशत्प्रकृतीनां स्वक्षपणकालेऽन्त्यसंच्छोभः पल्योपमासङ्ख्येयभागमात्रो यः सर्वापवर्त्तनेन जातः, स द्वात्रिंशत्प्रकृतीनामपि जघन्यसंक्रम इति । यत्स्थितिस्तु स एवावलिकायुक्तस्तत्कालस्थितिरित्यर्थः, नपुंसकवेदस्त्रीवेदयोः पुनः सान्तर्मुहूर्त्तः, यतः—अन्तरकरणस्थः तौ सङ्क्रामयति, शेषकर्मप्रकृतीनामन्तरकरण न भवति, अत उदयावलिकायुक्ता यत्स्थितिरिति । अनन्तानुबन्धिनां स्वक्षपणान्ते चतुर्गतिकानामन्यतमः। मिथ्यात्वसम्यग्मिथ्यात्वयोरविरतदेशविरतप्रमत्ताप्रमत्तानामन्यतमः । शेषाणां षड्विंशतिप्रकृतीनां बादरक्षपकः स्वसंक्रमान्तसमये जघन्यसंक्रमस्वामीति गाथार्थः ॥ ४९ ॥

स्वामित्वानन्तरं साद्यनादिप्ररूपणा सुगमा भवत्यतः सोच्यते—

**मूलठिइण अजहण्णो सत्तण्ह तिहा चउव्विहो मोहे । सेसविगप्पा साई अधुवा ठितिसंकमे होंति ॥५०॥**

व्याख्या—मूलप्रकृतीनामजघन्यस्थितिसङ्क्रमः सप्तानां त्रिधा भवति, कथं ज्ञानदर्शनावरणान्तरायाणां क्षीणकषायस्य समया-

व्याख्या—क्षपित्वा मिथ्यात्वमिश्रे मनुष्यः ततः सम्यक्त्वे क्षपितशेषे कश्चिच्चतुर्गतिकोऽपि भवति, तत्र प्राक्क्रमेण जघन्यसङ्क्रमं करोति, अतश्चतुर्गतिका अपि स्वामिनो भवन्तीति गाथार्थः ॥ ४७ ॥

**निद्दादुगस्स साहियआवलियदुगं तु साहिए तंसे । हासाईणं संखेज्ज वच्छरा ते य कोहम्मि ॥ ४८ ॥**

व्याख्या—निद्राप्रचलयोरेका स्थितिः जघन्यस्थितिसङ्क्रमः, संक्रमान्ते स्वस्थितेरुपरिस्था एकास्थितिः स्वाधःस्थसमयाधिके आवलिकात्रिभागे क्षीणकषायः संक्रामयति, तयोः कियन्मात्रा यत्स्थितिः ? तस्मिन् काले आवलिकाद्विकमसङ्ख्येयभागाधिकं सर्वस्थितिप्रमाणमिति भावः । हास्यरत्यरतिशोकभयजुगुप्सानां क्षपकेनापवर्त्य सङ्ख्येयवार्षिका स्थितिः कृता, सा तेषामात्मनिर्लेपनाद्धायां सञ्ज्वलनक्रोधे प्रक्षिप्यमाणा जघन्यः सङ्क्रमो भवति, तेषां कियती यत्स्थितिः ? अन्तकरणोनानि सङ्ख्येयवर्षाणीति गाथार्थः॥ ४८ ॥

**पुंसंजलणाण ठिइं, जहण्णिया आवलीदुगेणूणा । अंतो जोगंतीणं पलियासंखंसइयराणं ॥ ४९ ॥**

व्याख्या—पुंवेदसञ्ज्वलनक्रोधमानमायानां या जघन्या स्थितिः सैव यत्स्थितिः, तत्र पुरुषवेदस्याष्टौ वर्षाणि जघन्यसङ्क्राममधिकृत्यान्तर्मुहूर्त्तोनानि अवाधोनानीति भावः । एवं सञ्ज्वलनक्रोधस्य मासद्वयमन्तर्मुहूर्त्तोनं, मानस्य मासो अन्तर्मुहूर्त्तोनो, मायायाः अर्द्धमासोऽन्तर्मुहूर्त्तोनो जघन्यसंक्रमो, यत्स्थितिः सावाधः स एव किन्त्वावलिकाद्विकोना, यतो बन्धव्यवच्छेदात् बन्धावलिकायां गतायां क्षपयितुमारब्धस्ताः प्रकृतीर्भूयोऽप्यावलिकायां[1] क्षिप्यन्ते, अतो बन्धावलिकाक्षपणावलिका रहिता शेषा यत्स्थि-

१ उदयावलिका.

व्याख्या—यः कश्चिद्यासां प्रकृतीनां क्षपकः स तासां प्रकृतीनां जघन्यस्थितिसङ्क्रमस्वामी, शेषाणां तु सयोगी, यतः तस्य सर्वप्रकृतीनां अन्तर्मुहूर्त्तमात्रा स्थितिः स्वल्पा भवतीति गाथार्थः ॥ ४४ ॥

तस्यैव जघन्यस्थितिसङ्क्रमस्य स्वपरप्रकृतिस्थानविशेषाद् द्वैविध्यं दर्शयति—

**उदयावलिए छोभो अण्णप्पगईऍ जो य अंतिमओ। सो संकमो जहण्णो तस्स पमाणं इमं होइ ॥ ४५ ॥**

व्याख्या-'अन्यप्रकृतेः' परप्रकृतेरुदयावलिकायां योऽन्तिमः संच्छोभो यश्च स्वप्रकृतावेवोदयावलिकायामन्तिमः संच्छोभः स सङ्क्रमो जघन्यस्तस्य च प्रतिप्रकृतिप्रमाणमेतद् वक्ष्यमाणं भवतीति गाथार्थ ॥ ४५ ॥

स्वप्रकृतौ जघन्यसङ्क्रमं तावदाह—

**संजलणलोभानाणंतरायदंसणचउक्कआऊणं। सम्मत्तस्स य समओ सगआवलियातिभागंमि ॥ ४६ ॥**

व्याख्या—सञ्ज्वलनलोभज्ञानान्तरायदशकदर्शनायुश्चतुष्कप्रकृतीनां वेदकसम्यक्त्वस्य च सामयिकास्थितिः स्वोदयावलिकात्रिभागे सङ्क्रामयत्येप जघन्य आसां सङ्क्रम इति। सस्वामित्वमेतद्भावयति–सूक्ष्मसम्परायक्षपके सञ्ज्वलनलोभस्य यदोदयावलिका समयाधिकास्थितिः शेपा भवति, तदा तत्सामयिकं दलं स्वोदयावलिकात्रिभागे सङ्क्रामयत्येष जघन्यसङ्क्रमः, क्षीणकषायोऽप्येवमेव ज्ञानान्तरायदर्शनचतुष्काणाम्। आयुषामपि स्वानुभवकाले एवमेव कुर्वन्ति। यत्स्थितिः सर्वासां समयाधिकावलिका। सम्यक्त्वस्योत्तरगाथायां सूत्रकारो भावयिष्यतीति गाथार्थः ॥ ४६ ॥

**खविऊणमिच्छमीसे मणुओ सम्मंमि खवियसेसम्मि। चउगइओ तओ होउं जहण्णठितिसंकमस्सामी ॥४७॥**

न्धकाः उत्कृष्टस्थितिसङ्क्रमस्वामिनस्ते च प्रायः संज्ञिमिथ्यादृष्टयो देवायुस्तीर्थकराहारकवर्जितानामिति गाथार्थः ॥ ४१ ॥

**बंधुक्कोसाणं आवलिए आवलिदुगेण इयराणं । हीणा सव्वावि ठिई सो जट्ठिइ संकमो भणिओ ॥ ४२ ॥**

व्याख्या—बन्धेनोत्कृष्टा सत्कर्मता यासां ता बन्धोत्कृष्टाः, तासां बन्धावलिकारहिता बन्धावलिकापरतः उत्कृष्टस्थितिबन्धकाः उत्कृष्टस्थितिं सङ्क्रामयन्ति, सङ्क्रमोत्कृष्टानां बन्धावलिकासङ्क्रमावलिकाभ्यां परतस्त एव मिथ्यादृष्टयो यथासम्भवमुत्कृष्टस्थितिसङ्क्रमं कुर्वन्ति, उत्कृष्टस्य जघन्यस्य वा सङ्क्रमस्य काले या सर्वापि स्थितिः उदयावलिकासहिता उत्कृष्टा सङ्क्रमस्थितिः यत्स्थितिर्भण्यते, यत्स्थितिसमासन्नस्तदुपलक्षितो वा सङ्क्रमो यत्स्थितिसङ्क्रमो भण्यते इति गाथार्थः ॥ ४२ ॥

आवलिकापवादमाह—

**सावाहा आउठिई आवलिगूणा उ जट्ठितिसठाणे । एक्का ठिई जहण्णो अणुदइयाणं निहयसेसा ॥ ४३ ॥**

व्याख्या—सावाधा आयुषः स्थितिः यत्स्थितिरुच्यते यतस्तस्य पारभविकाऽबाधा भवति, आयुषां परस्परं सङ्क्रमाभावान्न तस्याः सङ्क्रमोऽस्ति, अतः सावाधोच्यते एकभविका आयुषः स्थितिरावलिकोना तु यत्स्थितिसङ्क्रमो बन्धोत्कृष्टत्वात्स च स्वस्थाने स्वप्रकृतावेव सङ्क्रामयतीत्युक्तमुत्कृष्टस्वामित्वम् । एकस्याः स्थितेर्यः सङ्क्रमः स जघन्यसङ्क्रमः अनुदयवतीनां तु या निहतशेषा जघन्या स्थितिः सा जघन्यसङ्क्रम इति गाथार्थः ॥ ४३ ॥

जघन्यसङ्क्रमस्वामित्वमतिदिशन्नाह—

**जो जो जाणं खवगो जहण्णठितिसंकमस्स सो सामी । सेसाणं तु सजोगी अंतमुहुत्तं जओ तस्स ॥४४॥**

व्याख्या— यद्यप्याहारतीर्थङ्कराणां सङ्क्रमणे बन्धसतोरप्यन्तःकोटाकोटिस्तथापि ताः सङ्क्रमोत्कृष्टा यतो बन्धान्तःकोटाकोट्याः सङ्क्रमात् कोटाकोटिः सङ्ख्येयगुणेति गाथार्थः ॥ ३८ ॥ भूय एतदेव भावयति—

**एवइयसंतया जं सम्मद्दिट्ठीण सव्वकम्मेसु। आऊणि बंधउक्कोसगाणि जं णण्ण संकमणं ॥ ३९ ॥**

व्याख्या—अन्तःकोटाकोटिसत्कर्मता सम्यग्दृष्टीनां, यतः-सर्वकर्मसु भवत्यतः सङ्क्रमोऽप्यन्तःकोटाकोटिमात्र एव, आयूंषि बन्धोत्कृष्टान्यत्राभिहितानि यस्मात्तेष्वन्यप्रकृतिसङ्क्रमणं नास्तीति गाथार्थः ॥ ३९ ॥ यासां बन्धे सङ्क्रमो भवति, तासां सङ्क्रमपरिमाणमुक्तम्, यासामबन्धे स्थितिसङ्क्रमो भवति, तासां प्रमाणनिरूपणायाह—

**गंतुं सम्मो मिच्छंतस्सुक्कोसं ठिइं च काऊणं। मिच्छियराणुक्कोसं करेति ठितिसंकमं सम्मो ॥ ४० ॥**

व्याख्या—वेदकसम्यग्दृष्टिः मिथ्यात्वं गत्वा तस्य मिथ्यात्वस्योत्कृष्टस्थितिं च कृत्वा ततो विशुद्धमानपरिणामोऽन्तर्मुहूर्त्ते व्यतीते सम्यक्त्वं प्रतिपन्नः, ततः सम्यग्दृष्टिः सम्यक्त्वसम्यग्मिथ्यात्वयोः मिथ्यात्वस्थितिं अन्तर्मुहूर्त्तोनसप्ततिकोटाकोटिप्रमाणां सङ्क्रामयतीति गाथार्थः ॥ ४० ॥ उत्कृष्टसङ्क्रमस्वामित्वमाह—

**अंतोमुहुत्तहीणं आवलियदुहीणतेसु सट्ठाणे। उक्कोससंकमपहू उक्कोसगबंधगण्णासु ॥ ४१ ॥**

व्याख्या—अन्तर्मुहूर्त्तोनां मिथ्यात्वस्थितिं सम्यक्त्वसम्यग्मिथ्यात्वयोः सङ्क्रामयति, तामप्यावलिकापरतः सम्यग्मिथ्यात्वस्थितिं सम्यक्त्वे सङ्क्रामयति तामपि द्वितीयावलिकापरतः, सम्यक्त्वस्थितिं सम्यग्दृष्टिरेव स्वस्थाने सम्यक्त्वस्थितावपवर्त्तयत्यतः तिसृणामपि दृष्टिप्रकृतीनामुत्कृष्टस्थितिसङ्क्रमस्य प्रभुः स्वामी सम्यग्दृष्टिः, अन्यासां बन्धोत्कृष्टानां सङ्क्रमोत्कृष्टानां च स्वोत्कृष्टस्थितिब-

संज्ञानां बाह्यानि कृतान्यत्र तु बन्धोत्कृष्टान्युक्तान्येवं विरोधः, अत्रोच्यते सदधिकारं प्रकृत्यन्तरसङ्क्रमं चाङ्गिकृत्य संज्ञाकरणं व्यर्थमिति तत्र न कृतं, अत्र तु उद्धवर्त्तनापवर्त्तनाधिकारे सार्थकत्वात् कृतमिति न दोषः। शेषाः देवमनुजद्विके विकलेन्द्रिय-सूक्ष्मत्रिके आहारसप्तकं पञ्च पञ्चाद्यानि संहननसंस्थानानि नीलं तिक्तं शुभवर्णैकादशकं च शुभविहायोगतिः तीर्थकरं स्थिरा-दिषट्कं नव नोकषायाः सम्यक्त्वं सम्यग्मिथ्यात्वं सातमुच्चैर्गोत्रमित्येता एकषष्ठिः सङ्क्रमोत्कृष्टा इति गाथार्थः ॥ ३६ ॥

**बंधुक्कोसाण ठिई, मोत्तुं दो आवली उ संकमइ। सेसा इयराण पुणो आवलियतिगं पमोत्तूणं ॥ ३७ ॥**

व्याख्या—बन्धोत्कृष्टानां उत्कृष्टतः उत्कृष्टास्थितिरावलिकाद्विकं मुक्त्वा शेषाः संक्रामति, यतो बद्धा सती बन्धावलिकायां गतायां सङ्क्रामति, उदयावलिका सर्वकरणासाध्येति कृत्वा न संक्रामत्येव, इतरासां संक्रमोत्कृष्टानां पुनरावलिकात्रयं बन्धसंक्रमोदयसंज्ञं मुक्त्वा शेषा स्थितिः संक्रामयति, आह–परो बन्धसंक्रमौ समकं भवतः, अतः साधारणा एकैवावलिका भवति, न भिन्ना एवमसावपि द्व्यावलिकाहीना संक्रामति, न वेत्सि भद्र! सद्भावं, नरकद्विकस्य बन्धोत्कृष्टस्य या बद्धा उत्कृष्टा स्थितिः सा बन्धावलिकाहीना मिथ्यादृष्टिः मनुजद्विकं बध्नानो मनुजद्विके सङ्क्रामयति, ततः स एव देवद्विकं बध्नानः सङ्क्रमोत्कृष्टान्मनुजद्विकात् सङ्क्रमावलिकारहितामुदयावलिकारहितां च तां बन्धावलिकारहितां सङ्क्रान्तस्थितिं देवद्विके सङ्क्रामयतीति गाथार्थः ॥ ३७ ॥ तीर्थङ्कराहारकप्रकृतीः संयता बध्नन्ति, तेषां चान्तःकोटाकोटिरुत्कृष्टोऽपि सर्वप्रकृतीनां स्थितिबन्धः सत्ता च भवति, इयत्सत्तायां सङ्क्रमेणापि इयता एव भाव्यम्, एवं हि बन्धसङ्क्रमोत्कृष्टत्वे संशयस्तदपनोदायाह–

**तित्थयराहाराणं संकमणे बंधसंतएसुंपि। अंतो कोडाकोडी तहावि ता संकमुक्कोसा ॥ ३८ ॥**

**उवट्टणं व ओवट्टणं च पगतिंतरंमि वा नयणं । बंधे व अबंधे वा जं संकामो इइ ठिईए ॥ ३५ ॥**

व्याख्या–उद्वर्त्तनं वा स्वप्रकृतावेव स्थितेः दीर्घीकरणं, अपवर्त्तनं च स्वप्रकृतावेव स्थितेः ह्रीस्वीकरणं प्रकृत्यन्तरे वा स्थितेर्नयनं तच्चोत्तरप्रकृतीनामेव भवति, उद्वर्त्तनापवर्त्तनसङ्क्रमौ तु उभयोरपि भवतः, बन्धे वा अबन्धे वा यद् भवति सङ्क्रम इति । अयं स्थितेः त्रिविधः इत्येवमभिहिते आह परः–भो! भो! अमूर्त्तस्य कालस्याकाशस्येवोद्वर्त्तनापवर्त्तनान्यत्रनयनानि न घटन्ते, आहाचार्यः ह्रस्वस्थितिकालोपलक्षिताः कर्मपरमाणवो यदशुभपरिणामजनिताभिनवस्थितिसमयेषु व्यवस्थाप्यन्ते तदुद्वर्त्तनं, यत्पुनः दीर्घस्थितिपरमाणून् शुभेन परिणामेन स्वाधस्तनस्थितिषु निवेशयति तदपवर्तनम्, यत्पुनः सङ्क्रमप्रकृतिस्थितिसमयस्था कर्मपरमाणवः प्रतिग्रहप्रकृतौ सङ्क्रमप्रकृतितुल्यासु स्थितिषु नीत्वा निवेश्यन्त इत्येषः प्रकृत्यन्तरनयनसङ्क्रमो, यथा 'मञ्चाः क्रोशन्ति' इत्यनेन न्यायेन तत्स्थितपरमाणुसङ्क्रमात् स्थितिसङ्क्रमोऽभिधीयते इति गाथार्थः ॥ ३५ ॥

उत्कृष्टजघन्यस्थितिसङ्क्रमपरिज्ञापनार्थमाह—

**जासिं बंधनिमित्तो उक्कोसो बंध मूलपगईणं । ता बंधुक्कोसाओ सेसा पुण संकमुक्कोसा ॥ ३६ ॥**

व्याख्या—यासां बन्धहेतुक उत्कृष्टो बन्धो भवति मूलप्रकृतीनां ताः प्रकृतयो बन्धोत्कृष्टाः, शेषाः सङ्क्रमोत्कृष्टा इति, कास्ता नारकतिर्यग्द्विके आद्यन्तजाती औदारिकवैक्रियकार्मणतैजसान्ताशुभवर्णचतुष्कागुरुलघुसप्तकानि ३५ षष्ठे संहननसंस्थाने अशुभविहायोगतिः स्थावरं त्रसादिचतुष्कमस्थिरादिषट्कं एताः नाम्नः पञ्चपञ्चाशत् नीचैर्गोत्रमसातं षोडश कषायाः, मिथ्यात्वज्ञानदर्शनावरणान्तरायायुष्कसकलप्रकृतयश्चैताः सर्वाःसप्तनवतिः बन्धोत्कृष्टाः, आह तृतीयद्वारे आयुष्काणि चतसृणामपि

णवः प्रतिग्रहप्रकृतिस्वरूपेण तिष्ठन्ति । यदि पुनः समकं प्रकृतिसङ्क्रमादिषु दलं परमाणुरूपं संक्रामयति, ततः प्रदेशसङ्क्रमस्य वैयर्थ्यम्, न संङ्क्रामयति चेत् ? ततः प्रकृतिसंक्रमादिभणने व्यर्थः कपोलव्यायाम इति । एतच्छ्रुत्वाहाचार्यः भद्र ? न वेत्सि तत्त्वं अमी प्रकृतिस्थित्यनुभागप्रदेशसंक्रमाः बन्धा वा उदया वा समकं समकालं प्रभवन्ति, तत्कथनं चैककालं वक्तुं न शक्यते, वाचःक्रमवर्त्तित्वात्, समकालप्रवर्त्तने च प्रकृतिसङ्क्रमे परमाण्वात्मकदलसङ्क्रमं को निवारयति ? किन्तु चत्वारोऽपि संक्रमाः स्वविषयप्राधान्येन व्यवस्थिताः प्रकृतिसङ्क्रमे संख्यामात्रस्यैव प्राधान्यम्, इयत्प्रकृतिष्वियत्यः सक्रामन्ति, कालानुभागपरमाणवोऽत्र सन्तोऽप्युपसर्ज्जनभूताः । स्थितिसंक्रमे कालस्य प्राधान्यम् । अनुभागसंक्रमे यद्यप्यनुभागः प्रदेशभिन्नो नास्ति, तथापि तन्मात्रस्यैव प्राधान्यम् । प्रदेशसंक्रमेऽपि प्रदेशानामेव कालरसादिनिरपेक्षाणां प्राधान्यमेवं स्थिते कोऽत्र दोष इति गाथार्थः ॥ ३३ ॥

भूयोऽप्याह परः—

**दलियरसाणं जुत्तं मुत्तत्ता अण्णभावसंकमणं । ठितिकालस्स न एवं उउसंकमणंपि व अदुट्ठं ॥ ३४ ॥**

व्याख्या—परमाणुरसयोः युक्तमन्यद्भावसंक्रमणं पृथिवीजलयोरिव मूर्त्तत्वात्, स्थितिकालस्यैवं न घटते, अमूर्त्तत्वादाकाशस्यैव, अन्यभावाभावे च स्थितिसंक्रमस्य वैयर्थ्यमिति । आहाचार्यः–' उउ संकमणंपि व अदुट्ठं ' अमूर्त्तस्यापि कालस्य संक्रमो लोकेऽप्यदुष्टो यथा, यतोऽन्यस्मिन्नृतावन्यर्तुत्वानुभावो दृश्यते, पित्तादिप्रकोपात् तरुषु पुष्पफलादिसद्भावाच्च न दोषः कश्चिदिति गाथार्थः ॥ ३४ ॥ प्रकृतिसंक्रमः समाप्तः ॥

प्रकृतिसंक्रमलक्षणसामान्यमबाधयत् स्थितेर्विशेषलक्षणमाह—

देकत्रिंशदेकप्रतिग्रहाणां योजनोक्ता। अष्टाविंशतिप्रतिग्रहस्याह—

**पढमचउक्कं आइल्लवज्जियं दो अणिच्च आइल्ला। संकमहि अट्ठवीसे सामी जह संभवं नेया॥ ३२॥**

व्याख्या—प्रथमचतुष्कं आद्यसत्स्थानत्र्युत्तरशतरूपवर्जितं द्वे आद्ये अध्रुवस्थाने अमी पञ्चाप्यष्टाविंशतिप्रतिग्रहे सङ्क्रामन्ति, स्वामिनो यथासम्भवं नेयाः—नेतव्याः इति, अथवा स्वबुद्ध्या ज्ञेया ज्ञातव्या इति गाथार्थः॥ ३२॥

एतदेव वृत्तिकारो भावयति—मिथ्यादृष्टिः [1]सम्यग्मिथ्यादृष्टिर्वा देवगतिप्रायोग्यमष्टाविंशतिबन्धं बध्नाना द्व्युत्तरशतपञ्चनवति-सत्कर्माऽष्टाविंशतिप्रतिग्रहे द्व्युत्तरशतं पञ्चनवतिं वा सङ्क्रामयति। सम्यग्दृष्टिर्मिथ्यात्वं गतो नरकप्रायोग्यमष्टाविंशतिबन्धं बध्नानः षण्णवतिं अष्टाविंशतिप्रतिग्रहे सङ्क्रामयति। द्व्यशीतिसत्कर्मा सूक्ष्मत्रसः शेषतिरश्चां भवं प्राप्तः सन्मनुष्यद्विकं बध्ध्वा चतुरशीतिस-त्कर्म्मा जातस्तदन्तर्मुहूर्त्तात्परतः परावर्त्त्य नरकप्रायोग्यं वा देवप्रायोग्यं वा अष्टाविंशतिबन्धं बध्नाति, बन्धावलिका यावन्नापगच्छति, तावदष्टाविंशतिप्रतिग्रहे चतुरशीतिं सङ्क्रामयति। बन्धावलिकायामतीतायां तस्मिन्नेवाष्टाविंशतिप्रतिग्रहे त्रिनवतिं सङ्क्रामयति।

एतच्छुत्वाह परः—

**संकमइ नण्णपगइं पगतीओ पगतिसंकमे दलियं। ठितिअणुभागा चेवं ठंति तहट्ठा तयणुरूवा॥ ३३॥**

व्याख्या—सङ्क्रामति नान्यां प्रकृतिं प्रतिग्रहरूपां सङ्क्रमप्रकृतितो दलिकं परमाणुरूपं प्रकृतिसङ्क्रमे। स्थित्यनुभागावप्येवमेव, स्थितिसङ्क्रमेऽपि स्थितिः न सङ्क्रामयति। अनुभागसङ्क्रमेऽप्यनुभागो न सङ्क्रामति। यदि परं स्वप्रकृतिस्था एवानुभागपरमा-

---

१ सम्यग्दृष्टिर्वेति वृद्धवृत्तिकारादयः।

त्र्युत्तरशतं सङ्क्रामयति।अप्रमत्तस्यापूर्वकरणस्य वा त्रिंशद्बन्धं बध्नानस्य बन्धावलिकायां गतायां त्रिंशत्प्रतिग्रहे त्र्युत्तरशतं सङ्क्रामति। बन्धावलिकायामनपगतायां तत्रैव पञ्चनवतिः सङ्क्रामति। देवनारकाः सम्यग्दृष्टयो मनुष्यप्रायोग्यं तीर्थङ्करसहितं त्रिंशद्बन्धं बध्नानाः षण्णवतिं त्रिंशत्प्रतिग्रहे सङ्क्रामयन्ति। अविरतिदेशविरतप्रमत्ताः देवप्रायोग्यं एकोनत्रिंशद्बन्धं बध्नानाः त्र्युत्तरशतसत्कर्माणः एकोनत्रिंशत्प्रतिग्रहे त्र्युत्तरशतं संक्रामयन्ति। एत एव तीर्थकरस्य बन्धावलिकायामनपगतायां तस्मिन्नेवैकोनत्रिंशत्प्रतिग्रहे द्व्युत्तरशतं सङ्क्रामयन्ति। एत एव तीर्थकरस्य बन्धावलिकायां गतायां षण्णवतिसत्कर्माणः एकोनत्रिंशत्प्रतिग्रहे षण्णवतिं सङ्क्रामयन्ति। बन्धावलिकायामनपगतायां एकोनत्रिंशत्प्रतिग्रहे पञ्चनवतिं सङ्क्रामयन्ति। अथवा नारकः षण्णवतिसत्कर्मा मिथ्यात्वं गतः प्राक्तनमनुष्यप्रायोग्यं एकोनत्रिंशद्बन्धं बध्नानः एकोनत्रिंशत्प्रतिग्रहे षण्णवतिं सङ्क्रामयति। पर्याप्तकद्वित्रिचतुष्पञ्चेन्द्रियतिर्यक्प्रायोग्यमुद्योतोपलक्षितं त्रिंशद्बन्धं बध्नानाः उद्योतरहितैकोनत्रिंशद्बन्धं बध्नानाः एत एव द्वित्रिचतुष्पञ्चेन्द्रिया अनयोरेव प्रतिग्रहयोः द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसंक्रमान् तत्तत्सत्कर्माणः मनुष्या अपि द्व्यशीतिरहितानेतानेव सङ्क्रमाननयोरेव प्रतिग्रहयोः सङ्क्रामयन्ति। यतस्तेषां अध्रुवं द्व्यशीतिसत्स्थानं नास्ति। पञ्चेन्द्रियतिर्यक्प्रायोग्य एकोनत्रिंशद्बन्धं त्रिंशद्बन्धं वा बध्नाना देवनारकाः तयोरेव प्रतिग्रहयोः द्व्युत्तरशतं पञ्चनवतिं च तत्तत्सत्कर्माणः सङ्क्रामयन्ति। प्रथमचतुष्कमयशःकीर्तिप्रतिग्रहत्वे कृत्वा ततो द्व्युत्तरैकोत्तरशतपञ्चनवतिचतुर्णवतिरूपं प्रथमचतुष्कं उपशामका अपूर्वकरणबादरसूक्ष्माः यशःकीर्तिप्रतिग्रहे सङ्क्रामयन्ति। द्वितीयचतुष्कमपि यशःकीर्तिहीनं एकोननवतिअष्टाशीतिद्व्यशीत्येकाशीतिरूपं नामत्रयोदशके च क्षीणे क्षपकश्रेण्यां यज्जातं द्वितीयचतुष्कं तद्बादरसूक्ष्मक्षपकाः यशःकीर्तिप्रतिग्रहे सङ्क्रामयन्तीति एकोनत्रिंशत्त्रिंश-

क.
संक्र
कर

।१९

त्रयोविंशतिप्रतिग्रहे, अथवा पर्याप्तकैकेन्द्रियापर्याप्तकद्वित्रिचतुष्पञ्चेन्द्रियतिर्यक्प्रायोग्यामेतेषामेव पञ्चविंशतिबध्नानानां पञ्चविंशतिप्रतिग्रहे, अथवैषामेव पर्याप्तकैकेन्द्रियप्रायोग्यां षड्विंशतिबध्नानानां षड्विंशतिप्रतिग्रहे, त्र्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतित्र्यशीतिसङ्क्रमाः पञ्चापि तत्तत्सत्कर्मणां सङ्क्रामन्ति। त्र्युत्तरशतपञ्चनवतिसङ्क्रमौ देवाः तत्तत्सत्कर्माणः पर्याप्तकैकेन्द्रियप्रायोग्यं षड्विंशतिबन्धं पञ्चविंशतिबन्धं च बध्नानास्तयोः प्रतिग्रहयोः सङ्क्रामयन्ति । त्रयोविंशतिपञ्चविंशतिषड्विंशतिप्रतिग्रहेषु प्रागुक्तप्रायोग्येषु त्र्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिसङ्क्रमान् मनुष्याः तत्तत्सत्कर्माणः तत्तद्बध्नानाः प्रत्येकं सङ्क्रामयन्ति। उक्ता त्रिपञ्चषड्विंशतिप्रतिग्रहेषु सङ्क्रमयोजना, शेषेष्वाह—

पढमं संतचउक्कं इगितीसे अधुवतिगजुयं तं तु। गुणतीसतीसएसुं जसहीणा दो चउक्कजसे ॥ ३१ ॥

व्याख्या—प्रथमं सच्चतुष्कं एकत्रिंशत्प्रतिग्रहे सङ्क्रामति। तदेव प्रथमसच्चतुष्कं अध्रुवसत्त्रिकयुक्तं एकोनत्रिंशत्त्रिंशत्प्रतिग्रहयोः सङ्क्रामति। यशःकीर्त्याः प्रतिग्रहं कृत्वा तद्धीनं प्रथमचतुष्कं द्वितीयचतुष्कं च यशःकीर्त्तिप्रतिग्रहे सङ्क्रामतीति गाथार्थः ॥३१॥

एतदेव भावयति—एकत्रिंशद्बन्धकस्याप्रमत्तस्यापूर्वकरणस्य वा बन्धावलिकायां गतायां एकत्रिंशत् प्रतिग्रहे त्र्युत्तरशतं सङ्क्रामति। बन्धावलिकायामनपगतायां तस्मिन्नेव प्रतिग्रहे पञ्चनवतिः सङ्क्रामति। पूर्वं त्रिंशद् बन्धं बध्ध्वा पश्चादेकत्रिंशद्बन्धकस्याप्रमत्तस्यापूर्वकरणस्य वा यावद्बन्धावलिका नापगच्छति, तावदेकत्रिंशत्प्रतिग्रहे त्र्युत्तरशतं सङ्क्रामति। तीर्थङ्करसहितमेकोनत्रिंशद्बन्धं पूर्वं बध्ध्वा पश्चादेकत्रिंशद्बन्धकस्य आहारकसप्तकस्य बन्धावलिकायामनपगतायां एकत्रिंशत्प्रतिग्रहे पण्णवतिः सङ्क्रामति। इदानीं त्रिंशदेकोनत्रिंशत्प्रतिग्रहयोः भावना क्रियते-देवो मनुष्यप्रायोग्यं तीर्थकरोपलक्षितं त्रिंशद्बन्धं बध्नानः त्र्युत्तरशतसत्कर्मा त्रिंशत्प्रतिग्रहे

समुदायोऽस्य त्र्युत्तरशतं तत्प्रथमं सत्स्थानम्। एतदेव तीर्थंकरवर्जितं द्व्युत्तरशतं भवति। अथवा आहारकसप्तकवर्जितं षण्णवतिः। अथवा आहारकसप्तकतीर्थङ्करवर्जितं पञ्चनवतिर्भवति। एतत्प्रथमचतुष्कसंज्ञं सच्चतुष्कम्, सङ्क्रमस्थानान्यपि चत्वार्येतान्येव। प्रथमचतुष्कात् त्रयोदशप्रकृतिक्षये क्षपकश्रेण्यां द्वितीयचतुष्कसंज्ञं सच्चतुष्कं भवति, नवत्येकोननवतित्र्यशीतिद्व्यशीतिरूपम्। अमीषां नवतित्र्यशीतिसत्स्थाने सङ्क्रमे न सम्भवतः, शेषे द्वे संभवतः। पञ्चनवतेर्देवद्विके उद्वलिते त्रिनवतिर्भवति। तस्या अपि वैक्रियसप्तके सनरकद्विके उद्वलिते चतुरशीतिर्भवति। तस्या अपि मनुजद्विके उद्वलिते द्व्यशीतिर्भवति। एतदध्रुवसंज्ञं सत्त्रिकं संक्रमे भवति, किन्तु द्व्यशीतिः यद्यपि प्रकृतिभेदेन व्यवस्थिताः तथापि सङ्ख्यातुल्यत्वात् पृथक् सत्स्थानं न भवति। एवमष्टौ संक्रमस्थानानि। नवाष्टौ सत्स्थाने यद्यपि स्तः तथापि संक्रमं प्रति न भवतस्ते, यतोऽयोगिस्थाने, तत्र च नामकर्म्मणो बन्धं विना प्रतिग्रहतापि नास्ति, प्रतिग्रहं विना कुत्र सङ्क्रमो भवति, तस्मात् सत्स्थानबाह्यानि चत्वार्यन्यानि सङ्क्रमस्थानानि एकोत्तरशतचतुर्णवत्यष्टाशीत्येकाशीतिरूपाणि भवन्ति, अष्टौ प्रतिग्रहाः त्रयोविंशतिपञ्चविंशतिषड्विंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशदेकप्रकृत्यात्मकाः, यतो बन्धसमास्तेऽभिहिता इति। साम्प्रतं ये यत्र प्रतिग्रहे सङ्क्रमाः सङ्क्रामन्ति, तत्सस्वामित्वानाह—

**पढमचउक्कं तित्थयरवज्जियं अधुवसंततियजुत्तं। तियपणछवीसेसुं संकमति परिग्गहेसु तिसु॥ ३०॥**

व्याख्या—प्रथमचतुष्कं तीर्थङ्करोपलक्षितसत्स्थानद्विकवर्जितं अध्रुवस्थानत्रिकयुक्तं किमुक्तं भवति द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसङ्क्रमाः त्रयोविंशतिपञ्चविंशतिषड्विंशतिप्रतिग्रहेषु पञ्चापि प्रत्येकं सङ्क्रामन्तीति गाथार्थः॥ ३०॥

यथा सङ्क्रमाः सङ्क्रामन्ति तथा भावयति—अपर्याप्तकैकेन्द्रियप्रायोग्यां त्रयोविंशतिं बध्नतां एकद्वित्रिचतुष्पञ्चेन्द्रियतिरश्चां

त (ता) एव दश समयोनद्व्यावलिकाकालं चतुष्कप्रतिग्रहे सङ्क्रामन्ति । ततो मध्यममानद्वय उपशान्तेऽष्टौ चतुष्कप्रतिग्रहे समयोनद्व्यावलिकाकालं सङ्क्रामन्ति । ततः सञ्ज्वलनमाने उपशान्ते सप्तान्तर्मुहूर्त्तं चतुष्कप्रतिग्रहे सङ्क्रामन्ति । ततः सञ्ज्वलनमायायाः समयोनद्व्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहता अपगच्छति, ततः स (ता) एव सप्त त्रिकप्रतिग्रहे समयोनद्व्यावलिकाकालं सङ्क्रामन्ति । ततः मध्यममायाद्विके उपशान्ते पञ्च तस्मिन्नेव त्रिकप्रतिग्रहे समयोनद्व्यावलिकाकालं सङ्क्रामन्ति, ततः सञ्ज्वलनमायायां उपशान्तायां चतस्रः तस्मिन्नेव त्रिकप्रतिग्रहेऽन्तर्मुहूर्त्तं सङ्क्रामन्ति । ततो मध्यलोभद्विके उपशान्ते च बादरकषायगुणस्थानेऽपगते सूक्ष्मस्यादावेव सञ्ज्वलनलोभस्याधाराधेयत्वेऽपगते सम्यक्त्वसम्यग्मिथ्यात्वयोर्मिथ्यात्वं सम्यग्मिथ्यात्वं सम्यक्त्वे सङ्क्रामति, सूक्ष्मोपशान्तकालं यावत् । अस्या भणने उक्ता सङ्क्रमप्रतिग्रहभावनेति । मिथ्यादृष्टि-सास्वादनसम्यग्मिथ्यादृष्टीनां प्रतिग्रहाः स्वल्पत्वात् सुगमाः, शेषाणां प्रतिग्रहस्वामित्वमाह—

इगुणवीसपन्नरेक्कारसाइतितिसंमदेसविरयाणं । सत्तपणाइ छ पंच उ पडिगहगा उभयसेढीसु ॥ २९ ॥

व्याख्या—एकोनविंशत्यष्टादशसप्तदशप्रतिग्रहास्त्रयोऽप्यविरतस्य भवन्ति । पञ्चदशचतुर्दशत्रयोदशप्रतिग्रहाः त्रयोऽपि देशविरतस्य भवन्ति । एकादशदशनवप्रतिग्रहास्त्रयोऽपि प्रमत्ताप्रमत्तयोर्भवन्ति तुशब्दादुपशान्तदृष्टेः एकादश क्षीणदृष्टेर्नवापूर्वकरणस्य भवन्ति । सप्तादि षट्प्रतिग्रहाः सप्तषट्पञ्चचतुस्त्रिद्विप्रकृत्यात्मका उपशमश्रेण्यां भवन्ति । पञ्चादयः पञ्चप्रतिग्रहाः पञ्चचतुस्त्र्येकप्रकृतिरूपाः क्षपकश्रेण्यां क्षीणदृष्टेः उपशमश्रेण्यां च भवन्तीति गाथार्थः ॥ २९ ॥

भणिता मोहनीयवक्तव्यता, नाम्नोऽभिधीयते, अत्र द्वादश सत्स्थानानि, तत्तुल्यानि च सङ्क्रमस्थानानि । कथं ? सकलप्रकृति-

व्याख्या—षट्प्रतिग्रहे विंशतिचतुर्दशत्रयोदशसङ्क्रमा सङ्क्रामन्ति। त्रयोदशैकादशदशसङ्क्रमाः पञ्चकप्रतिग्रहे सङ्क्रामन्ति। दशाष्टसप्तसङ्क्रामाश्चतुष्कप्रतिग्रहे सङ्क्रामन्ति। सप्तपञ्चचतुःसङ्क्रमा त्रिकप्रतिग्रहे सङ्क्रामन्तीति गाथार्थः ॥ २८ ॥

एतदेव वृत्तिकारो भावयति—अष्टाविंशतिसत्कर्मा सप्तकं प्रथममुपशमय्य तत उपशमश्रेणीं करोति, "[1]अणदंसणपुंसित्थी" इतिवचनात्। केचिद्वदन्ति अनन्तानुबन्धिनः उद्वलय्य दर्शनत्रिकमुपशमय्योपशमश्रेणीं करोति, उभयत्राप्यदोषः, यतः—उभयत्रापि तेषां सङ्क्रमप्रतिग्रहता न भवति, ततश्चतुर्विंशतेः सम्यक्त्वं प्रतिग्रहत्वे कृतं सम्यग्मिथ्यात्वमुभयत्र व्यवस्थापितम्, अनेन कारणेन पञ्चबन्धकस्य सप्तप्रतिग्रहे त्रयोविंशतिः सङ्क्रामति। ततोऽन्तरकरणे कृते सञ्ज्वलनलोभस्यासङ्क्रमाद् द्वाविंशतिः सङ्क्रामति। ततो नपुंसकवेदे उपशान्ते एकविंशतिः सङ्क्रामति। ततः स्त्रीवेदे उपशान्ते विंशतिः तत्रैव सप्तकेऽन्तर्मुहूर्त्तं सङ्क्रामति। ततः पुरुषवेदस्य समयोनद्व्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति, सैव विंशतिः सञ्ज्वलनदृष्टिद्विकात्मके षट्कप्रतिग्रहे समयोनद्व्यावलिकोनं (काकालं) सङ्क्रामति। ततो हास्यादिषट्के उपशान्ते चतुर्दश समयोनद्व्यावलिकाकालं षट्कप्रतिग्रहे सङ्क्रामन्ति। ततः पुरुषवेद उपशान्ते त्रयोदश षट्कप्रतिग्रहेऽन्तर्मुहूर्तं सङ्क्रामन्ति। ततः सञ्ज्वलनक्रोधस्य (समयोन) द्व्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति, पञ्चकप्रतिग्रहे त (ता) एव त्रयोदश समयोनद्व्यावलिकाकालं सङ्क्रामन्ति। ततः मध्यमक्रोधद्वये उपशान्ते एकादश समयोनद्व्यावलिकाकालं पञ्चसु सङ्क्रामन्ति, ततः सञ्ज्वलनक्रोधे उपशान्ते दश पञ्चस्वन्तर्मुहूर्त्तं सङ्क्रामन्ति। ततः सञ्ज्वलनमानस्य समयोनद्व्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति,

१ अनन्तानुबन्धिदर्शननपुंसकस्त्री.

ततः पुरुषवेदे उपशान्ते एकादश चतुष्कप्रतिग्रहेऽन्तर्मुहूर्त्तं सङ्क्रामन्ति, ततः सञ्ज्वलनक्रोधस्य समयोनत्र्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छात, ततस्त ( ता )एवैकादश त्रिकप्रतिग्रहे समयोनद्व्यावलिकाकालं सङ्क्रामन्ति । ततः क्रोधद्वये उपशान्ते नव त्रिकप्रतिग्रहे समयोनद्व्यावलिकाकालं सङ्क्रामन्ति। ततः सञ्ज्वलनक्रोधे उपशान्ते अष्टौ त्रिकप्रतिग्रहेऽन्तर्मुहूर्त्तं सङ्क्रामन्ति। ततः सञ्ज्वलनमानस्य समयोनत्र्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहता गच्छति,ततस्त(ता)एवाष्टौ द्विकप्रतिग्रहे समयोनद्व्यावलिकाकालं सङ्क्रामन्ति। ततो मानद्वये उपशान्ते षट् तस्मिन्नेव द्विकप्रतिग्रहे समयोनद्व्यावलिकाकालं सङ्क्रामन्ति। ततः सञ्ज्वलनमाने उपशान्ते पञ्च द्विकप्रतिग्रहे सङ्क्रामन्ति । ततः सञ्ज्वलनमायायाः समयोनद्व्यावलिकाशेषायां प्रथमस्थित्तौ प्रतिग्रहताऽपगच्छति, ततस्त (ता) एव पञ्च सञ्ज्वलनलोभप्रतिग्रहे समयोनद्व्याधलिकाकालं सङ्क्रामन्ति । ततो मायाद्विके उपशान्ते त्रिकसङ्क्रमः सञ्ज्वलनलोभप्रतिग्रहे समयोनद्व्यावलिकाकालं सङ्क्रामयति । ततः सञ्ज्वलनमायोपशमे मध्यमलोभद्विकं तस्मिन्नेव सञ्ज्वलनलोभप्रतिग्रहेऽन्तर्मुहूर्त्तं सङ्क्रामति । एवं वादरकषायस्यान्तसमये लोभद्विकोपशमः, ततः सङ्क्रमप्रतिग्रहाभावः, सूक्ष्मस्यान्तसमये सञ्ज्वलनलोभस्योपशमः क्षीणसप्तकस्योपशमश्रेण्यां भावनीय इति । भणिता क्षीणसप्तकस्योपशमश्रेणी। उपशान्तदर्शनस्योपशमश्रेण्यां संक्रम प्रतिग्रहान् योजयन्नाह–" इयरस्सउ दो दोसु सत्तसु वीसाइ चत्तारि " गाथापश्चार्द्धस्य व्याख्या–इतरस्योपशान्तदृष्ट्युपशामकस्य द्विकप्रतिग्रहे दृष्ट्यात्मके दृष्टिद्विकं सङ्क्रामति। सप्तकप्रतिग्रहे विंशत्यादयश्चत्वारः सङ्क्रमा विंशत्येकविंशतिद्वाविंशतित्रयोविंशतिरूपाः सङ्क्रामन्तीति गाथार्थः ॥ २७ ॥

**छसु वीसचोद्दतेरसतेरेक्कारस य दस उ पंचंमि । दस अड सत्त चउक्के तिगंमि सगपंच चउरो य ॥ २८ ॥**

नत्यावलिकाशेषायां प्रथमस्थितौ त्रिकबन्धकस्य मानप्रतिग्रहता नश्यति, द्विकसङ्क्रममन्तर्मुहूर्त्तं यावद्द्विकप्रतिग्रहे सङ्क्रामयति, ततो माने क्षपिते मायायाः प्रतिग्रहत्वेऽपगते मायां संज्वलनलोभरूपे प्रतिग्रहे अन्तर्मुहूर्त्तं सङ्क्रामयत्यनेन विधिना भावना कार्या इति। साम्प्रतं क्षपितसप्तकस्योपशमश्रेण्यां सङ्क्रमप्रतिग्रहान् योजयन्नाह—

**अट्ठाराइचउक्कं पंचे अट्ठारबारएक्कारा। चउसेक्कारसनवअड तिगे दुगे अट्ठछप्पंच ॥ २६ ॥**

व्याख्या—अष्टादशादिसङ्क्रमचतुष्कं अष्टादशैकोनविंशतिविंशत्येकविंशतिप्रकृतिरूपं पञ्चकप्रकृतिग्रहे सङ्क्रामति। अष्टादश द्वादशैकादशसङ्क्रमाश्चतुष्कप्रतिग्रहे सङ्क्रामन्ति। एकादशनवाष्टसङ्क्रमाः त्रिकप्रतिग्रहे सङ्क्रामन्ति। अष्टषट्पञ्चसङ्क्रमा द्विकप्रतिग्रहे सङ्क्रामन्तीनि गाथार्थः ॥ २६ ॥

**पण तिण्णि दोण्णि एक्के, उवसमसेढीएँ खइयदिट्ठिस्स। इयरस्स उ दो दोसुं सत्तसु वीसाइ चत्तारि ॥२७॥**

व्याख्या—अस्यां श्रेण्यां गाथार्धं सम्बध्यते,पञ्चत्रिद्विसङ्क्रमाः एकप्रतिग्रहे सङ्क्रामन्ति,उपशमश्रेण्यां क्षायिकदृष्टेरेवं सङ्क्रमप्रतिग्रहा भवन्ति। एतदेव भावयति—सप्तके क्षपिते य उपशमश्रेणीं करोति स एकविंशतिसत्कर्मा भवति,स चान्तर्मुहूर्त्तं पञ्चके एकविंशतिं सङ्क्रमति, ततोऽन्तरकरणे कृते सञ्ज्वलनलोभस्यासङ्क्रमाद् विंशतिसङ्क्रमः पञ्चकेऽन्तर्मुहूर्त्तं सङ्क्रामति। ततो नपुंसकवेदे उपशान्त एकोनविंशतिः पञ्चकेऽन्तर्मुहूर्त्तं सङ्क्रामति। ततः स्त्रीवेदे उपशान्तेऽष्टादश पञ्चकेऽन्तर्मुहूर्त्तं सङ्क्रामन्ति। ततो पुरुषवेदस्य समयोनद्व्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति, ततश्चतुष्कप्रतिग्रहो भवति, तस्मिन् त (ता) एवाष्टादश समयोनद्व्यावलिकाकालं सङ्क्रामन्ति। ततो हास्यादिषट्के उपशान्ते द्वादश तस्मिन्नेव चतुष्कप्रतिग्रहे समयोनद्व्यावलिकाकालं सङ्क्रामन्ति।

उपशमश्रेण्यां सप्तप्रतिग्रहे एकविंशतिः सङ्क्रामतीति गाथार्थ ॥ २४ ॥

| गु. | ४ | ५ | ६—७ | उ. उ—९ |
| --- | --- | --- | --- | --- |
| सं. | २२–२१ | २२–२१ | २२–२१ | २१–२१ |
| प्र. | १८–१७ | १४–१३ | १०–९ | ७–७ |

साम्पतं क्षपकश्रेणिसङ्क्रमप्रतिग्रहप्रतिपादनायाह—

**दसगाइ चउक्कं एक्कवीसखवगस्स संकमहि पंचे। दश चत्तारि चउक्के तिसु तिण्णि दु दोसु एक्केक्कं॥२५॥**

व्याख्या—दशकादयश्चत्वारः सङ्क्रमाः दशैकादशद्वादशत्रयोदशप्रकृत्यात्मका एकविंशतिसङ्क्रमश्च पञ्च प्रतिग्रहे वादरक्षपकस्य सङ्क्रामन्ति। दशचतुष्क सङ्क्रमो स एव वादरः चतुष्कप्रतिग्रहे सङ्क्रामयति। त्रिकसङ्क्रमं त्रिकप्रतिग्रहे सङ्क्रामयति, द्विकसङ्क्रमं द्विकप्रतिग्रहे सङ्क्रामयति, एकप्रकृतिसङ्क्रमं एकप्रतिग्रहे सङ्क्रामयतीति गाथार्थः॥ २५॥

एतदेव भावयति—क्षपितसप्तकः क्षपकश्रेणीं करोत्यतो वादरोऽन्तर्मुहूर्त्तं यावदेकाविंशतिः पञ्चकप्रतिग्रहे सङ्क्रामयति। ततो मध्यमाष्टकषायक्षये अन्तर्मुहूर्त्तं त्रयोदश तस्मिन्नेव पञ्चकप्रतिग्रहे सङ्क्रामयति। ततस्त्रयोदशानामन्तरकरणे कृते सञ्ज्वलनलोभस्यासङ्क्रमात् द्वादशान्तर्मुहूर्त्तं पञ्चकप्रतिग्रहे सङ्क्रामयति। ततो नपुंसकवेदे क्षपिते एकादश पञ्चकप्रतिग्रहेऽन्तर्मुहूर्त्तं सङ्क्रामयति। ततः स्त्रीवेदे क्षपिते दशान्तर्मुहूर्त्तं यावत्पञ्चकप्रतिग्रहे सङ्क्रामयति। ततः पुरुषवेदस्य प्रथमस्थित्यां समयोनद्व्यावलिकाशेषायां प्रतिग्रहता न भवति, त (ता) एव दश चतुष्कप्रतिग्रहे समयोनद्व्यावलिकाकालं सङ्क्रामयति। ततो हास्यादिषट्के क्षपिते चत्वारि ( चतस्रः समयोन) द्व्यावलिकाकालं तस्मिन्नेव चतुष्कप्रतिग्रहे सङ्क्रामयति। ततः पुरुषवेदे क्षपिते तत्कालमेव क्रोधस्य प्रतिग्रहत्वे नष्टे चतुर्बन्धकोऽन्तर्मुहूर्त्तं त्रिकसङ्क्रमं त्रिकप्रतिग्रहे सङ्क्रामयति। ततः क्रोधस्य बन्धेऽपगते समयो-

सप्तके च प्रतिग्रहे विंशतिसङ्क्रमः सङ्क्रामतीति गाथार्थः ॥ २१ ॥

गु १-२-३ / सं. २५-२५-२५ / प्र. २१-२१-१७

गु ९ गु ९ / २० १४-१३ | -२० / ६ ७

**बावीसे गुणवीसे पण्णरसेक्कारसेसु छव्वीसा । संकमइ सत्तवीसा मिच्छे तह अविरयाईणं ॥ २२ ॥**

व्याख्या—मिथ्यादृष्टेः द्वाविंशतिप्रतिग्रहे, अविरतस्यैकोनविंशतिप्रतिग्रहे, देशविरतस्य पञ्चदशप्रतिग्रहे, प्रमत्ताप्रमत्तयोरेकादशप्रतिग्रहे षड्विंशतिसङ्क्रमश्च सङ्क्रामतीति गाथार्थः ॥ २२ ॥

गु. १—४—५—६—७ / सं २६-२६-२६-२६-२६ / प्र. २२-१९-१५-११-११

**बावीसेगुणवीसे, पण्णरसेक्कारसे य सत्ते य । तेवीसा संकमई, मिच्छा विरयाइयाण कमा ॥ २३ ॥**

व्याख्या—मिथ्यादृष्टेर्द्वाविंशतिप्रतिग्रहेऽविरतदेशविरतप्रमत्ताप्रमत्तापूर्वाणां एकोनविंशतिपञ्चदशैकादशप्रतिग्रहेषु उपशमश्रेण्यामुपशान्तदृष्टेः बादरस्य सप्तप्रतिग्रहे त्रयोविंशतिः सङ्क्रामतीति गाथार्थः ॥२३॥

गु—१—४—५—६—७—८ उ. उ. ९ / सं-२३-२३-२३-२३-२३-२३ २३ / प्र-२२-१९-१५-११-११-११- ७

**अट्ठारसचौद्दससत्तगेसु बावीस खीणमिच्छाणं । सत्तरसतेरनवसत्तगेसु इगिवीस संकमई ॥ २४ ॥**

व्याख्या—अष्टादशचतुर्दशदशप्रतिग्रहेषु अविरतादीनां मिथ्यात्वक्षये द्वाविंशतिः सङ्क्रामति, लोभस्यासङ्क्रमादुपशमश्रेण्यां द्वाविंशतिः सप्तकप्रतिग्रहे सङ्क्रामति, एतेष्वेव क्षीणसप्तकेषु सप्तदशत्रयोदशनवप्रतिग्रहेषु क्रमादेकविंशतिः, नपुंसकवेदे उपशान्ते

साम्प्रतं क्षपकश्रेणिद्विविधोपशमश्रेणीसङ्क्रमान् संक्षिप्य पञ्चचतुस्त्रिद्व्येकप्रतिग्रहेषु यथासम्भवं विभज्य दर्शयन्नाह —

**दसगट्ठारसगाई चउ चउरो संकमंति पंचंमि । सत्तडचउदसिगारसबारसठारा चउक्कंमि ॥ १९ ॥**

व्याख्या—दशकादयोऽष्टादशादयश्चत्वारः चत्वारः सङ्क्रमा दशैकादशद्वादशत्रयोदशाष्टादशैकोनविंशतिविंशतिएकविंशतिरूपाः पञ्चकप्रतिग्रहे सङ्क्रामन्ति । सप्ताष्टचतुर्दशैकादशद्वादशाष्टादशसङ्क्रमाः सप्तापि चतुष्कप्रतिग्रहे सङ्क्रामन्तीति गाथार्थः ।१९।

गु ९

सं. १०-११-१२-१३-१८-१९-२०-२१ | ७-८-१४-१०-११-१२-१८

प्र. ५ | ४

**तिण्णि तिगाई सत्तट्ठ नव य संकममिगारस तिगंमि । दोसु छडट्ठदुपंचय इगि एक्कं दोण्णि तिण्णि पण॥२०॥**

व्याख्या—त्रिचतुष्पञ्चसप्ताष्टनवैकादशसङ्क्रमाः सप्ताप्येते त्रिकप्रतिग्रहे सङ्क्रामन्ति । षडष्टद्विकपञ्चकसङ्क्रमाः द्विकप्रतिग्रहे सङ्क्रामन्ति । एकद्वित्रिपञ्चसङ्क्रमाश्चत्वारोऽपि एकप्रकृतिप्रतिग्रहे सङ्क्रामतीति गाथार्थः ॥ २० ॥

मिथ्यादृष्ट्यादिसङ्क्रमाणां प्रतिग्रहान् अभ्युद्धरितपद्सप्तप्रतिग्रहयोश्च सङ्क्रमान् योजयन्नाह—

गु ९ | गु. ९ गु. ९

सं. ३-४-५-७-८-९-११ | ६-८-२-५ | १-२-३-५

प्र. ३ | २ | १

**पणवीसो संसारिसु इगवीसे सत्तरे य संकमइ । तेरसचोद्दस छक्के वीसा छक्के य सत्ते य ॥ २१ ॥**

व्याख्या—पञ्चविंशतिसङ्क्रमः संसारिजीवेषु भवति, मिथ्यादृष्टिसास्वादनयोरेकविंशतिप्रतिग्रहे सम्यग्मिथ्यादृष्टेः सप्तदशप्रतिग्रहे च सङ्क्रामात, त्रयोदशचतुर्दशसङ्क्रमे चतुष्कबन्धकस्योपशमश्रेण्यामुपशान्तदृष्टेः षट्कप्रतिग्रहे सङ्क्रामतः । तस्यैव षट्क

| | गु ४ | गु. ५ | गु. ६--७ | गु. ८ |
|---|---|---|---|---|
| सं. | २७-२६-२३-२२-२१ | २७-२६-२३-२२-२१ | २७-२६-२३-२२-२१ | २३-२१ |
| प्र. | १९-१९-१९-१८-१७ | १५-१५-१५-१४-१३ | ११--११-११--१०--९ | ११-९ |

अश्रेणिगतानां संक्रमोपसंहारार्थमाह—

**आमीसं पणुवीसो इगवीसो मीसगाउ जापुव्वो । मिच्छखवगे दुवीसो मिच्छे य तिसत्तछव्वीसो ॥१७॥**

व्याख्या—आमिश्रं सम्यग्मिथ्यादृष्टिं यावत्पञ्चविंशतिसंक्रमो भवति । एकविंशतिसंक्रमः सम्यग्मिथ्यादृष्टेरारभ्यापूर्वकरणं यावद् भवति । मिथ्यात्वक्षपकेऽविरतदेशविरतसर्वविरतरूपे द्वाविंशतिसङ्क्रमो भवति । मिथ्यादृष्टावविरतादीनां च त्रयोविंशतिषड्विंशतिसप्तविंशतिसंक्रमाश्च भवन्ति, भावना प्रागभिहितैवेति गाथार्थः ॥ १७॥

सकलप्रतिग्रहाणां भावनायाह—

**खवगस्स सबंधच्चिय उवसमसेढीएँ सम्ममीसजुया । मिच्छखवगे ससम्मा अट्ठारस इय परिग्गहया ॥१८॥**

व्याख्या—सप्तक्षपकस्य चारित्रमोहनीयक्षपकस्य च स्वकीया आत्मीया बन्धा एव सप्तदशत्रयोदशनवाख्याः पञ्चचतुस्त्रिद्व्येकरूपाश्च प्रतिग्रहा भवन्ति । उपशमश्रेण्यां उपशान्तदृष्टीनां पञ्चादयः सम्यग्मिथ्यात्वसम्यक्त्वयुक्ताः प्रतिग्रहा भवन्ति । सप्तदशत्रयोदशनवबन्धाश्च उपशमसम्यक्त्वप्राप्तौ आवलिकापरतो यावत् न मिथ्यात्वं क्षीयते, तावत्तदुभययुक्ताः भवन्ति । मिथ्यात्वक्षपके सप्तदशादयः सम्यक्त्वयुक्ताः प्रतिग्रहा भवन्ति, इत्यनेन प्रकारेणाष्टादशचतुर्दशदशप्रतिग्रहा भावनीया इति गाथार्थः ॥१८॥

रेकविंशतिप्रतिग्रहे सङ्क्रामति। चतुर्विंशतिर्न सम्भवति, यतश्चतुर्विंशतिसत्कर्मा सम्यग्दृष्टिः मिथ्यात्वं गतः स चावलिकामध्ये नऽनन्तानुबन्धिनः सतोऽपि सङ्क्रामयति, मिथ्यात्वे प्रतिग्रहत्वे कृते त्रयोविंशतिः सङ्क्रामति, उक्तो मिथ्यादृष्टिः।

गु. १ सास्वादनस्य दृष्टित्रिकं न सङ्क्रामतीति, पञ्चविंशतिसङ्क्रम एकविंशतिप्रतिग्रहे सङ्क्रामति। गु. २

सं २७-२६-२५-२३ | सं. २५
प्र. २२-२२-२१-२२ | प्र. २१

सम्यग्मिथ्यादृष्टेरपि दृष्टित्रिकं न सङ्क्रामतीति अष्टाविंशतिसप्तविंशतिसत्कर्मणः पञ्चविंशतिसङ्क्रमः, चतुर्विंशतिसत्कर्मणः एकविंशतिसङ्क्रमः सप्तदशप्रतिग्रहे सङ्क्रामति। गु० ३ भणितौ सास्वादनमिश्रौ। अविरतदेशविरतप्रमत्ताप्रमत्तानां तुल्याः संक्रमाः,

सं. २५-२१
प्र. १७-१७

प्रतिग्रहेषु विशेषः एतेषामुपशमदृष्टीनां यावदावलिका तावत्सम्यग्मिथ्यात्वसम्यक्त्वयोः प्रतिग्रहतैव भवति, अतः षड्विंशतिसंक्रमः एकोनविंशतिपञ्चदशैकादशप्रतिग्रहेषु संक्रामति। तेषामेवावलिकापरतः सम्यग्मिथ्यात्वं उभयत्र भवत्यतः अविरतदेशविरतविरतरूपे सप्तविंशतिसंक्रमः तेष्वेव प्रतिग्रहेषु संक्रामति, तेषामेवाविरतादीनां उद्वलितानन्तानुबन्धिनां वेदकसम्यग्दृष्टीनां सम्यक्त्वे प्राप्तग्रहत्वेन कृते त्रयोविंशतिसंक्रमः एकोनविंशत्यादिषु प्रतिग्रहेषु संक्रामति, मिश्रस्योभयत्र स्थितत्वात्। मिथ्यात्वे क्षपितेऽष्टादशचतुर्दशदशसु प्रतिग्रहेषु द्वाविंशतिः संक्रामति, यता मिथ्यात्वक्षये मिश्रस्य प्रतिग्रहता न भवति, ततोऽपि सम्यग्मिथ्यात्वे क्षपिते सम्यक्त्वस्य आधाराधेयत्वे नष्टे सप्तदशत्रयोदशनवप्रतिग्रहे चैकविंशतिः सङ्क्रामति ॥१६॥

भूयस्तद्बन्धकस्योभयोरपि सादित्वम्, भूयस्तदुद्वलने अध्रुवत्वमिति । सूक्ष्मसम्परायं यावदुच्चैर्गोत्रस्य प्रतिग्रहस्वामित्वम्, सास्वादनं यावत्सङ्क्रमस्वामित्वम्, नीचैर्गोत्रस्यैतदेव विपरीतमिति गाथार्थः ॥ १४ ॥

**णवछक्क चउक्केसुं नवगं संकमइ उवसमगयाणं । खवगाण चउसु छक्कं, दुइए मोहं अओ वोच्छं ॥१५॥**

व्याख्या—नवषड्चतुष्कप्रतिग्रहेषु नवकं सङ्क्रामति, सास्वादनं यावन्नवसु नव सङ्क्रामन्ति, सम्यग्मिथ्यादृष्टेरारभ्यापूर्वकरणसङ्ख्येयभागं यावत् तावदुभयश्रेण्योः षट्सु नव सङ्क्रामन्ति, तस्मात् स्थानात्सूक्ष्मसम्परायान्तसमयं यावदुपशमश्रेण्यां चतुष्कप्रतिग्रहे नव सङ्क्रामन्ति । उपशान्तकषाये उभयाभावोऽतः षट्चतुष्कस्थानयोः प्रतिग्रहता साद्यध्रुवा । क्षपकश्रेण्यां स्त्यानर्द्धित्रिकक्षयस्थानात् सूक्ष्मसम्परायान्तसमयं यावत् चतुष्के षट् सङ्क्रामन्ति । क्षीणकषाय उभयाभावोऽतः षट्कस्य सादिरध्रुवः सङ्क्रमो द्वितीयकर्मणि भवति । मोहनीयमतः परं वक्ष्येऽहमिति गाथार्थ ॥ १५ ॥ सङ्क्रमस्थानभावनायाह—

**लोभस्स असंकमणा उद्वलणा खवणओ छसत्तण्हं । उवसंताण वि दिट्ठीण संकमासंकमा नेया ॥ १६ ॥**

व्याख्या—अन्तरकरणे श्रेण्योः सञ्ज्वलनलोभस्यासङ्क्रमाद्धेतोः षण्णां सम्यक्त्वसम्यग्मिथ्यात्वानन्तानुबन्धिनां उद्वलनतः, क्षपणातश्च सप्तानां सप्तनोकषायक्षपणभेदतश्च, उपशान्तानामपि दृष्टीनां सङ्क्रमाद्धेतोः सङ्क्रमा नेया-भावनीया इति गाथार्थः॥१६॥

साम्प्रतं भावयति—अष्टाविंशतिसङ्क्रमो न भवति, यतो दर्शनमोहनीयं चारित्रमोहनीये न सङ्क्रामति, अतो मिथ्यात्वमपनीय प्रतिग्रहत्वे कृतं शेषाः सप्तविंशतिर्द्वाविंशतिप्रतिग्रहे सङ्क्रामति । सम्यक्त्वे समुद्वलिते षड्विंशतिर्द्वाविंशतिप्रतिग्रहे सङ्क्रामति । द्वयोरप्युद्वलितयोरनादिर्मिथ्यादृष्टेर्वा षड्विंशतिः सद्भवति, तस्य मिथ्यात्वं आधाराधेयत्वभ्रष्टं शेषाः पञ्चविंशति-

सर्वसङ्क्रमप्रतिग्रहाणां साद्यनादिप्ररूपणायाह—

**संकमणपडिग्गहया पढमतइज्जट्ठमाण चउभेया । इगिवीसो पडिगहगो पणवीसो संकमो मोहे ॥ १३ ॥**

व्याख्या—ज्ञानावरणवेदनीयान्तराणां सङ्क्रमाः प्रतिग्रहाश्चतुर्विधा भवन्ति। एकविंशतिप्रकृत्यात्मकः प्रतिग्रहः पञ्चविंशतिप्रकृत्यात्मकः सङ्क्रमो मोहनीये साद्यनादिचतुर्विधो भवति। एतदेव सस्वामित्वं भावयति–ज्ञानान्तराययोः सूक्ष्मसम्परायावसानं यावत् जीवाः पञ्च पञ्चसु सङ्क्रामयन्ति, तदुपरि उभयाभावः। प्रतिपततः साद्यनादिभावना प्राग्वत्। वेदनीयस्यान्यतरमन्यतरे सङ्क्रामति सूक्ष्मसम्परायं यावत्, यतः साम्परायिको बन्धस्तत्रैव, नोपरितनेषु। प्रतिपततः उभयोरपि सादिता, तत्स्थानमप्राप्तस्यानादिता ध्रुवाध्रुवं तु प्राग्वत्। सातस्य प्रतिग्रहता दशसु गुणेषु, षट्सु सङ्क्रमो, विपक्षस्य एतदेव विपरीतमिति। अनादिमिथ्यादृष्टेः षड्विंशतिप्रकृत्यात्मकं सत्स्थानं भवति, तस्मान्मिथ्यात्वं न कषायमोहनीये सङ्क्रामति, अतः पञ्चविंशतिप्रकृत्यात्मकं सङ्क्रमस्थानं द्वाविंशतिबन्धकस्य मिथ्यादृष्टेर्मिथ्यात्वं विना एकविंशतिप्रकृत्यात्मकं प्रतिग्रहस्थानं भवति। एतदुभयमपि विशिष्टगुणप्राप्तौ सत्यामध्रुवं भवति तस्मात्प्रतिपततः सादि, तत्स्थानमप्राप्तस्यानादि ध्रुवाध्रुवं प्राग्वदिति गाथार्थः ॥ १३ ॥

**दंसणवरणे नवगो संकमणपडिग्गहो भवे एवं । साई अधुवा सेसा संकमण पडिग्गहट्ठाणा ॥ १४ ॥**

व्याख्या—दर्शनावरणे नवको यः सङ्क्रमो नवक एव प्रतिग्रहकः स चतुर्विधो भवति, पञ्चविंशतिसङ्क्रमवत्संक्रमः एकविंशतिप्रतिग्रहवत् प्रतिग्रहो भावनीयः, किन्त्वनयोर्मिथ्यादृष्टिसास्वादनौ स्वामिनौ। शेषाणि सङ्क्रमस्थानानि प्रतिग्रहस्थानानि च साद्यध्रुवाणि भवन्ति। गोत्रस्य यावदुच्चैर्गोत्रं नोद्वलयति तावद् वेदनीयवद् भाव्यम्। उद्वलिते तु सङ्क्रमप्रतिग्रहाभावो,

भवन्ति, दशबन्धस्थानानि तान्येव अष्टाभ्यधिकानि अष्टादश प्रतिग्रहस्थानानि भवन्ति, प्रतिस्थानं सूत्रकार एव दर्शयिष्यति। आह च–ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मके प्रतिग्रहस्थाने पञ्चप्रकृत्यात्मकमेव सङ्क्रमस्थानं सङ्क्रामति, तथा च दर्शनावरणे चतुष्प्रकृत्यात्मके प्रतिग्रहे चतुष्प्रकृत्यात्मकं तृतीयं सङ्क्रमस्थानं कस्मान्न सङ्क्रामतीति ? उच्यते, तयोरन्यस्थानासम्भवात्तदेव पञ्चप्रकृत्यात्मकं सङ्क्रामति, अस्य चतुर्बन्धकस्योपशमश्रेण्यां नवस्थानसम्भवाच्चतुष्कं न सम्भवति, क्षपकश्रेण्यां चतुष्षट्स्थानसम्भवात्तन्न सङ्क्रामति, (यद्यपि चतुष्कपट्के, द्वेसतृस्थाने भवतः, तथापि चतुष्कं क्षीणमोहसंभवित्वात् न संक्रामति) बन्धाभावे तूभयाभाव एवेति गाथार्थः ॥ ११ ॥

मोहनीयस्य सङ्क्रमप्रतिग्रहस्थानानि स्पष्टयन्नाह—

**पणरस सोलसत्तर अडचउवीसा य संकमे नत्थि । अट्ठदुवालससोलस वीसा य पडिग्गहे नत्थि ॥ १२ ॥**

व्याख्या—एकाद्यष्टाविंशतिपर्यन्तान् उपर्युपरि क्रमेणाङ्कान् संस्थाप्य पञ्चदश षोडश सप्तदशाष्टाविंशतिचतुर्विंशत्यङ्कानपनयेत् ततस्त्रयोविंशतिसङ्क्रमस्थानानि एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टनवदशैकादश द्वादश त्रयोदश चतुर्दशाष्टादशैकोनविंशतिविंशत्येकविंशतिद्वाविंशतित्रयोविंशतिपञ्चविंशतिषड्विंशतिसप्तविंशतिप्रकृत्यात्मकानि भवन्ति । भावनां सूत्रकार एव करिष्यति । प्रतिग्रहाणामपि परिज्ञानार्थं एकादिद्वाविंशतिपर्यन्तानुपर्युपरि अङ्कान् संस्थाप्याष्टद्वादश षोडशविंशतिरित्यपनयेत्, ते प्रतिग्रहत्वेन न भवन्ति, शेषाण्यष्टादशस्थानानि, एकद्वित्रिचतुष्पञ्चषट्सप्तनवदशैकादशत्रयोदशचतुर्दशपञ्चदशसप्तदशाष्टादशैकोनविंशतिएकविंशतिद्वाविंशतिप्रकृत्यात्मकान्यष्टादश स्थानानि प्रतिग्रहत्वेन भवन्ति । भावनां अत्रापि सूत्रकार एव करिष्यतीति गाथार्थः ॥ १२ ॥

क.
संक्र
करा

।११

प्रतिग्रहानां साद्यनादिप्ररूपणायाह—

**चउहा पडिग्गहत्तं, धुववंधीणं विहाय मिच्छत्तं । मिच्छाधुववंधीणं साई अधुवा पडिग्गहया ॥ १० ॥**

व्याख्या—चतुर्धा चतुष्प्रकारं प्रतिग्रहत्वं ध्रुवबन्धिनीनां पञ्च ज्ञानावरणानि, नव दर्शनावरणानि षोडश कषाया भयजुगुप्सा विंशतिवर्णादयोऽगुरुलघुनिर्माणतैजससप्तकोपघातान्तरायपञ्चकानां सप्तषष्टिप्रकृतीनां स्वकीयावन्धात् प्रतिपततां सादिप्रतिग्रहता तत्स्थानमप्राप्तानां अनादिरभव्यानां ध्रुवा भव्यानामध्रुवेति, यतो यावद् वन्धस्तावत् प्रतिग्रहत्वमतो वन्धवद् भावना कार्या, 'विहाय' त्यक्त्वा मिथ्यात्वम्, यतस्तस्य ध्रुववन्धित्वेऽपि सति सम्यक्त्वसम्यग्मिथ्यात्वयोरध्रुवत्वात् सङ्क्रमो भाज्य इति । अध्रुववन्धिनीनां साद्यध्रुवा प्रतिग्रहता सा च सुगमैवेति गाथार्थः ॥ १० ॥ सङ्क्रमप्रतिग्रहसङ्ख्याप्ररूपणायाह-

**संतट्ठाणसमाइं संकमठाणाइ दोण्णि बीयस्स । बंधसमा पडिगहया अट्ठहिया दोवि मोहस्स ॥ ११ ॥**

व्याख्या—यावन्ति यस्य कर्मणः सत्स्थानानि तावन्ति तस्य सङ्क्रमस्थानानि, ज्ञानावरणान्तराययोरेकैकं पञ्चप्रकृत्यात्मकम् । गोत्रवेदनीययोरप्येकं २ द्वितीयसत्स्थानं विपक्षक्षये यद्यपि भवति, तथापि तन्नादृतं यतस्तत्र सङ्क्रमाभाव इति । 'दोण्णि वीयस्स'त्ति, द्वितीयस्य दर्शनावरणस्य द्वे सङ्क्रमस्थाने नवषट्प्रकृत्यात्मके । द्वादश नाम्नः सङ्क्रमस्थानानि त्र्युत्तरशताद्यानि । 'वन्धसमापडिगह'त्ति, यावन्ति यस्य कर्मणो वन्धस्थानानि तावन्ति तस्य प्रतिग्रहस्थानानि, ज्ञानावरणान्तरायवेदनीयगोत्राणां एकैकं प्रतिग्रहस्थानम् । त्रीणि दर्शनावरणस्य नवषट्चतुष्प्रकृत्यात्मकानि । अष्टौ नाम्नः त्रयोविंशत्याद्यानि । अष्टाभ्यधिके द्वे अपि सङ्क्रमप्रतिग्रहस्थाने मोहनीयस्य भवतः, तस्य पञ्चदश सत्स्थानानि, तान्येवाष्टस्थानाभ्यधिकानि त्रयोविंशतिसङ्क्रमस्थानानि

सूक्ष्मसम्परायान्तसमये सङ्क्रमाभावो, बन्धाभावात्, यतो बन्धे सति सङ्क्रमो भवतीति, तस्मात् प्रतिपततः सादिः, तत्स्थानमप्राप्तस्यानादिः, अभव्यस्य ध्रुवो, भव्यस्याध्रुव इति। मिथ्यात्वस्य सम्यक्त्वोत्पत्तौ सम्भवात् सादिः, तदभावेऽध्रुव इति। उद्वलितमुच्चैर्गोत्रं यदा भूयोऽपि बध्नाति, तदा तस्मिन् सति नीचैर्गोत्रस्य सादिः सङ्क्रमः, तदेव नीचैर्गोत्रं, परावृत्त्य यदा बध्नाति, प्रतिग्रहत्वेन स्थापयति, तदाऽध्रुवसङ्क्रम इति। सातासातयोः परावर्त्तकत्वात् सादिरध्रुव इति। अध्रुवप्रकृतीनां आयुश्चतुष्कवर्जितानां उच्चैर्गोत्रतीर्थङ्करनामसम्यक्त्वसम्यग्मिथ्यात्वदेवनरकमनुष्यद्विकवैक्रियाहारकसप्तकाख्यानां सादिरध्रुवः सङ्क्रमो भवति, स चाध्रुवत्वादेव सुगम इति गाथार्थः ॥ ८ ॥ विशेषमाह—

**साअणजसदुविहकसायसेसदोदंसणाण जइपुव्वा। संकामगंत कमसो सम्मुचाणं पढमदुइया ॥ ९ ॥**

व्याख्या—सातस्य सङ्क्रामकाणामन्तिमः प्रमत्तो, यतस्तस्मात् परतोऽसातं न बध्यते, न च प्रतिग्रहत्वेन भवति। अनन्तानुबन्धिनां अप्रमत्तः सङ्क्रामकान्तिमः, यतस्तेषां स एवोद्वलकक्षपकाणामन्तिमः। यशःकीर्त्तेरपूर्वकरणः, यतस्तदूर्ध्वतो नाम्नः शेषप्रकृतीनां प्रतिग्रहता नास्ति, सा एव प्रतिग्रहत्वेन भवति। कषायनोकषायाणां बादरकषायः सङ्क्रामकान्तिमः, यतस्तत्परतस्तेषां बन्धाभावात् प्रतिग्रहतैव नास्ति। शेषाणां सूक्ष्मसम्परायः सङ्क्रामकान्तिमः, यतस्तदुपरि सर्वकर्म्मणां साम्परायिकं बन्ध एव नास्ति 'दो दंसणाण' त्ति मिथ्यात्वसम्यग्मिथ्यात्वयोरुपशान्तः सङ्क्रामकान्तिमो, यतस्तदुपरि तयोः सत्तैव नास्ति। सम्यक्त्वस्य मिथ्यादृष्टिरेव सङ्क्रामकः, यतस्तस्मिन् मिथ्यात्वे बध्यमाने तत्सङ्क्रामति तस्य च स एव बन्धकः। उच्चैर्गोत्रस्य सास्वादनः सङ्क्रामकान्तिमः, यतस्तदुपरितना नीचैर्गोत्रं न बध्नन्तीति गाथार्थः ॥ ९ ॥

भवतीति गाथार्थः ॥ ५ ॥

**मिच्छे खविए मीसस्स नत्थि उभएवि नत्थि सम्मस्स । उव्वलिएसुं दोसुं पडिगहया नत्थि मिच्छस्स ॥६॥**

व्याख्या—मिथ्यात्वे क्षपिते सम्यग्मिथ्यात्वस्य प्रतिग्रहता नास्ति, उभयेऽपि–मिथ्यात्वसम्यग्मिथ्यात्वरूपे क्षपिते सम्यक्त्वस्य प्रतिग्रहता नास्ति, उद्वलितयोर्द्वयोरपि सम्यग्मिथ्यात्वसम्यक्त्वयोर्मिथ्यात्वस्य प्रतिग्रहता 'नास्ति' न तत्र सङ्क्रामतीति गाथार्थः ॥ ६ ॥

श्रेणीप्रतिग्रहतापवादमाह—

**दुसु तिसु आवलियासुं समयविहीणासु आइमठिईए । सेसासुं पुंसंजलणयाण न भवे पडिग्गहया ॥७॥**

व्याख्या—प्रथमस्थितेर्द्वयोरावलिकयोः समयोनयोः शेषयोः पुरुषवेदस्य प्रतिग्रहता नास्ति, न तत्र किञ्चित्सङ्क्रामयतीत्यर्थः, प्रथमस्थितेस्तिसृष्वावलिकासु समयोनासु सञ्ज्वलनानां क्रोधमानमायालोभाख्यानां न प्रतिग्रहता भवतीति गाथार्थः ॥ ७ ॥

भणितं सामान्यविशेषलक्षणं सापवादं, साद्यनादिप्ररूपणोच्यते, सा च मूलप्रकृतिषु परस्परं सङ्क्रमाभावात्, न सम्भवति उत्तरप्रकृतिष्वाह—

**धुवसंतीणं चउहेह संकमो मिच्छणीयवेयणिए । साइअधुवो बंधोव्व होइ तह अधुवसंतीणं ॥ ८ ॥**

व्याख्या—ध्रुवसत्प्रकृतीनां चतुर्द्धा, 'इह' अस्मिन् प्रवचने सङ्क्रमो भवति, किं सर्वासां नेत्याह-मिथ्यात्वनीचैर्गोत्रसातासातवर्जितानां षड्विंशत्युत्तरशतप्रमाणानामिति, कथं ? ज्ञानान्तरायदर्शनावरणनाम्नां याः ध्रुवसत्प्रकृतयस्तासामुपशमश्रेण्यां

ग्मिथ्यादृष्टयः) सम्यग्मिथ्यात्वम्, सम्यग्दृष्टयः सम्यक्त्वं न सङ्क्रामयन्तीत्यर्थः । "द्वितीयतृतीयाः" सास्वादनसम्यग्मिथ्यादृष्टयो न दर्शनत्रिकमपि कुत्रचित्सङ्क्रामयन्ति, मिश्रे सम्यक्त्वं न सङ्क्रामति, दर्शनकषाययोः परस्परं संक्रमो न भवति, दर्शनमोहनीयं चारित्रमोहनीये चारित्रमोहनीयमपि दर्शनमोहनीये न संक्रामतीति गाथार्थः ॥ ३ ॥



संकामन्ति न आउं उवसंतं तहय मूलपगईओ । पगइट्ठाणविभेया संकमणपडिग्गहा दुविहा ॥ ४ ॥

व्याख्या—चतस्रः आयुषः प्रकृतयो न परस्परं केचित् संक्रामयन्ति । उपशान्तं च मोहनीयप्रकृतिजातं न केचन सङ्क्रामयन्ति, तथाशब्दाधिक्यात् दृष्टित्रिकं मुक्त्वा यदुपशान्तं तदपि संक्रामति । मूलप्रकृतावान्या न संक्रामन्ति, ज्ञानावरणे शेषाः सप्त न सङ्क्रामन्ति । एवं दर्शनावरणादिष्वपि वक्तव्यम् । प्रकृतिस्थानविशेषात् सङ्क्रमणप्रतिग्रहौ द्विविधौ, एकस्यां प्रकृतावेका सङ्क्रामति यदा, तदा प्रकृतिसङ्क्रमः, प्रकृतिप्रतिग्रहता चेति । प्रभूताः प्रकृतयः एकस्यां यदा सङ्क्रामन्ति, तदा स्थानसङ्क्रमः, प्रकृतिप्रतिग्रहता च, एका प्रभूतप्रकृतिषु यदा सङ्क्रामति, तदा प्रकृतिसङ्क्रमः, स्थानप्रतिग्रहता च, प्रभूताः प्रकृतयो यदा प्रभूतासु सङ्क्रामन्ति तदा स्थानसङ्क्रमः स्थानप्रतिग्रहता भवतीति गाथार्थः ॥ ४ ॥

सामान्यापवादोऽभिहितः, श्रेण्यपवादमाह—

खयउवसमदिट्ठीणं सेढीएँ न चरिमलोभसंकमणं । खवियट्ठगस्स इयरीएँ जं कमा होइ पंचण्हं ॥ ५ ॥

व्याख्या—क्षायिकदृष्टिजीवानां उपशमदृष्टीनां च श्रेण्यां सञ्ज्वलनलोभस्य सङ्क्रमो न भवति, उपशमश्रेण्यां अन्तरकरणे कृते 'इतरस्यां' क्षपकश्रेण्यां क्षपिताष्टकषायस्य, यतो यस्मात् 'क्रमात्' क्रमेण 'पञ्चानां' पुरुषवेदसञ्ज्वलनाख्यानां सङ्क्रमो

बन्धनकरणानन्तरं सङ्क्रमकरणमाह—

**बज्झंतियासु इयरा ताओवि हु संकमंति अण्णोण्णं। जा संतयाइ चिट्ठहि वंधाभावे वि दिट्ठीओ॥ १॥**

व्याख्या—अनया गाथया प्रकृतिस्थित्यनुभागप्रदेशानां सामान्यलक्षणं प्रतिपादितम्, बध्यमानासु प्रकृतिष्वितरा–अबध्यमानास्ताश्च बध्यमानाः परस्परं सङ्क्रामन्ति, तत्प्रकृतिसद्भावं प्रतिपद्यन्ते, बध्यमानसातभावं असातं प्रतिपद्यते, बध्यमानो चैर्गोत्रभावं अबध्यमानं नीचैर्गोत्रं प्रतिपद्यते। बध्यमानाः परस्परं सङ्क्रामन्ति,कथं? बध्यमानमतिज्ञानावरणभावं श्रुतज्ञानावरणादीनि प्रतिपद्यन्ते, तदपि मत्यावरणं श्रुतज्ञानावरणादिभावं प्रतिपद्यते, एवं शेषकर्मस्वपि ज्ञेयम्। याः सद्भावेन तिष्ठन्ति, न क्षयं गतास्ताः सङ्क्रामन्ति, अतिप्रसक्तं लक्षणं दृष्ट्वा भूयोऽपि अपवदति, 'वन्धाभावेऽपि' वन्धं विनापि दृष्टयो मिथ्यात्वसम्यग्मिथ्यात्वसम्यक्त्वरूपाः सङ्क्रामन्ति इति गाथार्थः॥ १॥

**ताओ संकमति जासु दलियं उ पडिग्गहा समरकाया। जा संकमआवलियं करणासज्झं भवे दलियं॥ २॥**

व्याख्या—यासु प्रकृतिषु सङ्क्लेशविशुद्ध्यात्मकेन जीववीर्यकरणेन 'कर्मदलं' परमाण्वात्मकं 'सङ्क्रामति' तद्भावेनोपगच्छति, ताः प्रकृतयः प्रतिग्रहसंज्ञाः समाख्यातास्तदाधारास्ता इति। तच्च दलं सङ्क्रान्तं यावदावलिकामात्रं कालं तावत्सर्वकरणासाध्य भवति, नोद्वर्त्तनादिभावमुपगच्छतीति गाथार्थः॥ २॥

**नियनियदिट्ठि न केई दुइयतइज्जा न दंसणतिगंपि। मीसंमि न सम्मत्तं दंसकसाया न अण्णोणं॥ ३॥**

व्याख्या—अतिप्रसक्तं लक्षणं अपवदति–निजामात्मीयां दृष्टिं न केचिज्जीवाः सङ्क्रामयन्ति, मिथ्यादृष्टयः (मिथ्यात्वं सम्य-

रोपयोगानि सङ्ख्येयगुणानि । एवमशुभद्विस्थानिकयवमध्यस्थितेरधःस्थितिस्थानानि मिश्राणि संख्येयगुणानि ततो द्विस्थानानि यवमध्यस्थितेरधः साकाराणि सङ्ख्येयगुणानि, ततो यवमध्योपरिद्विस्थानिकानि साकारोपयोगानि सङ्ख्येयगुणानि, एवं यवमध्यात्रिस्थानिकान्यध उपरि सङ्ख्येयगुणानि, एवं चतुःस्थानिकानि यवमध्यादध उपरि सङ्ख्येयगुणानि स्थितिस्थानानि भवन्ति । चशब्दात् शुभपरावर्त्तमानचतुःस्थानिकबन्धका जीवाः स्तोकाः त्रिस्थानिकबन्धकाः सङ्ख्येयगुणा द्विस्थानिकबन्धकाः सङ्ख्येयगुणा, अशुभपरावर्त्तमानद्विस्थानिकबन्धकाः सङ्ख्येयगुणाः, चतुःस्थानिकबन्धकाः संख्येयगुणाः त्रिस्थानिकरसबन्धका जीवाः सङ्ख्येयगुणा इति गाथार्थः ॥ ११२ ॥ बन्धनकरणं समाप्तम् ॥

---

शुभपरावर्त्तमानप्रकृतीनां बद्धाडायस्थितिर्विशेषाधिकाः, यतः स्थितिस्थानान्मण्डूकप्लुतिन्यायेन डायां फालां दत्वा या स्थितिर्बध्यते, ततः प्रभृति तदूना तावती स्थितिर्बद्धाडायस्थितिरिहोच्यते, सा चोत्कर्षतोऽन्तःसागरोपमकोटीकोट्यूनसकलकर्मस्थितिप्रमाणा वेदितव्या तथाहि-अन्तःसागरोपमकोटीप्रमाणं स्थितिबन्धं कृत्वा पर्याप्तसंज्ञिपञ्चेन्द्रिय उत्कृष्टां स्थितिं बध्नातीति, नान्यथा, ततोऽपि परावर्त्तमानाऽशुभप्रकृतीनामुत्कृष्टः स्थितिबन्धो विशेषाधिकः ॥ संप्रति गाथाक्षरयोजना क्रियते-चतुःस्थानादिनां चतुःस्थानत्रिस्थानद्विस्थानकानां रसानां प्रत्येकं यवमध्यादध उपरि च परावर्त्तमानशुभप्रकृतीनां स्थितिस्थानानि क्रमशः सङ्ख्येयगुणानि वक्तव्यानि, अन्ते चशब्दस्याऽनुक्तार्थसमुच्चायकत्वाद् द्विस्थानकरसयवमध्यादध उपरि च मिश्राण्यपि स्थितिस्थानानि सङ्ख्येयगुणानि वाच्यानि । तथा शुभानामशुभानां च स्थितिबन्धौ जघन्यस्थितिबन्धौ यथाक्रमंसङ्ख्येयगुणविशेषाधिकौ वक्तव्याविति शेषः, ततोऽशुभपरावर्त्तमानप्रकृतीनां द्विस्थानकत्रिस्थानकचतुःस्थानकरसानां प्रत्येकंयवमध्यादधः उपरि च स्थितिस्थानानि सङ्ख्येयगुणानि, द्विस्थानकरसयवमध्यादधः उपरि च मिश्राण्यपि च शब्दस्यानुक्तार्थसमुच्चायकत्वात् डायस्थित्यन्तःसागरोपमकोटीकोट्यावपि सङ्ख्येयगुणे, ततः शुभपरावर्त्तमानप्रकृतीनां द्विस्थानकरसयवमध्यस्योपरि एकान्तसाकारोपयोगयोग्याः सङ्ख्येयगुणाः, ततः शुभपरावर्त्तमानोत्कृष्टस्थितिबन्धोऽशुभपरावर्त्तमानबद्धडायस्थितिअशुभपरावर्त्तमानोत्कृष्टस्थितिबंधा विशेषाधिका वक्तव्याः ॥ इति ॥

स्थितेरुपरि स्थितिस्थानानि सङ्ख्येयगुणानि तेभ्यः शुभपरावर्त्तमानत्रिस्थानिकयवमध्यस्थितेरधःस्थितिस्थानानि सङ्ख्येयगुणानि, त्रिस्थानिकयवमध्योपरि सङ्ख्येयगुणानि स्थितिस्थानि, तेभ्यः शुभपरावर्त्तमानद्विस्थानिकयवमध्यस्थितेरेकान्तसाकारोपयोगाध.स्थितिस्थानानि सङ्ख्येयगुणानि, द्विस्थानिकयवमध्यस्थितेरेकान्तसाकारोपयोगस्थितिस्थानेभ्यो यवमध्यस्थितेरधःस्थितिस्थानानि मिश्राणि सङ्ख्येयगुणानि, ततो यवमध्योपरि मिश्राणि सङ्ख्येयगुणानि, ततो द्विस्थानिकयवमध्यस्थितेरुपरि साका-

---

यगुणानि, तेभ्योऽपि द्विस्थानकरसयवमध्यादधःपाश्चात्येभ्य ऊर्ध्वं यानि स्थितिस्थानानि साकारानाकारोपयोगयोग्यतया मिश्राणि, तानि संख्येयगुणानि, तेभ्योऽपि द्विस्थानकरसयवमध्यादुपरि मिश्राणि स्थितिस्थानानि सख्येयगुणानि, तेभ्योऽपि शुभानां परावर्त्तमानप्रकृतीनां जघन्यः स्थितिबन्धः संख्येयगुणः, ततोऽप्यशुभपरावर्त्तमानप्रकृतीनां जघन्यः स्थितिबन्धो विशेषाधिकः, ततोऽप्यशुभपरावर्त्तमानप्रकृतीनामेव द्विस्थानकरसयवमध्यादध एकान्तसाकारोपयोगयोग्यानि स्थितिस्थानानि संख्येयगुणानि, ततोऽपि द्विस्थानकरसयवमध्यादधः पाश्चात्येभ्य ऊर्ध्वं मिश्राणि स्थितिस्थानानि सख्येयगुणानि, तेभ्योऽपि तासामेवाऽशुभपरावर्त्तमानप्रकृतीनां द्विस्थानकरसयवमध्यादुपरि मिश्राणि स्थितिस्थानानि संख्येयगुणानि, तेभ्योऽप्युपरि एकान्तसाकारोपयोगयोग्यानि स्थितिस्थानानि संख्येयगुणानि, तेभ्योऽपि तासामेव परावर्त्तमानाऽशुभप्रकृतीनां त्रिस्थानकरसयवमध्यादधःस्थितिस्थानानि संख्येयगुणानि, तेभ्योऽपि त्रिस्थानकरसयवमध्यादुपरि स्थितिस्थानानि सख्येयगुणानि, तेभ्योऽप्यशुभपरावर्त्तमानप्रकृतीनामेव चतुःस्थानकरसयवमध्यादधः स्थितिस्थानानि संख्येयगुणानि, तेभ्योऽपि चतुःस्थानकरसयवमध्यादुपरि डायस्थिति संख्येयगुणा, यतः स्थितिस्थानादपवर्त्तनाकरणवशेन उत्कृष्टां स्थितिं याति, तावती स्थितिर्डायस्थितिरित्युच्यते. ततोऽपि सागरोपमानामन्तःकोटीकोटीसंख्येयगुणा, ततोऽपि परावर्त्तमानशुभप्रकृतीनां द्विस्थानकरसयवमध्यादुपरि यानि मिश्राणि स्थितिस्थानानि, तेषामुपर्येकान्तसाकारोपयोगयोग्यानि स्थितिस्थानानि संख्येयगुणानि, तेभ्योऽपि परावर्त्तमानशुभप्रकृतीनामुत्कृष्टस्थितिबन्धो विशेषाधिकः, ततोऽप्य-

व्याख्या—परावर्त्तमानशुभप्रकृतिचतुःस्थानिकसाकारोपयोगे परावर्त्तमानाशुभद्विस्थानिकानाकारोपयोगरसबन्धे या जघन्या ध्रुवबन्धिनीनां स्थितिस्तस्यां स्तोका जीवास्तेभ्योऽनाकारप्रायोग्यपल्योपमासङ्ख्येयवर्गमूलप्रमाणा स्थितिर्गत्वा द्विगुणा जीवा भवन्ति, एवं भूयो भूयो द्विगुणा भवन्ति, यावत्प्रभूतानि सागरोपमशतानि, तत्परतोऽनेनैव क्रमेण द्विगुणहीना द्विगुणहीनाः एवं परावर्त्तमानशुभाशुभानां त्रिस्थानिकसाकारोपयोगरसबन्धे तत्प्रायोग्यध्रुवबन्धिप्रकृतिजघन्यस्थितौ स्तोका जीवाः, शेषं प्राग्वत्, परावर्त्तमानशुभद्विस्थानिकपरावर्त्तमानाशुभप्रकृतिचतुःस्थानिकसाकारोपयोगरसबन्धे तत्प्रायोग्यध्रुवबन्धिप्रकृतिजघन्यस्थितौ स्तोकाः जीवाः, शेषं प्राग्वत्, नानागुणहान्यन्तराणि पल्योपमवर्गमूलासङ्ख्येयभागतुल्यानि तेभ्य एकं गुणहान्यन्तरमसङ्ख्येयगुणमिति गाथार्थः ॥ १११ ॥

स्थितिस्थानाल्पबहुत्वमाह—

[1]चउठाणाईजवमज्झहेट्ठउवरिं सुभाण ठितिबंधा । संखेज्जगुणा ठिइठाणगाइ असुभाण मीसा य ॥ ११२ ॥

व्याख्या—परावर्त्तमानशुभप्रकृतीनां चतुःस्थानिकयवानां मध्यस्थितेरधःस्थितिस्थानानि स्तोकानि, चतुःस्थानिकयवमध्य-

१ अस्यां गाथावृत्तावल्पबहुत्वे कियन्ति स्थानानि पतितानि दृश्यन्तेऽशुद्धानि च, साधनाभावात्तथैव रक्षितानि। अत एव टीप्पणके श्रीमन्मलयगिरिवृत्तिरुपदर्शिता—" परावर्त्तमानशुभप्रकृतीनां चतुःस्थानकरसयवमध्यादधः स्थितिस्थानानि सर्वस्तोकानि, चतुःस्थानकरसयवमध्यादेवोपरितनानि स्थितिस्थानानि संख्येयगुणानि, तेभ्योऽपि परावर्त्तमानशुभप्रकृतीनां त्रिस्थानकरसयवमध्यादधःस्थितिस्थानानि संख्येयगुणानि, तेभ्योऽपि त्रिस्थानकरसयवमध्यादुपरितनानि स्थितिस्थानानि संख्येयगुणानि, तेभ्योऽपि परावर्त्तमानशुभप्रकृतीनां द्विस्थानकरसयवमध्यादधःस्थितिस्थानानि एकान्तसाकारोपयोगयोग्यानि संख्ये-

नचत्वारिंशत्परावर्त्तमानाशुभाः, ध्रुवबन्धिन्यः सप्तचत्वारिंशत्प्रशाना एव । ध्रुवप्रकृतीनां स्वस्थानात् जघन्यस्थितिं बध्नन्तः, परावर्त्तमानशुभानां चतुःस्थानिकं परावर्त्तमानाशुभानां द्विस्थानिकं रसं विशुद्धपरिणामा बध्नन्ति, मध्यमपरिणामा अजघन्यस्थितिं बध्नाना ध्रुवप्रकृतीनां परावर्त्तमानशुभाशुभप्रकृतीनां त्रिस्थानिकरसं जीवा बध्नन्ति, ध्रुवप्रकृतीनां उत्कृष्टस्थितिं बध्नानाः सङ्क्लिष्टपरिणामाः परावर्त्तमानशुभप्रकृतीनां द्विस्थानिकं परावर्त्तमानाऽशुभानां चतुःस्थानिकं रसं बध्नतीति गाथार्थः ॥१०९॥

**चउदुट्ठाणाइ सुभासुभाण बंधे जहण्णधुवठिइसु। थोवा विसेस अहिया पुहुत्तपरओ विसेसूणा ॥ ११० ॥**

व्याख्या—शुभपरावर्त्तमानानां चतुःस्थानिकमशुभपरावर्त्तमानानां द्विस्थानिकरसं बध्नाना ध्रुवबन्धिनीनां जघन्यस्थितिं बध्नन्ति, तत्र जीवाः स्तोकाः, द्वितियायां विशेषाधिकाः, तृतीयायां विशेषाधिका यावत्सागरोपशतपृथक्त्वं, पृथक्त्वशब्दोऽत्र बहुवाची, तत्परतो विशेषहीना विशेषहीनाः प्रभूतसागरोपमाणि यावद् भवन्ति । परावर्त्तमानशुभाशुभानां त्रिस्थानिकरसं बध्नानाः ध्रुवप्रकृतीनां स्वस्थानजघन्यस्थितौ स्तोका जीवा द्वितीयायां विशेषाधिकाः, तृतीयायां विशेषाधिकाः एवं यावद् बहूनि सागरोपमाणि, तत्परतो विशेषहीना २ यावत्सागरोपमशतपृथक्त्वम्, परावर्त्तमानशुभप्रकृतीनां द्विस्थानिके परावर्त्तमानाशुभप्रकृतीनां चतुःस्थानिके रसबन्धे सति ध्रुवबन्धिनीनां स्वस्थानजघन्यस्थितिं बध्नाना जीवाः स्तोकाः यथोत्तरासु विशेषाधिका यावत् सागरोपमशतपृथक्त्वं तत्परतो विशेषहीनाः यावत्प्रभूतसागरोयमशतानीति गाथार्थः ॥ ११० ॥

उक्तानन्तरोपनिधा, परम्परोपनिधोच्यते—

**पल्लासंखियमूला गंतुं दुगुणा हवंति अद्धा य। नाणागुणहाणीणं असंखगुणमेगगुणविवरं ॥ १११ ॥**

भवन्ति, यतः पल्योपमासङ्ख्येयभागमात्राः स्थितिर्गत्वा गत्वा द्विगुणा भवन्ति, एवमेकैकस्य पल्योपमस्यान्तेऽसङ्ख्येयगुणा लभ्यन्ते, तेभ्योऽपि कषायमोहनीयस्य स्थितिबन्धाध्यवसाया असङ्ख्येयगुणाः तेभ्योऽपि दर्शनमोहनीयस्य स्थितिबन्धाध्यवसाया असङ्ख्येयगुणा भवन्तीति गाथार्थः ॥ १०७ ॥

इदानीं स्थितिसमुदाहारे तीव्रमन्दता नोक्ता साऽभिधीयते—

**सव्वजहण्णस्स रसादणंतगुणिओ उ तस्स उक्कोसो। ठितिबन्धे ठितिबन्धे अज्झवसाओ जहा कमसो ॥१०८॥**

व्याख्या—सर्वजघन्यस्थितिबन्धजघन्याध्यवसायस्य योऽनुभागो रसविभागसमुदायः, तस्मात्तस्यैव जघन्यस्थितिबन्धस्योत्कृष्टाध्यवसायरसोऽनन्तगुणो भवति, तस्माद् द्वितीयस्थितौ जघन्यस्थितिबन्धाध्यवसायजघन्यरसोऽनन्तगुण', तस्या एव द्वितीयस्थितेरुत्कृष्टाध्यवसायरसोऽनन्तगुणः, तस्मात्तृतीयस्थितिजघन्याध्यवसायरसोऽनन्तगुणस्तस्या एवोत्कृष्टाध्यवसायरसोऽनन्तगुण एवं स्थितौ २ जघन्योत्कृष्टाध्यवसायक्रमेण तावन्नेयम्, यावदुत्कृष्टस्थितेरुत्कृष्टाध्यवसायरसोऽनन्तगुण इति गाथार्थः ॥१०८॥

उक्तः स्थितिसमुदाहारः, साम्प्रतं जीवसमुदाहारोऽभिधीयते—

**धुवपगईबन्धंता चउठाणाई सुभाण इयराणं। दो ठाणगाइ तिविहं सट्ठाणजहण्णगाईसु ॥ १०९ ॥**

व्याख्या—ध्रुवाः प्रकृतीः जीवाः बध्नन्तः परावर्त्तमानशुभप्रकृतीनां चतुस्त्रिद्विस्थानिकरसं बध्नन्ति, 'इतरासाम्' अशुभपरावर्त्तमानानां द्वित्रिचतुःस्थानिकरसं बध्नन्ति, सातदेवत्रिकमनुजत्रिकप्रथमसंहननसंस्थानपञ्चेन्द्रियजातिवैक्रियौदारिकाहारकशरीरतदङ्गोपाङ्गपराघातोच्छ्वासातपोद्योततीर्थंकरतिर्यगायुस्त्रसादिदशकशुभविहायोगतिउच्चैर्गोत्रमित्येताश्चतुस्त्रिंशत्परावर्त्तमानशुभाः, शेषा एको-

परम्परोपनिधिकोच्यते—

**पल्लासंखसमाओ गंतूण ठिईउ होंति ते दुगुणा । सत्तण्हऽज्झवसाया गुणगारा ते असंखेज्जा ॥ १०६ ॥**

व्याख्या–जघन्यस्थितेः पल्योपमासङ्ख्येयभागमात्राः स्थितीर्गत्वाऽन्ते जघन्यस्थित्यध्यवसायापेक्षया द्विगुणा भवन्ति, सप्तानां कर्मणाम् । एवं "गुणकाराणि" द्विगुणवृद्धिस्थानानीत्यर्थस्तेषु सप्तसु कर्मस्वसङ्ख्येयानि भवन्ति, जघन्योत्कृष्टस्थित्यन्तरे द्विगुणस्थानान्यसङ्ख्येयानि पल्योपमवर्गमूलानि, तेभ्य एकं स्थितिबन्धद्विगुणहान्यन्तरमसङ्ख्येयगुणम् । अनुकृष्टिर्नास्ति, यतो-जघन्यस्थितिबन्धाध्यवसायेभ्यो द्वितीयायामन्यानि अध्यवसायस्थानानि भवन्ति, एवं तृतीयायामन्यानि भवन्ति, चतुष्पञ्चमादिष्वपि अन्यानि, यावदुत्कृष्टायामन्यानि अध्यवसायस्थानानि भवन्ति । तीव्रमन्दता स्थाप्येति गाथार्थः ॥ १०६ ॥ प्रकृतिसमुदाहारे द्वे अनुयोगद्वारे प्रमाणानुगमोऽल्पबहुत्वं च, तत्र प्रमाणानुगमे सर्वासां प्रकृतीनां असङ्ख्येयलोकाकाशप्रदेशतुल्याः स्थितिबन्धाध्यवसाया भवन्ति, अल्पबहुत्वमाह–

**ठितिदीहाए कमसो असंखगुणणाएँ होंति पगईणं । अज्झवसाया आउग नामट्ठमदुविहमोहाणं ॥ १०७ ॥**

व्याख्या—स्थितिदैर्घ्यात् क्रमेणासङ्ख्येयगुणनया प्रकृतीनां स्थितिबन्धाध्यवसाया भवन्ति, कतरत्प्रकृतीनां केन वा क्रमेणेत्याह–आयुषः स्तोकाः स्थितिबन्धाध्यवसायाः, नामगोत्रयोरसङ्ख्येयगुणा, यद्यप्यायुषः असङ्ख्येयगुणनया स्थितयो यान्ति, नामगोत्रयोर्विशेषोत्तराः, तथाप्यायुषो जघन्यस्थित्यध्यवसायाः अत्यल्पा नामगोत्रयोरतिप्रभूताः स्थितिस्थानबाहुल्याच्च न दोष इति । नामगोत्राध्यवसायेभ्योऽष्टमस्यान्तरायस्य ज्ञानदर्शनावरणवेदनीयानां च तुल्यस्थितित्वादध्यवसाया असङ्ख्येयगुणा

व्याख्या—ततः स्थितिबन्धस्थानान्यसङ्ख्येयगुणानि, तत उत्कृष्टस्थितिरभ्यधिका, जघन्यस्थित्यबाधासम्पातात्, संज्ञित्वेनदल्पबहुत्वं "दशाष्टभेदं" सप्तसु दशभेदं आयुषो अष्टभेदमभिहितम्। अपिशब्दादसंज्ञिचतुस्त्रिद्व्येकेन्द्रियाणां सप्तकर्मसु अबाधास्थानानि कण्डकानि च तुल्यानि सर्वस्तोकानि, आवलिकाऽसङ्ख्येयभागमात्रत्वात्। ततो जघन्याबाधाऽसङ्ख्येयगुणा अन्तर्मुहूर्त्तमात्रत्वात्, ततः उत्कृष्टाबाधा विशेषाधिका, ततो नानाप्रदेशान्तराणि, एकप्रदेशगुणहान्यन्तरं अबाधाकण्डकस्थानानि, ततः स्थितिस्थानानि क्रमशः असंख्येयगुणानि, (एकेन्द्रियाणां पल्योपमासंख्येयभागमात्रत्वात् शेषजीवानां ) पल्योपमस्य सङ्ख्येयभागमात्रत्वादितिविशेषः, ततो जघन्या स्थितिरसङ्ख्येयगुणा तत उत्कृष्टा स्थितिर्विशेषाधिकेति गाथार्थः।। १०४ ॥

इदानीं स्थितिबन्धाध्यवसायस्थानप्ररूपणा तस्यास्त्रीण्यनुयोगद्वाराणि तद्यथा–स्थितिसमुदाहारः, प्रकृतिसमुदाहारो जीव समुदाहार इति। तत्र स्थितिसमुदाहारे त्रीण्यनुयोगद्वाराणि, तद्यथा–प्रगणना, अनुकृष्टिः तीव्रमन्दतेति।

**ठिइठाणे ठिइठाणे अज्झवसाया असंखलोगसमा। कमसो विसेसअहिया, सत्तण्हाउस्स संखगुणा ॥१०५॥**

व्याख्या—स्थितिस्थाने स्थितिस्थानेऽध्यवसाया असङ्ख्येयलोकाकाशप्रदेशतुल्याः"क्रमशः"क्रमेण स्थितिवृद्ध्या विशेषाधिकाः सप्तानां कर्मणां,आयुषामसङ्ख्येयगुणवृद्ध्या अनन्तरोपनिधेति। ज्ञानावरणजघन्यस्थितौ असङ्ख्येयलोकाकाशतुल्याः स्थितिबन्धाध्यवसायाः सर्वस्तोकाः, द्वितीयायां स्थितौ विशेषाधिकाः,एवं त्रिचतुष्पञ्चम्यादिषु यावदुत्कृष्टायां विशेषाधिकाः,आयुषो जघन्यस्थितौ सर्वस्तोकाः बन्धाध्यवसाया, द्वितीयायामसङ्ख्येयगुणाः, एवं त्रिचतुष्पञ्चम्यादिषु यावदुत्कृष्टायामसङ्ख्येयगुणा अनन्तरोपनिधा क्रमेण भवन्तीति गाथार्थः ॥१०५॥

**एगं पएसविवरं, आबाहाकंडगस्स ठाणाणि । हीणठिइठितिट्ठाणा, उक्कोसट्ठिइ तओ अहिया ॥ १०२ ॥**

व्याख्या—प्रथमनिषेकस्थितेर्यस्यामर्द्धाः पुद्गला जाताः, तयोः स्थित्योर्याः सान्तरालस्थितयः एतदेकं प्रदेशगुणहान्यन्तरं तस्मिन्नसङ्ख्येयगुणाः स्थितयः, यतोऽसङ्ख्येयानि तत्पल्योपमवर्गमूलानि, तस्मादुत्कृष्टाऽबाधाकण्डकमसङ्ख्येयगुणं कस्माद्यतो जघन्योऽबाधोनान्युत्कृष्टाबाधास्थानानि कण्डकान्यप्येतावन्मात्राण्येव, अबाधा च कण्डकानि च (अबाधाकण्डकं) समाहारद्वन्द्वस्तस्य स्थानानि तयोर्द्वयोरपि स्थानसङ्ख्येति भावः, ततो जघन्यस्थितिबन्धोऽसङ्ख्येयगुणः, यतोऽन्तःकोटाकोटिमानः संज्ञिबन्धाधिकाराद् भवति, ततः स्थितिस्थानानि सङ्ख्येयगुणानि, यत एकोनत्रिंशद्गुणानि कर्मचतुष्कस्य, ततः उत्कृष्टा स्थितिर्विशेषाधिका, यतो जघन्यस्थितिः साबाधा तत्रैव प्रविष्टेति गाथार्थः ॥१०२॥

सप्तानां कर्मणां एतदुक्तं, साम्प्रतमायुषोऽभिधीयते—

**आउस्सु जहण्णबाहा जहण्णबंधो अबाहठाणाणि । उक्कोसबाहणाणंतराणि एगंतरं तत्तो ॥ १०३ ॥**

व्याख्या—पञ्चेन्द्रियाणां संज्ञिनामसंज्ञिनां च पर्याप्तानामायुषो जघन्याबाधा स्तोका, ततः जघन्यस्थितिबन्धः, सङ्ख्येयगुणः स च क्षुल्लकभव इति, ततोऽबाधास्थानानि सङ्ख्येयगुणानि, पूर्वकोटित्रिभागो जघन्याबाधोन इति कृत्वा, उत्कृष्टाबाधा विशेषाधिका जघन्याबाधासहितत्वात्, ततो नानाप्रदेशगुणहानिस्थानान्यसङ्ख्येयगुणानि, कारणं पूर्वोक्तं, तत एकस्मिन् गुणहान्यन्तरेऽसङ्ख्येयगुणानि स्थितिस्थानानीति गाथार्थः ॥ १०३ ॥

**ठितिबंधट्ठाणाइं उक्कोसठिई तओवि अब्भहिया । सण्णिसु अप्पाबहुयं दसट्ठभेयं इमं भणियं ॥ १०४ ॥**

**देसदुअविरयाचउरो सण्णो पंचेंदियस्स चउरो य । संखेज्जगुणा कमसो संजयउक्कोसगाहिंतो ॥ १०० ॥**

व्याख्या—संयतोत्कृष्टबन्धाद्देशविरतस्य जघन्यसङ्ख्येयगुणः, तस्यैवोत्कृष्टः सङ्ख्येयगुण', तस्मादविरतपर्याप्तजघन्यः सङ्ख्येयगुणः, तस्यैवापर्याप्तकस्य जघन्यः सङ्ख्येयगुणः, तस्यैवोत्कृष्टः सङ्ख्येयगुणः तस्यैव पर्याप्तस्योत्कृष्टः सङ्ख्येयगुणः, तस्मात् संज्ञिपर्याप्तस्य जघन्यस्थितिबन्धः सङ्ख्येयगुण, तस्यैवापर्याप्तस्य जघन्यः सङ्ख्येयगुणः, तस्यैवोत्कृष्टः सङ्ख्येयगुणः संज्ञिपर्याप्तस्योत्कृष्टस्थितिबन्धः सङ्ख्येयगुणो भवतीति गाथार्थः ॥१००॥ इदानी निषेकप्ररूपणा सा चाधस्तादुक्ता—"[१]मोत्तुमबाहासमए" इत्यादिना ग्रन्थेन । साम्प्रतमबाधाकण्डकप्ररूपणा सा-ऽप्यधोऽभिहिता:, "[२]उक्कोसठिईबाधा" इत्यादिना ग्रन्थेन साम्प्रतमल्पबहुत्वमुच्यते—॥ १०० ॥

**थोवा जहण्णबाहा उक्कोसा बाहठाणकंडाणि, । उक्कोसिया अबाहा नाणापएसंतरा तत्तो ॥ १०१ ॥**

व्याख्या—सर्वस्तोका जघन्याबाधा, अबाधास्थानानि कण्डकस्थानानि च तुल्यान्यसङ्ख्येयगुणानि, यतो जघन्याऽबाधा अन्तर्मुहूर्त्तिकी, उत्कृष्टानि सप्तत्रिद्विवर्षसहस्रतदूनमानानि, अबाधास्थानानि कण्डकान्यप्येतावन्मात्राण्येव यस्मादबाधायाः समय हान्या उत्कृष्टस्थितेः कण्डकहानिर्भवति, तत उत्कृष्टाबाधा विशेषाधिका, यतो जघन्यापि तत्रैव प्रविष्टा, ततो नानाप्रदेशान्तराणि असङ्ख्येयगुणानि भवन्ति, निषेकविधौ प्रदेशानां द्विगुणहीनस्थानान्यसङ्ख्येयगुणानि यतस्तानि पल्योपमासङ्ख्येयभागमात्राणीति गाथार्थः ॥ १०१ ॥

१ द्वार ५ गाथा ५० । २ द्वार ५ गाथा ५३ ।

सूक्ष्मस्य सङ्ख्येयगुणानि, तेभ्योऽपि बादरपर्याप्तकस्य सङ्ख्येयगुणानि तेभ्योऽपर्याप्तद्वीन्द्रियस्यासङ्ख्येयगुणान्ययमर्थोऽधस्तनस्थितिबन्धेऽभिहितः, "[1]ठिइठाणाइं एगिंदियाण" इत्यादिग्रन्थेन । साम्प्रतं स्थितिबन्धस्याल्पबहुत्वमाह—

**संजयबायरसुहुमगपज्जअपज्जाणहीणमुक्कोसो । एवं विगलासण्णिसु संजयउक्कोसगो बंधो ॥ ९९॥**

व्याख्या—संयतस्य सर्वस्तोको जघन्यस्थितिबन्धः, यतः सूक्ष्मसम्परायस्यान्तर्मुहूर्त्तिको बन्धः, तद्बन्धात्पर्याप्तबादरैकेन्द्रियस्य जघन्यस्थितिबन्धोऽसङ्ख्येयगुणः, तस्मात् सूक्ष्मपर्याप्तकस्य विशेषाधिकः, तस्माद्बादरस्यापर्याप्तकस्य जघन्यो विशेषाधिकः, तस्मात् सूक्ष्मापर्याप्तकस्य जघन्यो विशेषाधिकः तस्यैवोत्कृष्टो विशेषाधिकः, बादरस्यापर्याप्तकस्योत्कृष्टो विशेषाधिकः सूक्ष्मपर्याप्तकस्योत्कृष्टो विशेषाधिकः, बादरपर्याप्तकस्योत्कृष्टो विशेषाधिकः, तस्माद् द्वीन्द्रियपर्याप्तकस्य सङ्ख्येयगुणः, तस्यैवापर्याप्तस्य जघन्यो विशेषाधिकः, तस्यैवापर्याप्तस्योत्कृष्टो विशेषाधिकः, तस्यैव पर्याप्तकस्योत्कृष्टो विशेषाधिकः, ततस्त्रीन्द्रियस्य पर्याप्तकस्य जघन्यो विशेषाधिकः, तस्यैवापर्याप्तस्य जघन्यो विशेषाधिकः, तस्यैवापर्याप्तस्योत्कृष्टो विशेषाधिकः, त्रीन्द्रियपर्याप्तस्योत्कृष्टो विशेषाधिकः, ततश्चतुरिन्द्रियपर्याप्तस्य जघन्यो विशेषाधिकः, तस्यैवापर्याप्तस्य जघन्यो विशेषाधिकः, तस्यैवापर्याप्तस्योत्कृष्टो विशेषाधिकः, ( तस्यैव पर्याप्तस्योत्कृष्टो विशेषाधिकः ) ततोऽसंज्ञिपर्याप्तस्य जघन्यस्थितिबन्धः सङ्ख्येयगुणस्तस्यैवापर्याप्तस्य जघन्यो विशेषाधिकः, तस्यैवापर्याप्तस्य उत्कृष्टो विशेषाधिकस्तस्यैवोत्कृष्टो विशेषाधिकः असंज्ञिपर्याप्तकस्य इत्यर्थः, ततः संयतस्योत्कृष्टस्थितिबन्धः सङ्ख्येयगुण इति गाथार्थः ॥ ९९ ॥

---

१ द्वार ५ गाथा ५७ ।

त्कृष्टानुभागा नोक्ताः, शेषं सर्वमुक्तं, ततः समयोनस्थितौ जघन्यानुभागास्तावन्मात्रा एव, एवं द्वित्रिचतुःपञ्चसमयोनस्थितौ जघन्यानुभागास्तावन्मात्रा एव ततो घोलनजघन्यस्थितेरधस्ताद्या स्थितिः तस्या जघन्यानुभागा अनन्तगुणा एवमभव्यजघन्यबन्धादधोऽधोऽसङ्ख्येयासु स्थितिषु जघन्यानुभागा अनन्तगुणश्रेण्याः नेयाः, ताश्च स्थितयः कण्डकमसङ्ख्येयभागोनं, ततः परावर्त्तमानस्थितीनां उपरि कण्डकस्य यस्योत्कृष्टानुभागा नोक्ताः, तत्सर्वोत्कृष्टस्थितेरुत्कृष्टानुभागा अनन्तगुणाः, एवमनन्तगुणश्रेण्या तत्कण्डकं नेयम्, ततस्तत्कण्डकान्तस्थितेरुत्कृष्टानुभागेभ्यो यदभव्यबन्धादधः स्थितयो जघन्यानुभागमधिकृत्योक्तास्तदधः स्थितेर्जघन्यानुभागा अनन्तगुणाः, ततः परावर्त्तमानकण्डकस्थितीनामुत्कृष्टानुभागा अधोऽधः क्रमेणानन्तगुणाः, ततोऽधस्तनस्थितेरेकस्या जघन्यानुभागा अनन्तगुणाः ततो द्वितीयकण्डकस्य परावर्त्तमानस्थितीनामुत्कृष्टानुभागा अधोऽधः क्रमेणानन्तगुणाः, एवमधस्तनाया एकस्या स्थितेर्जघन्यानुभागा अनन्तगुणाः घोलनस्थितीनां कण्डकमात्राणां उत्कृष्टानुभागा अनन्तगुणश्रेण्या नेतव्या, यावत्परावर्त्तमानजघन्यस्थितेरुत्कृष्टानुभागा अनन्तगुणास्ततोऽभव्यबन्धाज्जघन्यतरकण्डकस्योत्कृष्टानुभागा नोक्ताः, तस्मात् कण्डकादधःस्थितेर्ज्जघन्यानुभागा अनन्तगुणास्ततः कण्डकान्त्यस्थितेरुत्कृष्टानुभागा अनन्तगुणाः, एवमध उपरि जघन्योत्कृष्टक्रमेण तावन्नेयम्, यावत्सर्वजघन्या स्थितिः, ततोऽधस्तनकण्डकादुत्कृष्टानुभागाः परिपाट्या अनन्तगुणश्रेण्या नेया, यावत्सर्वजघन्या स्थितिरिति । त्रसक्रमेण बादरपर्याप्तप्रकृत्येकानामपि वक्तव्या, तीव्रमन्दता समाप्ता ॥ तत्समाप्तावनुभागबन्धः समाप्तः ॥

साम्प्रतं स्थितिबन्धोऽभिधीयते तत्र चत्वार्यनुयोगद्वाराणि, तद्यथा—स्थानप्ररूपणा, निषेकप्ररूपणा, अबाधाकण्डकप्ररूपणा, अल्पबहुत्वमिति। सर्वस्तोकानि स्थितिस्थानानि सूक्ष्मापर्याप्तकस्य, तेभ्योऽपि बादरापर्याप्तकस्य सङ्ख्येयगुणानि, तेभ्योऽपि पर्याप्त-

गेभ्यो यतो निवृत्तस्तस्याः समयोत्तरायां स्थितौ जघन्यानुभागा अनन्तगुणाः, ततोऽभव्यजघन्यानुभागबन्धप्रायोग्याणां जघन्य-स्थितावुत्कृष्टानुभागा अनन्तगुणाः समयोत्तरायामुत्कृष्टानुभागा अनन्तगुणाः, एवं कण्डकमात्राणां स्थितीनामुत्कृष्टानुभागा अनन्तगुणश्रेण्या नेतव्याः। ततो यस्या उपरिमस्थितेर्जघन्यानुभागानुक्त्वा निवृत्तः तस्याः समयोत्तरायां स्थितौ जघन्यानुभागाः अनन्तगुणाः ततो जघन्यानुभागप्रायोग्यासु द्वितीयकण्डकस्थितिषूत्कृष्टानुभागाः क्रमेण अनन्तगुणाः, अनेन क्रमेणोपरिम-स्थितीनामेकस्याः स्थितेर्जघन्यानुभागाः परावर्त्तमानस्थितीनां कण्डकमात्राणां उत्कृष्टानुभागा अनन्तगुणश्रेण्या तावन्नेतव्या, यावज्जघन्यानुभागबन्धप्रायोग्याणां चरमस्थितिरिति। घोलनस्थितीनां याः कण्डकमात्रा उपरिस्थितयस्तासां जघन्यानुभागा उक्ताः, अत उत्कृष्टा घोलनान्तस्थितेरुत्कृष्टानुभागेभ्यः कण्डकोपरिस्थितौ जघन्यानुभागा अनन्तगुणाः, ततोऽधःस्थितेरुत्कृष्टा-नुभागा उपरिस्थितेर्जघन्यानुभागा एवमध उपरि क्रमेण तावन्नेयाः, यावदुत्कृष्टा स्थितिः, तत उत्कृष्टस्थितेरधो यत्कण्डकं तदनन्त-गुणश्रेण्या पश्चान्नयेदिति। नीचैर्गोत्रक्रमेण तिर्यग्द्विकेऽपि तीव्रमन्दातानुभागस्य वक्तव्येति। त्रसादिचतुष्कस्य तीव्रमन्दतोच्यते—यद्यपि पराघातक्रमोऽष्टादश कोटाकोटीर्यावत्तथापि किञ्चिदुच्यते—त्रसनाम्नो विंशतिकोटाकोटीर्यदा बध्नाति तदा उत्कृष्टस्थिते-र्जघन्यपदे जघन्यानुभागाः स्तोकाः समयोनायां जघन्यानुभागा अनन्तगुणाः, एवं निर्वर्तनकण्डकं यावज्जघन्यपदे जघन्यानुभागा अनन्तगुणश्रेण्या नेतव्याः, ततः उत्कृष्टस्थितेरुत्कृष्टपदे उत्कृष्टानुभागा अनन्तगुणास्ततः कण्डकाधःस्थितेर्जघन्यपदे जघन्यानुभागा अनन्तगुणास्ततः समयोनोत्कृष्टस्थितेरुत्कृष्टपदे उत्कृष्टानुभागा अनन्तगुणाः, एवं जघन्योत्कृष्टानुभागाः समयहान्याऽध उपरि क्रमेण तावन्नेयाः, यावदष्टादश सागरोपमकोटाकोट्यन्तस्थितौ जघन्यानुभागाः अनन्तगुणाः घोलनस्थितीनां यदुपरि कण्डकं तस्यो-

स्थितीनामुत्कृष्टानुभागोऽनन्तगुणश्रेण्या तावदधो मुखो नेयो, यावत्सर्वजघन्या सातस्य स्थितिरित्युक्ता सातस्य तीव्रमन्दता। प्रागपरन्तयोरुपघाततुल्यं मध्ये परावर्त्तमानासु स्थितिषु नीचैर्गोत्रस्यासातसमं वक्तव्यं तीव्रमन्दताविधानमिति गाथार्थः ॥ ९८ ॥

नीचैर्गोत्रस्य सूत्रकारेणातिदिष्टं वृत्तिकारो दर्शयति–सप्तमपृथिव्यां नारकस्य सर्वजघन्यस्थितिबन्धे सर्वा जघन्यानुभागाः स्तोकाः, द्वितीयायां जघन्यस्थाने जघन्यानुभागा अनन्तगुणाः, एवं त्रिचतुष्पञ्चमासु स्थितिषु जघन्यपदे जघन्यानुभागा अनन्तगुणाः, जघन्यपदक्रमेण अनन्तगुणश्रेण्या तावद् गन्तव्यम्, यावत्कण्डकमिति, ततः कण्डकान्तस्थितेर्जघन्यानुभागेभ्यः जघन्यस्थितावुत्कृष्टपदे उत्कृष्टानुभागाः अनन्तगुणाः, ततः कण्डकोपरिस्थितेर्जघन्यानुभागा अनन्तगुणाः ततो जघन्यद्वितीयाया उत्कृष्टानुभागा अनन्तगुणाः. एवं कण्डकोपरिमासु जघन्यानुभागा जघन्यस्थितेरुपरिमासूत्कृष्टानुभागाः प्रतिसमयं परिपाट्याऽनन्तगुणश्रेण्या नेतव्या, यावदभव्यजघन्यबन्धादधःस्थितिरिति, अभव्यजघन्यबन्धादधःकण्डकस्योत्कृष्टानुभागान्मुक्त्वा शेषमुक्तम्। ततः कण्डकाध उत्कृष्टानुभागेभ्योऽभव्यजघन्यस्थितेर्जघन्यानुभागा अनन्तगुणास्ततः समयोत्तरायां जघन्यानुभागास्तावन्मात्रा एव, एवं द्वित्रिचतुष्पञ्चमाद्यासु जघन्यानुभागास्तावन्मात्रा एव, एव तावन्मात्रविधिना तावन्नेयं यावत्प्रतिपक्षोत्कृष्टा स्थितिरिति। परावर्त्तमानजघन्यानुभागबन्धप्रायोग्यसंज्ञा एताः सर्वा अपि स्थितयो भण्यन्ते। ततस्तदुत्तरस्थितेर्जघन्यानुभागाः अनन्तगुणाः, एव द्वित्रिचतुष्पञ्चसमयोत्तरास्वपि जघन्यानुभागा अनन्तगुणा यावत्तदुपरि कण्डकमसङ्ख्येयभागोनमतो निर्वर्त्तितव्यम्, अभव्यजघन्यबन्धादधः कण्डकस्य जघन्यस्थितेरुत्कृष्टानुभागा अनन्तगुणा यस्याः निवृत्तस्तदनुभागेभ्य इति। तदुत्तरस्थितेरुत्कृष्टानुभागा अनन्तगुणाः, एवं द्वित्रिचतुष्पञ्चमास्वपि नेयाः, यावदभव्यजघन्यबन्धादधःस्थितिरिति, अभव्यजघन्यबन्धादधःस्थित्युत्कृष्टानुभा-

वक्तव्येति । सद्वेदनीयस्याप्येवमेव वक्तव्यम्, किन्तूत्कृष्टस्थितेरारभ्य सम्यगवतारयितव्यम्, एतदेव लेशतो दर्शयति—सद्वेदनीयस्य उत्कृष्टस्थितौ जघन्यानुभागा स्तोकाः समयोनायां तावन्मात्रा एव द्विसमयोनायां स्थितौ जघन्यपदे तावन्मात्रा एव एवं जघन्यपदे प्रतिसमयं तावद्वक्तव्यम्, यावदभव्यप्रायोग्या जघन्या स्थितिरिति, तस्या अभव्यप्रायोग्यजघन्यस्थितेर्जघन्यानुभागेभ्य एव तस्या एव याऽधःस्थितौ जघन्यतरा स्थितिस्तस्यां जघन्यानुभागा अनन्तगुणाः, तेभ्यस्तदधःस्थितेर्जघन्यानुभागा अनन्तगुणाः, एवमधोऽधस्तावन्नेयम्, यावत्पल्योपमासङ्ख्येयभागमात्राः स्थितयः । एकान्तेनैव साकारोपयोगसञ्ज्ञास्ताश्च कण्डकमसङ्ख्येयभागहीनम् । तेभ्यो जघन्यानुभागेभ्य उत्कृष्टस्थितेरुत्कृष्टानुभागा अनन्तगुणास्ततः समयोनोत्कृष्टस्थितेरुत्कृष्टानुभागा अनन्तगुणाः द्विसमयोनोत्कृष्टायामुत्कृष्टानुभागा अनन्तगुणा एवमनन्तगुणवृद्ध्या यावत्कण्डकमात्रा स्थितयस्तावदवतारयितव्याः, ततः कण्डकान्तस्थितेरुत्कृष्टानुभागेभ्यः उक्तसाकारोपयोगान्तस्थितेर्जघन्यानुभागा अनन्तगुणाः, ततो द्वितीयकण्डकस्थितानामनन्तगुणश्रेण्या उत्कृष्टानुभागाः प्रतिसमयमवतारयितव्याः, ततः साकारोपयोगस्थितेरेकस्या जघन्यानुभागा अनन्तगुणास्ततस्तृतीयकण्डकस्थितीनामनन्तगुणश्रेण्या उत्कृष्टानुभागाः प्रतिसमयमवतारयितव्याः, एवं साकारोपयोगयोग्याया एकस्याः स्थितेर्जघन्यानुभागाः परावर्तमानस्थितीनां कण्डकोत्कृष्टानुभागा अनन्तगुणश्रेण्या तावन्नेतव्या, यावत्साकारोपयोगानां कण्डकं पूर्णं परावर्तमानानामभव्यप्रायोग्यजघन्यस्थितेरुत्कृष्टानुभागा अन्तगुणा इति । ततः साकारोपयोगकण्डकाधःस्थितेर्जघन्यानुभागा अनन्तगुणास्ततः साकारोपयोगप्रथमस्थितेरुत्कृष्टानुभागाः, एवं जघन्योत्कृष्टानुभागक्रमेण अध उपरिस्थित्योरनन्तगुणश्रेण्या तावद् गन्तव्यम्, यावत्सर्वजघन्या स्थितिरिति । पश्चात्कण्डकमात्राणां

तेरुत्कृष्टानुभागस्थानानन्तगुणमिति गाथार्थः ॥ ९६ ॥

**एवं उक्कस्साणं अणंतगुणणाएँ कंडगं वयइ । एक्कं जहण्णठाणं अणंतगुणणाए कंडगं वयइ ॥ ९७ ॥**

व्याख्या—जघन्यस्थितेरारभ्य उत्कृष्टानुभागा अनन्तगुणश्रेण्या स्थितीनां कण्डकं व्रजन्ति, प्रथमस्थितेरनुभागेभ्यो द्वितीयस्थितौ उत्कृष्टानुभागा अनन्तगुणाः, एवं त्रिचतुष्पञ्चमासु स्थितिषु यावत्कण्डकमुत्कृष्टानुभागा अनन्तगुणाः, ततो यस्याः स्थितेर्निवृत्तस्तस्या उपरिमस्थितिजघन्यानुभागस्थानमनन्तगुणं भवति, ततः परावर्त्तमानस्थितीनां द्वितीयकण्डकमनन्तगुणश्रेण्या उत्कृष्टानुभागानां स्थितिवृद्धौ व्रजति, एवं उपर्येकस्याः स्थितेर्जघन्यानुभागाः अधःकण्डकस्थितीनां उत्कृष्टानुभागाः अनन्तगुणश्रेण्या व्रजन्ति, यावत् सातोत्कृष्टस्थितितुल्यायामसातस्थितावुत्कृष्टानुभागा अनन्तगुणाः, ओघजघन्यस्थितीनां जघन्योत्कृष्टा अनुभागा उक्ता। ओघजघन्या नाम याः स्थितीर्वध्नानोऽसातस्य जघन्यानुभागं वध्नाति ता ओघजघन्या घोलनपरावर्त्तनस्थितयो वेति गाथार्थः ॥९७॥

**उवरिं उवघायसमं, सायस्सवि नवरि उक्कसट्ठिइओ । अंतेसुवघायसमं, मज्झे नीयस्स सायसमं ॥ ९८ ॥**

व्याख्या—यासां स्थितीनां तानि चान्यानि चानुभागस्थानानि उक्तानि अनुकृष्टौ तदुपरिस्थितिषु यासु तदेकदेशेन तानि च अन्यानि च भवन्तीत्युक्तम्, तास्पघातवद्भवति । परावर्त्तमानस्थित्युपरिकण्डकस्य या समयोत्तरा स्थितिः, तस्याः जघन्यानुभागा अनन्तगुणास्तेभ्यस्तस्या एव कण्डकादिस्थितेरुत्कृष्टानुभागा अनन्तगुणास्तेभ्योऽपि कण्डकोपरिद्वितीयस्थितेर्जघन्यानुभागा अनन्तगुणाः ततः कण्डकादिद्वितीयस्थितेः उत्कृष्टानुभागा अनन्तगुणाः, एवमध उपरि उत्कृष्टजघन्यक्रमेणानन्तगुणश्रेण्या तावन्नेयम्, यावदसातस्योत्कृष्टा स्थितिः पश्चादुत्कृष्टकण्डकस्थितीनामुत्कृष्टानुभागोऽनन्तगुणश्रेण्या नेतव्यः, असातक्रमेणासातवर्गस्य तीव्रमन्दता

इत्यर्थः, तस्मात्कण्डकोपरिस्थितेर्जघन्यानुभागोऽनन्तगुणः, तस्मादपि द्वितीयस्थित्युत्कृष्टानुभागोऽनन्तगुणः, तस्मात्कण्डकोपरि-द्वितीयस्थितेर्जघन्यानुभागोऽनन्तगुण एवमध उपरि उत्कृष्टबन्धक्रमेण तावन्नयेद्यावदुत्कृष्टा स्थितिरिति गाथार्थः ॥ ९३ ॥

**उक्कोसाणं कंडं अणंतगुणणाएँ तन्नए पच्छा । उवघायमाइयाणं इयराणुक्कोसगाहिंतो ॥ ९४ ॥**

व्याख्या—उत्कृष्टस्थित्युपलक्षितं यत्कण्डकं चरमकण्डकमित्यर्थः, तासामुत्कृष्टस्थितीनां प्रथमस्थित्युत्कृष्टानुभागात् द्विती-यायामुत्कृष्टोऽनुभागोऽनन्तगुणः तस्मादपि तृतीयायामनन्तगुणः एवं यावदुत्कृष्टस्थितेरनुभाग उत्कृष्टोऽनन्तगुणः, एवमुत्कृष्टस्थि-तीनां कण्डकं पश्चान्नयेदिति । उपघातादिवर्गप्रकृतीनामयं क्रमः, इतरासां पराघातादीनां एवमेवोत्कृष्टस्थितेरारभ्य नयेदनन्त-गुणश्रेण्यानुभाग इति गाथार्थः ॥ ९४ ॥ उक्ता तीव्रमन्दता शुभाशुभवर्गयोरिति ॥

**अस्सायजहण्णठिईठाणेहिं तुल्लयाइ सव्वाणं । आप्पडिवक्खक्कंतगठिईण ठाणाइ हीणाइं ॥ ९५ ॥**

व्याख्या—असातस्य जघन्यस्थितेर्यानि जघन्यानुभागस्थानानि तैस्तुल्यानि सर्वासां स्थितीनां प्रतिपक्षाक्रान्तानां हीनानि जघन्यानुभागस्थानानीति किमुक्तं भवति–असातस्य जघन्यपदे जघन्यानुभोगाः स्तोकाः द्वितीयायां जघन्यानुभागास्तावन्मात्रा एव, तावन्मात्रविधिना च तावन्नेया यावत् सातस्योत्कृष्टस्थितितुल्या असातस्य स्थितय इति गाथार्थः ॥ ९५ ॥

**तत्तो अणंतगुणणाए जंति कंडस्स संखिया भागा । तत्तो अणंत्तगुणियं, जहण्णठितिउक्कसं द्वाणं ॥ ९६ ॥**

व्याख्या—ततः परावर्त्तमानान्तस्थितेः जघन्यानुभागेभ्यः तदुपरिमस्थितौ जघन्यानुभागोऽनन्तगुणः, एवं कण्डकस्या-सङ्ख्येया भागा जघन्यानुभागाः अनन्तगुणश्रेण्या यान्ति, तस्मात् स्थितिस्थानान्निवर्त्तितव्यम्, ततोऽभव्यप्रायोग्यजघन्यस्थि

बन्धः तस्मादभव्यबन्धाज्जघन्यतरो बन्धस्त्रसादिचतुष्कस्य परघातवद्भवति, शुभप्रकृतित्वात् तस्मादभव्यबन्धात्समयोनस्थिते-र्यानि अनुभागबन्धाध्यवसायस्थानानि द्विसमयोनस्थितौ तदेकदेशेन तानि चान्यानि च भवन्ति, एवं त्रिचतुष्पञ्चसमयोनस्थितौ तदेकदेशेन तानि चान्यानि च भवन्ति, एवं यावत्कण्डकं तावन्नेयम्, यतः कण्डकान्तस्थितौ कण्डकादिस्थितेरनुकृष्टिः समाप्तिं याति, एवं पराघातक्रमेण नेया यावत्सर्वजघन्या स्थितिरिति। कंडकं निर्वर्त्तनकण्डकं च पल्योपमासङ्ख्येयभागस्याभिधाने भवत इति गाथार्थः ॥ ९१ ॥

अनुभागानुकृष्टिः समाप्तेति। अनुभागस्य तीव्रमन्दत्वमधिकृत्य यद्यपि सर्वाशुभप्रकृतीनां जघन्यस्थित्यनुभागात् स्थिति-वृद्धावनन्तगुणश्रेण्यानुभागो गच्छति, यावदुत्कृष्टा स्थितिः शुभानामेतदेव विपरीतमुत्कृष्टस्थितौ यो जघन्यानुभागः स प्रतिसमय-मधोमुखमनन्तगुणवृद्ध्या गच्छति यावज्जघन्या स्थितिरिति, तथापि प्रतिसमयं स्थितीनां तीव्रमन्दत्वमधिकृत्य विशेषदर्शनार्थमाह—

जा निव्वत्तणकंडं जहण्णट्ठितिपढमठाणगाहिंतो। गच्छंति उवरि हुत्तं अणंतगुणणाएँ सेढीए ॥ ९२ ॥

व्याख्या——अशुभवर्गप्रकृतीनां जघन्यस्थितौ यत्प्रथमं जघन्यानुभागस्थानं तस्माद्यावन्निर्वर्त्तनकण्डकं पल्योपमासङ्ख्येय-भागमात्रा स्थितय इत्यर्थः, अनन्तगुणश्रेण्या उपर्युपरिस्थितयोऽनुभागमाश्रित्य यान्ति, प्रथमस्थितिजघन्यानुभागात् द्वितीयस्थि-तावनन्तगुणो जघन्यानुभागः तस्मादपि तृतीयायामनन्तगुणो जघन्यानुभागः, एवं यावत्कण्डकमिति गाथार्थः ॥ ९२ ॥

तत्तो पढमठिईए उक्कोसं ठाणगं अणंतगुणं। तत्तो कंडगउवरिं आउक्कस्सं नए एवं ॥ ९३ ॥

व्याख्या——कण्डकान्तस्थितिजघन्यानुभागात्प्रथमस्थित्युत्कृष्टानुभागस्थानमनन्तगुणं, जघन्यस्थित्युत्कृष्टानुभागोऽनन्तगुण

स्थानानि तदेकदेशेन तानि चान्यानि च भवन्ति, जघन्यस्थितेरनुत्कृष्टिः समाप्तिं याति, एवं द्वितीयस्थितेः कण्डकोपरिस्थितावनुत्कृष्टिः समाप्तिं याति, एवमुपघातक्रमेण तावन्नेयम्, यावदभव्यजघन्यबन्धः। तस्मिन्नभव्यजघन्यस्थितिबन्धे यान्यनुभागबन्धाध्यवसायस्थानानि द्वितीयादिषु स्थितिषु तानि चान्यानि च भवन्ति, घोलनप्रकृतिष्वयं विशेषः, तानि चान्यानि च भवन्ति, प्रतिपक्षस्थितिमानासु स्थितिषु अशुभशुभवर्गयोः पुनः तदेकदेशेन तानि चान्यानि च भवन्ति, कण्डकान्तस्थितौ कण्डकादिस्थितेरनुत्कृष्टिः समाप्तिं याति, एवमुच्चैर्गोत्रस्थितिप्रमाणासु स्थितिषु तानि चान्यानि च भवन्ति, जघन्यस्थित्यनुभागस्थानानि, तदुपरितनस्थितिष्वसातक्रमः, तिर्यग्द्विकेऽप्ययं विधिरिति गाथार्थः ॥ ९० ॥

**अट्ठारस कोडीओ परघायकमेण तह चउक्केवि । कंडं निव्वत्तणकंडकं च पल्लस्स संखंसो ॥ ९१ ॥**

व्याख्या—अष्टादशसागरोपमकोटाकोटीर्यावत् परघातक्रमो भवति त्रसादिचतुष्कस्य, अपिशब्दात् सातक्रमश्च, तत्परतो यावदभव्यप्रायोग्यो जघन्यबन्धः तदधो भूयोऽपि परघाततुल्यं तदेव लेशतो दर्शयति—यान्युत्कृष्टस्थितिं बध्नानस्यानुभागबन्धाध्यवसायस्थानानि भवन्ति,(तदेकदेशेन तानि चान्यानि च)एवं समयोनामुत्कृष्टस्थितिं बध्नानस्य तदेकदेशेन तानि च अन्यानि च भवन्ति, एवं द्वित्रिचतुष्पञ्चसमयानां बध्नानस्य तदेकदेशेन तानि चान्यानि च भवन्ति, एवं कण्डकान्तस्थितौ उत्कृष्टस्थितेरनुत्कृष्टिः समाप्तिं याति, समयोनस्थितेः कण्डकाधःस्थितौ समाप्तिं याति, द्विसमयोनस्थितेः कण्डकाधो द्वितीयस्थितौ समाप्तिं याति, एवमष्टादश कोटाकोटीर्यावदवतारयितव्यास्तदन्तस्थितेः साततुल्यं अष्टादशकोटाकोट्यन्तःस्थितेः यान्यनुभागस्थानानि भवन्ति, तानि चान्यानि च समयोनायां भवन्ति, एवं द्वित्रिचतुष्पञ्चसमयोनायां तानि चान्यानि च भवन्ति, एवं यावदभव्यप्रायोग्यः स्थावरनामादीनां

योग्ये जघन्यस्थितिबन्धे यान्यसातस्यानुभागबन्धाध्यवसायस्थानानि, तस्याः समयाधिकस्थितौ तानि चान्यानि च भवन्ति, एवं द्विसमयाधिकायां स्थितौ तानि चान्यानि च भवन्ति, प्रतिसमयमेवं नेयं, कण्डकविधिमकुर्वता यावत्सातस्थितिस्थानतुल्याः असातस्य स्थितय इति। इयं प्ररूपणा कासां स्थितीनामुच्यते? असातस्य याः स्थितीर्बध्नानो जघन्यानुभागं बध्नाति। किमुक्तं भवति? यावन्मात्राः सातस्य स्थितयः तावन्मात्रासु स्थितिषु जघन्यानुभागस्थानानामनुत्कृष्टिः याति। तदुपरितनस्थितीनां पूर्वक्रम उपघातादीनां यदुक्तं तद् भवति, कण्डकादिस्थितेः कण्डकान्तस्थित्यामनुकृष्टिः समाप्तिं याति, एवं यावदुत्कृष्टा स्थितिरिति गाथार्थः॥८७॥

**मोत्तूण नीयमियरासुभाण जो जो जहण्णठितिबंधो। नियपडिवक्खसुभाणं ठावेयव्वो जहण्णयरो॥८८॥**

व्याख्या—मुक्त्वा नीचैर्गोत्रप्रकाराः नीचैर्गोत्रतिर्यग्द्विकसंज्ञास्तिस्रः प्रकृतीः, इतरा शुभानां–अन्याशुभप्रकृतीनां यो यो जघन्यस्थितिबन्धोऽभव्यप्रायोग्यस्तस्मान्निजप्रतिपक्षशुभानां स्थापनीयो जघन्यतरः, किमुक्तं भवति? असातजघन्यबन्धात् सातस्य जघन्यतरः स्थाप्योऽभव्यप्रायोग्याज्जघन्यतर, एवं सातासातादिवर्गप्रकृतीनां सर्व्वासामपीति गाथार्थः॥८९॥

**पडिवक्खजहण्णयरो तिरिदुगनीयाण सत्तममहीए। सम्मत्ताईए तओ अणुकड्ढी उभयवग्गेसु॥९०॥**

व्याख्या—स्वप्रतिपक्षजघन्यबन्धाज्जघन्यतरो भवति, कासां? तिर्यग्द्विकनीचैर्गोत्राणाम्, कुत्र? सप्तमपृथिव्याम्, कदा? सम्यक्त्वं प्रतिपत्तुकामस्य, तस्माज्जघन्यबन्धादनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः कार्योभयवर्गयोः, शुभानामभव्यजघन्यबन्धादिति। कथं? सम्यक्त्वं प्रतिपत्तुकामस्य सप्तमपृथिव्यां यः सर्वजघन्यः स्थितिबन्धः, तस्य जघन्यस्थितौ यान्यनुभागबन्धाध्यवसायस्थानानि तान्युपरिमस्थितौ तदेकदेशेन तानि चान्यानि च भवन्ति, एवं यावत्कण्डकान्तस्थितिस्तावज्जघन्यस्थित्यनुभाग-

व्याख्या—प्रतिपक्षो विद्यते यासां ताः सप्रतिपक्षाः असातसातादिकाः तासामसातादिकानां प्रकृतीनां स्थापयित्वा स्थितिस्थानानि अन्तःकोटाकोट्याद्यानि अभव्यजघन्यवन्धादिकान्युभयोरपीति गाथार्थः ॥ ८७ ॥

**जा पडिवक्खक्कंता ट्ठिईउ ताणं इमो कयो होइ । ताणण्णाणि य ठाणा सुद्धठिईणं तु पुव्वकमो ॥ ८८ ॥**

व्याख्या—याः प्रतिपक्षप्रकृतिस्थितिभिः स्थितय आक्रान्ताः शुभप्रकृतेरशुभप्रकृतिभिः अशुभप्रकृतेः शुभप्रकृतिस्थितिभिः, तासां प्रकृतीनां अयं क्रमो भवति, तानि चान्यानि चानुभागबन्धाध्यवसायस्थानानि शुभप्रकृतीनामुत्कृष्टस्थितेरशुभानां जघन्यस्थितेरारभ्य प्रतिपक्षाक्रान्तासु सर्वास्वपि स्थितिष्वनुयान्ति। कथमेतत् ? उच्यन्ते सातस्योत्कृष्टस्थितिं बध्नानस्य यान्यनुभागबन्धाध्यवसायस्थानाति तानि स्तोकानि, समयोनायामुत्कृष्टस्थितौ तानि चान्यानि भवन्ति, द्विसमयोनायामुत्कृष्टस्थितौ तानि चान्यानि च भवन्ति, एवं समयहान्या तावन्नेतव्यम्, यावदसातस्य जघन्या स्थितिरभव्यप्रायोग्येति । ततो जघन्यबन्धादभव्यप्रायोगात्तुशब्दादधःस्थितस्थितीनां तद्बन्धजघन्यतराणां पूर्वोक्तक्रमो, यः पराघातादीनां शुभानां प्रागुक्तः स सातस्य भवति । तदेव दर्शयति—तद्बन्धात् समयोना या स्थितिः तस्याः यान्यनुभागबन्धाध्यवसायस्थानानि तान्युपरितनस्थितीनां बन्धाध्यवसायस्थानेभ्यः तदेकदेशेन तानि चान्यानि च भवन्ति, तस्याः समयोनायां स्थितौ तदेकदेशेन तानि चान्यानि चानुभागस्थानानि भवन्ति,, तस्या अपि द्विसमयोनायां स्थितौ तदेकदेशेन तानि चान्यानि च भवन्ति, एवमधोमुखं नेयं यावत्पल्योपमस्यासङ्ख्येयभागमात्राणि स्थितिस्थानानि, ततोऽभव्यजघन्यबन्धादधः स्थिता या स्थितिः तस्या अनुभागबन्धाध्यवसायस्थानानामनुत्कृष्टिः निष्ठां याति, एवं नेतव्या यावत्सातस्य जघन्या स्थितिः । सद्वेदनीयक्रमेण तद्वर्गप्रकृतीनामपि वक्तव्येति । साम्प्रतमसातस्योच्यते—अभव्यप्रा-

स्थानानां अनुकृष्टिः परिनिष्ठां याति, समाप्तमिति गाथार्थः ॥ ८४ ॥

**तदुवरिमआइयासुं कमसो बीयाइयाण निट्ठाइ । ठितिठाणाणणुकड्ढी आउक्कस्सं ठिई जाव ॥ ८५ ॥**

व्याख्या—'तदुपरिमादिकासु' तस्य कण्डकस्य योपरितनस्थितिस्तदादिकासु स्थितिषु 'क्रमशः' परिपाटया जघन्यस्थितेः या द्वितीयादिस्थितिस्तदादिकानां यान्यनुभागबन्धाध्यवसायस्थानानि तेषामनुत्कृष्टिः समाप्तिं याति, किमुक्तं भवति—अभिमतस्थित्यनुभागस्थानानां स्थित्यां स्थित्यां असङ्ख्येयभागं मुञ्चन् मुञ्चन् उपरितनस्थितिषु तावद् व्रजति यावत्कण्डकं कण्डकान्तस्थितौ तदनुकृष्टिः समाप्तिं याति स्थितौ स्थितौ तानि चान्यानि च भवन्त्येवं यावदुत्कृष्टं स्थितिस्थानं तावदनुकृष्टिर्नेया इति गाथार्थः ॥ ८५ ॥

**उवघायाईणेवं एसो परघायमाइसु विसेसो । उक्कोसट्ठिइहिंतो हेट्ठमुहं कीरइ असेसं ॥ ८६ ॥**

व्याख्या—उपघाताद्यशुभवर्गप्रकृतीनामेवमनन्तरोक्तविधिना अनुकृष्टिर्भवति । पराघातादिष्वयं विशेषः, सर्वोत्कृष्टस्थितिस्थानादधोमुखं पूर्वोक्तमशेषं क्रियते किमुक्तं भवति,—शुभप्रकृतीनामुत्कृष्टस्थितिबन्धे स्तोकान्यनुभागबन्धाध्यवसायस्थानानि भवन्ति, तेषामसङ्ख्येयभागस्तस्यामेव तिष्ठति, शेषाणि तदधःस्थितौ गच्छन्ति, तस्यां तानि चान्यानि च भवन्ति, एवमसङ्ख्येयभागं मुञ्चन् मुञ्चन् स्थितौ स्थितौ यान्ति परिनिष्ठां तदनुभागस्थानानि कण्डकान्तस्थिताविति, एवमुपान्तस्थित्यादीनामपि नेतव्यानि, अनुभागबन्धाध्यवसायस्थानान्यधोमुखानि यावत् जघन्यास्थितिरिति गाथार्थः ॥ ८६ ॥

**सप्पडिवक्खाणं पुण असायसायाइयाण पगईणं । ठावेसु ट्ठिइठाणा अंतोकोडाइनियनियगा ॥ ८७ ॥**

व्याख्या—सातवेदनीयं स्थिरादिषट्कं उच्चैर्गोत्रं देवमनुष्यद्विकं पञ्चेन्द्रियजातिः चतुरस्रसंस्थानं वज्रऋषभनाराच-संहननं प्रशस्तविहायोगतिरेता षोडश प्रकृतयः परावर्त्तमानशुभवर्गसंज्ञाः, तृतीयवर्गसंज्ञा भवतीति गाथार्थः ॥ ८१ ॥

**अस्सायथावरदसं नरयदुगं विहगई य अपसत्था। पंचेंदिरिसभचउरंसगेयरा असुभघोलणिया ॥८२॥**

व्याख्या—असातवेदनीयं स्थावरादिदशकं नरकद्विकं अप्रशस्तविहायोगतिः पञ्चेन्द्रियरहिताश्चतस्रो जातयः प्रथम-संहननवर्ज्जानि पञ्चसंहननानि प्रथमसस्थानवर्जानि पञ्चसंस्थानानि एताः अष्टाविंशतिप्रकृतयोऽशुभघोलना संज्ञाश्चतुर्थवर्गो भवतीति गाथार्थः ॥ ८२ ॥

अनुकर्षणविधानमाह—

**मोत्तुमसंखं भागं जहण्णठितिठाणगाण सेसाइं। गच्छंति उवरिमाए तदेकदेसेण अण्णाणि ॥ ८३ ॥**

व्याख्या—अशुभवर्गप्रकृतीनां जघन्यस्थितिबन्धे यान्यनुभागबन्धाऽध्यवसायस्थानानि तेषामसङ्ख्येयभागं तस्यामेव जघन्यस्थितौ मुक्त्वा—अवस्थाप्य शेषाण्यनुभागस्थानानि गच्छन्ति तदुपरितनस्थितावनन्तरसमये, किं तस्यां तावन्मात्राण्येवानु-भागस्थानानि भवन्ति, नैवं, तानि च तदेकदेशतोऽन्यानि च भवन्तीति गाथार्थः ॥ ८३ ॥

**एवं उवरिं हुत्ता गंतूणं कंडमेत्तठितिबंधा। पढमठ्ठिइठाणाणं अणुकड्ढी जाइ परिणिठ्ठं ॥ ८४ ॥**

व्याख्या—असङ्ख्येयभागोऽसङ्ख्येयभागस्तिष्ठति स्थित्यां स्थित्यां जघन्यस्थित्यनुभागस्थानेभ्योऽनेन विधिना उपर्युपरिस्थितिस्थानेषु गच्छतः 'कण्डकमात्रान्' पल्योपमासङ्ख्येयभागमात्रान् स्थितिबन्धान् गत्वा प्रथमजघन्यस्थित्यनुभाग-

साम्प्रतमनुभागस्थानानां स्थितिस्थानवृद्धौ यथाऽनुत्कृष्टिर्भवति तथोच्यते तीव्रमन्दत्वजिज्ञासार्थम्—

**गंठीदेसे सण्णी अभव्वजीवस्स जो ठिईबंधो । समयवुढीए तस्स उ बंधा अणुकड्ढिओ तत्तो ॥ ७८॥**

व्याख्या—ग्रन्थ्यां यदाऽभव्यजीवः संज्ञी भवति, अथ तस्याभव्यस्य यः स्थितिबन्धः तस्माद् बन्धात् स्थितिवृद्धौ सत्या मनुकर्षणमनुकृष्टिरनुभागस्थानानां, ताश्च सर्वप्रकृतिविषया यथानुकृष्टयो भवन्ति, तथोच्यन्ते । तुशब्दात् कासाञ्चित्तत् हीनतर-बन्धाद् भवन्तीति गाथार्थः ॥ ७९ ॥

**वग्गे वग्गे अणुकड्ढि तिव्वमंदत्तणाइ तुल्लाइ । उवघायघाइपयडी कुवण्णनवगं असुभवग्गो ॥ ७९ ॥**

व्याख्या—चत्वारोऽस्यां प्रकृतिसमुदाया भवन्ति, तेभ्यो वर्गे वर्गे—प्रकृतिसङ्घाते प्रकृतिसङ्घाते, तीव्रमन्दत्वानि अनुभाग-स्थानानां तुल्यानि, यथा वर्गादिप्रकृतेः तथा तेनैव क्रमेण तद्वर्गशेषाणामपीति भावः । 'उपघातघातिप्रकृतयः कुवर्णनवकं' चेति, ज्ञानदर्शनावरणमोहनीयान्तरायप्रकृतयः पञ्चचत्वारिंशदुपघातकुवर्णनवकसहिताः पञ्चपञ्चाशदशुभप्रकृतिवर्गोऽयमिति गाथार्थः ॥ ७९ ॥

**परघायबंधणतणू अंगसुवण्णाइ तीत्थनिम्माणं । अगुरुलहूसासतिगं संघायछयालशुभवग्गो ॥ ८० ॥**

व्याख्या—पराघातं बन्धनानि पञ्चदश पञ्च शरीराणि त्रीण्यङ्गोपाङ्गानि शुभवर्णैकादशकं तीर्थङ्करं निर्माणागुरुलघू-च्छ्वासोद्योतातपपञ्चसङ्घाता एताः षट्चत्वारिंशत्प्रकृतयः शुभवर्गो द्वितीय इति गाथार्थः ॥ ८० ॥

**सायं थिराइ उच्चं सुरमणु दो दो पणिंदि चउरंसं । रिसहपसत्थाविहगइ सोलस परियत्तसुभवग्गो ॥८१॥**

क
ब
प्रब

शुभप्रकृतीनां पूर्वप्रतिपादितानां उत्कृष्टे स्थितिबन्धे यः सर्वोत्कृष्टो हेतुरतितीव्रकषायोदयस्तस्माद् विपरीतं भवत्येवमेवाशेष- पूर्वोक्तमिति गाथार्थः ॥ ७४ ॥

पूर्वोक्तमर्थं व्यञ्जयति—

**थोवाणुभागठाणा जहण्णठितिबंध असुभपगईणं । समयवुड्ढीए किंचाहियाइ सुहियाण विवरीयं ॥७५॥**

व्याख्या—स्तोकान्यनुभागस्थानानि जघन्यस्थितिबन्धेऽशुभप्रकृतीनां भवन्ति, तस्या जघन्यस्थितेः समयवृद्धौ विशेषाधिकानि विशेषाधिकानि शुभप्रकृतीनामेतदेव विपरीतं उत्कृष्टस्थितेरारभ्य गृह्यते इति गाथार्थः ॥ ७५ ॥

**पलियासंखियमेत्ता ठितिठाणा गंतु गंतु दुगुणाइं । आवलिअसंखमेत्ता गुणा गुणंतरमसंखगुणं ॥ ७६ ॥**

व्याख्या—अशुभप्रकृतीनां जघन्यस्थितेः शुभप्रकृतीनामुत्कृष्टस्थितेरारभ्य पल्योपमासङ्ख्येयभागमात्राः स्थितीर्गत्वा यत्स्थितिस्थानं तस्मिन् पूर्वानुभागस्थानेभ्यो द्विगुणान्यनुभागस्थानानि भवन्ति, एवं भूयो भूयो द्विगुणानि पल्योपमाऽसङ्ख्येयभागमात्रा स्थितीरुल्लङ्घ्य भवन्ति, जघन्योत्कृष्टस्थित्यन्तरे कियन्ति द्विगुणस्थानानि ? आवलिकासङ्ख्येयभागमात्राणि सर्वद्विगुणस्थानेभ्य एकगुणान्तरस्थितिस्थानानि असङ्ख्येयगुणानि भवन्तीति गाथार्थः ॥ ७६ ॥

**सव्वजहण्णुठिईए सव्वाण वि आउगाण थोवाणि । ठाणाणि उत्तरासुं असंखगुणणाएँ सेढीए ॥७७॥**

व्याख्या—सर्वेषामायुषां जघन्यस्थितौ सर्वस्तोकान्यनुभागस्थानानि उत्तरासु समयवृद्धास्वनुभागस्थानान्यसङ्ख्येयगुणश्रेण्या भूयो भूयो यावदुत्कृष्टा स्थितिस्तावन्नेतव्यानीति गाथार्थः ॥ ७७ ॥

स्थानं वा परिणामस्थानं वा एकोऽर्थः, यस्मादेकस्थितिनिष्पादकाः सर्वेऽपि, अतः एकं कषायस्थानम् । स्थानशब्दस्य लुप्तत्वादेकैककषायोदयस्थाने स्थितिस्थानेऽसङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यनुभागस्थानानि भवन्तीति गाथार्थः ॥ ७१ ॥

**थोवाणुभागठाणा जहण्णठितिपढमबंधहेउंमि । तत्तो विसेसअहिया जा चरिमाए चरमहेऊ ॥ ७२ ॥**

व्याख्या—स्तोकान्यनुभागस्थानानि जघन्यस्थितिबन्धस्य प्रथमहेतौ भवन्ति, प्रथमहेतुग्रहणं तस्या एव जघन्यस्थितेरसङ्ख्येयहेतुविशेषख्यापनार्थम् । अनन्तरोपनिधिकामाश्रित्य हेतुविशेषे हेतुविशेषे विशेषाधिकानि विशेषधिकान्यनुभागस्थानानि भवन्ति, जघन्यस्थितिजघन्यहेतोरारभ्य यावदुत्कृष्टस्थितेरुत्कृष्टं हेतुस्थानं तावद्विशेषाधिकानि विशेषाधिकानि अनुभागस्थानानि भवन्तीति गाथार्थः ॥ ७२ ॥

**गंतुमसंखा लोगा पढमाहिंतो भवन्ति दुगुणाणि । आवलिअसंखभागो दुगुणठाणाण संवग्गो ॥ ७३ ॥**

व्याख्या—जघन्यकषायोदयस्थानादसङ्ख्येयलोकप्रमाणानि कषायोदयस्थानान्युल्लङ्घ्य यत्कषायोदयस्थानं तस्मिन्नाद्यानुभागस्थानेभ्यो द्विगुणान्यनुभागस्थानानि भवन्ति, एवं भूयोभूयो नेतव्यम्, यावदुत्कृष्टकषायोदयस्थानम् । एवं विधिना नयतः कियन्ति द्विगुणस्थानानि भवन्ति, सर्वाणि द्विगुणस्थानानि संवर्गितानि मीलितान्यावलिकासङ्ख्येयभागमात्राणि भवन्तीति गाथार्थः ॥ ७३ ॥

**असुभपगईण एवं इयराणुक्कोसगंमि ठितिबंधे । सव्वुक्कोसगहेऊ उ होइ एवं चिय असेसं ॥ ७४ ॥**

व्याख्या—अशुभप्रकृतीनां पूर्वप्रतिपादितानां एवमनन्तरोक्तेन विधिना अनुभागस्थानान्यवगन्तव्यानि, 'इतरासां'

जघन्यचतुःपञ्चषट्सप्ताष्टसामयिकानीति भावः, विशेषाधिकं कालं स्पृष्टानि, तेभ्योऽप्यशेषाणि सर्वाणीति विशेषाधिकं कालं स्पृष्टानीति गाथार्थः ॥ ६९ ॥ द्वारम् ॥

**फासणकालप्पबहू जह तह जीवाण भणसु ठाणेसु । अणुभागबंधठाणा अज्झवसाया व एगट्ठा ॥ ७० ॥**

॥ जीवसमुदाहार इति ॥

व्याख्या—स्पर्शनकालस्य यथाल्पबहुत्वं तथा जीवानामपि अल्पबहुत्वं भण स्थानेषु । उत्कृष्टेषु द्विसामयिकेषु स्थानेषु स्तोका जीवाः, जघन्यचतुःसामयिकेष्वसङ्ख्येयगुणाः, एवमुपरि चतुःसामयिकेष्वपि, तेभ्योऽसङ्ख्येयगुणा यवमध्ये, तेभ्योऽपि त्रिसामयिकस्थानेष्वसङ्ख्येयगुणा जीवास्तिष्ठन्ति, तेभ्योऽप्यसङ्ख्येयगुणा अधः कण्डके, उपरितनकण्डकेऽप्येतावन्मात्रा एव, मध्योपरिस्थानेषु विशेषाधिका जीवाः, उपरितनकण्डकाधःस्थानेषु विशेषाधिकाः, सर्वेष्वपि विशेषाधिकाः । अनुभागबन्धस्थानानि अध्यवसायस्थानानि वा सङ्क्लेशविशुद्धिस्थानानि वा कारणस्य कार्यत्वादेकार्थिकानीति गाथार्थः॥६२॥ अनुभागस्थानेषु जीवसमुदाहारः समाप्तः ।

एकैकस्थितिस्थाने कियन्त्यनुभागस्थानानि भवन्त्येतदभिधातुकाम आह—

**ठितिठाणे ठितिठाणे कसायउदया असंखलोगसमा । एक्केक्ककसायउदये एवं अणुभागठाणाइं ॥ ७१ ॥**

व्याख्या—प्राक्स्थितेः समयोत्तरान्या स्थितिः स्थितिस्थानमुच्यते स्थितिस्थाने स्थितिस्थाने प्रत्येकं कषायोदयाः तीव्रमन्दादिभेदभिन्नाः असङ्ख्येयलोकाकाशप्रदेशप्रमाणा भवन्ति, इयन्मात्रैः कषायोदयविशेषैः कषायोदयस्थानं वा स्थिति

ख्येयगुणाः । नानात्रसजीवेषु गुणहानिस्थानानि स्तोकानि, एकस्मिन् हानिवृद्धिस्थानयोर्विवरे असङ्ख्येयगुणानि अध्यवसाय-स्थानानि । स्थावरजीवेषु पुनर्यानि हान्योर्वृद्ध्योर्वा एकान्तरस्थानानि तेभ्यो द्विगुणस्थानानि हानिस्थानानि वा भवन्ति असङ्ख्येयगुणानीति गाथार्थः ॥ ६६ ॥ द्वारम् ॥

**जवमज्झे ठाणाइं असंखभागो उ सेसठाणाणं । हेट्ठंमि होंति थोवा उवरिंमि असंखगुणियाणि ॥ ६७ ॥**

व्याख्या—यवमध्यस्थानानि अष्टसामयिकान्यसङ्ख्येयभागमात्राणि शेषस्थानानां, यवमध्यादधःस्थानेषु स्तोकानि, यवमध्योपरिस्थानेष्वसङ्ख्येयगुणानि भवन्तीति गाथार्थः ॥ ६७ ॥

**दुगचउरट्ठितिसमङग सेसा य असंखगुणणया कमसो । काले अईए पुट्ठा जिएण ठाणा भमंतेण ॥ ६८ ॥**

व्याख्या—द्विसामयिकान्युत्कृष्टाध्यवसायस्थानानि जीवेनाऽतीते काले भ्रमता सर्वस्तोकं कालं स्पृष्टानि, तस्मादसङ्ख्येयगुणं कालं चतुःसामयिकानि जघन्यस्थानानि, यवमध्योपरि चतुःसामयिकान्यप्येतावन्मात्रमेव कालं स्पृष्टानि, तस्माद् यवमध्यस्थानानि असङ्ख्येयगुणं कालं स्पृष्टानि, तस्मात् त्रिसामयिकान्यसङ्ख्येयगुणं कालं स्पृष्टानि, तस्मादप्युभयकण्डकस्थानानि पञ्चषट्सप्तसामयिकानि कण्डकस्थानान्युच्यन्ते, त्रिसामयिकेभ्य उभयकण्डकस्थानान्यसङ्ख्येयगुणं कालं अतीते काले स्पृष्टानीति गाथार्थः ॥ ६८ ॥

**तत्तो विसेसअहियं जवमज्झा उवरिमाइ ठाणाइं । तत्तो कंडगहेट्ठा तत्तो वि हु सव्वठाणाइं ॥ ६९ ॥**

व्याख्या—तस्मात् कण्डककालाद्विशेषाधिकं कालं यवमध्योपरिस्थानानि स्पृष्टानि, तेभ्योऽप्युपरितनकण्डकाधःस्थानानि

**दो आइ जाव आवलि असंखभागो निरंतरतसेहिं । दारं । नाणाजिएहि ठाणं असुण्णयं आवलिअसंखं ॥६२॥**

व्याख्या—द्वे स्थाने आदौ कृत्वा यावदावलिकासङ्ख्येयभागमात्राणि स्थानानि तावत्त्रसैर्जीवैर्निरन्तराणि भवन्ति, तेषां तदसङ्ख्येयभागमात्रत्वादिति । नानाजीवैरशून्यमेकैकस्थानं समयाद्यावलिकाऽसङ्ख्येयभागमात्रं कालं परतोऽवश्यं त्रसैः शून्यं भवति, न स्थावरैः स्वमायोग्यं, तेषामनन्तत्वादिति गाथार्थः ॥ ६५ ॥

वृद्धिप्ररूपणा द्विविधा, अनन्तरवृद्धिप्ररूपणा, परम्परवृद्धिप्ररूपणा च,—

**जवमज्झं मि य बहवो विसेसहीणाउ उभयओ कमसो । गंतुमसंखा लोगा अद्धद्धा उभयओ जीवा ॥६५॥**

व्याख्या—यवमध्याध्यवसायस्थाने बहवो जीवाः, तदधःस्थाने विशेषहीना विशेषहीनाः, यावत् सर्वजघन्ये विशेषहीनाः । यवमध्यादुत्कृष्टे च द्विसामयिके विशेषहीनाः क्रमशो भवन्ति । गतानन्तरोपनिधा । परम्परवृद्धौ यवमध्याध्यवसायस्थानजीवेभ्य उभयपार्श्वयोरसङ्ख्येयलोकाकाशप्रदेशमात्राण्यध्यवसायस्थानान्युल्लङ्घ्य यत् स्थानं तस्मिन्नर्द्धा जीवा भवन्ति, एवं भूयो भूयो नेतव्यम्, यावज्जघन्यं स्थानं जघन्यस्थानादेवं द्विगुणवृद्धिर्यावद्यवमध्यं, परतो हानिः यावदुत्कृष्टं द्विसामयिकाध्यवसायस्थानमिति गाथार्थः ॥ ६५ ॥

**आवलिअसंखभागं तसेसु हाणीण होइ परिमाणं । हाणिदुगंतरठाणा थावरहाणी असंखगुणा ॥ ६६ ॥**

व्याख्या—द्विगुणजीववृद्धिस्थानानां हानिस्थानानां च त्रसविषये आवलिकासङ्ख्येयभागमात्रं भवति प्रमाणम्, त्रसहान्योर्द्वयोर्यान्यन्तरालेऽध्यवसायस्थानानि एकस्मिन्नन्तरे हान्योर्वृद्धयोर्वा स्थानानि स्थावरहानयोर्द्विगुणवृद्धयो वा भवन्त्यसङ्-

असंख्येयगुणानि सङ्ख्येयगुणेभ्यः एवमनन्तगुणान्यप्यसङ्ख्येयगुणानि भवन्ति,[एकमसङ्ख्येयगुणं द्वे सङ्ख्येयगुणे द्वे असङ्ख्येयगुणे] (यतः प्रथममनन्तगुणमादौ कृत्वा यानि अनन्तभागवृद्धानि असंख्येयभागवृद्धानि संख्येयभागवृद्धानि संख्येयगुणवृद्धानि असंख्येयगुणवृद्धानि अनन्तगुणवृद्धानि एतानि सर्वाण्यप्यसंख्येयगुणानि वस्तुस्थित्याऽनन्तगुणानि भवन्ति)स्वपूर्वस्थानादिति गाथार्थः ६०

उक्तान्यनुभागबन्धाध्यवसायस्थानानि, साम्पतं यद्विधिना तेषु जीवाः तिष्ठन्ति तमाह—

**एगट्ठाणपमाणं अंतरठाणा निरन्तराठाणा । कालो वुड्ढी जवमज्झफासणा अप्पबहु दारा ॥ ६१ ॥**

व्याख्या—द्वारगाथेयम्, एकस्मिन् स्थाने जीवप्रमाणप्ररूपणा, अन्तरस्थानप्ररूपणा, निरन्तरस्थानप्ररूपणा स्थितिकालप्ररूपणा, वृद्धिप्ररूपणा, यवमध्यप्ररूपणा, स्पर्शनप्ररूपणा, अल्पबहुत्वप्ररूपणा, कार्येति गाथार्थः ॥ ६१ ॥

**एक्केक्कंमि असंखा तसेयराणंतया सपाउग्गे । एगाइ जाव आवलि असंखभागो तसा ठाणे ॥ ६२ ॥ दारम् ॥**

व्याख्या—एकैकस्मिन्नध्यवसायस्थाने एकाद्यसङ्ख्या एकादयः यावदावलिकाऽसङ्ख्येयभागमात्रास्त्रसजीवा स्वप्रायोग्ये भवन्ति । 'इतराः' स्थावरा एकैकाध्यवसायस्थाने स्वप्रायोग्येऽनन्ता जीवास्तिष्ठन्तीति गाथार्थः ॥ ६२ ॥ द्वारम् ।

**तस जुत्तठाणविवरेसु सुण्णया होंति एक्कमाईया । जाव असंखा लोगा निरन्तरा थावरा ठाणा ॥ ६२ ॥**

व्याख्या—त्रसजीवैर्यानि युक्तान्यध्यवसायस्थानानि तद्विवरेषु शून्यान्यध्यवसायस्थानानि एकाद्यानि यावदसङ्ख्येयलोकाकाशप्रमाणानि भवन्ति । स्थावरप्रायोग्यानि अध्यवसायस्थानानि निरन्तराण्यव्यवच्छिन्नानि तेषामनन्तत्वाद् भवन्तीति गाथार्थः ॥ ६३ ॥ द्वारम् ॥

सङ्ख्येयभागवृद्धानि त्रीण्यपि सङ्ख्येयभागवृद्धित्वं भजन्ते यावद् द्वितीयं सङ्ख्येयभागवृद्धिस्थानं नायाति, द्वितीये भासे द्वाभ्यां सङ्ख्येयभागाभ्यां सातिरेकाभ्यां वर्द्धते, यावत्तृतीयं नायाति, एवं त्रिचतुरादिस्थानेष्वपि वक्तव्यम्, यावदुत्कृष्टं सङ्ख्येयभागवृद्धिस्थानं, चरमादसङ्ख्येयभागवृद्धिस्थानादारभ्य यावदन्तिमं सङ्ख्येयभागवृद्धिस्थानं नोत्तिष्ठति तावत्तयोरन्तराले सर्वाण्यपि सङ्ख्येयभागवृद्धिस्थानानि भवन्ति एकहीनानि, यत उत्कृष्टसङ्ख्येयभागाधिकं स्थानं प्रथमात् सङ्ख्येयगुणं भवति। असङ्ख्येयभागवृद्धिस्थानेषु यावन्मात्रमेकमन्तरं तादृग्भूतान्यन्तराण्युत्कृष्टसङ्ख्येयतुल्यानीति कृत्वा असङ्ख्येयभागवृद्धिस्थानेभ्यः सङ्ख्येयभागवृद्धानि स्थानानि सङ्ख्येयगुणानि भवन्ति, एवं द्वितीयवृद्धेस्तृतीयवृद्धिः सङ्ख्येयगुणा। सङ्ख्येयभागवृद्धिस्थानेभ्यः सङ्ख्येयगुण (वृद्ध) स्थानानि सङ्ख्येयगुणानि भवन्ति, कस्मात्? उच्यते सङ्ख्येयभागाभ्यधिकात् स्थानादुत्कृष्टसङ्ख्येयतुल्यान्येकस्मिन्नन्तरे सङ्ख्येयभागवृद्धिस्थानान्युत्थितानि तदन्तस्थानद्विगुणं साधिकं भवति, भूयस्तावन्ति स्थानानि गत्वा त्रिगुणं साधिकं भवति, एवं चतुर्गुणं, एवमुत्कृष्टसङ्ख्येयतुल्यानि द्विगुणवृद्धि स्थानान्यन्तरेषु लब्धानि तदन्तिमं सङ्ख्येयभागाभ्यधिकं स्थानं जघन्यासङ्ख्येयगुणकगुणं भवति, तस्मात् सङ्ख्येयगुणस्थानानि सङ्ख्येयभागवृद्धिस्थानेभ्यः सङ्ख्येयगुणानि भवन्ति, यतः सङ्ख्येयभागवृद्धिसङ्ख्येयगुणवृद्धिस्थानानि द्वे अपि स्वपूर्वस्थानेभ्यः सङ्ख्येयगुणानि भवन्ति। असङ्ख्येयगुणानन्तगुणस्थानानि यथा परं द्वे अप्यसङ्ख्येयगुणे भवतः। सङ्ख्येयगुणस्थानेभ्योऽसङ्ख्येयगुणस्थानानि असङ्ख्येयगुणानि भवन्ति, यतः—प्रथमसङ्ख्येयगुणमादौ कृत्वा यान्यनन्तभागवृद्धानि असङ्ख्येयभागवृद्धानि संख्येयभागवृद्धानि संख्येयगुणवृद्धानि असंख्येयगुणवृद्धानि एतानि सर्वाण्यपि असङ्ख्येयगुणानि भवन्ति पूर्वस्थानादिति

**सव्वत्थोवा ठाणा अणंतगुणणाएँ जे उ गच्छंति । तत्तो असंखगुणियाऽणंतरवुड्ढीएँ जह हेट्ठा ॥ ५९ ॥**

व्याख्या—सर्वस्तोकानि स्थानान्यनन्तगुणनया यानि गच्छन्ति, तेभ्योऽप्यसङ्ख्येयगुणान्यसङ्ख्येयगुणस्थानानि, को गुणकारः? कण्डकगुणः कण्डकमक्षेपः, यस्मात्? एकैकस्यानन्तगुणस्थानस्याधोऽसङ्ख्येयगुणस्थानानि कण्डकमात्राणि भवन्ति तेन कण्डकगुणकारः, उपरितनकण्डकमक्षेपः, यस्मात्प्रक्षेपकण्डकस्योपरि नास्ति अनन्तगुणवृद्धस्थानम् । एवमसङ्ख्येयगुणेभ्यः सङ्ख्येयगुणानि स्थानान्यसङ्ख्येयगुणानि, तेभ्योऽपि सङ्ख्येयभागवृद्धानि, तेभ्योऽपि असङ्ख्येयभागवृद्धानि स्थानानि, तेभ्योऽपि अनन्तभागवृद्धानि स्थानान्यसङ्ख्येयगुणानि भवन्ति । तुशब्दात् पर्यवसानस्थानमनन्तगुणवृद्धं ज्ञेयमिति गाथार्थः ॥ ५९ ॥

उक्तं पर्यवसानद्वारम्, अनन्तरोपनिधा च ।

**होंति परंपरवुड्ढीए थोवाणंतभागवुड्ढी जे । अस्संखसंखगुणिया एक्कं दो दो असंखगुणा ॥ ६० ॥ दारं ॥**

व्याख्या—भवन्ति परम्परवृद्धौ स्तोकान्यनन्तभागोत्तरस्थानानि, तेभ्योऽसङ्ख्येयभागोत्तराण्यसङ्ख्येयगुणानि, कस्मात्? अनन्तभागवृद्धया कण्डकं गत्वाऽसङ्ख्येयभागवृद्धिस्थानं भवति, यदीदमेवासङ्ख्येयभागाभ्यधिकं ततस्तदुपरितनानि सुतरामसङ्ख्येयभागोत्तराणि भवन्ति, एवमुपर्युपरिस्थानान्यसङ्ख्येयभागाभ्यधिकानि विशेषतो भवन्ति, यावत् सङ्ख्येयभागाभ्यधिकं स्थानं नोत्तिष्ठति तावत्तदन्तराले सर्वाण्यप्यसङ्ख्येयभागवृद्धानि, तस्मादनन्तभागवृद्धेभ्यः असङ्ख्येयभागवृद्धानि असङ्ख्येयगुणानि । एतदेकं वृद्धिस्थानमसङ्ख्येयगुणं (भागं) पूर्वस्थानाद् गतं, अस्मात् सङ्ख्येयभागवृद्धिस्थानानि सङ्ख्येयगुणानि, कस्मात्? उच्यते—सङ्ख्येयभागवृद्धिस्थानादधःस्थानमधिकृत्य सङ्ख्येयभागवृद्धिरुपरितनेष्वभिधीयते, यतस्तदुपरिस्थानान्यनन्तभागासङ्ख्येयभग-

लिकाऽसङ्ख्येयभागमात्रं कालं वर्द्धन्ते हीयन्ते वा, जघन्यतः समयमेकं सर्वा वर्द्धन्ते, हीयन्ते वा। गता वृद्धिकालप्ररूपणा। यवमध्यविधानं योगस्थानेषूक्तम्। केषाञ्चिदनुभागस्थानानां चत्वारः समया उत्कृष्टोऽवस्थानकालः, केषाञ्चिचित् पञ्च षड् सप्ताष्टौ, पुनः सप्तषट्पञ्चचतुःत्रिद्विसमया, एकैकस्थानेऽसङ्ख्येयलोकाकाशप्रदेशमात्राण्यनुभागबन्धाध्यवसायस्थानानि भवन्ति। जघन्यस्थितिः सर्वेष्वेकसमयः। अत्र द्वौ विकल्पौ अनन्तगुणवृद्धिहान्यात्मकौ अष्टसमयस्थितिकौ, किमुक्तं भवति—निरन्तराणि अनन्तगुणवृद्ध्याऽसङ्ख्येयलोकप्रमाणानि स्थानानि भवन्ति, तत्स्थानेभ्यः सप्तसामयिकान्युभयत्रासङ्ख्येयगुणानि, एवं षट्पञ्चचतुस्त्रिद्विसमयस्थितिकानि अप्यसङ्ख्येयगुणानि यथापरं जघन्योत्कृष्टतराणीति गाथार्थः ॥ ५६ ॥

**सुहुमागणिपविसंता चिट्ठंता तेसि कायठितिकालो। कमसो असंखगुणिया तत्तो अणुभागठाणाइं ॥ ५७ ॥**

व्याख्या—सूक्ष्माग्निकाये प्रतिसमयमसङ्ख्येया जीवाः प्रविशन्त्युत्पद्यन्ते, तेभ्योऽसङ्ख्येयगुणाः सूक्ष्माग्निकाये तिष्ठन्ति, तेभ्योऽपि तत्कायस्थितिकालोऽसङ्ख्येयगुणः, तस्मादप्यसङ्ख्येयगुणान्यनुभागबन्धाध्यवसायस्थानानि भवन्तीति गाथार्थः॥५७॥

उक्ता यवमध्यप्ररूपणा।

**कलिदावरतेयकडजुमसण्णिया होंति रासिणो कमसो। एगाइ सेसगा, चउहियंमि कडजुम्म इह सव्वे॥५८॥**

व्याख्या—कलिद्वापरत्रेताकृतयुगसंज्ञाश्चत्वारो राशयो भवन्ति, चतुर्विभक्ते एकशेषः कलिसंज्ञो, द्विशेषो द्वापरसंज्ञः त्रिशेषः त्रेता संज्ञः, निश्शेषः कृतयुगसंज्ञः अविभागवर्गणास्पर्द्धकस्थानकण्डराशयः सर्वेऽपि कृतयुगसंज्ञा भवन्तीति गाथार्थः ॥ ५८ ॥

उक्ता ओजादिप्ररूपणा ॥

ज्यन्तरा वृद्धिः, 'कण्डस्स वग्गवग्गो' त्ति, कण्डकस्य वर्गवर्गः कण्डकघनो वर्गश्च त्रिगुणः कण्डकं च स्थानानां ऽयन्तरवृद्धौ स्युः किमुक्तं भवति–प्रथमादसङ्ख्येयगुणस्थानादधः कियन्त्यनन्तभागवृद्धिस्थानानि? कण्डकस्य वर्गवर्गसङ्ख्यानि कण्डकघनवर्गौ त्रिगुणौ कण्डकमात्राणि च। प्रथमादनन्तगुणस्थानादधः कियन्त्यसङ्ख्येयभागवृद्धिस्थानानि कण्डकस्य वर्गवर्गः त्रिगुणघनः त्रिगुण-वर्गः कण्डकमात्राणि तुशब्दाज्ञ्यन्तरवृद्धौ भवन्तीति गाथार्थः ॥ ५३ ॥

**अडकंडवग्गवग्गा, वग्गाचत्तारि छग्घणा कंडं। चउअन्तरवुड्ढीए हेट्ठाणप्परूवणया ॥ ५४ ॥**

व्याख्या—कण्डकस्याष्ट वर्गवर्गाश्चत्वारो वर्गाः कण्डकस्य षट् घनाः कण्डकं चतुरन्तरवृद्धौ स्थानानां भवन्ति। किमुक्तं भवति–प्रथमादनन्तगुणस्थानादधः कियन्त्यनन्तभागवृद्धिस्थानानि? कण्डकवर्गवर्गोऽष्टगुणः वर्गश्चतुर्गुणः घनः षड्गुणः कण्डकं च चतुरन्तरवृद्धौ स्थानानां भवन्ति। इयमधः स्थानप्ररूपणेति गाथार्थः ॥ ५४ ॥

**परिणामपच्चएणं एसा णेहस्स छव्विहा वुड्ढी। हाणी व कुणंति जिया आवलिभागं असंखेज्जा ॥५५॥**

व्याख्या—परिणामप्रत्ययत एषा ऽनन्तरोक्ता स्नेहस्यानुभागस्य षड्विधा वृद्धिर्भवति, हानिर्वा एवमेव कुर्वन्ति। कियन्तं कालं? आवलिकासङ्ख्येयभागमात्रं निरन्तरां हानिं वृद्धिं वा जीवाः कुर्वन्तीति गाथार्थः ॥ ५५ ॥

विशेषमाह—

**अंतमुहुत्तं चरिमाउ, दोवि समयं तु पुण जहण्णेण। जवमज्झविहाणेणं, एत्थ विगप्पा बहू ठिइया ॥ ५६ ॥**

व्याख्या—अन्तर्मुहूर्तमात्रं कालमुत्कृष्टतो भवतः, पश्चिमे द्वे अपि अनन्तगुणवृद्धिहानिसंज्ञे। शेषा उभयत्र पश्चात्प्राव-

वृद्धिस्थानानि ? कण्डकमात्राणि । प्रथमात् सङ्ख्येयगुणस्थानादधः कियन्ति सङ्ख्येयभागवृद्धिस्थानानि ? कण्डकमात्राणि । प्रथमादसङ्ख्येयगुणस्थानादधः कियन्ति सङ्ख्येयगुणस्थानानि ? कण्डकमात्राणि । प्रथमादनन्तगुणस्थानादधः कियन्त्यसङ्ख्येयगुणस्थानानि ? कण्डकमात्राणि । उक्तमनन्तरस्थानप्रमाणम् । एकान्तरा पुनर्वृद्धिः कण्डकाधिककण्डकवर्गप्रमाणा भवति। प्रथमात् सङ्ख्येयभागवृद्धिस्थानादधः कियन्त्यनन्तभागवृद्धानि ? कण्डकाधिककण्डकवर्गप्रमाणानि प्रथमात् सङ्ख्येयगुणस्थानादधः कियन्त्यसङ्ख्येयभागोत्तराणि ? कण्डकाधिककण्डकवर्गमात्राणि । प्रथमादसङ्ख्येयगुणस्थानादधः कियन्ति सङ्ख्येयभागोत्तराणि ? कण्डकाधिककण्डकवर्गप्रमाणानि प्रथमादनन्तगुणस्थानादधः कियन्ति सङ्ख्येयगुणस्थानानि ? कण्डकाधिककण्डकवर्गप्रमाणानि । उक्तमेकान्तरस्थानप्रमाणम् । सर्वजीवानन्तकेन यद्भागलब्धं तदन्तभागोत्तरम्, स्वस्थानोपरितनस्थानस्यासङ्ख्येयलोकाकाशप्रदेशभागलब्धोत्तराणि (अ) सङ्ख्येयभागोत्तरस्थानानि स्वाधःस्थानात् । रूपोनजघन्यासङ्ख्येयभागलब्धोत्तराणि सङ्ख्येयभागाधिकस्थानानि स्वाधःस्थितस्थानात् । एवं गुणा अपि कर्त्तव्या इति गाथार्थः ॥ ५२ ॥

कंडं कंडस्स घणो वग्गो दुगुणो दुअंतराए उ । कंडस्स वग्गवग्गो घणवग्गातिगुणिया कंडं ॥५३॥

व्याख्या—द्व्यन्तरवृद्धौ स्थानानि कण्डकघनसङ्ख्यानि कण्डकवर्गद्विगुणसङ्ख्यानि कण्डकं च स्थानानां स्युः किमुक्तं भवति—प्रथमसङ्ख्येयगुणवृद्धिस्थानादधः कियन्त्यनन्तभागवृद्धिस्थानानि ? कण्डकघनः कण्डकवर्गो द्विगुणः कण्डमात्राणि च भवन्ति । प्रथमासङ्ख्येयगुणस्थानादधः कियन्त्यसङ्ख्येयभागवृद्धिस्थानानि ? कण्डकवर्गो द्विगुणः कण्डकघनः कण्डकमात्राणि च भवन्ति प्रथमादनन्तगुणवृद्धिस्थानादधः कियन्ति सङ्ख्येयभागवृद्धानि ? कण्डकघनः कण्डकवर्गो द्विगुणः कण्डकमात्राणि भवन्ति । गता

१०००० १०००० १०००० २०००० १०००० १०००० १०००० १०००० ३०००० १०००० १०००० १००००
१०००० २०००० १०००० १०००० १०००० १०००० २००० १०००० १०००० १०००० १०००० २००००
१०००० १०००० १०००० १०००० २०००० १०००० १०००० १०००० १०००० ३०००० १०००० १००००
१०००० १०००० २०००० १०००० १०००० १०००० १०००० २०००० १०००० १०००० १०००० १००००
२०००० १०००० १०००० १०००० १०००० २०००० १०००० १०००० १०००० १०००० ४००००

एवं चतुर्भिश्चतुष्कैर्द्वितीयपञ्चकः पातनीयः, ततस्तृतीयः चतुर्थश्च पञ्चकः पातनीयः ततो मूलादारभ्य तावत्तदेव पातनीयम्, यावत्पञ्चकाधस्तनकण्डकमिति एवं चतुर्भिर्बिन्दुभिः समुत्थितैरेकैक उत्तिष्ठति, चतुर्भिरेककैः समुच्छ्रितैर्द्विक उत्तिष्ठति, चतुर्भिर्द्विकैः समुत्थितैस्त्रिक उत्तिष्ठति चतुर्भिस्त्रिकः समुत्थितैः चतुष्कः पुनरुत्तिष्ठति, चतुर्भिः चतुष्कैः समुत्थितैः पञ्चक उत्तिष्ठति, एवं भूयो भूयश्चतुर्भिः पञ्चकैरुत्थितैः षट्स्थानं समाप्तिमुपयाति। तस्मादन्तिमादनन्तगुणवृद्धिस्थानादन्यदूर्ध्वः तेनैव क्रमेण षट्स्थानमारभ्यते यावदसङ्ख्येया लोकाः षट्स्थानानाम्। शून्याद्यङ्कानां क्रमात् वृद्धानामभिधानानि चतुःस्थानस्य कण्डकाभिधानपरिकल्पना एवं भाव्या ॥ ५१ ॥

**सव्वासिं वुड्ढीणं, कंडगमेत्ता अणंतरा वुड्ढी। एगंतराउवुड्ढी वग्गं कंडस्स कंडं च ॥ ५२ ॥**

व्याख्या—सर्वासां षट्स्थानकवृद्धीनां कण्डकमात्रा अनन्तरा वृद्धिर्भवति। किमुक्तं भवति,—प्रथमादसङ्ख्येयभागवृद्धिस्थानादधः कियन्त्यनन्तभागवृद्धिस्थानानि? कण्डकमात्राणि। प्रथमात् सङ्ख्येयभागवृद्धिस्थानादधः कियन्त्यसङ्ख्येयभाग-

१०००० १०००० १०००० ३०००० १०००० १०००० १०००० १०००० २०००० १०००० १०००० १००००

१०००० २०००० १०००० १०००० १०००० १०००० २०००० १०००० १०००० १०००० १०००० २००००

१०००० १०००० १०००० १०००० ३०००० १०००० १०००० १०००० १०००० २०००० १०००० १००००

१०००० १०००० २०००० १०००० १०००० १०००० १०००० २०००० १०००० १०००० १०००० १००००

२०००० १०००० १०००० १०००० १०००० ३०००० १०००० १०००० १०००० १०००० २०००० १००००

१०००० १०००० १०००० २०००० १०००० १०००० १०००० १०००० २०००० १०००० १०००० १००००

१०००० २०००० १०००० १०००० १०००० १०००० ३०००० १०००० १०००० १०००० १०००० २००००

१०००० १०००० १०००० १०००० २०००० १०००० १०००० १०००० १०००० २०००० १०००० १००००

१०००० १०००० २०००० १०००० १०००० १०००० १०००० ५०००० १०००० १०००० १०००० १००००

२०००० १०००० १०००० १०००० १०००० २०००० १०००० १०००० १०००० १०००० २०००० १००००

१०००० १०००० १०००० २०००० १०००० १०००० १०००० १०००० ३०००० १०००० १०००० १००००

१०००० २०००० १०००० १०००० १०००० १०००० २०००० १०००० १०००० १०००० १०००० २०००० १०००० १००००

१०००० १०००० २०००० १०००० १०००० १०००० १०००० ३०००० १०००० १०००० १०००० १००००

२०००० १०००० १०००० १०००० १०००० २०००० १०००० १०००० १०००० १०००० २०००० १००००

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १०००० | १०००० | ३०,००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० |
| १०००० | १०००० | १०००० | ४०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० |
| १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० |
| १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० |
| १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० |
| १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० |
| १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० |
| १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० |
| १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | 
| १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ४०००० | १०००० | १०००० | १०००० | १०००० | २००० |
| १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |

क. प्र
बन्धन
प्रकरण

॥१२

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० |
| १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० |
| १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० |
| १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० |
| १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ४०००० | १०००० |
| १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० |
| १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० |
| १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० |
| १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० |
| १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० |
| १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० |
| १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० |

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १०००० | १०००० | १०००० | १०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० |
| १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० |
| १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० |
| १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० |
| १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० |
| १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० |
| १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० |
| १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | ४०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० |
| १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० |
| १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० |
| १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० |
| १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० |

अनुभागबन्धाध्यवसायस्थानानां भवन्ति, अनुभागबन्धविषयेऽध्यवसायैः स्थानानीति समासः। अनुभागबन्धस्याध्यवसायानां स्थानानीति वा समासः। अनुभागबन्धस्याध्यवसायानां स्थानानीति कारणं कार्यत्वेन गृहीत्वा समासः क्रियते। सर्वाण्यपि स्पर्द्धकानि तुल्यवर्गणानि, तेषामन्तराण्यपि सर्वाणि तुल्यानीति गाथार्थः ॥ ४९ ॥

उक्तानुभागबन्धाध्यवसायस्थानप्ररूपणा—

**ठाणाणं परिवुड्ढी छट्ठाणकमेण तं गयं पुव्विं। भागो गुणो य कीरति जहुत्तरं एत्थ ठाणाणं ॥ ५० ॥**

व्याख्या—अनुभागबन्धाध्यवसायस्थानानां परिवृद्धिः यथोत्तरस्थितानां भवति, सा च षट्स्थानक्रमेण, तच्च प्रागेव नामस्पर्द्धकाधिकारे षट्स्थानमभिहितं नात्राभिधीयते, षट्स्थानप्ररूपणा काण्डकप्ररूपणा च तदनुसारतो वक्तव्या, तथापि लेशतः किञ्चिदुच्यते—त्रीणि भागोत्तराणि स्थानानि, तद्यथा—अनन्तभागोत्तरमसङ्ख्येयभागोत्तरं, सङ्ख्येयभागोत्तरं च, त्रीणि गुणोत्तराणि तद्यथा—सङ्ख्येयगुणमसङ्ख्येयगुणमनन्तगुणम्। एवमत्रापि यथोत्तरमनुभागबन्धाध्यवसायस्थानविधौ तदवस्थमेव वक्तव्यमिति गाथार्थः ॥५०॥

**छट्ठाणगअवसाणे, अण्णं छट्ठाणयं पुणो अण्णं। एवमसंखा लोगा छट्ठाणाणं मुणेयव्वा ॥ ५१ ॥**

व्याख्या—अस्य षट्स्थानकस्यावसाने समाप्तावन्यत् षट्स्थानकमारभ्यते, तस्याप्यन्यत्, एवं षट्स्थानकानामसङ्ख्येया लोकाः परिपाटया यथोत्तरेणायं विशेषो मन्तव्य इति गाथार्थः ॥५१॥ प्रस्तारविधिना स्थानाशून्यार्थं षट्स्थानकं लिख्यते—

०००० १०००० १०००० १०००० १०००० २०००० १०००० १०००० १०००० १०००० २०००० १००००

एक्कज्झवसायमज्जियस्स दलियस्स किं रसो तुल्लो । न हु होंतिऽणंतभेया साहिज्जंते निसामेह ॥ ४५ ॥

व्याया—एकाध्यवसायेन गृहीतस्य दलिकस्य कर्मपुद्गलानां तेषां किमनुभावस्तुल्यो न वा ? इति न हु—नैवं, भवन्त्यनन्ता भेदाः—अनन्ता विकल्पाः तांश्च साध्यमानान्निशामयत यूयमिति गाथार्थः ॥ ४५ ॥

सव्वप्परसे गेण्हइ जे बहवे तेहिं वग्गणा पढमा । अविभागुत्तरिएहिं अण्णाउ विसेसहीणेहिं ॥ ४६ ॥

व्याख्या—सर्वाल्परसान् यान् कर्मपुद्गलान् बहून् गृह्णाति तैर्वर्गणा प्रथमा भवति, रसाविभागोत्तरैरन्यैः कर्मपुद्गलद्रव्यैर्विशेषहीनैरन्या वर्गणा, एवं भूयो भूयो भवन्तीति गाथार्थः ॥४६॥ उक्ता वर्गणा प्ररूपणा ।

दव्वेहिं वग्गणाओ सिद्धाणमणंतभागतुल्लाओ । एयं पढमं फड्डं अओ परं नत्थि रूवहिया ॥४७॥ युग्मम् ॥

व्याख्या—प्रथमपादः प्राक्तनगाथायां व्याख्यातः, सिद्धानामनन्तभागतुल्यास्ता वर्गणाः समुदिताः प्रथममनुभागस्पर्द्धकं भवति, तस्मात्परतो नास्ति रूपाधिकवर्गणा, अनुभागाविभागोत्तरा इति गाथार्थः ॥ ४७ ॥ उक्ता स्पर्द्धकप्ररूपणा,

सव्वजियाणंतगुणा पलिभागा लंघिउं पुणो अण्णा । एवं भवंति फड्डा सिद्धाणमणंतभागसमा ॥४८॥

व्याख्या—सर्वजीवानन्तगुणान् रसाविभागान् उल्लङ्घ्य प्रथमस्पर्द्धकान्त्यवर्गणायास्ततो भूयोऽपि वर्गणा भवन्ति, एवमनेन विधिना सिद्धानामनन्तभागतुल्यान्यनुभागस्पर्द्धकानि भवन्तीति गाथार्थः ॥ ४८ ॥ ॥ उक्ता अन्तरप्ररूपणा ॥

एयं एगं ठाणं एवमसंखेज्जलोगट्ठाणाणं । समवग्गणाणि फड्डाणि तेसि तुल्लाणि विवराणि ॥ ४९ ॥

व्याख्या—इयद्भिः सिद्धानन्तभागतुल्यैरेकमनुभागबन्धाध्यवसायस्थानं भवति, एवमनन्तरोक्तविधिनाऽसङ्ख्येयलोका-

यतो वेदान्यतरस्य वन्ध इति, युग्मान्यतरस्य च वन्ध इति। तुशब्दाद् ज्ञानावरणमूलविभागस्य सर्वोत्कृष्टरसः केवलज्ञानावरणस्य शेषं मतिज्ञानावरणादिषु चतुर्विभागीक्रियते। दर्शनावरणभागस्यानन्तभाग उत्कृष्टरसः षड्भागीक्रियते, यतः षड् सर्वघातिप्रकृतयः, शेषं त्रिभागीक्रियते। अन्तरायभागः पञ्चभागीक्रियते। नाम्नः पिण्डप्रकृतीनां यो भागः स बध्यमानाया भवति, । वर्णादीनां तु पञ्चद्विपञ्चाष्टभागीक्रियते, सङ्घातशरीरपिण्डप्रकृतिविभागस्त्रिधा चतुर्द्धा वा भवति । औदारिकतैजसकार्मणवन्धे त्रयो भागा, वैक्रियेण वा तृतीयेन, वैक्रियाहारकतैजसकार्मणवन्धे चत्वारो भागाः, त्रिशरीरवन्धे सप्तवन्धभागाः, चतुःशरीरवन्धे एकादश वन्धनभागाः। शरीरवदङ्गोपाङ्गानीति गाथार्थः ॥ ४३ ॥

साम्प्रतमस्यैवानुभागस्य स्थानप्ररूपणायाह—

जीवस्सज्झवसाया सुभासुभासंखलोगपरिमाणा। सव्वजियाणंतगुणा एक्केक्के होंति भावाणू ॥ ४४ ॥

व्याख्या—तस्यानुभागस्य कारणं निमित्तमध्यवसायाः कषायोदयविशेषा भवन्ति, ते च द्विधा, शुभा अशुभा वा, शुभः क्षीरखण्डोपमं कर्मपुद्गलानामनुभूयमानानामाह्लादजननमनुभागं करोति, व्यस्त(विपरीत)मशुभः। कियन्तस्ते शुभा? असङ्ख्येयलोकाकाशप्रदेशतुल्या अध्यवसायाः, अशुभा अपि तावन्त एव। कृता अध्यवसायप्ररूपणा, एकैकेनाध्यवसायेन गृहीतकर्मपुद्गलानां कियन्तो भावाणवो भवन्ति? सर्वजीवानामनन्तगुणा रसाविभागा, एकैकाध्यवसायगृहीतकर्मपुद्गलानां शुभा अशुभा वा प्रत्येकं भवन्तीति गाथार्थः ॥ ४४ ॥

उक्ताऽविभागप्ररूपणा, वर्गणा प्ररूपणोच्यते—

धिकम्, एवं [सङ्घाताङ्गोपाङ्गनामपि वन्धनक्रमेण, वन्धनानामपि जघन्यपदे प्रदेशाग्रमौदारिकस्य स्तोकं, तैजसस्य विशेषाधिकं, कार्मणस्य विशेषाधिकम्, वैक्रियस्य असङ्ख्येयगुणं, आहारकस्यासङ्ख्येयगुणं] शरीरवदङ्गोपाङ्गसङ्घातवन्धनानां. तिर्यग्गतौ जघन्यं प्रदेशाग्रं स्तोकं, मनुजगतौ विशेषाधिकं, देवगतावसङ्ख्येयगुणं, नरकगतावसङ्ख्येयगुणं। देवगतिनरकगत्योरुत्कृष्टं प्रदेशाग्रं स्तोकं तुल्यं च, मनुजगतौ विशेषाधिकं, तिर्यग्गतौ विशेषाधिकं, अयशःकीर्त्यामुत्कृष्टं प्रदेशाग्रं स्तोकं, यशःकीर्त्यां सङ्ख्येयगुणं, सप्तवन्धके अयशःकीर्त्तेः नाम्नः त्रयोविंशतिवन्धस्य वृहद्भागात् उत्कृष्टः प्रदेशवन्धः, षड्वन्धको यदा यश एव बध्नाति, तदा तस्या उत्कृष्टप्रदेशवन्धः, अतः सङ्ख्येयगुणः, अष्टवन्धको यदा नाम्नः त्रिंशद्वन्धको भवति, तदा तयोर्जघन्यः प्रदेशवन्धः, स च तुल्यः अनया दिशा भावना कार्या साद्यनादिप्ररूपणा स्वामित्वं च प्रदेशवन्धेऽधोऽभिहितं इति गथार्थः ॥ ४१ ॥

रसविशेषतो भागविशेषार्थमाह—

**सव्वुक्कोसरसो जा मूलविभागस्सऽणंतिमो भागो । सव्वघाइण दिज्जइ सो इयरो देसघाईणं ॥ ४२ ॥**

व्याख्या—तत्कालवध्यमानमूलप्रकृतीनां मूलविभागस्य योऽनन्तभागः उत्कृष्टानुभावः स सर्वघातिनीनां दीयते, इतरः—तदन्यः देशघातिप्रकृतीनामिति गाथार्थः ॥ ४२ ॥

**उक्कोसरसस्सद्धं मिच्छे अद्धं तु इयरघाईणं । संजलणनोकसाया सेसं अद्धद्धयं लेंति ॥ ४३ ॥**

व्याख्या—तस्योत्कृष्टसर्वघातिरसस्य मोहनीयभागानन्तभागसम्भवस्यार्द्धं मिथ्यात्वे भवति, अर्द्धं द्वादशानां सर्वघातिकषायाणां प्राग्वद् द्वादशभागीकृतं भवति, शेषस्यार्द्धं सञ्ज्वलनाश्चतुर्भागीकृतं गृह्णन्ति, अर्द्धं नोकषायाः पञ्चभागीकृतं गृह्णन्ति

न्तगुणः, अचक्षुश्चक्षुषोर्विशेषाधिको, जघन्येऽप्येवमेव । उत्कृष्टपदे सर्वस्तोकः अप्रत्याख्यानमानस्य, तस्मात् क्रोधमायालोभानां, प्रत्याख्यानावरणमानक्रोधमायालोभानामनन्तानुबन्धिमानक्रोधमायालोभमिथ्यात्वानां यथोत्तरं विशेषाधिको भागः, तस्माज्जुगुप्सायां अनन्तगुणः, भयस्य विशेषाधिकः, हास्यशोकयोस्तुल्यो विशेषाधिकश्च, रत्यरत्योः एवमेव, स्त्रीनपुंसकयोरेवमेव, सञ्ज्वलनक्रोधमानपुरुषवेदमायानां क्रमाद्विशेषाधिकः, लोभस्यासङ्ख्येयगुणो, जघन्यपदे विभागप्रदेशा एवमेव, किन्त्वन्यतरवेदस्य विशेषाधिकः, तस्मात् सञ्ज्वलनमानक्रोधमायालोभानां यथोत्तरं विशेषाधिका भागा,अयं विशेष इति। उत्कृष्टपदे भागप्रदेशाग्रं आयुषां तुल्यं, जघन्यपदे तिर्यग्मनुष्ययोस्तुल्यं, स्तोकं च, देवनारकायुषोरसङ्ख्येयगुणं तुल्यं च दानलाभभोगोपभोगवीर्यान्तरायाणामुभयत्र कर्मदलं यथोत्तरं विशेषाधिकम्। असातस्य स्तोको भागः, सातस्य विशेषाधिकः उत्कृष्टपदे, जघन्ये तुल्यः। नीचोच्चगोत्रयोरपि एवमेव। उत्कृष्टपदे चतसृणां जातीनां प्रदेशाग्रं स्तोकं तुल्यं च, एकेन्द्रियजातौ विशेषाधिकम्, देवनारकमनुष्यतिर्यगानुपूर्वीणां यथोत्तरं विशेषाधिकम् । चतुर्णां संस्थानानां स्तोकं तुल्यं च, समचतुरस्रहुण्डयोः क्रमाद्विशेषाधिकम् । संहननपञ्चकस्य तुल्यं स्तोकं च प्रदेशाग्रं, प्रथमसंहननस्य विशेषाधिकम्। कृष्णनीलरक्तहारिद्रशुक्लानां, कटुतिक्तकषायाम्लमधुराणां, दुरभिसुरभिगन्धयोः, स्वस्थाने यथोत्तरं यथाशुभं विशेषाधिको भागः, कर्कशगुर्वोः स्तोकः तुल्यश्च, मृदुलघ्वोः शीतरूक्षयोः स्निग्धोष्णयोः, यथोत्तरं तुल्यो विशेषाधिकश्च दलविभागः त्रसादिपङ्क्तिसुभगादेयानां स्तोको भागः, तद्विपक्षाणां स्वप्रकृतेर्विशेषाधिकः, आतपोद्योतयोः, सुस्वरदु'स्वरयो', विहायोगत्योस्तुल्यो भागः, निर्माणोच्छ्वासोपघातपराघातागुरुलघुतीर्थङ्कराणां नास्ति विशेषो, विपक्षाभावादुत्कृष्टजघन्यपदयोरिति । उत्कृष्टपदे शरीरपिण्डप्रकृतौ स्तोकं प्रदेशाग्रमाहारकस्य वैक्रियौदारिकतैजसकार्मणानां यथोत्तरं विशेषा-

कर्म्मपुद्गलानां यद् ग्रहणं स्थितिरसनिरपेक्षं तत्सङ्ख्याप्राधान्येनैव करोति। तेषां कर्मपुद्गलानां शुभोऽशुभो वा घातिरघातिर्वा यो रसः सोऽनुभाग इति । तेषां त्रयाणामपि स्थित्यनुभागप्रदेशबन्धानां यः समुदायः स प्रकृतिबन्ध इति गाथार्थः ॥४०॥

दलविभागातिदेशार्थमाह—

**मूलुत्तरपगईणं पुव्वं दलभागसंभवो वुत्तो । रसभेएणं इत्तो, मोहावरणाण निसुणेह ॥ ४१ ॥**

व्याख्या--मूलप्रकृतीनामुत्तरप्रकृतीनां च पूर्वमादौ प्रदेशबन्धे कर्मदलस्यैकरूपस्य गृहीतस्य विभागसम्भवो भागप्रमाणमुक्तं, रसभेदतोऽत्र । मोहनीयावरणानां घातिकर्मणां वक्ष्येऽहमिति (तं च वक्ष्यमाणं शृणुत तत्र यद्यपि मूलोत्तरप्रकृतीनां दलभागप्रमाणमुक्तम् ।) तथापि स्थानाशून्यार्थमुच्यते—आयुषः सर्वस्तोकः कर्मदलविभागो, नामगोत्रयोर्विशेषाधिकः तुल्यश्च, ज्ञानदर्शनावरणान्तरायाणां विशेषाधिकस्तुल्यश्च, मोहनीयस्य विशेषाधिकः, वेदनीयस्य विशेषाधिकः। ज्ञानान्तराययोः मूलविभागः पञ्चविभागीक्रियते, वेदनीयायुर्गोत्राणां मूलविभागो बध्यमानप्रकृतेरेकस्या एव भवति, दर्शनावरणमूलविभागस्तत्कालबध्यमानप्रकृतिप्रमाणैर्नवभिः षड्भिर्वा चतुर्भिर्वा विभागैः क्रियते, मोहनीयविभागो द्विधा क्रियते, अर्द्धं दर्शनमोहनीये, अर्द्धं चारित्रमोहनीये, नामविभागोऽपि तत्कालबध्यमानप्रकृतिप्रमाणैर्विभागैः क्रियते इति । उत्तरप्रकृतीनामुत्कृष्टजघन्यदलविभागविशेष उच्यते—उत्कृष्टविभागे केवलज्ञानावरणे सर्वस्तोको भागो, मनोज्ञानावरणेऽनन्तगुणः, अवधिश्रुतमत्यावरणेषु यथोत्तरं विशेषाधिकः प्रदेशार्थतया, एवं जघन्यविभागेऽपि । उत्कृष्टविभागे सर्वस्तोको विभागो निद्रायाः, तस्मात्प्रचला-प्रचलाप्रचला-निद्रानिद्रा-स्त्यानर्द्धि-केवलदर्शनावरणानां यथोत्तरं विशेषाधिको भागः, अवधिदर्शनावरणस्यान-

अल्पबहुत्वमाह—

तिण्हंपि फडुगाणं जहण्णउक्कोसगा कमा ठविउं । नेयाणंतगुणाओ, वग्गणा णेहफड्डाओ ॥ ३८ ॥

व्याख्या—त्रयाणामपि स्पर्द्धकानां स्नेहनामप्रयोगाख्यानां जघन्योत्कृष्टावर्गणा व्यवस्थाप्य यथोत्तरमनन्तगुणा नेया-नेतव्वा, ज्ञेया मन्तव्या वा। किमुक्तंभवति स्नेहस्पर्द्धकजघन्यवर्गणा स्तोकानुभावा, तस्यैव स्नेहस्पर्द्धकस्योत्कृष्टवर्गणाऽनन्तगुणा, तस्याः नामस्पर्द्धकजघन्यवर्गणा अनन्तगुणानुभावा, तस्यैवोत्कृष्टा अनन्तगुणा, तस्याः प्रयोगस्पर्द्धकवर्गणा जघन्या अनन्तगुणा, तस्याः प्रयोगस्पर्द्धकोत्कृष्टा वर्गणा अनन्तगुणरसेति गाथार्थः ॥ ३८ ॥

उक्ता स्पर्द्धकत्रिकस्यापि प्ररूपणा, उक्ता बन्धनरसप्ररूपणा । साम्प्रतं मूलोत्तरप्रकृतिविभागार्थमाह—

अणुभागविसेसाओ, मूलुत्तरपगइभेयकरणं तु । तुल्लस्सावि दलस्सा पयईओ गोणनामाओ ॥ ३९ ॥

व्याख्या—अनुभागो—रसस्तद्विशेषात्—अल्पबहुत्वात् शुभाशुभत्वाद्वा तुल्येऽपि कर्मदले मूलप्रकृतीनामुत्तरप्रकृतीनां च पृथग्भावो विशिष्टवीर्यता, यथैकजीवोद्भवानामपि दुग्धदधिघृतमस्तुतक्राणां पृथक् पृथक् नामवर्णास्वादवीर्यता, एवं कर्म्मदलस्य—मूलप्रकृतिविभागस्तस्याप्युत्तरप्रकृतिविभागोऽनुभागभेदादवसेयः। ताश्च प्रकृतयो गोणनामानः, ज्ञानमावृणोतीति ज्ञानावरणं, एवमुत्तरप्रकृतिष्वपि मतिज्ञानमावृणोतीति मतिज्ञानावरणमिति गाथार्थः ॥ ३९ ॥ प्रकृतिस्थित्यादिबन्धानां विभागार्थमाह—

ठितिबन्धो दलस्स ठिई पएसबंधो पएसगहणं जं । ताण रसो अणुभागो तस्समुदाओ पगतिबंधो ॥ ४० ॥

व्याख्या—अध्यवसायविशेषगृहीतस्य कर्मदलस्य यत् स्थितिकालनियमनं स स्थितिबन्धोऽभिधीयते प्रदेशबन्धप्रदेशानां

ख्येयगुणकण्डकैरनन्तारतान्यसङ्ख्येयगुणस्थानानि भवन्ति, अनन्तासङ्ख्येयसङ्ख्येयभागवृद्धकण्डकसङ्ख्येयासङ्ख्येयगुणकण्ड-
कान्तरितानि अनन्तगुणस्थानानि भवन्ति यावत्तेषामपि कण्डकं पूर्णमिति गाथार्थः ॥ ३४ ॥

अस्संखलोगतुल्ला, अणंतगुणरसजुया य इयठाणा । कंडंति एत्थ भणति, अंगुलभागो असंखेज्जो ।३५।

व्याख्या—असङ्ख्येयलोकाकाशप्रदेशतुल्यानि अनन्तगुणरसवृद्ध्या यानि शरीरस्थानानि इति, एवं शेषवृद्धिष्वपि भवन्ति । कण्डकमत्राङ्गुलासङ्ख्येयभागो भण्यते । इतिः समाप्ताविति गाथार्थः ॥ ३५ ॥

उक्तं नामस्पर्द्धकं, प्रयोगस्पर्द्धकमाह—

होति पओगो जोगो । तठाणविवढ्ढणाएँ जो उ रसो । परिवढ्ढेई जीवो पओगफड्डं तयं बेंति ॥ ३६ ॥

व्याख्या—भवति-उत्पद्यते प्रयोगो व्यापारः तस्य योगस्य स्थानवृद्ध्या यो रसोऽनुभागस्तं परिवर्द्धयति जीवः, सोऽनुभागो विभज्यमानो योगात् स्पर्द्धकं प्रयोगस्पर्द्धकमुच्यते । इति गाथार्थः ॥ ३६ ॥

अविभागवग्गफड्डगअंतरठाणाइ एत्थ जह पुव्विं । ठाणाइवग्गणाओ अणंतगुणणाएँ गच्छंति ॥ ३७ ॥

व्याख्या—अत्राविभागप्ररूपणा, वर्गणाप्ररूपणा, स्पर्द्धकप्ररूपणा, अन्तरप्ररूपणा, निचितप्रदेशगुणस्थानप्ररूपणा, यथा पूर्वं नामस्पर्द्धके तथा कार्या, किन्त्वत्र स्थानानां या आद्या वर्गणा साऽनन्तगुणवृद्धा गच्छति, एतदेव दर्शयति-प्रथमस्थाने प्रथमवर्गणायां स्तोकाः स्नेहाविभागाः द्वितीयस्थानाद्यवर्गणायामनन्तगुणाः तस्मात्तृतीयस्थानाद्यवर्गणायामनन्तगुणा, एवं यावदन्तिमं स्थानमिति गाथार्थः ॥ ३७ ॥

ततः सङ्ख्येयभागोत्तरं पुनरन्यदुद्भवति स्थानमिति। किमुक्तं भवति,—एकं सङ्ख्येयभागोत्तरं स्थानं, पुनरनन्तभागोत्तराणि कण्डकमात्राणि, एवं भूयो भूयस्तावन्नेतव्यानि, यावदसङ्ख्येयभागोत्तराणामपि कण्डकं पूर्णं ततः सङ्ख्येयभागवृद्धं स्थानमन्यदुद्भवतीति गाथार्थः ॥ ३३ ॥

**अमुयंतो तह पुव्वुत्तराइं एयंपि णेसु जा कंडं। इय एय विहाणेणं छव्विहवुड्ढी उ ठाणेसु ॥ ३४ ॥**

व्याख्या—अमुञ्चन् पूर्वाण्यनन्तभागोत्तरकण्डकानि उत्तराण्यसङ्ख्येयभागोत्तरकण्डकानि, एतदपि सङ्ख्येयभागोत्तरं स्थानं नेयं, यावत्कण्डमिति। इत्यनेन विधानेन षड्विधा वृद्धिः स्थानेषु भवति तथापि प्रस्तारमुच्चार्यते, सङ्ख्येयभागोत्तरमेकं स्थानं कृत्वा, ततोऽनन्तभागोत्तरकण्डकव्यवहितानामसङ्ख्येयभागोत्तरस्थानानां कण्डकं नेतव्यम्, पुनः सङ्ख्येयभागोत्तरं स्थानं, एवं भूयो भूयो यावत्सङ्ख्येयभागोत्तराणामपि कण्डकं पूर्णम्, ततः सङ्ख्येयगुणमन्यत् स्थानमुद्भवति, पुनरनन्तभागवृद्धं कण्डकं तदन्तरितमसङ्ख्येयभागोत्तरं कण्डकं, द्वाभ्यामपि व्यवहितं सङ्ख्येयभागोत्तरं कण्डकं, ततः सङ्ख्येयगुणस्थानमिति, अनेन विधिना सङ्ख्येयगुणानामपि कण्डकं नेतव्यम्, पुनरन्यदसङ्ख्येयगुणस्थानं भवति, पुनरनन्तभागोत्तरकण्डकान्तरितान्यसङ्ख्येयभागोत्तराणि, उभाभ्यामन्तरितानि सङ्ख्येयभागवृद्धस्थानानि, त्रिभिरप्यन्तरितानि सङ्ख्येयगुणस्थानानि चतुष्प्रकारकण्डकान्तरितानि असङ्ख्येयगुणस्थानानि नेतव्यानि, यावत्तेषामपि कण्डं पूर्णम्. पुनरनन्तगुणस्थानं प्रादुर्भवति पुनरनन्तभागोत्तरकण्डकान्तरितान्यसङ्ख्येयभागोत्तरस्थानानि, अनन्तासङ्ख्येयभागोत्तरकण्डकाभ्यामन्तरितानि, सङ्ख्येयभागोत्तरस्थानानि, अनन्तासङ्ख्येयसङ्ख्येयभागोत्तरैः कण्डकैरन्तरितानि सङ्ख्येयगुणस्थानानि भवन्ति, अनन्तासङ्ख्येयसंख्येयभागोत्तरसङ्-

तैजसबन्धनयोग्या अनन्तगुणा, औदारिककार्मणबन्धनयोग्या अनन्तगुणा, औदारिकतैजसकार्मणबन्धनयोग्याः पुद्गला अनन्तगुणाः। एवं वैक्रियाहारकयोरपि चत्वारो भङ्गा वक्तव्याः । तैजसतैजसबन्धनयोग्याः पुद्गलाः अनन्तगुणाः, तैजसकार्मणबन्धनयोग्याः पुद्गला अनन्तगुणाः, कार्मणकार्मणबन्धनयोग्याः पुद्गलाः अनन्तगुणा भवन्तीति गाथार्थः ॥ ३० ॥

साम्प्रतं स्थानप्ररूपणा क्रियते—

**पढमाउ अणंतेहिं, सरीरठाणं तु होइ फड्डेहिं । तयणंतभागवुड्ढी कंडगमित्ता भवे ठाणा ॥ ३१ ॥**

व्याख्या—प्रथमस्पर्द्धकमादौ कृत्वाऽनन्तस्पर्द्धकैरेकं प्रथमशरीरप्रायोग्यं स्थानं भवति, तस्यैव स्थानस्यानन्तभागवृद्धानि तदनन्तभागवृद्धानि-तदनन्तभागोत्तराणि कण्डकम्मात्राणि स्थानानि भवन्ति, कण्डकमङ्गुलासङ्ख्येयभागस्याभिधानमत्रेति गाथार्थः॥३१॥

**एक्कं असंखभागुत्तरेण पुण णंतभागवुड्ढीए । कंडगमेत्ता ठाणा असंखभागुत्तरं भूया ॥ ३२ ॥**

व्याख्या—तस्मात्कण्डकादुपरि यत्स्थानं तदेकमसङ्ख्येयभागोत्तरं भवति, शेषाणि अनन्तभागोत्तराणि, कण्डकमात्राणि भूयः स्थानानि भवन्ति, ततोऽसङ्ख्येयभागवृद्धद्वितीयस्थानं भवति, भूयोऽनन्तभागोत्तरं कण्डं, ततस्तृतीयमसङ्ख्येयभागोत्तरं स्थानं भूयोऽनन्तभागोत्तरं कण्डं, एवमसङ्ख्येयभागान्तरितान्यनन्तभागोत्तराणि कण्डानि नेतव्यानि, यावदसङ्ख्येयभागोत्तराणामपि स्थानानां कण्डं जातमिति गाथार्थः ॥ ३२ ॥

**एवं असंखभागुत्तराणि ठाणाणि कडमेत्ताणि । संखेज्जभागवुड्ढं पुण अण्णं उठए ट्ठाणं ॥ ३३ ॥**

व्याख्या—एवमनेन विधिनाऽनन्तभागोत्तरकण्डकव्यवहितान्यसङ्ख्येयभागोत्तराणि स्थानानि कण्डकमात्राणि गच्छन्ति,

लङ्घ्य द्वितीयस्पर्द्धकस्याद्यवर्गणा भवति। कियन्तस्तस्यां भावाणवः ? प्रथमस्पर्द्धकप्रथमवर्गणाया द्विगुणा, उक्ता अन्तरप्ररूपणा। तस्याः रूपोत्तरा निरन्तरा अनन्ता वर्गणा भवन्ति, ताः सर्वा अपि समुदिता द्वितीयं स्पर्द्धकम्। भूयोऽप्यन्तरं प्राग्वद्वक्तव्यम्, एवमनन्तशून्यवर्गणात्मकानि अनन्तवर्गणाव्यवहितानि भूयः—पुनः पुनः स्पर्द्धकानि भवन्तीति गाथार्थः ॥ २८ ॥

**जइमं इच्छसि फड्डं तत्तिय संखाए वग्गणा पढमा। गुणिया तस्साइल्ला रूवुत्तरियाओ अण्णाओ ॥ २९ ॥**

व्याख्या—प्रथमस्पर्द्धकाद्यतिमं स्पर्द्धकमीहसे, तत्स्पर्द्धकसङ्ख्यया प्रथमवर्गणा गुणिता सती तस्यैवेष्टस्पर्द्धकस्याद्यवर्गणायाः भावाणवो भवन्ति। ततस्तस्या वर्गणाया रूपोत्तराः परता वर्गणा भवन्ति, किमुक्तं भवति ? सर्वेषां स्पर्द्धकानां तुल्यान्यन्तराणि सर्वजीवानन्तगुणानि, प्रदेशानामल्पत्वात्, भावाणूनां प्रभूतत्वात्, शरीरस्पर्द्धकसञ्ज्ञेति गाथार्थः ॥ २९ ॥

उक्ता स्पर्द्धकप्ररूपणा, स्पर्द्धकानां सङ्ख्यानमाह—

**अभवाणंतगुणाइं, फड्डाइं अंतरा उ रूवूणा। दोण्णंतरवुड्ढीओ परंपरा होंति सव्वाओ ॥ ३० ॥**

व्याख्या—अभव्यजीवानामनन्तगुणानि स्पर्द्धकानि भवन्ति, तुशब्दात्सिद्धानामनन्तभागतुल्यानि वा स्पर्द्धकानि अन्तराणि रूपोनस्पर्द्धकसङ्ख्यया तुल्यानि वर्गणास्वनन्तरवृद्धी द्वे भवतः, रूपवृद्धिरनन्तरूपवृद्धिर्वा। परम्परातः पुनः सर्वा अपि वृद्धयो भवन्ति, अनन्तभागवृद्धिरसङ्ख्येयभागवृद्धिः सङ्ख्येयभागवृद्धिः, सङ्ख्येयगुणवृद्धिरसङ्ख्येयगुणवृद्धिरनन्तगुणवृद्धिरिति। तुशब्दस्यानेकार्थत्वात् प्रथमशरीरस्थानस्य प्रथमवर्गणायां निचिताः प्रदेशगुणा भावाणवः स्तोकाः, द्वितीयस्थानस्य प्रथमवर्गणायामनन्तगुणाः, एवमनन्तगुणया श्रेण्या स्थानानि नेतव्यानि औदारिकबन्धनयोग्याः पुद्गलाः स्तोकाः, औदारिक

उक्तं स्नेहस्पर्द्धकं, नामस्पर्द्धकमाह—

**पंचण्ह सरीराणं, परमाणूणं मतीए अविभागो । कप्पियपाणेगंसो गुणाणु भावाणु वा होंति ॥ २५ ॥**

व्याख्या—पञ्चानामौदारिकाद्यानां षष्ठीनिर्देशाद्यानि बन्धनानि तद्योग्यपरमाणूनां 'कप्पियपाण'ति मत्या खण्डितानां चूर्णीकृतानां योऽविभागः, एकोंऽशः स गुणाणुः भावाणुर्वा भवतीति गाथार्थः ॥ २५ ॥ उक्ताविभागप्ररूपणा—

**जे सव्वजहन्नगुणा जोगा तणुबन्धणस्स परमाणू । ते वि उ संखासंखा गुणपलिभागा अइक्कंता ॥ २६ ॥**

व्याख्या—ये सर्वजघन्यगुणाः सर्वस्तोकस्नेहाः योग्या–अनुरूपास्तनुबन्धनस्य जात्याख्यायामेकवचनं परमाणवः, तेऽपि सङ्ख्येयासङ्ख्येयान् गुणविभागान् तुशब्दादनन्तानपि अतिक्रान्ताः–उल्लङ्घ्य परतो गताः बहुतरस्नेहा इति गाथार्थः॥२६॥

**सव्वजियाणंतगुणेण जे उ नेहेण पोग्गला जुत्ता । सा वग्गणा उ पढमा बंधणनामस्स जोग्गाओ ॥ २७ ॥**

व्याख्या—सर्वजीवेभ्योऽनन्तगुणेन स्नेहेन पुद्गला ये युक्ताः, ते तुशब्दात् स्वशरीरवर्गणाभ्यः उद्धृत्य प्रथमवर्गणा जीवस्य बन्धननाम्नो योग्या भवन्तीति गाथार्थः ॥ २७ ॥

**अविभागुत्तरियाओ सिद्धाण अणंतभागतुल्लाओ । ताओ फड्डगमेगं अणंतविवराइ इय भूय ॥ २८ ॥**

व्याख्या—ततः प्रथमवर्गणायाः 'अविभागोत्तरा' भावाणूत्तराः सिद्धानामनन्तभागतुल्या निरन्तरा वर्गणा गच्छन्ति । उक्ता वर्गणा प्ररूपणा । ततो रूपोत्तरा वर्गणा नास्ति, या निरन्तरास्ताः सर्वा अपि वर्गणाः समुदिताः स्पर्द्धकमुच्यते तस्याः स्पर्द्धकान्त्यवर्गणाया रूपोत्तरा वर्गणा नास्ति, तद्धि रूपोत्तरा यावत्सर्वजीवानन्तगुणरूपोत्तरा नास्ति, इयतो भावाणूनु-

**पढमहाणीए एवं, बीयाए संखवग्गणा गंतुं । अद्धं उवरित्थाओ हाणीओ, होंति जा जीए ॥ २३ ॥**

व्याख्या—प्रथमहानावेवं परम्परोपनिधा, द्वितीयायां सङ्ख्येयभागहानौ तत्प्रथमवर्गणायाः सङ्ख्येया वर्गणा गत्वा या वर्गणा तस्यां तत्प्रथमवर्गणातोऽर्द्धाः पुद्गलाः स्युः, एवं भूयो भूयोऽस्यां द्वितीयहानौ नेतव्यम् । एवं या यस्या इयद्दूरे व्यवस्थितास्तस्यामर्द्धाः पुद्गला भवन्ति उपरितनासु त्रिपु हानिष्वियं परम्परोपनिधा न सम्भवति, तस्मादन्यथा प्ररूप्यते, असङ्ख्येयभागहानौ प्रथमान्त्यवर्गणयोरन्तरालेऽस्त्यसङ्ख्येयभागहीना प्रथमवर्गणातः, अस्ति संख्येयभागहीनाः । अस्ति सङ्ख्येयगुणहीना, अस्त्यसङ्ख्येयगुणहीना, काचिदनन्तगुणहीनाः वर्गणा, एवं प्रथमहानौ पञ्चापि हानयः सम्भवन्ति । द्वितीयहानौ चतस्रो हानयः, यतोऽसङ्ख्येयभागहानिरपि नास्ति, तृतीयहानौ तिस्रो हानयः सम्भवन्ति । चतुर्थहानौ द्वे हानी, असङ्ख्येयगुणहीना अनन्तगुणहीना चेति । अनन्तगुणहानौ इयमेवैकेति गाथार्थः ॥ २३ ॥

उक्ता परम्परोपनिधा, अल्पबहुत्वमाह—

**थोवाओ वग्गणाओ, पढमहाणीऍ उवरिमासु कमा । होंति अणंतगुणाओ, अणंतभागो पएसाणं ॥ २४ ॥**

व्याख्या—असङ्ख्येयभागहीनहान्यां प्रथमायां स्तोका वर्गणाः, सङ्ख्येयभागहीनहान्यां द्वितीयायां प्रथमतोऽनन्तगुणा, एवं त्रिचतुःपञ्चमहानिष्वपि अनन्तगुणाः क्रमेण वक्तव्याः । प्रथमहानिवर्गणाप्रदेशेभ्यो द्वितीयहानिवर्गणास्वनन्तभागमात्राः प्रदेशाः एवं द्वित्रिचतुःपञ्चमहानिष्वपि यथोत्तरमनन्तभागमात्रा भवन्ति । अनन्तगुणहानौ स्तोकानि द्रव्याणि वक्तव्यानीति गाथार्थः ॥ २४ ॥

वर्गणा प्ररूपणोच्यते--

**जे एग नेह जुत्ता ते बहवे तेहिं वग्गणा पढमा । जे दुगनेहाइ जुया असंखभागूण ते कमसो ॥ २० ॥**

व्याख्या—ये एकस्नेहाविभागेन युक्ताः पुद्गलास्ते बहवः, तैर्वर्गणा प्रथमा, ये द्वाभ्यां स्नेहाविभागाभ्यां युक्ताः पुद्गलाः तैर्द्वितीया वर्गणा, प्रथमवर्गणातो द्वितीयवर्गणायामसङ्ख्येयभागोनाः पुद्गला भवन्ति, आदिशब्दात्रिचतुष्पञ्चसङ्ख्येयासङ्ख्येयानन्तस्नेहाविभागयुक्ता, एवं रूपोत्तरा अनन्ता वर्गणा यथापरमसङ्ख्येयभागोनाः प्रदेशतया भवन्तीति गाथार्थः ॥२०॥

**इय एरिसहाणीए जंति अणंतउवग्गणा कमसो । संखंसूणा तत्तो संखगुणूणा तओ कमसो ॥ २१ ॥**

व्याख्या—इतीदृक्षया हान्याऽसङ्ख्येयभागमात्रया अनन्ता वर्गणा रूपोत्तराः यान्ति क्रमशः ततोऽन्या नास्त्यसङ्ख्येयभागहान्या, तदुपरि स्नेहाविभागोत्तराः सङ्ख्येयभागहान्या यथोत्तरमनन्ता वर्गणा भूयो यान्ति, एवमनया सङ्ख्येयभागहान्याऽनन्ता वर्गणा गता, भूयः पुनः सङ्ख्येयगुणहीनाः प्रदेशार्थतया क्रमात् परिपाट्या अनन्ता वर्गणा यान्तीति गाथार्थः॥२१॥

**तत्तोऽसंखगुणूणा अणंतगुणऊणिया वि तत्तो वि । गंतुमसंखा लोया अद्धद्धा पोग्गला भूय ॥ २२ ॥**

व्याख्या—ततस्ताभ्यः सङ्ख्येयगुणहीनाभ्यः परतः स्नेहाविभागोत्तरा वर्गणाः स्थिताः, ता असङ्ख्येयगुणहीना यान्त्यनन्ताः प्रदेशार्थतया, ताभ्योऽपि परतोऽनन्तगुणहीना यथोत्तरमनन्ताः वर्गणा यान्ति प्रदेशार्थतया, एताः पञ्चापि हानयोऽनन्तरोपनिधायां भवन्ति । परम्परोपनिधायां तु प्रथमवर्गणाया असङ्ख्येयलोकाकाशप्रमाणा वर्गणा उल्लङ्घ्य या अन्या भवन्ति, तस्यां प्रथमवर्गणातोऽर्द्धाः पुद्गलाः स्युः, एवं भूयोः भूय नेतव्यमिति गाथार्थः ॥ ॥ २२ ॥

अष्टस्पर्शा—गुरुलघुमृदुकठिनस्निग्धरूक्षशीतोष्णाः, शुभाशुभगन्धाः, औदारिकवैक्रियाहारकशरीरयोग्या यावत्तावद् भवन्ति, तदुपरितनाः तैजसाद्या या जीवस्य ग्रहणप्रायोग्यास्ताः सर्वाः अप्येवमेव, किन्तु चतुःस्पर्शा भवन्तीति गाथार्थः ॥ १८ ॥

जघन्ययोगिनो जीवा जघन्यवर्गणारूपं दलं परिणामयन्ति, अवलम्बयन्ति[1] उत्कृष्टयोगिनः उत्कृष्टवर्गणारूपं यस्मात्, तस्माद्योगस्थाने द्रव्यवर्गणा प्ररूपणा कृता। अधुना तेषामेव पुद्गलद्रव्याणां तथाविधसम्बन्धः स्नेहतो भवति, अतः स्नेहप्ररूपणा क्रियते। स्नेहोऽनुभागो रस इत्येकोऽर्थः, तत्रापि त्रिविधा प्ररूपणा, स्नेहस्पर्द्धकप्ररूपणा, नामस्पर्द्धकप्ररूपणा, प्रयोगस्पर्द्धकप्ररूपणा। स्नेहवैचित्र्यात् स्पर्द्धकानां वैचित्र्यकथनं, तत्रैकद्वित्रिचतुष्पञ्चयावत्सर्वजीवानन्तगुणस्नेहाविभागयुक्तलोकव्यवस्थितपुद्गलानां प्ररूपणा स्नेहस्पर्द्धकप्ररूपणा। शरीरकर्मोदयाच्छरीरस्कन्धानां परस्परसम्बन्धजनकपरमाणुस्नेहप्ररूपणा नामस्पर्द्धकप्ररूपणेतिभावः। वैसदृश्याज्जीवप्रदेशानां स्ववीर्यहेतुगृहीतकर्मपुद्गलानां स्नेहप्ररूपणा प्रयोगस्पर्द्धकप्ररूपणा, प्रकृष्टो वा योगो व्यापारः तद्धेतुगृहीत-पुद्गलस्नेहस्य प्ररूपणा प्रयोगस्पर्द्धकप्ररूपणेति। स्नेहस्पर्द्धकमादावाह—॥ १८ ॥

**अविभागाईनेहेणं जुत्ता ताव पोग्गला अत्थि। सव्वजियाणंतगुणेण जाव नेहेण संजुत्ता ॥ १९ ॥**

व्याख्या—यथा जीवप्रदेशवीर्यं बुद्धयाऽविभागीकृतं, तथा स्नेहोऽप्यविभागतया परिकल्पते। एकेन स्नेहाविभागेन युक्ताः पुद्गला लोके सन्ति, तेऽतिजघन्यानुभागा, आदिशब्दादन्ये द्विस्नेहाविभागयुक्ताः, अन्ये त्रिस्नेहाविभागयुक्ताः, एवं रूपोत्तरा यावत्सर्वजीवानन्तगुणस्नेहाविभागयुक्ताः तावत् पुद्गलाः सन्तीति गाथार्थ ॥ १९ ॥ कृता स्नेहाविभागप्ररूपणा,

---

१ अवलम्बयन्ति वा इति क. पुस्तके

वर्गमूलानि गृह्यन्ते, चरमवर्गमूलस्यासङ्ख्येयभागस्य योऽसङ्ख्येयो भागः, सोऽत्र गुणकार इति । ताभ्यो रूपोत्तरा यावदनन्तरूपोत्तराः सूक्ष्मनिगोदद्रव्यवर्गणा, बादरनिगोदवर्गणावत् वक्तव्याः, जघन्याया उत्कृष्टा कियद्गुणा ? आवलिकासङ्ख्येयभागमात्रगुणा ताभ्यः परतः चतुर्थी शून्यवर्गणा, ता अपि रूपोत्तरा यावदनन्तरूपोत्तराः अनन्ता एताः प्ररूपणामात्रा एव, जघन्याया उत्कृष्टाऽसङ्ख्येयगुणा, असङ्ख्येयश्रेणिगुणा, प्रतरस्यासङ्ख्येयभागगुणा वा, ताभ्यः परतो रूपे प्रक्षिप्ते महास्कन्धवर्गणा जघन्या भवति, महास्कन्धवर्गणानाम पर्वतटङ्ककूटाश्रिताः पुद्गलस्कन्धवर्गणा उच्यन्ते, जघन्याया उत्कृष्टा असङ्ख्येयगुणा पल्योपमाङ्ख्येयभागगुणा, यस्मात्त्रसकायबाहुल्येनासामल्पत्वं त्रसकायाल्पत्वे आसां वर्गणानां बाहुल्यम् । एताः वर्गणा 'गौणनामानः' नाम्न एव गुणा अवगन्तव्या इति गाथार्थः ॥ १६ ॥

वृत्तिकाराऽभिहितमर्थं सूत्रकारः सूत्रेणाभिदधति—

**सिद्धअणंतंसेणं, अहव अभव्वेहऽणंतगुणिएहिं । जुत्ता जहण्णजोगा, उरलाइणं भवे जेट्ठा ॥ १७ ॥**

व्याख्या—सिद्धानामनन्तभागेनाथवा अभव्यजीवैरनन्तगुणैर्युक्ता योजिता जघन्या वर्गणा, औदारिकवैक्रियाहारकतैजसभाषानापानमनःकार्मणशरीराणां ग्रहणप्रायोग्या या (चरमा) सैवोत्कृष्टा भवतीति गाथार्थः ॥ १७ ॥

ग्रहणप्रायोग्यानां द्रव्यवर्गणानां वर्णादिविभागार्थमाह—

**पंचरस पंच वण्णेहिं, परिणया अट्ठफासदोगंधा । जीवाहारगजोगा चउफासविसेसिया उवरिं ॥ १८ ॥**

व्याख्या—पञ्चभिः रसैर्मधुराम्लतिक्तकटुककषायैः, पञ्चभिर्वर्णैः कृष्णनीलरक्तपीतशुक्लैः परिणताः—तद्भावमुपगताः,

वर्गणा अनन्ताः, किमुक्तं भवति तद्विधपुद्गलपरिणताः स्कन्धा लोके न सन्ति, केवलं प्ररूपणा क्रियते, उपरितनवर्गणानां परिज्ञानार्थं, जघन्यवर्गणायाः उत्कृष्टा कियद्गुणा ? सर्वजीवानन्तगुणा । ताभ्यः परतो रूपोत्तराः प्रत्येकशरीरयोग्याः अनन्ता वर्गणा भवन्ति, प्रत्येकवर्गणानाम औदारिकादीनां पञ्चानां शरीराणां एकैकप्रदेशे विस्रसापरिणामपरिणता उपचिताः सर्वजीवानन्तगुणाः पुद्गला ये ते प्रत्येकशरीरवर्गणाः उच्यन्ते, यत्रौदारिकादिशरीराणां प्रभूतसूक्ष्माणुनिष्पन्नकर्मप्रदेशो भवति तत्र प्रत्येकशरीरपुद्गला अपि विस्रसापरिणामेन बहव उपचयं यान्ति, यत्र स्वल्पसूक्ष्माणुनिष्पन्नः कर्मप्रदेशो भवति, तत्र तेऽपि विस्रसापरिणामेन स्तोकाः परिणमन्ति, तेनात्रापि जघन्याद्या वर्गणाः प्ररूप्यन्ते, तस्याः प्रदेशोत्तरा अनन्ता, यावदुत्कृष्टेति, जघन्यायाः उत्कृष्टा असङ्ख्येयगुणा, क्षेत्रपल्योपमस्यासङ्ख्येयभागगुणा, यतो जघन्यशरीरकर्मप्रदेशेभ्य उत्कृष्टशरीरकर्मप्रदेशाः पल्योपमासङ्ख्येयभागगुणाः, ताभ्यो रूपोत्तराः शून्यवर्गणा अनन्ताः प्राग्वद्वक्तव्याः, जघन्याया उत्कृष्टा कियद्गुणा ? असङ्ख्येयलोकाकाशासङ्ख्येयभागगुणा, सोऽप्यसङ्ख्येयभागोऽसख्येयलोकात्मक इति । ताभ्यो रूपोत्तरा बादरनिगोदद्रव्यवर्गणा अनन्ता भवन्ति, बादरवर्गणानाम बादरनिगोदजीवानां औदारिकतैजसकार्मणशरीरपुद्गलेषु प्रत्येक सर्वजीवानन्तगुणा विस्रसापरिणामेनोपचिताः ये पुद्गलास्ते बादरवर्गणा उच्यन्ते, यत्र बादरनिगोदजीवानां सर्वस्तोकाः शरीरप्रदेशास्तस्मिन् जघन्या बादरवर्गणा विस्रसाप्रयोगेण परिणमति, ततः प्रदेशोत्तरा यावदुत्कृष्टा, जघन्याया उत्कृष्टा असङ्ख्येयगुणा, क्षेत्रपल्योपमस्यासङ्ख्येयभागगुणा, कारणं प्रागेवाभिहितम् । ताभ्यो भूयोऽपि रूपोत्तरा अनन्ताः शून्यवर्गणाः तृतीयवारा भवन्ति, शेषं प्राग्वद्वक्तव्यम्, जघन्याया उत्कृष्टाऽसङ्ख्येयगुणा, अङ्गुलासख्येयभागमात्रक्षेत्रादावलिकाया असङ्ख्येभागसमयतुल्यानि

योजितत्वात्, न ता वर्गणा कार्मणार्थमेवोक्ता एतज्ज्ञाप्यते कार्मणस्य प्राधान्यमेव केवलमतो न दोष इति, अलं विस्तरेण । प्रकृतमुच्यते—औदारिकाद्या वर्गणा ग्रहणयोग्या याः तदन्तरेऽग्रहणयोग्यास्ताः सर्वाः स्वस्थानेऽनन्तानन्ता वक्तव्याः । सिद्धानामनन्तभागतुल्या अभव्यजीवानामनन्तगुणा वा, जघन्याया उत्कृष्टा विशेषाधिका तद्वर्गणानन्तभागाधिका इत्यर्थः । अयोग्यजघन्याया उत्कृष्टा अनन्तगुणा, सिद्धानामनन्तभागगुणेति वक्तव्या । अथैवं द्रव्यवर्गणानां—पुद्गलवर्गणानां क्रमः—परिपाटी क्षेत्रमाश्रित्य 'विपर्यासो' व्यत्यासः किमुक्तं भवति ? औदारिकवर्गणाः प्रदेशार्थतया सर्वस्तोकाः, ताभ्यो वैक्रियवर्गणा असङ्ख्येयगुणाः, वैक्रियवर्गणाभ्य आहारकवर्गणाः प्रदेशार्थतया असङ्ख्येयगुणाः, ताभ्योऽपि तैजसवर्गणा अनन्तगुणा, एवं भाषानाप्राणमनःकार्मणवर्गणाः यथोत्तरमनन्तगुणाः सूक्ष्मत्वात् प्रदेशानां, क्षेत्रं प्रति यद्यप्यङ्गुलासङ्ख्येयभागमात्रावगाहनाः सर्वा अप्युक्तास्तथापि औदारिकवर्गणा क्षेत्रादसङ्ख्यभागे वैक्रियवर्गणा व्यवस्थिता, एवं यथोत्तरं शेषवर्गणा अपि नेतव्याः, क्षेत्रस्य सर्वस्यैवासङ्ख्येयभेदभिन्नत्वादनन्तभागो न सम्भवतीति गाथार्थः ॥ १५ ॥

**कम्मोवरिं धुवेयरसुण्णा पत्तेय सुण्णबायरिया । सुण्णा सुहुमा सुण्णा—महखंधो सगुणमानाओ ॥ १६ ॥**

व्याख्या—कार्मणशरीरवर्गणा उत्कृष्टा रूपाधिका सती ध्रुववर्गणा, जघन्या भवति ध्रुवेति कोऽर्थः ? तद्विधपरिणामपरिणतैः पुद्गलद्रव्यैरशून्यः सर्वदा लोकः, यतस्तद्विधा अन्ये भवन्ति, अन्ये विनश्यन्ति, ता अपि यथोत्तराः प्राग्वदनन्ता, जघन्यवर्गणाया उत्कृष्टा कियद्गुणा ? सर्वजीवानामनन्तगुणा । ततस्ताभ्यः प्रदेशोत्तरा इतरा अध्रुववर्गणा अनन्ता भवन्ति, अध्रुवा इति किं ? ताः कदाचित्सन्ति कदाचिन्नेति जघन्याया उत्कृष्टा कियद्गुणा? सर्वजीवानन्तगुणा। ताभ्यो रूपोत्तराः शून्य-

त्तरा, यावदनन्तानन्तरूपोत्तराः कार्मणशरीरार्थं जीवस्य ग्रहणयोग्या भवन्ति। एवं स्वस्थाने स्वस्थाने एकैकव्यक्तावनन्ता अनन्ता वर्गणा, किमुक्तं भवति–औरारिकजघन्यायाः वर्गणायाः रूपोत्तराः अनन्तानन्ताः सर्वलोकापन्नाश्च, एवं सर्वा प्रत्येकं वर्गणा वक्तव्या, ग्रहणप्रायोग्याश्च वक्तव्याः। या अनन्तरोक्तास्ता गृहीत्वा गृहीत्वा कार्मणशरीरत्वेन नयति, किमुक्तं भवति–कार्मणशरीरं सर्वं कर्मप्रकृतीनां मूलोत्तरभेदभिन्नानां बीजीभूतं योनिभूतं, यतोऽतस्ताः कार्मणशरीरवर्गणा गृहीत्वा स्वहेत्वभ्यासात्तत्प्रकृतिभावं नयति, यथा पृथिवीचित्रत्वहेतुसद्भावान्मेघजलं, यथा जाठराग्निस्तीव्रमन्दत्वहेतोराहारं, यथा सूपकारो गोधूमपुद्गलादिद्रव्यं गुडघृतपाकवैचित्र्यत्रिकटुकहिंग्वजाजोधान्यकादिद्रव्यहेतोरनेकरूपं विसदृशानुभावं करोति, एवं जीवोऽपि कार्मणशरीरवर्गणाद्रव्यमिति। एवमभिहिते आह चोदकः–यद्येवं ततः कार्मणशरीरस्य बन्धाभावे हास्यरतिभयजुगुप्सापुरुषवेदसञ्ज्वलनज्ञानान्तरायदशकदर्शनचतुष्कयशःकीर्त्तिसातोच्चैर्गोत्राणां प्रादुर्भावो न घटते, बीजविनाशेऽङ्कुरस्येव, अत्रोच्यते–औदारिकवर्गणा यद्यप्यौदारिकशरीरार्थमभिहिताः, तथापि तदङ्गोपाङ्गबन्धनसङ्घातानां ता एव ग्राह्याः तेषां तदन्तर्गतत्वात्। एवं वैक्रियाहारकवर्गणा अपि स्वस्थाने, तैजसवर्गणाः पुनरौदारिकवैक्रियाहारकभावमपि भजन्ते, कथमेतदवसीयते? औदारिकतैजसबन्धनादीनां प्ररूपणातः, कार्मणवर्गणास्तु सर्वप्रकृतिभावं भजन्ते, कार्मणशरीरस्य प्राधान्यमत्र शरीराधिकारत्वात्, न पुनः कार्मणहेतुभिरेव तदर्थं तासां ग्रहणम् सर्वकर्म्मयोग्यत्वात् सर्व्वहेतुभिस्ता गृह्यन्ते, बद्ध्यमानप्रकृतिभावेन च परिणमन्ति, यथा गोत्रसाधारणं क्षेत्रं गोत्रप्रधानस्यैवोपभोग्यं भवति, अन्येषामपि तद्विभागदानात्, तस्मिंश्च मृते तत्कालोपस्थितगोत्रस्य तत्फलस्वामित्वं भवति, कथमयमुपनयो घटते? प्रदेशबन्धेऽस्यार्थस्य पूर्वाचार्यैः ख्यापितत्वात्, कार्मणाबन्धेऽप्यासां बन्धभणनाच्च, कार्मणस्य सर्वबन्धनेष्वपि

प्रदेशोत्तरा ग्रहणायोग्याः, द्विप्रदेशोत्तरा ग्रहणायोग्याः, त्रिप्रदेशोत्तरा ग्रहणायोग्या, एवं चतुःपञ्चसङ्ख्येयासङ्ख्येयानन्तपुद्गलोत्तरा अपि ग्रहणायोग्या, अनन्तानन्तपुद्गलोत्तरा अपि ग्रहणायोग्याः, जघन्याया अग्रहणयोग्याया उत्कृष्टा कियद्गुणा? अभव्यजीवानन्तगुणा सिद्धानन्तभागतुल्या वा भवति। ताभ्यः पुनरयोग्याभ्यः प्रदेशोत्तराः, एवं त्रिचतुःपञ्चसङ्ख्येयाऽसङ्ख्येयानन्तपुद्गलोत्तरा वैक्रियशरीरार्थं ग्रहणयोग्या भवन्ति। ताभ्यः परतः प्राग्वदग्रहणयोग्याः। अग्रहणयोग्याभ्यः परतो रूपोत्तरा, द्विरूपोत्तराः, एवं सङ्ख्येयाऽसङ्ख्येयानन्तानन्तपुद्गलोत्तरा अप्याहारशरीरार्थं जीवस्य ग्रहणयोग्या भवन्ति। ताभ्योऽपि परतो भवन्त्यग्रहणयोग्यास्ताश्च प्राग्वद्वक्तव्याः। ताभ्यः अग्रहणयोग्याभ्यः परतो रूपोत्तरा, एवं द्वित्रिचतुःपञ्चसङ्ख्येयाऽसङ्ख्येयानन्तानन्तपुद्गलोत्तरा अपि तैजसशरीरार्थं ग्रहणप्रायोग्या जीवस्य भवन्ति, या गृहीत्वा गृहीत्वा तैजसशरीरं निर्व्वर्त्तयति। ताभ्यः परतो भूयोऽप्ययोग्याः रूपद्वित्रिचतुःपञ्चसङ्ख्येययावदनन्तानन्तपुद्गलोत्तराः, अनन्ता ग्रहणायोग्याः वर्गणा भवन्ति। ताभ्यः परतो रूपोत्तरा, द्विरूपोत्तरा, एवं त्रिचतुःपञ्चसङ्ख्येया यावदनन्तानन्तपुद्गलोत्तराः अनन्ता वर्गणा भवन्ति, याः भाषार्थं जीवोऽवलम्बयति, याः गृहीत्वा चतुर्विधभाषात्वेन परिणमय्य विसृजति। ताभ्यः परतोऽग्रहणयोग्याः प्राग्वद्वक्तव्याः। ताभ्यः परतो रूपोत्तरा, यावदनन्तानन्तरूपोत्तराः, आनापानार्थं जीवस्य ग्रहणयोग्या वर्गणा भवन्ति, या गृहीत्वा गृहीत्वानापानभावं नयति। ताभ्यः परतो जीवस्य भूयोऽप्यग्रहणयोग्या भवन्ति, ताश्च प्राग्वद्वक्तव्याः। ताभ्योऽग्रहणयोग्याभ्यः परतो रूपोत्तरा, यावदनन्तानन्तरूपोत्तरा वर्गणा मनोऽर्थं जीवस्य ग्रहणयोग्या भवन्ति, या गृहीत्वा गृहीत्वा जीवाः सत्यासत्यादिचतुर्विधमनोभावेन परिणमय्य चिन्तयन्ति। ताभ्यः परतो ग्रहणायोग्या अनन्तानन्ता वर्गणा भवन्ति, ताश्च प्राग्वद्वक्तव्याः। ताभ्यः परतो रूपो-

एवमानपानमपि तत्पुद्गलावष्टम्भतो जीवः प्रदेशैः स्वयोगानुरूपं विसृजति, मनोयोग्यानि द्रव्याण्यवलम्ब्य स्वप्रदेशैस्ततः स्वशक्त्यनुरूपं चिन्तयतीति गाथार्थः ॥ १३ ॥

उक्ता योगस्थानप्ररूपणा। साम्प्रतं वर्गणाप्ररूपणा क्रियते, तस्याः सम्बन्धः तैर्योगैः यान् पुद्गलान् गृहीत्वा शरीरत्वेन परिणमयति, भाषानपानमानसभावेन च आलम्बयति, तदर्थं वर्गणाप्ररूपणायाह—

**एक्कपएसाइयाणंतजा होउण होंति उरलस्स। अज्जोगंतरियाओ, वग्गणाओ अणंताओ ॥ १४ ॥**

व्याख्या—एकप्रदेशाद्याः एकपरमाण्वाद्या वर्गणा भूत्वा तावद्यावदनन्तप्रदेशजा भवन्ति, ततस्ताभ्यः परत औदारिकशरीरप्रायोग्या भवन्ति। किमुक्तंभवति ? एकैकपरमाणुरूपाः वर्गणा एवं द्वित्रिचतुःपञ्चसङ्ख्येयरूपोत्तराः प्रत्येकमनन्ताः सन्ति। ताः सर्वा अपि जीवस्याग्रहणयोग्या अनन्तानन्तपुद्गलात्मकाः काश्चिदयोग्याः काश्चिदौदारिकशरीरार्थे ग्रहणयोग्याः। कियन्त्यस्ताः प्रदेशोत्तरा ? अनन्ताः, ताभ्यः परतो यावद्वैक्रियशरीरप्रायोग्या न भवन्ति तावदयोग्याः, ताभिर्व्यवहिता वैक्रियवर्गणा भवन्ति। या ग्रहणायोग्यास्ताः कियन्त्यः रूपोत्तराः ? तुशब्दादभव्यजीवानामनन्तगुणाः, सिद्धानामनन्तभागतुल्याः। जघन्याया उत्कृष्टा विशेषाधिको, को विशेषः, तस्या एवानन्तभाग इति गाथार्थः ॥ १४ ॥

वर्गणानां परिपाटिदर्शनार्थमाह—

**ओरालविउव्वाहार-तेयभासाणुपाणमणकम्मे। अह दव्ववग्गणाणं कमो विवज्जासओ खेत्ते ॥ १५ ॥**

व्याख्या—अनन्ता अग्रहणयोग्या उल्लङ्घ्य तत औदारिकशरीरार्थमौदारिकवर्गणाग्रहणप्रायोग्या भवन्ति, ताभ्यः

रोत्कृष्टयोगाद् द्वीन्द्रियाणां लब्ध्यपर्याप्तकानामुत्कृष्टयोगिनामसङ्ख्येयगुणो योगः, एवं त्रिचतुरिन्द्रियासंज्ञिसंज्ञिनां, अपर्याप्तकानामुत्कृष्टयोगिनां यथोत्तरमसङ्ख्येयगुणो योगो भवति, एते च लब्ध्यपर्याप्तकाः ततो लब्ध्यपर्याप्तकात् संज्ञिपञ्चेन्द्रियादुत्कृष्टयोगिनः करणापर्याप्तकस्य जघन्ययोगिनः द्वीन्द्रियस्यासङ्ख्येयगुणयोगः, एवं त्रिचतुरिन्द्रियासंज्ञिसंज्ञिनां करणापर्याप्तकानां यथोत्तरमसङ्ख्येयगुणो योगः, तस्मात्संज्ञिनः करणापर्याप्तकात् सर्वपर्याप्तिभिः पर्याप्तकस्य द्वीन्द्रियस्योत्कृष्टयोगिनोऽसङ्ख्येयगुणो योगः, एवं चिचतुरिन्द्रियासंज्ञिनां पर्याप्तकानामुत्कृष्टयोगिनां यथोत्तरमसङ्ख्येयगुणो योगः, इहशब्दाधिक्यात् तस्मादुत्कृष्टयोगिनः पर्याप्तासंज्ञिनोऽनुत्तरदेवानां, तेभ्योऽपि ग्रैवेयकानाम्, तेभ्योऽपि भोगभूमितिर्यग्मनुष्याणां, तेभ्योऽप्याहारकशरीरिणां, तेभ्योऽपि शेषदेवनारकतिर्यग्मनुष्याणामुत्कृष्टयोगिनां यथोत्तरं योगोऽसंख्येयगुणो भवति। सूक्ष्मक्षेत्रपल्योपमासङ्ख्येयभागः प्रत्येकमत्र गुणकारो ग्राह्यः जघन्ययोगी जघन्यकर्मप्रदेशग्रहणं करोति, योगवृद्धौ तद्वृद्धिरपि मन्तव्येति गाथार्थः ॥ १२ ॥

यदर्थं योगस्थानप्ररूपणा कृता तमाह—

**जोगणुरूवं जीवा, परिणामेंतीह गेण्हिउं दलियं । भासाणुप्पाणमणोचियं च अवलंबए दव्वं ॥ १३ ॥**

व्याख्या—स्वकीययोगानुरूपं कर्मदलं इह—अस्मिल्लोके निरन्तरं व्यवस्थितं स्वप्रदेशैः गृहीत्वा जीवाः परिणामयन्ति, स्वप्रदेशैः एकीकुर्वन्ति । यथामृत्परमाणवः पयांसि तद्गताः, पूपकपरमाणवः घृताद्यात्मनि स्थापयन्तीत्यर्थः भाषानापानमनस उचितं च द्रव्यजातं वर्गणारूपमवलम्बयन्ति योगानुरूपमेव, किमुक्तं भवति,—भाषायोग्यं द्रव्यमवलम्ब्य जीवः प्रदेशैस्ततो भाषां विसृजति, यथा मन्दशक्तिः करेण यष्टिमवलम्ब्य भ्रमति, नद्यां वाऽलाब्वादि गृहीत्वा तरति, कूपाद्वा रज्जुमवलम्ब्य समुत्तरति,

समयास्थितिरिति। तत्परतो हानिः सप्तषट्पञ्चचतुस्त्रिद्विसामयिका स्थितिर्भवति । एकैका स्थितिः कियता योगस्थानानां भवत्येतदुच्यते—श्रेण्यसङ्ख्येयभागमात्राणां। किं सर्वाः स्थितयः तुल्या योगस्थानानां भवन्ति? न ह्येवं, अष्टाङ्कोभयस्थिताः याः स्थितयः ता यथा परं असङ्ख्येयगुणानां योगस्थानानां भवन्ति। किमुक्तं भवति? अष्टसमयस्थितिकानि योगस्थानानि सर्वस्तोकानि, तेभ्योऽसङ्ख्येयगुणानि सप्तसामयिकानि, अल्पतरस्थितिकत्वात्, तेभ्योऽपि षट्समयस्थितिकानि, एवं पञ्चचतुस्त्रिद्विसमयस्थितिकान्यपि यथोत्तरमसङ्ख्येयगुणानि, एषोत्कृष्टा स्थितिः, जघन्या सर्वेषां सामयिकस्थितिः। अन्यान्यसङ्ख्येयानि सूक्ष्मनिगोदापर्याप्तयोग्यानि समयस्थितिकानि भवन्ति, यतस्तस्य प्रतिसमयमसङ्ख्येयगुणवृद्ध्या योगस्थानानि वर्द्धन्ते, अतो जघन्यत उत्कृष्टतश्च समयस्थितिकानि सर्वाण्यपीति गाथार्थः ॥ ११ ॥

केषां जीवानां कियन्ति योगस्थानानि भवन्ति तत्राह—

**सुहुमेयरादियाणं, जहण्णउक्कोसपज्जपज्जाणं। आसज्ज संखगुणाणि होंति इह जोगट्ठाणाणि ॥ १२ ॥**

व्याख्या—साधारणसूक्ष्मस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्त्तमानस्य जघन्ययोगेन सर्वस्तोको योगो भवति, तस्माद्बादरस्य एवंभूतस्य असङ्ख्येयगुणो योग, एवमेव द्वित्रिचतुरिन्द्रियाणामसंज्ञिसञ्ज्ञिनां च लब्ध्यपर्याप्तकानां प्रथमसमये वर्त्तमानानां जघन्ययोगिनां प्रत्येकं यथोत्तरं असङ्ख्येयगुणो योगः। तस्मात्संज्ञिनः सूक्ष्मसाधारणस्य लब्ध्यपर्याप्तस्योत्कृष्टोऽसङ्ख्यायगुणः, ततोऽप्येवंभूतबादरस्यासङ्ख्येयगुणो योगः, तस्मात्सूक्ष्मपर्याप्तकस्य जघन्योऽसङ्ख्येयगुणः, ततो बादरपर्याप्तस्य जघन्योऽसङ्ख्येयगुणः, ततोऽपि सूक्ष्मपर्याप्तकस्योत्कृष्टोऽसङ्ख्येयगुणः, ततः पर्याप्तबादरस्योत्कृष्टोऽसङ्ख्येयगुणो योगः, तस्माद् बाद-

स्पर्द्धकानि भवन्ति। तस्मादप्यन्यदीयव्यवधानव्यवहितस्थानं भूयो द्विगुणस्पर्द्धकं भवति। एवं सर्वयोगस्थानेषु वक्तव्यम्, यद्येवं ततः कियन्ति द्विगुणस्थानानि? तदुच्यते—सूक्ष्माद्धापल्योपमस्यासङ्ख्येयभागे यावन्मात्राः समयास्तावन्मात्राणि द्विगुणस्थानानि वैपरीत्ये इयन्त्येव हानिस्थानानि भवन्ति। एकस्य द्विगुणस्थानान्तरस्य योगस्थानेभ्योऽसङ्ख्येयभागमात्रा वा गुणाकारा वक्तव्या इति गाथार्थः ॥ ९ ॥

**वड्ढंति व हायंति व चउहा जीवस्स जोगठाणाइं। आवलिअसंखभागंतमुहुत्तमसंखगुणहाणी ॥ १० ॥**

व्याख्या—तानि योगस्थानानि जीवस्य वृद्धिमुपयान्ति चतुर्द्धा, क्षयोपशमस्य चित्रत्वात्। कथं? असङ्ख्येयभागाधिकानि वा, सङ्ख्येयभागाधिकानि वा, सङ्ख्येयगुणाधिकानि वाऽसङ्ख्येयगुणाधिकानि वा। हानावपि एवमेव, असङ्ख्येयभागहीनानि वा, सङ्ख्येयभागहीनानि वा सङ्ख्येयगुणहीनानि वाऽसङ्ख्येयगुणहीनानि वा, चित्रत्वाद्वीर्यान्तरायोदयस्य भवन्ति। अनयोर्हानिवृद्धयोः कालनियमार्थमाह—आवलिकाऽसङ्ख्येयभागमात्रं कालमुत्कृष्टत आद्यास्तिस्रोऽपि वृद्धयो हानयो वा प्रत्येकं भवन्ति। असङ्ख्येयगुणवृद्धिर्हानिर्वा अन्तर्मुहूर्त्तं यावद् भवतीति गाथार्थः ॥ १० ॥

उक्तो योगस्थानानां वृद्धिहान्योः कालः, साम्प्रतमवस्थितिकालोऽभिधीयते—

**जोगठाणठिईओ, चउसमयादट्ठ दोण्णि जा तत्तो। अट्ठगुभयठिइयाओ जहा परमसंखगुणियाणं ॥ ११ ॥**

व्याख्या—योगस्थानपरिणता जीवा वृद्धिं हानिं वा कुर्वाणा एकैकयोगस्थाने कियत्कालं तिष्ठन्त्येतदुच्यते—चत्वारः समयाः पर्याप्तसूक्ष्मनिगोदजीवा जघन्ययोगिनस्तदारभ्य यथा यथा वीर्यवृद्धिर्भवति, तथा तथा स्थितिवृद्धिः, पञ्च षड् सप्ताष्टौ

एकजीववीर्याविभागाधिका जीवप्रदेशा न सन्ति, द्वित्रिचतुष्पञ्चाधिका वा न सन्ति, यावदसङ्ख्येयलोकाकाशप्रदेशाधिका उल्लङ्घ्य सन्ति, ततस्तैर्वर्गणा प्रथमा। एवं रूपवृद्धाभिरसङ्ख्येयवर्गणाभिः श्रेणिप्रदेशासङ्ख्येयभागतुल्याभिः द्वितीय स्पर्द्धकम्, भूयो रूपवृद्धया न सन्ति वर्गणा, यावदसङ्ख्येयलोकाकाशप्रदेशप्रमाणवीर्यविशेषास्ता उल्लङ्घ्य पुनर्वर्गणा भवन्ति। एव भूयो भूयः स्पर्द्धकप्ररूपणा कार्या इति गाथार्थः ॥ ७ ॥ उक्ता स्पर्द्धकप्ररूपणा, अत्रैवान्तरप्ररूपणा च, स्थानप्ररूपणायाह—

**सेढीअसंखभागियफड्डेहिं जहण्णयं हवइ ठाणं। अंगुलअसंखभागुत्तराइं भूआ असंखाइं ॥ ८ ॥**

व्याख्या—एवमनन्तरोक्तविधिना निष्पन्नस्पर्द्धकैः श्रेणीप्रदेशासङ्ख्येयभागतुल्यैर्जघन्यवीर्यत्वात् प्रदेशानां जघन्यं योगस्थानं भवति। अङ्गुलासङ्ख्येयभागप्रदेशप्रमाणाधिकैः स्पर्द्धकैः प्रथमयोगस्थानाद् द्वितीयं योगस्थानं भवति। एवमङ्गुलासङ्ख्येयभागोत्तराणि यथोत्तरमसङ्ख्येयानि श्रेण्यसङ्ख्येयभागप्रदेशतुल्यानि योगस्थानानि भवन्ति? प्रथमं योगस्थानं प्रभूतैर्जीवप्रदेशैरल्पवीर्यैर्भवति। ततो द्वितीयं स्वल्पतरैर्जीवप्रदेशैः वीर्यवद्भिश्च भवति। अतः प्रभूततराणि स्पर्द्धकानि। अन्ये त्वेवं व्याचक्षते, तस्माज्जघन्यवीर्याज्जीवाद्योऽन्यो वीर्याधिकस्तस्यानेनैव प्रकारेण यद्योगस्थानं तद् द्वितीयम्। एवं उत्कटतरवीर्यस्य तृतीयम्, एवं श्रेण्यसङ्ख्येयभागतुल्यानि योगस्थानानि भवन्तीति गाथार्थः ॥ ८ ॥

उक्ता स्थानप्ररूपणा, अनन्तरोपनिधा च, परम्परोपनिधोच्यते—

**सेढिअसंखियभागं, गंतुं गंतुं भवन्ति दुगुणाइं। फड्डाइं ठाणेसुं पलियासंखंसगुणगारा ॥ ९ ॥**

व्याख्या—प्रथमयोगस्थानात् श्रेण्यसङ्ख्येयभागप्रदेशतुल्यानि योगस्थानानि उल्लङ्घ्य यद्योगस्थानं तस्मिन् द्विगुणानि

प्ररूप्यते । तत्परिज्ञानार्थं तत्रादावेवाविभागप्ररूपणा, वर्गणाप्ररूपणा, स्पर्द्धकप्ररूपणा, अन्तरप्ररूपणा, स्थानप्ररूपणा, अनन्तरोपनिधाप्ररूपणा, परम्परोपनिधा प्ररूपणा, एवमाद्यत्र वक्तव्यम् ॥

**पण्णाए अविभागं, जहण्णविरियस्स वीरियं छिण्णं । एक्केक्कस्स पएसस्सऽसंखलोगप्पएससमं ॥ ५ ॥**

व्याख्या—'प्रज्ञया' बुद्धया, सर्वजघन्यवीर्यस्य जीवप्रदेशस्य वीर्यं 'छिन्नं' खण्डितं यावदविभागं जातं द्विधाकर्त्तु न शक्यत इत्यर्थः । तदेवं प्रकृतेः कियन्तो वीर्यविभागा वीर्यपरमाणवो भावपरमाणवो वा जाता ? एकैकस्य जीवप्रदेशस्यासङ्ख्येयलोकाकाशप्रदेशतुल्याः आह–जघन्योत्कृष्टप्रदेशयोः कोऽत्र विशेषः ? उच्यते–महान् विशेषो, यतोऽसङ्ख्येयस्यासङ्ख्येयभेदाभिन्नत्वात्, असङ्ख्येयगुणत्वमत्र मन्तव्यमिति गाथार्थः ॥ ५ ॥ उक्ताऽविभागप्ररूपणा, वर्गणाप्ररूपणायाह–

**सव्वप्पवीरिएहिं, जीयपएसेहि वग्गणा पढमा । बीयाइवग्गणाओ, रूवुत्तरिया असंखाओ ॥ ६ ॥**

व्याख्या—सर्वाल्पवीर्या जघन्यवीर्या ये जीवप्रदेशाः तैः असङ्ख्येयप्रदेशैः सर्वैरप्येकावर्गणा प्रथमोच्यते, द्वितीयादयो वर्गणा रूपोत्तरा असङ्ख्येयाः । किमुक्तं भवति–एकेन जीववीर्याविभागेनाधिका ये प्रदेशास्तत्समासेन द्वितीया वर्गणा, एवं द्वित्रिचतुष्पञ्चाद्यविभागाधिकैः जीवप्रदेशैः वर्गणा भवन्त्यसङ्ख्येयाः श्रेणिप्रदेशासङ्ख्येयभागतुल्या इति याथार्थः ॥ ६ ॥

स्पर्द्धकप्ररूपणायाह—

**ताओ फड्डगमेगं, अओ परं नत्थि रूववुड्ढीए । जाव असंखा लोगा, पुव्वविहाणेण तो फड्डा ॥ ७ ॥**

व्याख्या—ताः सर्वा अपि वर्गणा एकत्र मीलिताः प्रथमं स्पर्द्धकं भवति । अतः परं ताभ्यः स्पर्द्धकवर्गणाभ्यो रूपवृद्धया

**आवरणदेससव्व-क्खएण दुविहेह वीरयं होइ । अहिसंधिअणभिसंधि य अकसाइ सलेसि उभयंपि ॥ २ ॥**

व्याख्या—वीर्यान्तरायदेशक्षयतः छद्मस्थानां चित्रं वीर्यं भवति, वीर्यान्तरायसर्वक्षयेण केवलज्ञानिनां भवति। इहातो द्विविधं वीर्यम्। तदप्येकैकं द्विविधं अभिसन्धिजानभिसन्धिजभेदात्, यन्मनोऽभिचिन्तनापूर्वकं धावनवल्गनाहारादिकरणं तदभिसन्धि। यत्पुनरेकेन्द्रियादीनां मनोरहितानां वाक्कायक्रियारूपं वीर्यं, समनस्कानामपि भुक्तस्याहारस्य यत् धातुमलत्वेन व्यवस्थापनं तदनभिसन्धि। सर्वावरणक्षयाद्यदभिसन्धिजानभिसन्धित्वेन द्विविधं जातम्, तदुभयमपि अकषायं सलेश्यं सयोगिनां भवतीति गाथार्थः ॥ २ ॥

**होइ कसाइ वि पढमं इयरमलेसो वि जं सलेसं तु । गहणपरिणामफंदण-रूवं तं जोगओ तिविहं ॥३॥**

व्याख्या—प्रथमं यद्देशावरणक्षयेण तत्सकषायम्, अपिशब्दादकषायमपि भवत्युपशान्तक्षीणकषायाणां 'इतरत्' सर्वावरणक्षयेण यत्तदलेश्यमयोगिसिद्धानां भवति, अपिशब्दात् सलेश्यमपि योगिनां भवति। एतेषां वीर्याणां यत्सलेश्यं तद् ग्रहणपरिणामस्पन्दनारूपं, 'योगतो' मनोवाक्कायभेदतस्त्रिविधम्। तुशब्दाधिक्यात् शुभलेश्यानां विशुद्धितोऽशुभानां सक्लेशतो जीवस्य वीर्यवृद्धिर्योगोत्कटता भवति, उभयोरपि मन्दत्वे मन्दमाणता। अत्र तु सकषायसलेश्यवीर्येणाधिकार इति गाथार्थः ॥३॥

तस्यैवैकार्थिकान्याह—

**जोगो विरियं थामो, उच्छाह परक्कमो तहा चेट्ठा । सत्ति सामत्थं चिय जोगस्स हवंति पज्जाया ॥ ४ ॥**

व्याख्या—सुगमेयं गाहा ॥ ४ ॥ सांसारिकजीवानां चित्रक्षयोपशमाच्चित्रं वीर्यं भवति, तस्मात् क्षायोपशमिकवीर्यं

## ॥ अथ कर्मप्रकृत्याधिकारः ॥

**नमिऊण सुयहराणं वोच्छं करणाणि बंधणाईणि। संकमकरणं बहुसो अइदेसियं उदयसंते जं ॥ १ ॥**

व्याख्या—श्रुतं धारयन्तीति श्रुतधरा, अथवा श्रुतं द्वादशाङ्गं गणिपिटकं तद्धारयन्तीति श्रुतधरास्तेभ्यः प्रणम्य नत्वा 'वोच्छं' वक्ष्ये करणानि बन्धनादीनि बन्धनकरणं बध्यते येनाष्टप्रकारं कर्म जीववीर्येण शक्त्या चेष्टया तद्बन्धनकरणम्। प्रकृतिस्थित्यनुभागप्रदेशानामन्यथा स्थापनं अन्यपरिणामपरिणमनं अन्यप्रकृतिस्वरूपेण व्यवस्थापनं वा यज्जीववीर्यतस्तत्सङ्क्रम करणम्, तद्भेदावेवोद्वर्त्तनापवर्त्तनकरणे, स्थित्यनुभागयोः वृद्धिकरणमुद्वर्त्तनाकरणम्, ह्रस्वीकरणमपवर्त्तनाकरणम्। अप्राप्तकाल-कर्मपुद्गलानामुदये व्यवस्थापनमुदीरणाकरणं, सा चोदयविशेष एव। उदयोदीरणनिधत्तिनिकाचनाकरणानां यदऽयोग्यत्वे व्यवस्थापनं तदुपशमनाकरणमुद्वर्त्तनापवर्त्तनवर्ज्जानां करणानामयोग्यत्वे व्यवस्थापनं निधत्तिकरणम्। सर्वकरणायोग्यत्वे व्यव-स्थापनं निकाचनाकरणम्। अथवा तप्तायःशलाकासम्बन्धतुल्यं निधत्तिकरणम्, आसामेव तप्तायश्शलाकानां सम्बद्धानां कुट्टि-तानां परिणामतुल्यं निकाचनाकरणम्। अनयोरन्यत्र सूत्रनिबद्धसूचीसङ्घाततुल्यो बन्ध इति। एतत्करणाष्टकं जीववीर्यरूपं वक्ष्ये, यतो यस्मादनेकशोऽतिदिष्टं सङ्क्रमकरणमुदये सत्कर्मणि तदभणने तयोः दुर्विज्ञेयत्वात्, तस्मात् तत्साहचर्यात् सर्वाण्यपि करणान्यु-च्यन्त इति गाथार्थः ॥१॥ साम्प्रतं सूत्रक्रमाद् बन्धनकरणमायातम्, तस्य च योगाः कषायाश्च हेतवः, तत्रापि प्रथमं योगप्ररूपणा क्रियते, यतः ते कषायरहिता अपि बन्धहेतुत्वे योग्यत्वमर्हन्ति, अतः ते एवादावभिधीयन्ते—

व्याख्या—प्रथमस्थितेश्चरमो-अन्तिम उदयो, द्वितीयस्थितेश्चरमोऽन्तिमः संछोभः एते द्वे स्पर्द्धके वेदानाम् । अथवा प्रथम-द्वितीयस्थितिसद्भावे प्रथमं स्पर्द्धकं, प्रथमस्थित्यभावे द्वितीयस्थितिसंछोभस्य सद्भावे द्वितीयं स्पर्द्धकं भवतीति गाथार्थः ॥१८४॥

विशेषमाह—

**चरिमसंछोभसमए एगठिई होइ थीनपुंसाणं । पढमठिइए तयंते पुरिसे दोआलिदुसमऊणं ॥ १८५ ॥**

व्याख्या—भव्यः सर्वजघन्यसत्कर्मा प्रभूतदेशविरतिसर्वविरतिपालकः सागरोपमपट्षष्टिद्विकानुपालितसम्यक्त्वो नपुंसक-वेदोदयेन क्षपकश्रेणीमभ्युत्थितस्तस्य चरमसंछोभकाले एका स्थितिर्भवति नपुंसकवेदस्य, एवं स्त्रीवेदस्य च । पुरुषवेदे तु प्रथम-स्थितिक्षये आवलिकाद्विकं द्विसमयोनं तिष्ठति, सच चरमसंछोभ इति गाथार्थः ॥ १८५ ॥

॥इतिश्री चन्द्रर्षिविरचितायां श्रीपञ्चसंग्रहस्वोपज्ञटीकायां पञ्चमं बन्धविधिद्वारं समाप्तं॥

भावयति-प्रथमसमयक्रोधवेदकेन यद्बद्धं तद् बन्धावलिकातीतं द्वितीयावलिकया सङ्क्रामयति, परप्रकृतिस्वभावेन स्थापयति, द्विचरमसमये क्रोधवेदकेन सर्वजघन्ययोगस्थानवर्त्तिना यद्बद्धं कर्म तदपि बन्धावलिकायां गतायां अन्यतः सङ्क्रामयति, अन्येनावलिकाकालेन सङ्क्रम्यमाणं २ सङ्क्रामयति, एवं त्रिचरमसमये क्रोधवेदकेन यद् बद्धं तद्बन्धावलिकायां द्वितीयावलिकया सङ्क्रामयति, एवं यद् यस्मिन् समये बद्धं तत्तस्मात् समयात् द्व्यावलिकाकालेनाकर्मी भवति, तस्माद् [1]बन्धोदयसमयेन उदयावलिकावर्त्तमानसमयेन च हीनं आवलिकाद्विकं द्वितीयस्थितौ भवति, प्रथमस्थित्या (समयोना) वलिकाशेषायामिति गाथार्थः ॥ १८२ ॥

**आवलिदोसमऊणामेत्तं फड्डं तु पढमठितिविरमे। वेयाणवि दोफड्डा ठिईदुगं जेण छण्हं पि ॥ १८३ ॥**

व्याख्या—द्विसमयहीनावलिकामात्रं स्पर्द्धकं द्वितीयस्थितौ भवति, प्रथमस्थितिविरमे—तदवसाने, यतः उदयावलिकामात्रेण कालेनावलिकां सङ्क्रामयति, द्विसमयोनावलिका तिष्ठति सा लता जघन्यं स्पर्द्धकं तच्च तदवस्थमेव माने सङ्क्रामयति, मानादपि मायायां, मायाया अपि लोभे, एवं तत्प्रदेशवृद्ध्या अनन्तभेदं भवति यावद् गुणितकर्मांशोत्कृष्टम्। अथवा योगस्थानद्विकादिसंयोगगुणमसङ्ख्येयभेदं जघन्यमपि भवति। वेदानामपि द्वे स्पर्द्धके प्रथमस्थित्यभिधानं द्वितीयस्थित्यभिधानं च एवं सञ्ज्वलनत्रिकवेदत्रिकयोरपि षण्णामपि प्रकृतीनां भवतीति गाथार्थः ॥ १८३ ॥

तदेव स्पर्द्धकद्विकं भावयति—

**पढमठिईचरिमुदओ बिइयठिईए व चरिमसंछोभे। दोफड्डा वेयाणं दो इगि संतंहवा एए ॥ १८४ ॥**

---

१ बन्धान्तसमयेनेत्यर्थः

विरतिं च सर्वविरतिं च बहुधाऽनुपाल्य चत्वारो वारा मोहनीयमुपशमय्य द्वे षट्षष्टीसागरोपमाणां सम्यक्त्वमनुपाल्य मिथ्यात्वं गतः, ततो दीर्घोद्वलनया उद्वलमानस्य चरमखण्डकावसाने उदयावलिकायाः परिगलमानायाः द्विसामयिकी एका स्थितिरवशेषा यावज्जघन्यं स्पर्द्धकं, ततः प्रदेशवृद्ध्या अनन्तानि सत्स्थानानि यावदुत्कृष्टं प्रदेशसत्कर्म सम्यक्त्वस्य भवति, एवं सम्यग्मिथ्यात्वस्यापि । शेषोद्वलनानां सम्यक्त्वकालं विहाय शेषं तथैव वक्तव्यम् । हास्यादिषट्कस्य यश्चरमसंछोभः क्षपितकर्मांशस्य जघन्यं स्पर्द्धकमिति गाथार्थः ॥ १८० ॥

बंधावलियाईयं आवलिकालेण बीयट्ठिइहिंतो । लयठाणं लयठाणं नासेई संकमेणं तु ॥ १८१ ॥

व्याख्या—बद्धस्य कर्मणः 'आवलिका' बन्धावलिका, सा 'व्यतीता' अतिक्रान्ता यस्य तत्[1]कर्मबन्धावलिकातीतं तच्चान्येनावलिकामात्रेण कालेन द्वितीयस्थितिस्थानेभ्यः लतास्थानं २ नाशयति क्रोधान्माने प्रक्षिपति सङ्क्रामयतीत्यर्थः, तुशब्दो विशेषणार्थः, किं विशिनष्टि? प्रथमस्थित्या समयाधिकावलिकाशेषायां स्थितिखण्डकोदयोदीरणाबन्धाश्चत्वारोऽपि भवन्ति, आवलिकाशेषायां न सम्भवन्तीति गाथार्थः ॥ १८१ ॥

संजलणतिगे दुसमयहीणा दो आवलीण उक्कोसं । फड्डं बिईयठिइए पढमाए अणुदयावलिगा ॥ १८२ ॥

व्याख्या—'सञ्ज्वलनत्रिके' क्रोधमानमायाख्ये, यदा प्रथमस्थित्यां (समयोन) उदयावलिका शेषा तदा द्वितीयस्थित्यां द्विसमयोनावलिकाद्विकलता उत्कृष्टस्पर्द्धकसंज्ञा च । सा च प्रथमस्थित्युदयावलिकाविपाके [1]नेच्छति, एतदेव

१ न गच्छति प.

सङ्कामयतीति गाथार्थः ॥ १७६ ॥

ठिइखंडाणइखुड्डं खीणसजोगीण होइ जं चरिमं । तं उदयवतीणहिगं अन्नगए णूणमियराणं ॥ १७७ ॥

व्याख्या—स्थितिखण्डघाते क्रियमाणे खण्डानां यच्चरमं स्थितिखण्डं तदतिक्षुद्रं जघन्यं भवति, क्षीणकषायसयोगिनां तदुदयवतीनामेकस्थित्याभ्यधिकम् । अनुदयवतीनां तु संक्रान्तस्थित्या हीनं इति गाथार्थः ॥ १७७ ॥

जं समयं उदयवई खिज्जइ दुचरिमयं तु ठिइठाणं । अणुदयवइए तंमी चरिमं चरिमम्मि जं कमइ ॥१७८॥

व्याख्या—यस्मिन्नवसरे उदयवत्या 'क्षीयते' अनुभूयते, 'द्विचरमम्' उपान्त्यस्थानम्, अनुदयवतीनां तस्मिन् काले चरमं स्थितिस्थानं चरमे उदयवतीनां स्थितिस्थाने ' यतो ' यस्मात् ' क्रामति ' सङ्क्रमत्यतोऽनुदयवत्यः एकया स्थित्या हीना भवन्तीति गाथार्थः ॥ १७८ ॥

जावइयाओ ठिइओ जसंतलोभाणऽहापवत्तंते । तं इगि फड्डं संते जहण्णयं अकयसेढिस्स ॥ १७९ ॥

व्याख्या—यावन्त्यः स्थितयो यशःसञ्ज्वलनलोभयोर्यथाप्रवृत्तकरणान्तसमये क्षपितकर्मांशस्य तदेकं स्पर्द्धकं ( स्थानं ) जघन्यं प्रदेशसत्कर्मणो भवन्ति, तच्चाकृतश्रेणीजीवस्य श्रेण्यां गुणसङ्क्रमसद्भावाज्जघन्यं न भवति, ततः प्रदेशोत्तराणि अनन्तानि प्रदेशसत्स्थानानि भवन्ति यावद् गुणितकर्मांशयोग्यमिति गाथार्थः ॥ १७९ ॥

अणुदयतुल्लं उव्वलणिगाण जाणिज्ज दीहउव्वलणे । हासाइणं एगं संछोभे फड्डगं चरिमं ॥ १८० ॥

व्याख्या—अनुदयतुल्यमुद्वलनप्रकृतीनां जघन्यं स्पर्द्धकं, कथं ? सूक्ष्मनिगोदेषु कर्मस्थितिमनुपाल्य त्रसत्वे सम्यक्त्वं देश-

न्त्यः स्थितयः तावत् स्थितिकं स्पर्द्धकम् । अथवैकमुत्कृष्टमुच्यत इति गाथार्थः ॥ १७३ ॥

आवलिमेत्तुक्कोसं फड्डुगमोहस्स सव्वघाइणं । तेरसनाम तिनिद्दाण जाव तो आवली गलइ ॥ १७४ ॥

व्याख्या—आवलिकासमयमात्रस्पर्द्धकमुत्कृष्टं मोहनीयस्य सर्वजघन्यादारभ्य द्वादशाद्यकषायमिथ्यात्वनामत्रयोदश-स्त्यानर्द्धित्रिकाणां एकोनत्रिंशत्प्रकृतीनां क्षपणसमये उदयो नास्ति, यावन्नावलिका गलति न—क्षीयते, नान्यत्र प्रक्षिप्यते तावत्स-मयमानं स्पर्द्धकं भवतीति गाथार्थः ॥ १७४ ॥

खीणद्धासंखंसं खीणंताणं तु फड्डुगुक्कोसं । उदयवईणेगहियं निद्दाणं एगहीणं तं ॥ १७५ ॥

व्याख्या—क्षीणकषायाद्धायाः सङ्ख्येयभागतुल्यं क्षीणकषायान्तानां उत्कृष्टं स्पर्द्धकमसङ्ख्येयस्पर्द्धकात्मकत्वात् । जघन्यं प्राग्वत्, जघन्यदलैकस्थित्यात्मकमवसेयम् । उदयवतीनां एकस्थित्याऽभ्यधिकं ज्ञानान्तरायदशकदर्शनचतुष्काणां चतुर्द्द-शानां संपूर्णावलिकामात्रं, निद्राप्रचलयोस्तदपेक्षया एकस्थित्या हीनं तयोस्तदाऽनुदयमिति कृत्वा, जघन्यं द्विसामयिका एका स्थितिरिति गाथार्थः ॥ १७५ ॥

अज्जोगिसंतिगाणं उदयवईणं तु तस्स कालेणं । एगाहिगेण तुल्लं इयराणं समयहीणं तं ॥ १७६ ॥

व्याख्या—अयोगिनि सत्ता यासां ता अयोगिसत्प्रकृतयः तासां अयोगिकालं तत्समयप्रमाण उत्कृष्टं स्पर्द्धकं जघन्य-प्रदेशैकस्थित्यात्मकं जघन्यं, उदयवतीनां यशोवर्जितानां नामनवप्रकृतीनां सातासातयोन्यतमस्य । अनुदयवतीनां तु नवत्रयोदशोद्व-लनविंशतिवर्जितानां नामैकषष्टिनीचैर्गोत्राणां तदेवोत्कृष्टमेकस्थितिहीन तासां तत्रानुदयत्वात् एकास्थितिस्तिबुकसङ्क्रमेण उदयवतीषु

स्पर्द्धकप्ररूपणायाह–

**सव्वजहण्णपएसे पएसवुड्ढीएऽणंतया भेया। ठितिठाणे ठितिठाणे विण्णेया खवियकम्माओ ॥ १७२ ॥**
**खवियकम्मे वि तंमी जोगविसेसा असंखया भेया। ठितिठाणे ठितिठाणे एवइभेयं भवे फड्डं ॥**

व्याख्या—सर्वजघन्याः 'प्रदेशाः' परमाणवो यस्मिन् स्थाने तत्तथा, तस्मिन् सर्वजघन्यप्रदेशस्थाने प्रदेशवृद्ध्या, निरन्तराणि अनन्तस्थानानि भवन्ति, तस्मिन् जघन्ये एकपरमाणुप्रक्षेपादेको भेदो, द्विप्रक्षेपात् द्वौ, त्रिभिस्त्रय, एवमनन्ताः स्थान-भेदाः अस्यामेवंकस्थितौ कालविभागे भवन्ति। एवं स्थितौ २ समये २ 'विज्ञेया' मन्तव्याः। क्षपितकर्मांशादारभ्य स एव निरूप्यते ग्रन्थिकसत्त्वप्रायोग्यजघन्यकर्मा त्रसेषूपपन्नः, तत्र देशविरतिं सर्वविरतिं च बहुधा कृत्वा चत्वारो वारा मोहनीयमुप-शमय्य स्थावरत्वं पल्योपमासङ्ख्येयभागमनुभूय, भूयः त्रसेष्वागतस्तत्र क्षपणायोत्थितः स क्षपितकर्मांशः, तस्यान्तकण्डके गते आवलिकायामपि द्विसामयिकस्थितिशेषायां जघन्यं प्रदेशसत्कर्म्म भवति, एतस्यामेव स्थितौ प्रदेशोत्तराणि अनन्तानि प्रदेशस्थानानि लभ्यन्ते, यावद् गुणितकर्मांशप्रायोग्यमुत्कृष्टं प्रदेशसत्कर्मस्थानमेतान्येकं स्पर्द्धकमिति। एवं द्वाभ्यां स्थितिभ्यां द्वे, तिसृभिस्त्रीणि, चतसृभिः चत्वारि, स्पर्द्धकानि, यावत्समयोनावलिकाप्रमाणानि भवन्तीति गाथार्थः ॥ १७२ ॥

**एगट्ठिइयं एगाए फड्डुगं दोसु होइ दोठिइगं। तिगमाईसुवि एवं णेयं जावंनि जासिं तु ॥ १७३ ॥**

व्याख्या—एकस्यां स्थितौ यत्स्पर्द्धकं तदेकस्थितिकं 'द्वयोर्द्विस्थितिकं त्र्यादिष्वपि एवं ज्ञेयम्। यासां प्रकृतीनां याव-

१ द्वाभ्यां क.

५ द्व
सत्त
धिका

॥१०

देवद्विकनरकद्विकवैक्रियसप्तकानां पूर्वोद्वलितानां क्षपितकर्मांशेनान्तर्मुहूर्त्तबद्धानां अप्रतिष्ठानानुभूतानां भूयस्तिर्यक्षु भवेऽप्यबद्धानां एकेन्द्रियत्वे चिरोद्वलितानां द्विसामयिकस्थितिशेषाणां जघन्यं प्रदेशसत्कर्म भवति। मनुष्यद्विकोच्चैर्गोत्राणामपि पूर्वोद्वलितानामन्तर्मुहूर्त्तबद्धानां वाय्वग्निकाये चिरोद्वलितानां द्विसामायिकस्थितिशेषाणां जघन्यं प्रदेशसत्कर्म्म भवतीति गाथार्थः ॥ १६९ ॥

अंतिमलोभजसाणं असेढिगाऽहापवत्तअंतंमि। मिच्छत्तगए आहारगस्स सेसाणि नियगंते ॥ १७० ॥

॥ उत्तं जहण्णसामित्तं ॥

व्याख्या—सञ्ज्वलनलोभयशःकीर्त्त्योरश्रेणीगते—उभयश्रेणीवर्जिते, क्षपितकर्मांशे यथाप्रवृत्तकरणान्तसमये जघन्यं प्रदेशसत्कर्म्म भवति। श्रेणीगतस्य गुणसङ्क्रमेण प्रभूतदलता भवति, सा च नेष्यते, जघन्येनाधिकार इति कृत्वा। आहारकसप्तकस्य स्वल्पाद्धायोगैर्बद्धस्य मिथ्यादृष्टिना मन्दोद्वलनया उद्वलितस्य द्विसामयिकस्थितिशेषस्य जघन्यं प्रदेशसत्कर्म भवति, शेषाणां स्वान्तसमये जघन्यं प्रदेशसत्कर्म्म भवति। अन्ये तु ऊचुः, तीर्थंकरस्य स्वल्पयोगेन प्रथमसमयबद्धस्य या लता सा जघन्यं प्रदेशसत्कर्म भवतीति गाथार्थः ॥ १७० ॥

उक्त जघन्यप्रदेशस्वामित्वमिति। इदानीं प्रदेशसत्स्थानविकल्पप्ररूपणायाह—

चरमावलिगपविट्ठा गुणसेढी जासि अत्थि नय उदओ। आवलिया समयसमा तासिं खलु फड्डुगाइं तु ॥ १७१ ॥

व्याख्या—'चरमावलिका' कर्मस्थित्यन्तावलिका, तस्यां प्रविष्टा गुणश्रेणी यासां प्रकृतीनां अस्ति, न चोदयोऽस्ति, तासामावलिका समयतुल्यानि, खलु शब्दोऽलङ्कारे, स्पर्धकानि भवन्ति, तुशब्द एवकारार्थः, आवलिकातुल्यान्येवेति गाथार्थः ॥ १७१ ॥

**तुल्ला नपुंसगेणं एगिंदियथावरायवुज्जोया । सुहमतिगं विगलावि य तिरिमणुयचिरच्चियां नवरि ॥१६८॥**

॥ भणिअं उक्किट्ठसामित्तं ॥

व्याख्या—एकेन्द्रियजातिस्थावरोद्योतातपाः नपुंसकवेदेन तुल्या ईशानदेवसंक्लिष्टस्वान्तसमयादिक्रमेणो ( ईशानदेवाः संक्लिष्टाः स्वान्तसमये उ)त्कृष्टप्रदेशसत्कर्माणो भवन्ति। विकलेन्द्रियसूक्ष्मत्रिकेऽपि तिर्यग्भिर्मनुष्यैर्वा 'चिरं' ति पूर्वकोटिसप्तकं यदा चिते भूयो भूयो बन्धे तदोत्कृष्टप्रदेशसत्कर्मणी भवत इति । शेषाणां तमतमानारकस्य गुणितकर्मांशस्योत्कृष्टप्रदेशसत्कर्मस्वामित्वं कथितमेवेति गाथार्थः ॥ १६८ ॥

उत्कृष्टप्रदेशस्वामित्वविशेषोऽभिहितः । जघन्यप्रदेशस्वामित्वविशेषमाह—

**उव्वलणीणेगट्ठिइं उव्वलणाए जया दुसामइगा । थोवद्धमज्जियाणं चिरकालं पालिया अंते ॥ १६९ ॥**

व्याख्या—उद्वलनप्रकृतीनामाहारकसप्तकवैक्रियसप्तकदेवनरकमनुजद्विकसम्यक्त्वसम्यग्मिथ्यात्वोच्चैर्गोत्रानन्तानुबन्धिनां सप्तविंशतिप्रकृतीनां स्वोद्वलनायां यदैका स्थितिर्द्विसामयिका भवति तासां 'स्तोकाद्धार्जितानाम्' अल्पकालोपचितानां, तदा जघन्यं प्रदेशसत्कर्म भवति । विशेषोऽत्राप्युच्यते–क्षपितकर्मांशेनानन्तानुबन्धिनो वियोज्य भूयोऽन्तर्मुहूर्त्तं बध्वा भूयः सम्यक्त्वं द्वे षट्षष्टीसागरोपमाणामनुपाल्य क्षपणायोत्थितः, तस्या द्विसामयिकस्थितिशेषस्य जघन्यं तेषां प्रदेशसत्कर्म भवति । सम्यक्त्वमिश्रे द्वे षट्षष्टीसागरोपमाणामनुपाल्य मिथ्यात्वं प्राप्तः, चिरोद्वलनया मन्दोद्वलनया स्वोदयावलिकोपरिगतस्थितिखण्डं सङ्क्रामयति, तत उदयावलिका स्तिबुकसङ्क्रमेण मिथ्यात्वे सङ्क्रामयति, तस्यां द्विसामयिकस्थितिशेषायां जघन्यं प्रदेशसत्कर्मेति ।

**तमतमगो अइखिप्पं सम्मत्तं लभिय तंमि बद्धगद्धं । मणुयदुगस्सुक्कोसं सवज्जरिसभस्स बन्धंते ॥ १६५ ॥**

व्याख्या—'तमतमगो' त्ति, सप्तमपृथिवी नारकोऽतिक्षिप्रं जन्मत आरभ्यान्तर्मुहूर्त्ते गते सम्यक्त्वं लब्ध्वा, तत्र प्रभूताद्धा अन्तर्मुहूर्त्तोनानि त्रयस्त्रिंशत्सागरोपमाणि गुणहेतोर्बद्धस्य प्रथमसंहननस्य मनुजद्विकस्य मिथ्यात्वगमनसमये स्वबन्धान्ते उत्कृष्टप्रदेशसत्कर्म भवतीति गाथार्थः ॥ १६५ ॥

**बेच्छावट्ठि चियाणं मोहस्सुवसामगस्स चउखुत्तो । सम्मधुवबारसण्हं खवगंमि सबन्धअंतंमि ॥ १६६ ॥**

व्याख्या—द्वे षट्षष्टी चितानां-बद्धानां, चारित्रमोहनीयस्य चतुष्कृत्व उपशामके 'सम्मधुवबारसण्हं' ति सम्यक्त्वे-सति यासां द्वादशानां प्रकृतीनां बन्धोऽवश्यं भवति, ताः सम्यक्त्वध्रुवाः, कास्तास्त्रसादिचतस्रः सुस्वरादितिस्रः पराघातोच्छ्वासोच्चैर्गोत्रशुभविहायोगतिपञ्चेन्द्रियजातयस्तासां क्षपणायाभ्युत्थितस्य स्वबन्धान्तसमये उत्कृष्टं प्रदेशसत्कर्म्म भवति, श्रेणीग्रहणं तासु गुणसङ्क्रमेण प्रभूतं दल शङ्क्रान्तं लभ्यते इति गाथार्थः ॥ १६६ ॥

**सुभथिरसुभधुवियाणं एवं चिव होइ संतमुक्कोसं । तित्थयराहाराणं नियउक्कोस्ससबन्धंते ॥ १६७ ॥**

व्याख्या—शुभस्थिरशुभध्रुवबन्धिनीनां तैजससप्तकवर्णाद्येकादशनिर्माणागुरुलघूनां द्वाविंशतिप्रकृतीनां प्राक्तनं द्वादशोक्तं प्रकृतिक्रमेण तद्वदुत्कृष्टं प्रदेशसत्कर्म स्वामित्व स्वबन्धान्तसमये भवति । तीर्थंकराहारकसप्तकानां स्वकस्वकोत्कृष्टबन्धकालान्तरसमये उत्कृष्टं प्रदेशसत्कर्म भवति । तीर्थङ्करं देशोनपूर्वकोटिद्वयाधिकानि त्रयस्त्रिंशत्सागरोपमाणि बध्यते, आहारकं देशोनपूर्वकोटिं भूयो २ बध्यते, तत्परिणामसंभवात् गुणितकर्मांशः क्षपणायोत्थित इति वक्तव्यमिति गाथार्थः ॥ १६७ ॥

जातीयप्रकृतयः सातोच्चैर्गोत्रयशःकीर्त्तिषु गुणसङ्क्रमेण सङ्क्रामन्त्यतः सूक्ष्मसम्परायान्तसमये सातोच्चैर्गोत्रयशःकीर्त्तीनां उत्कृष्टप्रदेशसत्कर्मणः स्वामीति गाथार्थः ॥ १६१ ॥

अद्धाजोगुक्कोसेहि देवनरगाउगाण परमाए। परमं पएससंतं जा पढमो उदयसमओ सो ॥ १६२ ॥

व्याख्या—'अद्ध' त्तिबन्धकाद्धायोगैर्मनोवाक्कायलक्षणैस्तैरुत्कृष्टैर्देवनरकायुषोः 'परमाए' त्ति उत्कृष्टायां स्थितौ, परममुत्कृष्टं प्रदेशसत्कर्म भवति यावत्प्रथमस्तयोरुदयसमयस्तिष्ठतीति गाथार्थः ॥ १६२ ॥

सेसाउगाण नियगेसु चेव आगंतु पुव्वकोडीए। सायबहुलस्स अचिरा बंधंते जाव नो वट्टे ॥ १६३ ॥

व्याख्या—'शेषायुषोः' तिर्यग्मनुष्यायुषोः, स्वगतिभवेषु चशब्दादुत्कृष्टबन्धकाद्धायोगैरेव बध्वा पूर्वकोट्यायुष्केषु समुत्पन्नः, तत्रापि सुखी, यतः सुखितस्य न बहवः पुद्गलाः शटन्ति, ततः सोऽन्तर्मुहूर्त्तेनैव तत्र मर्त्तुकामो जातः, भूयोऽपि परमबन्धकाद्धायोगैरन्यत् स्वजातीयमायुष्कं बध्नाति, बन्धकाद्धान्तसमये यावत् वेद्यमानमायुष्कं नापवर्त्तयति, तावन्मनुष्यायुषः तिर्यगायुषो वा उत्कृष्टं प्रदेशसत्कर्म भवति, यतो देशोनमुभयायुष्कं तदा भवतीति गाथार्थः ॥ १६३ ॥

पुरित्तु पुव्वकोडी पुहुत्तनारयदुगस्स बंधंते। एवं पलियतिगंते सुरदुगवेउव्वियदुगाणं ॥ १६४ ॥

व्याख्या—'पूर्वकोटीपृथक्त्वमि' ति, पूर्वकोटीसप्तकं 'पूरित्तु' त्ति, सङ्क्लिष्टाध्यवसायो भूयो २ बन्धकत्वेन निचितं कृत्वा नरकाभिमुखो बन्धान्तसमये नरकद्विकस्योत्कृष्टं प्रदेशस कर्म करोति, एवमनेनैव क्रमेण पूर्वकोटिसप्तकं विशुद्धाध्यवसायतो बध्वा भोगभूमिषु पल्योपमत्रिकं च तदन्तसमये देवद्विकवैक्रियसप्तकानामुत्कृष्टं प्रदेशसत्कर्म करोतीति गाथार्थः ॥ १६४ ॥

लब्ध्वा लघु सप्तकस्य क्षपणायोत्थितो यस्मिन् समये मिथ्यात्वं सम्यग्मिथ्यात्वे सर्वसङ्क्रमेण प्रक्षिपति तस्मिन् समये तस्योत्कृष्टं प्रदेशसत्कर्म। तदपि सम्यग्मिथ्यात्वं यस्मिन् समये सर्वसङ्क्रमेण सम्यक्त्वे प्रक्षिपति तस्मिन् समये सम्यक्त्वस्योत्कृष्टं प्रदेशसत्कर्म। स एव नारकः तिर्यग्भूत्वा यदेशानदेवो भवति तत्रापि संक्लिष्टो भूयो नपुंसकवेदं बध्नाति, तदा तस्य भवान्तसमये उत्कृष्टं प्रदेशसत्कर्म नपुंसकस्य। ईशानग्रहणं प्रभूतस्थितिग्रहणार्थमिति गाथार्थः ॥ १५८ ॥

**ईसाणे पूरित्ता नपुंसगं तो असंखवासीसु। पल्लासंखियभागेण पूरए इत्थि वेयस्स ॥ १५९ ॥**

व्याख्या—ईशाने देवलोके कथितप्रयोगेण नपुंसकवेदस्योत्कृष्टं प्रदेशसञ्चयं कृत्वाऽऽपूर्य नपुंसकमित्यर्थः, ततः सङ्ख्येयवर्षायुषि स्थित्वाऽसङ्ख्येयवर्षायुषि गतः तत्र पल्योपमासङ्ख्येयभागेन कालेन तं नपुसकवेदं स्त्रीवेदे सङ्क्रामयति सक्लिष्टः, तस्मिन्नपुसकस्य बन्धाभावात्, नपुंसकदले सङ्क्रान्ते स्त्रीवेदस्योत्कृष्टं प्रदेशसत्कर्म भवतीति गाथार्थः ॥ १५९ ॥

**जो सव्वसंकमेणं इत्थी पुरिसंमि छुभइ सो सामी। पुरिसस्स कम्म संजलणयाण सो चेव संछोभे ॥ १६०॥**

व्याख्या—यो गुणितकर्मांशः क्षपकः स्त्रीवेद सर्वसङ्क्रमेण पुरुषवेदे सङ्क्रमयति, स पुरुषस्योत्कृष्टप्रदेशसत्कर्मस्वामी। पुंवेदस्य संक्रमकाले संज्वलनक्रोधस्योत्कृष्टं प्रदेशसत्कर्म क्रोधसर्व सक्रमे मानस्य, मानेसर्वसङ्क्रमे मायायाः, मायासर्वसङ्क्रमे लोभस्योत्कृष्टं प्रदेशसत्कर्म भवतीत गाथार्थः ॥ १६० ॥

**चउरुवसामिय मोहं जसुच्चसायाण सुहुमखवगंते। जं असुभपगइदलियस्स संकमो होइ एयासु ॥ १६१ ॥**

व्याख्या—स गुणितकर्मांशश्चत्वारो वारा मोहनीयमुपशमय्य शीघ्र क्षपणायोत्थितः, यत उभयश्रेणीगतस्याशुभाः स्व-

स्वबुद्ध्या भावनीया इति गाथार्थः ॥ १५५ ॥

उक्ता साद्यनादिप्ररूपणा, उत्कृष्टस्वामित्वमाह—

**संपुण्णगुणियकम्मो पएसउक्कोससंतसामीओ । तस्सेव सत्तमीनिग्गयस्स काणं विसेसो वि ॥ १५६ ॥**

व्याख्या—सम्पूर्णगुणितकर्मांशः प्रदेशोत्कृष्टसत्कर्मस्वामी सर्वकर्मणां, नारकभवान्तसमये भवत्योघतः, तस्यैव नारकस्य सप्तमपृथिव्या निर्गतस्य कासाञ्चित् प्रकृतीनां विशेषोऽप्यस्तीति गाथार्थः ॥ १५६ ॥

**[1]ओहेण खवियकम्मे पएससंतं जहण्णयं होइ । नियसंकमस्स विरमे तस्सेव विसेसियं सुणसु ॥ १५७ ॥**

व्याख्या—'ओघतो' बाहुल्येन क्षपितकर्मांशे जघन्यं प्रदेशसत्कर्म भवति स्वकीयसंक्रमस्य 'विरामे' अवसाने, तस्यैव क्षपितकर्मांशस्य विशेषितं विशेषेणाभिहितं 'सुणसु' त्ति जानीहि त्वमिति गाथार्थः ॥ १५७ ॥

यद्यप्योघतोऽभिहितं स्वामित्वं तथापि विशेषतोऽभिधीयते—

**मिच्छमीसेहिं कमसो संपक्खित्तेहि मीससम्मेसु । परमं पएससंतं कुणइ नपुंसस्स ईसाणा ॥ १५८ ॥**

( [2]वरिसधरस्स उ ईसाणगस्स चरिमम्मि समयम्मि ॥ १५८ ॥ )

व्याख्या—स प्रागभिहितः सप्तमनारकः तस्या उद्वृत्य तिर्यक्षूपपन्नः तत्रान्तर्मुहूर्त्तं स्थित्वा मनुजेषूपपन्नः,तत्र सम्यक्त्वं

---

१ मलयगिरिपादैस्त्वियं जघन्यप्रदेशसत्कर्मस्वामित्वाधिकारे आदौ व्याख्याता । २ मलयगिर्यभिप्रायः ।

स्वकीये २ बन्धान्तसमये गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्म्म भवत्येकं समयं साद्यध्रुवं, उपशमात् प्रतिपततोऽनुत्कृष्टं सादि, तत्स्थानमप्राप्तस्यानादि, ध्रुवाध्रुवं पूर्ववत् । प्रथमसंहननस्य तु सप्तमपृथिव्यां सम्यग्दृष्टिनारकस्य मिथ्यात्वं गन्तुकामस्योत्कृष्टं प्रदेशसत्कर्म भवति साद्यध्रुवं, द्वितीयसमयेऽनुत्कृष्टं सादि, तत्स्थानमप्राप्तस्यानादि, ध्रुवाध्रुवं पूर्ववदिति गाथार्थः ॥ १५४ ॥

चउहा धुवसंतीणं अणजससञ्जलणलोभवज्जाणं । तिविहमजहण्ण चउहा इमाण छण्हं दुहाणुत्तं ॥ १५५॥

॥ भणिया साइणाइपरूवणा ॥

व्याख्या—चतुर्द्धा शब्दो व्याख्यातः; ध्रुवसत्कर्मप्रकृतीनां प्रथमकषाययशःकीर्त्तिसञ्ज्वलनलोभवर्जितानां चतुर्विंशत्यधिकशतप्रमाणानामजघन्यं प्रदेशसत्कर्म त्रिधा भवति, कथं? क्षपितकर्मांशमधिकृत्य स्वकीयक्षयान्तसमये समयमेकं जघन्यं प्रदेशसत्कर्म भवति साद्यध्रुवं, शेषमजघन्यं, तच्च सादि न सम्भवति, अतोऽनादि, ध्रुवाध्रुवं प्राग्वत् । चतुर्द्धा—चतुष्प्रकारमजघन्यं प्रदेशसत्कर्मासां षण्णां प्रथमकषाययशःसञ्ज्वलनलोभप्रकृतीनां भवति । कथं? प्रथमकषायाणां क्षपितकर्मांशस्योद्वलकस्यैकस्थितिशेषस्य जघन्यं प्रदेशसत्कर्म्म भवति, समयमेकं साद्यध्रुवं, तस्यैव प्रतिपततः तद्बन्धकस्याजघन्यं प्रदेशसत्कर्म सादि, तत्स्थानमप्राप्तस्यानादि ध्रुवाध्रुवं पूर्ववत् । यशःकीर्त्तिसञ्ज्वलनलोभयोः क्षपितकर्मांशस्य क्षपणायोत्थितस्य यथाप्रवृत्तकरणस्यान्ते जघन्यं प्रदेशसत्कर्म भवति, तच्च साद्यध्रुवं, ततो द्वितीयसमयेऽपूर्वकरणप्रवृत्तौ गुणसङ्क्रमतस्तयोरजघन्यं प्रदेशसत्कर्म भवति । तच्च सादि, तत्स्थानमप्राप्तस्यानादि ध्रुवाध्रुवं पूर्ववत् । 'दुहाणुत्तं' द्विधा अनुक्तं, द्विचत्वारिंशतो जघन्योत्कृष्टौ, ध्रुवसत्कर्मणः शेषाष्टाशीतेः उत्कृष्टानुत्कृष्ट जघन्याः, अध्रुवसत्कर्मप्रकृतीनां अष्टाविंशतीनां चत्वारोऽपि भेदाः, ते च साद्यध्रुवा भवन्ति, स्वामित्वमवलोक्य

भावात्। उदयोदीरणशेषं अनुभागसत्कर्म भवति, तच्च बन्धा देपवर्त्तनोद्वर्त्तनाद्वास्थितयनुभागघाताद्वा सद्भवति। प्रथमानि बन्धोत्पत्तिकानि, द्वितीयानि हतोत्पत्तिकानि, तृतीयानि हतहतोत्पत्तिकानीति गाथार्थः ॥ १५२ ॥

उक्तमनुभागसत्कर्म्म इति। इदानीं प्रदेशसत्कर्म उच्यते—तस्मिन्नादौ साद्यनादिप्ररूपणा सा द्विविधा मूलोत्तरप्रकृतिभेदतः अतो मूलप्रकृतिसाद्यनादिप्ररूपणायाह—

**सत्तण्हं अजहण्णं तिविहं सेसा दुहा पएसम्मि। मूलपयडीण आउस्स साइ अधुवा य सव्वेवि ॥ १५३ ॥**

व्याख्या—सप्तानामायुर्वर्जानां मूलप्रकृतीनामजघन्यप्रदेशसत्कर्म त्रिधा भवति, कथं? क्षपितकर्मांशस्य स्वक्षयान्तस्थितौ वर्तमानस्य जघन्यप्रदेशसत्कर्म भवति, तच्च साद्यध्रुवं शेषमजघन्यं तस्य तु सादि न सम्भवति, अतोऽनादि ध्रुवाध्रुवे प्राग्वत्। शेषभेदा उत्कृष्टानुत्कृष्टजघन्यभेदा द्विविधाः साद्यध्रुवाः प्रदेशसत्कर्म्मणि। जघन्यं भावितमेव, उत्कृष्टानुत्कृष्टं गुणितकर्मांशे मिथ्यादृष्टौ सप्तमपृथिव्यां भवति, तच्च साद्यध्रुवम्। आयुषश्चत्वारोऽपि भेदाः साद्यध्रुवाः अध्रुवत्वादेव सुगमा इति गाथार्थः ॥१५३॥

उत्तरप्रकृतीनां साद्यनादिप्ररूपणायाह—

**सुभधुवबंधितसाई पणिंदिचउरंससरिसभसायाणं। संजलणुस्साससुभखगइपुंपरघायणुक्कोसं ॥ १५४ ॥**

व्याख्या—शुभाश्च ता ध्रुवबन्धिन्यश्च शुभध्रुवबन्धिन्यः विंशतिः अगुरुलघुनिर्माणवर्णाद्येकादशतैजसकार्मणसप्तकमिति त्रसादिदशकं सुज्ञानमेव, पञ्चेन्द्रियजातिचतुरस्रसंस्थानप्रथमसंहननसातवेदनीयसञ्ज्वलनचतुष्कोच्छ्वासशुभविहायोगतिपुंवेदपराघातानां अनुत्कृष्टं प्रदेशसत्कर्म्म चतुर्द्धा, इत्युत्तरगाथायाम्, कथं? प्रथमसंहननवर्जितानामेकचत्वारिंशतां क्षपकश्रेण्यां

विंशतिप्रकृतीनां स्वोदयान्तसमये स्वक्षपकानां जघन्यमनुभागसत्कर्म भवतीति गाथार्थः ॥ १५० ॥

एतदेव विशेषयति—

**मतिसुयचक्खुअचक्खुण सुयसम्मत्तस्स जेट्ठलद्धिस्स । परमोहिस्सोहिदुगे मणनाणे विउलनाणिस्स ॥ १५१ ॥**

व्याख्या—मतिश्रुतज्ञानावरणानां चक्षुरचक्षुर्दर्शनावरणानां चतसृणां प्रकृतीनां समाप्तश्रुतस्य चतुर्दशपूर्वधरस्योत्कृष्टलब्धियुक्तस्य स्वक्षयान्तसमये जघन्यानुभागसत्कर्मस्वामित्वम् । अवधिज्ञानदर्शनयोः परमावधिप्राप्तस्य, मनःपर्यायज्ञानावरणे विपुलमतेः जघन्यानुभागस्वामित्वम्, यतः परिशटितप्रभूतानुभागस्यैव विशिष्टा ज्ञानदर्शनलब्धयो भवन्ति । शेषाणां प्रकृतीनां जघन्यसत्कर्मस्वामित्वं अनुभागसङ्क्रमवद् द्रष्टव्यमिति गाथार्थः ॥ १५१ ॥

त्रिविधान्यनुभागस्थानानि भवन्ति तन्निरूपणायाह—

**अणुभागट्ठाणाइं तिहा कमा ताणि संखगुणियाणि । बंधा उव्वट्टोवट्टणाउ अणुभागघाओ ॥ १५२ ॥**

**॥ उत्ता अणुभागसत्ता ॥**

व्याख्या—अनुभागस्थानानि त्रिविधानि भवन्ति, तानि च क्रमादसङ्ख्येयगुणानि । 'बन्धात्' इति बन्धोत्पत्तिकानि सम्भवन्ति, तानि चासङ्ख्येयलोकाकाशप्रदेशप्रमाणानि, तद्धेतूनामपि तत्प्रमाणत्वात् । बद्धानि उद्वर्त्तनतो वृहत्करणात् अपवर्त्तनतो ह्रस्वीकरणाद्वा अन्यथा भवन्ति, तानि तु बन्धानुभागस्थानानामसङ्ख्येयगुणानि, यत एकैकमसङ्ख्येयासु व्यक्तिषु निष्पादयति । तान्यपि स्थित्यनुभागघातप्रयोगेणान्यथा करोति, स्वस्थानादसङ्ख्येयगुणानि संक्लेशविशुद्धीनां प्रतिसमयमन्यथा-

व्याख्या—स्वोत्कृष्टाभ्यः स्थितिभ्य आरतो यावदेकेन्द्रियजघन्यस्थितिबन्धं तावन्नैरन्तर्येण—अव्यवच्छिन्नानि, समयादिहान्या स्थितिस्थानानि भवन्ति, एकेन्द्रियजघन्यस्थितेरारतः। तदधः क्षपणे आदिशब्दादुद्वलने वा सान्तराणि निरन्तराण्यपि सम्भवन्ति स्थितिस्थानानि, यत एकेन्द्रियस्थितेरपि पल्योपमसङ्ख्येयभागमात्राणि स्थितिस्थानानि खण्डयति अतः सान्तराणि, उदयावलिकागतं प्रथमस्थितिगतं वा यथोत्तरं समयक्रमेणानुभवति अतो निरन्तराणीति गाथार्थः॥ १४८॥

भणितं स्थितिसत्कर्म्म अनुभागसत्कर्मोच्यते—

**संकमतुल्लं अणुभागसंतयं नवरि देसघाइणं। हासाइरहियाणं जहण्णयं एगठाणं तु॥ १४९॥**

व्याख्या—अनुभागसङ्क्रमतुल्यं सममनुभागसत्कर्म, कथं? स्थानप्रत्ययविपाकशुभाशुभसाद्यनादिउत्कृष्टस्वामित्वानि तुल्यानि अनुभागसङ्क्रमेण तेन नेहोच्यन्ते। नवरमयं विशेषो—देशघातिनीनां हास्यादिषट्करहितानां मतिश्रुतावधिज्ञानावरणचक्षुरचक्षुरवधिर्दर्शनावरणसञ्ज्वलनचतुष्कवेदत्रिकान्तरायपञ्चकाख्यानां अष्टादशानां प्रकृतीनां जघन्यानुभागसत्कर्मस्थानमाश्रित्यैकस्थानिकं, तुशब्दाद् देशघात्येव भवतीति गाथार्थः॥ १४९॥

**मणणाणे दुट्ठाणं देशघाइ य सामिणो खवगा। अंतिमसमए समत्तवेयखीणंतलोभाणं॥ १५०॥**

व्याख्या—मनःपर्यायज्ञानावरणे स्थानमाश्रित्य द्विस्थानिकं, देशघाति जघन्यमनुभागसत्कर्म भवति। अनुभागसङ्क्रमवदुत्कृष्टानुभागसत्कर्मस्वामिनः। जघन्यानुभागस्वामिनां विशेषमाह—क्षपकाः स्वान्तसमये वर्त्तमानाः जघन्यानुभागसत्कर्मस्वामिनः। किं सर्वासां नेत्याह—सम्यक्त्वस्य वेदत्रिकस्य 'खीणंत'त्ति ज्ञानान्तरायदशकदर्शनषट्कानां सञ्ज्वलनलोभसहितानामेक-

कथं? यतः—स्वक्षपकस्योपान्त्यसमये उदयवतीषूदयगतं दल सङ्क्रामति, चरमसमये दलं उदयवतीषु सद्भवति, न स्वस्थाने, तस्माद् द्विसामयिका एका स्थितिः जघन्यं सत्कर्म। दशानां पुनर्य एव चरमसङ्क्रमः स एव जघन्यस्थितिसत्कर्म, कथं? यदासां प्रथमस्थितिक्षयादन्तरकरणे स्थित उपरितनीं स्थितिमपवर्त्तयित्वाऽन्यासु सङ्क्रामयति तदा जघन्यं स्थितिसत्कर्मेति गाथार्थः ॥ १४६ ॥ ता एव दश वक्तुकाम आह—

हासाइ पुरिसकोहाइतिपिणसंजलण जेण बंधुदए। वोच्छिण्णे संकामइ तेण इह संकमो चरिमो ॥१४७॥

॥ उत्तं जहन्नसामित्तं ॥

व्याख्या—हास्यादिषट्कपुरुषवेदसञ्ज्वलनक्रोधमानमायाप्रकृतयो येन कारणेन बन्धे उदये च व्यतीते सङ्क्रामयति यथोत्तरं तेन कारणेन जघन्यस्थितिसत्कर्मचरमसङ्क्रमोऽभिहितो न समयादिस्थितिगतमिति। यद्यप्योघत उक्तः, तथापि विशेषेणोच्यते सप्तकस्याविरताद्यप्रमत्तान्तानां अन्यतमः स्वामी। नरकतिर्यग्देवायुषां त एव स्वान्तसमये, मध्यमकषायस्त्यानर्द्धित्रिकनामत्रयोदशकनोकषायनवकसंज्वलनत्रिकाणां षट्‌त्रिंशतां प्रकृतीनां बादरः स्वामी। संज्वलनलोभस्य सूक्ष्मकषायः, ज्ञानान्तरायदर्शनषट्‌कानां 'क्षीणकषायः स्वामी। शेषप्रकृतीनामयोगी जघन्यस्थितिसत्कर्म स्वामीति गाथार्थः ॥ १४७ ॥

'उक्तं जघन्यस्वामित्वम्,' इदानीं स्थितिविकल्पविभावनायोच्यते—

जावेगिंदिजहण्णा नियगुक्कस्सा हि ताव ठितिठाणा। नेरंतरेण हेट्ठा खवणाइसु संतराइं पि ॥ १४८ ॥

॥ उत्ता ठितिसत्ता ॥

उदये सति सङ्क्रमतः उत्कृष्टं स्थितिसत्कर्म भवति, स चागमो बन्धोदयावलिकाद्विकरहितः परमस्थितिमानः, उदयावलिकाया उपरि सङ्क्रामति। मिथ्यात्वोत्कृष्टां स्थितिं वध्वा तत्रैवान्तर्मुहूर्त्तं स्थित्वा ततः सम्यक्त्वं गच्छति, अतस्तदूना स्थितिरुत्कृष्ट-स्तस्यागमः स स्वोदयावलिकाभ्यधिक उत्कृष्टं स्थितिसत्कर्म्म। अनुदयसङ्क्रमोत्कृष्टानां मनुजानुपूर्वीसम्यग्मिथ्यात्वाहारकसप्तक-देवद्विकविकलजातिसूक्ष्मत्रिकतीर्थङ्कराणामष्टादशानां प्रकृतीनां आगमः समयोनावलिकाभ्यधिक उत्कृष्टं स्थितिमत्कर्म, कथं? यतो वध्यमानासु उदयावलिकाया उपरितनीषु स्थितिषु सङ्क्रामति, अत आवलिकाभ्यधिक आगमः, तस्या उदयावलिकाया एका स्थितिः स्तिबुकसङ्क्रमेणोदयवत्यागच्छति, अतः समयोनावलिकाभ्यधिक आगमः उत्कृष्टं स्थितिसत्कर्म्म। सम्यग्मिथ्या-त्वस्य त्वन्तर्मुहूर्त्तोनोत्कृष्टस्थितिरागमो, यत उत्कृष्टस्थितिं वध्वा मिथ्यात्वमेवान्तर्मुहूर्त्तमनुभवति, ततो द्वितीयं सम्यक्त्वमनु-भवन् सम्यक्त्वसम्यग्मिथ्यात्वस्थित्योस्सङ्क्रमयतीतिः गाथार्थः ॥ १४५ ॥

उक्तमुत्कृष्टस्वामित्वम्, जघन्यस्वामित्वमाह–

उदयवइणेगठिइ अणुदयवतियाण दुसमया एगा। होति जहण्णं संतं दसण्ह पुण संकमो चरिमो ॥१४६॥

व्याख्या—उदयवतीनामेका स्थितिः जघन्यं स्थितिसत्कर्म, ज्ञानावरणान्तरायायुर्वेदनीयदर्शनचतुष्कस्त्रीनपुंसकवेदक-सम्यक्त्वोच्चैर्गोत्रसञ्ज्वलनलोभमनुजगतिपञ्चेन्द्रियजातितीर्थङ्करत्रसादित्रिकसुभगादित्रिकाणां चतुस्त्रिंशतां प्रकृतीनां स्वक्षयावसान-स्थितिरेका जघन्यं स्थितिसत्कर्म। अनुदयवतीनां भण्यमानदशवर्जितानां चतुर्दशोत्तरशतमानानां पञ्चनिद्रानीचैर्गोत्रसर्वघाति कषायनवकरहितनामचतुर्नवति मिथ्यात्वसम्यग्मिथ्यात्वानां एका स्थितिः जघन्यस्थितिसत्कर्म, कालं पुनराश्रित्य द्वौ समयौ,

दर्शनचतुष्कं असातं मिथ्यात्वं पोडश कपायाः वैक्रियसप्तकतैजससप्तकं हुण्डसंस्थानं वर्णादिविंशतिरगुरुलघूपघातपराघातोच्छ्वासोद्योताप्रशस्तविहायोगात्यस्थिरादिषट्कत्रसचतुष्कनिर्माणपञ्चेन्द्रियजातिनीचैर्गोत्राणि, एतासां पडशीतिप्रकृतीनां उत्कृष्टस्थितिबन्धेन तुल्यं उत्कृष्टस्थितिसत्कर्मेति, यतः—उत्कृष्टस्थितिबन्धकस्य यदबाधागतं दलं तदनुभुयते प्राग्बद्धमिति कृत्वा विद्यमानतया तदस्त्येव । तदेवोत्कृष्टस्थितिमानं समयेनकेनोनमनुदयबन्धोत्कृष्टानां उत्कृष्टं स्थितिसत्कर्म भवति, काः ता नारकद्विकं तिर्यग्द्विकं औदारिकसप्तकं चरमसंहननं एकेन्द्रियजातिस्थावरातपनिद्रापञ्चकानां विंशतिप्रकृतीनां य उत्कृष्टस्थितिबन्धः समयोनः उत्कृष्टस्थितिसत्कर्म्म, यत उत्कृष्टस्थितिबन्धकस्य अवाधास्थितयः सन्ति, किन्तूदयस्थितिः स्तिबुकसङ्क्रमेणोदयगतासु सङ्क्रामति, अत उदयावलिका समयोना, यतस्तासामनुदये बन्धः । कथं ? निद्रोदये [1]तत्परिणामाभावात्, नरकद्विकस्य तिर्यङ्मनुष्या बन्धकास्ते तु तत्रानुभवन्ति । शेषाणां देवा उत्कृष्टस्थितिर्बन्धकाः, तेषु तासामुदयो न भवतीति गाथार्थः ॥ १४४ ॥

उदसंकमउक्कोसाण आगमो सालिगो भवे जेट्ठं । संतं अणुदयसंकम उक्कोसाणं तु समऊणो ॥ १४५ ॥

॥ उक्किट्ठसामित्तं उत्तं ॥

व्याख्या—उदयसङ्क्रमोत्कृष्टानां आगमः, स्वोदयावलिकासहितः उत्कृष्टस्थितिसत्कर्म्म कास्ता मनुजगतिः सातं सम्यक्त्वं स्थिरादिहास्यादिषट्कं त्रयो वेदाः शुभविहायोगतिः पञ्चादिसंहननानि पञ्चाद्यसंस्थानानि उच्चैर्गोत्रमासां त्रिंशतां प्रकृतीनां

१ उत्कृष्टस्थितिबन्धपरिणामाभावात् ।

व्याख्या—साधनादिप्ररूपणा द्विविधा मूलप्रकृतीनां उत्तरप्रकृतीनां च। तत्र मूलप्रकृतीनां अजघन्यं स्थितिसत्कर्म त्रिविधं, तुशब्दाज्जघन्यमुत्कृष्टमनुत्कृष्टं द्विविधम्। कथं? अष्टानामपि कर्मणां स्वक्षयान्तसमये जघन्यं स्थितिसत्कर्म, तच्च साद्यध्रुवं, तस्मादारतोऽजघन्यं, तच्च सादि न भवति, भूयः स्थितेरेवाभावात्। यद्यप्यायुषो विवक्षितस्यान्तसमये एका स्थितिर्भवति, तथापि सा न गृह्यते, अन्यस्यायुषः सद्भावात्, परमार्थतस्तत्र क्षीणम्। उत्कृष्टमनुत्कृष्टं सत्कर्म साद्यध्रुवं सुगममुत्कृष्टस्य कदाचित्कसम्भवात्। प्रथमकषायाणामजघन्यस्थितिसत्कर्म चतुर्व्विधं, कथं? तेषां वियोजनकाले उदयावलिकारहितं यदापवर्त्तितं भवति, उदयावलिकापि परविपाकेन समयेनोनानुभविता भवति, तदा तेषां जघन्यं स्थितिसत्कर्म, तच्च साद्यध्रुवं, तस्यैव मिथ्यात्वोदये वर्त्तमानस्याजघन्यस्थितिसत्कर्म्म सादि तत्स्थानमप्राप्तस्यानादि ध्रुवाध्रुवे पूर्ववत्। ध्रुवसत्कर्मप्रकृतीनामनन्तानुबन्धिरहितानामजघन्यं स्थितिसत्कर्म्म त्रिविधं, कथं? ध्रुवोदयवतीनां स्वक्षयान्तसमये, ध्रुवानुदयवतीनां स्वक्षयोपान्त्यसमये जघन्यस्थितिसत्कर्म्म भवति, यतस्तद्दलं तस्मिन् समयेऽन्यत्र सङ्क्रामति, तच्च साद्यध्रुवं, तदारतोऽजघन्यं जघन्यं भूत्वा न भवति, अतः सादि न सम्भवति, अनादि ध्रुवमभव्येषु, भव्येष्वध्रुवमिति। उत्कृष्ट उत्कृष्टस्थितिबन्धकानां साद्यध्रुवं, अनुत्कृष्टमपि परिणामविशुद्धितः तेषामेव अध्रुवसतीनां प्रकृतीनां त्रयोविंशात्युद्वलनतीर्थङ्करायुषां चत्वारोऽपि भेदाः साद्यध्रुवा, अध्रुवत्वादेव भाविता इति गाथार्थः ॥ १४३ ॥ उक्ता साधनादि प्ररूपणा। उत्कृष्टस्वामित्वमाह—

**बंधुदउक्कोसाणं उक्कोसट्ठिई उ संतमुक्कोसं। तं पुण समयेणूणं अणुदयउक्कोसबंधीणं॥ १४४ ॥**

व्याख्या—बन्धेन उदये सति यासां उत्कृष्टा स्थितिः भवति तासां ता एवोत्कृष्टस्थितिसत्कर्म्मकास्ता ज्ञानान्तरायदशकं

सव्वाणवि आहारं सासणमीसेयराण पुण तित्थं । उभये सन्ति न मिच्छे तित्थगरे अंतरमुहुत्तं ॥ १४१॥

व्याख्या—सर्वेषां अपि गुणस्थानजीवानां आहारकसप्तकं भाज्यम् । सास्वादनसम्यग्मिथ्यादृष्टिरहितानां द्वादशानां तीर्थकरं भाज्यम्, यतस्तयोर्न भवत्येव, आहारकतीर्थकरयोरुभयोः, सतोर्मिथ्यादृष्टिरेव न भवति, तीर्थङ्करे सति केवले यदि भवति, अन्तर्मुहूर्त्तमिति गाथार्थः ॥ १४१ ॥

अण्णयरवेयणीयं उच्चं नामस्स चरिमउदयाओ । मणुयाउ अजोगन्ता सेसा उ दुचरिमसमयंता ॥१४२॥

व्याख्या—अन्यतरवेदनीयं, उच्चैर्गोत्रं, मनुजगतिः पञ्चेन्द्रियजातिः त्रसादिसुभगादितिस्रः, तीर्थङ्करं, मनुजायुष्कं, एता द्वादशायोग्यन्तसमयं यावत्सत् भवन्ति । शेषा नाम्नः त्रयोदश नव वर्जिता एकाशीतिरन्यतरवेदनीयनीचैर्गोत्रयुक्ता त्र्यशीतिस्तस्यैवायोगिनः, उपान्त्यसमये क्षीयन्ते, तदारतः सद्भवन्तीति गाथार्थः ॥ १४२ ॥

प्रकृतिसत्स्थानप्ररूपणां उत्तरत्र तावद् भणिष्यति 'दो संतट्ठाणाइं' इत्यादिना ग्रन्थेन, नात्राभिधीयते । भणितं प्रकृतिसत्कर्म्म इति ॥

मूलट्ठिइणजहण्णा तिहा चउद्धा उ पढमयाण भवे । धुवसंतीणं पि तिहा सेसविगप्पा धुवा दुविहा ॥१४३॥

॥ उत्ता सादिणादिपरूवणा ॥

थावरतिरिगइदो दो आयावेगिंदियविगलसाहारं । नरयदुगुज्जोयाणि य दसाइमेगंततिरिजोग्गा ॥ १३७ ॥

व्याख्या—स्थावरद्विकं तिर्यग्द्विकमातपमेकद्वित्रिचतुरिन्द्रियजातयः साधारणं नरकद्विकं उद्योतं आसामाद्या दश तिरश्चामेवोदयं प्रतियोग्या इति गाथार्थः ॥ १३७ ॥

एवं नपुंसगित्थी संतं छक्कं च बायर पुरिसुदए । समऊणाओ दोण्णि वि आवलियाओ तओ पुरिसं ॥१३८॥

व्याख्या—एवं प्राग्वत्सङ्ख्येयेषु स्थितिखण्डेषु गतेषु नपुंसकवेदः क्षीयते । भूयः सङ्ख्येयेषु स्थितिखण्डेषु स्त्रीवेदः क्षीयते। भूयः सङ्ख्येयेषु स्थितिखण्डेषु हास्यादिषट्कं 'बायरा' त्ति अनिवृत्तिबादरस्य क्षीयते । ततः समयोने आवलिकाद्विके गते पुंवेदः क्षीयते पुंवेदोदयेन क्षपकश्रेणीमुपस्थितस्य । उपशमश्रेण्यां तु यावदुपशान्तकषायस्तावदेताः सद्भवन्तीति गाथार्थः ॥१३८॥

इत्थिउदए नपुंसं इत्थीवेयं च सत्तगं च कमा । अपुमोदयम्मि जुगवं नपुंसइत्थी पुणो सत्त ॥ १३९ ॥

व्याख्या—स्त्रीवेदोदयेनोपस्थितस्य प्रथमं नपुसकवेदः क्षीयते, पुनः स्त्रीवेदः, पुनः पुरुषवेदः सहास्यादिषट्कः क्षीयते तावत्सद् भवति । नपुंसकवेदोदयेनोपस्थितस्य नपुंसकस्त्रीवेदौ युगपत् क्षीयेते भूयः सप्तकमिति गाथार्थः ॥ १३९ ॥

संखेज्जा ठितिखंडा पुणोवि कोहाइ लोभ सुहुमंतो । आसज्ज खवगसेढी सव्वा इयराइ जा संतो ॥१४०॥ ॥९८

व्याख्या—ततः सङ्ख्येयेषु स्थितिखण्डेषु गतेषु संज्वलनक्रोधोऽसद् भवति, एवं सङ्ख्येयेषु स्थितिखण्डेषु मानो भूयो माया, पुनरपि लोभः, किन्तु सूक्ष्मलोभखण्डानि सूक्ष्मसम्परायान्तसमये असद् भवन्ति । क्षपकश्रेणीमाश्रित्यैतदुक्तम् । 'इतरायामुपशमश्रेण्यां, सर्वाः प्रकृतयो यावदुपशान्ता तावत्सद्भवन्तीति गाथार्थः ॥ १४० ॥

व्याख्या—मिथ्यादृष्टिसास्वादनसम्यग्मिथ्यादृष्टिषु त्रिषु त्रिषु गुणेषु मिथ्यात्वेन तावदवश्यं भाव्यम्, अविरतेन सप्तके क्षिपिते तदाग्रेष्वष्टसु न भवति, उपशामकेषु भवत्यतो भाज्यमिति। सास्वादने सम्यक्त्वं अवश्यं भवति, यतः उपशमाद्वा स्थितोऽवश्यं त्रिपुञ्जीकरोति सम्यक्त्वं मिथ्यादृष्टौ स्थितिक्षयेण तदुद्वलनाद्वा सदप्यसद्भवत्यतो भाज्यम्, सम्यग्मिथ्यादृष्टित्वं तस्मिन्नुद्वलितेऽपि भवत्यतः मिथ्यादृष्टौ भाज्यम्, अविरतादिषु तत्क्षपणोपशमनसम्भवात् सत्ता भाज्या इति गाथार्थः ॥ १३४ ॥

**सासणमीसे मीसं सन्तं नियमेण नवसु भइयव्वं । सासायणं तु नियमा पंचसु भज्जा अओ पढमा ॥१३५॥**

व्याख्या—सास्वादनमिश्रयोर्नियमेन–निश्चयेन सम्यग्मिथ्यात्वमस्ति, सास्वादनोऽवश्यं यतोऽष्टाविंशतिसत्कर्मा, इतरस्तु तद्वाह्यः, सम्यग्मिथ्यादृष्टिरेव अनादिमिथ्यादृष्टौ न भवति प्राप्तसम्यक्त्वे भवत्यतो भाज्यम्, अविरतादिषु क्षपणोपशमनाद् भाज्यमिति। मिथ्यादृष्टिसास्वादनयोः 'नियमात्' निश्चयेन सन्त्यनन्तानुबन्धिनः, तेषां तयोरेव बन्धसद्भावात् तदुपरितनेषु पञ्चसु गुणेषु भाज्या यतस्तेषामन्यतमोऽवश्यं करोत्युद्वलनमिति गाथार्थः ॥ १३५ ॥

**मज्झिल्लट्ठकसाया ता जा अणियट्टिखवगसंखेया । भागाओ संखेया ठिइखंडा जाव गिद्धितिगं ॥ १३६ ॥**

व्याख्या—मध्यमा अष्टौ कषाया अप्रत्याख्यानप्रत्याख्यानावरणाभिधानाः तावत्सन्तो भवन्ति, यावदनिवृत्तिक्षपकगुणकालस्य सङ्ख्येयभागाः, उपशमश्रेणीमधिकृत्य यावदुपशान्तकषायं तावत्सन्ति तस्मात् स्थानात् सङ्ख्येयानि यावत्स्थितिखण्डानि तावत्स्त्यानर्द्धित्रिकं सद्भवति, स्थावरादित्रयोदशकं च उपशमश्रेणीमधिकृत्योपशान्तकषायं यावद् सत् भवतीति गाथार्थः ॥ १३६ ॥ तदेव स्थावरादित्रयोदशकमाह–

प्रथमोदयसमये जघन्यः प्रदेशोदयः, उपरितनेषु गुणश्रेणीदलानुभवनान्न जघन्यो भवतीति गाथार्थः ॥ १३२ ॥

भाणतः प्रदेशोदयः, तद्भणनादुदयाधिकारः समाप्तः । इदानीं सत्कर्मप्ररूपणामाह—सा च मूलप्रकृतिगता उत्तरप्रकृतिगता च, मूलप्रकृतीनां साद्यनादिप्ररूपणा–सा त्रिविधा; अष्टानामपि अनादिर्बीजाङ्कुरवत्, अभव्यानां ध्रुवा भव्यानामध्रुवेति, उत्तरप्रकृतीनामाह—

**पढमकसाया चउहा तिहा धुवं साइ अद्धुवं संतं । दुचरिमखीणभवंता निद्दादुग चोद्दसाऊणि ॥ १३३ ॥**

व्याख्या—'प्रथमकषाया' अनन्तानुबन्धिनस्ते चतुर्विधाः, साद्यनादिध्रुवाध्रुवाः भवन्ति, कथं? उद्वलिताः सन्तो भूयोऽपि बन्धनातस्य (बध्नतः) सादि (दयः) तद्गुणमप्राप्तस्यानादि (दयः) ध्रुवाध्रुवे(वाः) पूर्ववत् । ध्रुवसत्कर्म त्रिधा भवति, कथं? आदेरभावात् अनादि बीजाङ्कुरवत् , अभव्यानां ध्रुवं, भव्यानामध्रुवमिति । अध्रुवसत्कर्म्म साद्यध्रुवं भवति, कथं ? आहारकसप्तकतीर्थङ्करसम्यक्त्वसम्यग्मिथ्यात्वानां विशिष्टगुणकृतः संभवः, स च सादिः, सादिना त्वध्रुवेण भाव्यम् । वैक्रियसप्तकोच्चैर्गोत्रदेवद्विकमनुजद्विकनरकद्विकानां सतामपि वाय्वग्निगतस्य जीवस्य स्थितिक्षयेण असत्ता भवति, तत्र तासां बन्धाभावात्, भूयः पञ्चेन्द्रियतिर्यक्ष्वागतस्य तासां सादिसत्कर्म्मता भवति , सादि चाध्रुवम् । आयुषां तद्भवानुभवनात् साद्यध्रुवत्वं भावितमेव । अष्टाविंशतिप्रकृतयोऽध्रुवाः। शेषं त्रिंशदधिकं शतं ध्रुवसदिति । इदानीं स्वामित्वमाह यथासङ्ख्येन द्विचरमसमयं यावन्निद्राद्विकं क्षीणकषायान्तसमयं यावच्चतुर्दश ज्ञानान्तरायदर्शनचतुष्काख्याः सम्भवन्ति, स्वभवान्तं यावदायूंषीति गाथार्थः ॥१३३॥

**तिसु मिच्छत्तं नियमा अट्ठसु ठाणेसु होइ भइयव्वं। सासायणम्मि नियमा सम्मं भज्जं दससु संतं॥१३४॥**

प्रभूताः प्रकृतयो विपाकोदयं यान्ति, उदयगताश्चोदयगतासु स्तिबुकसङ्क्रमेण न सङ्क्रामन्ति, अतः पर्याप्तग्रहणम् । चतस्रोऽप्यानुपूर्विकाः स्वगतितुल्या ज्ञेयाः, किन्तु भवादिसमये तासां जघन्यः प्रदेशोदयः, तृतीयसमये यत आवलिकातीतं दलमुदयमागच्छति, अतः प्रथमसमयग्रहणमिति गाथार्थः ॥ १३० ॥

**देवगई ओहिसमा नवरं उज्जोयवेयगो जाहे । चिरसंजमिणो अंते आहारे तस्स उदयम्मि ॥ १३१ ॥**

व्याख्या—देवगतिरवधिज्ञानावरणसमा किन्तु यदोद्योतोदयो भवति तदा जघन्यः प्रदेशोदयः स च पर्याप्तस्य भवति, अयं विशेषः, उद्योतं स्वरूपेणानुभवमानो न देवगतौ स्तिबुकसङ्क्रमेण सङ्क्रामयति । चिरसंयमिनो देशोनपूर्वकोटिसंयमिनोऽन्ते आहारकस्य उद्योतोदये सति जघन्यप्रदेशोदयः चिरसंयमे स्थितिक्षयेण प्रभूताः पुद्गला व्यपेता भवन्तीति गाथार्थः ॥ १३१ ॥

**सेसाणं चक्खुसमं तंमिव अण्णंमि वा भवे अचिरा । तज्जोगा बहुयाओ ता ताओ वेयमाणस्स ॥ १३२ ॥**

॥ उदयाहिगारो सम्मत्तो ॥ इयाणि उत्तरपगईणं सत्तासरूवमाह—

व्याख्या—सप्तानां ( शेषाणां ) कर्मणां जघन्यः प्रदेशोदयः स्वतः सूत्रकारेणैवोक्तः । नाम्नोऽपि स्थावराहारकसप्तकानुपूर्वीचतुष्कदेवनरकतिर्यग्गतीनां पञ्चदशप्रकृतीनां उक्तशेषा नाम्नोऽष्टाशीतिः तासां चक्षुर्दर्शनावरणसमं, तस्मिन् एकेन्द्रियभवे यासामुदयः सम्भवति तासां तत्रैव जघन्यः प्रदेशोदयः, यासां तत्रोदयो न सम्भवति तासामन्यत्राचिराद् गत्वा तद्भवयोग्या बह्वीरनुभवतो जघन्यः प्रदेशोदयः । प्रभूतग्रहणं स्तिबुकसङ्क्रमपरिहारार्थं सर्वत्र क्षपितकर्मांशो वक्तव्यः । तीर्थंकरनाम्नः

व्याख्या—'इत्थीए'ति स्त्रीवेदस्य संयमोपलक्षितो भवः संयमभवो देशोनपूर्वकोटिं संयमं कृत्वा सर्वनिरुद्धे सर्वजघन्येऽन्तर्मुहूर्त्ते शेषे गत्वा मिथ्यात्वं देवी समुत्पन्ना 'लहु'त्ति शीघ्रं पर्याप्ता संक्लिष्टा च स्त्रीवेदस्योत्कृष्टां स्थितिं बध्नाति, तामपि पूर्वबद्धां उद्वर्त्तयित्वा दीर्घां करोति, उदयावलिकान्तसमये क्षपितकर्मांशस्य जीवस्य मन्दः प्रदेशोदय इति गाथार्थः ॥ १२७ ॥

**अप्पद्धाजोगसमज्जियाण आऊण जेट्ठट्ठितिअंते । उवरिं थोवनिसेगो चिरतिव्वअसायवेईणं ॥ १२८ ॥**

व्याख्या—अल्पया बन्धकाद्धया स्वल्पेन योगेन 'समार्जितानां' बद्धानां, चतुर्णामप्यायुषां आत्मीयोत्कृष्टस्थितिकानां 'अंते'ति सर्वपश्चिमायां स्थितौ, यत्रोपरिमासु स्थितिषु 'स्तोको' जघन्यो, 'निषको' दलक्षेपः, क्षपितकर्मांशानां तीव्रासातेन प्रभूतं कालं पीडितानां यतो दुःखितानामायुषः पुद्गला झटन्ति, तत्तदायुष्कमनुभवमानानां चरमस्थितौ वर्त्तमानानां मन्दः प्रदेशोदयो भवतीति गाथार्थः ॥ १२८ ॥

**संजोयणा विजोइय जहण्णदेवत्तमंतिमसुहुत्ते । बंधिय उक्कोसट्ठितिं गंतूणेगिंदियासण्णी ॥ १२९ ॥**

व्याख्या—अनन्तानुबन्धिनो वियोज्य, यतस्तद्वियोजने कर्मणां प्रभूताः पुद्गला झटन्ति, जघन्यस्थितिकदेवत्वपश्चिमेऽन्तर्मुहूर्त्ते प्रतिपन्नमिथ्यात्व उत्कृष्टां स्थितिं बध्वा सर्वसंक्लिष्टः एकेन्द्रियेषूपपन्नः, तत्रान्तर्मुहूर्त्तं स्थित्वा असंज्ञिषु गतो यतो देवो मृत्वा नासंज्ञिषु व्रजति, अतः एकेन्द्रियग्रहणमिति गाथार्थः ॥ १२९ ॥

**सव्वलहुं नरयगए नरयगई तंमि सव्वपज्जत्ते । अणुपुव्वि सगइतुल्ला ता पुण नेया भवाईमि ॥ १३० ॥**

व्याख्या—ततोऽपि 'लघु'शीघ्रं, नरके गतः सर्वपर्याप्तिभिः पर्याप्तः तस्य नरकगतेः जघन्यः प्रदेशोदयः, यतः पर्याप्तस्य

५ द्वारे उदयाधिकारे

॥९॥

भयजुगुप्साहास्यरतिपुरुषवेदाभिधानानामुपशमसम्यक्त्वाद्धायां वर्त्तमानस्य पुञ्जत्रयान्यतमस्योदयावलिकान्तसमये कर्मदलमनुभवमानस्य मन्दः प्रदेशोदयः, एवं शेषाणामपि, किंतूपशमश्रेण्यामन्तरकरणे कृते तत्रायुषः समाप्त्या देवलोके गते द्वितीयस्थित्युदयावलिकान्तसमये मन्दः प्रदेशोदयः, यतः प्रथमसमये प्रभूतं दलं द्वितीयादिषु विशेषहीनं २ भवतीति गाथार्थः ॥ १२४ ॥

**उवसंतो कालगओ सव्वट्ठे जाइ भगवई सिद्धं । तत्थ न एयाणुदओ असुभुदए होंति मिच्छस्स ॥ १२५ ॥**

व्याख्या—उपशान्तकषायः कश्चिदुपशामको वा मृत्वा सर्वार्थसिद्धौ व्रजति यदि बद्धायुष्को भवति, एतद् 'भगवत्यां 'सिद्धं' कथितम्, तत्र चासां नपुंसकस्त्रीशोकानन्तानुबन्ध्यरतीनामुदयो नास्ति, अतो निषेधः कृतोऽशुभमरणमृतस्य प्रतिपतितस्य वा भवत्युदयो मिथ्यात्वस्यामृतस्य (एवं सम्यक्त्वमिश्रयोरपि) वातः सप्तदशानामेव देवलोकगमनमिष्टमिति गाथार्थः ॥ १२५ ॥

**उवसामत्तु चउहा अंतमुहू बंधिऊण बहुकालं । पालिय सम्मं पढमाण आवलीयंतमिच्छगए ॥ १२६ ॥**

व्याख्या—उपशामयित्वा मोहनीयं तदन्यस्य उपशमस्याभावात्, 'चतुर्धा' चतस्रो वारा, यतः उपशमं कुर्वतः प्रभूताः पुद्गलाः झटन्ति, ततो बध्यमानासु स्वल्पाः सङ्क्रमन्ति, पञ्चमवारायां उपशम एव न सम्भवति, तेन चतुर्णां ग्रहणं । ततोऽन्तर्मुहूर्त्तेनानन्तानुबन्धिनो बध्वा ततः प्रभूतकालं सागरोपमाणां षट्षष्टिद्विकमात्रं अनुपाल्य सम्यक्त्वं, यतस्तत्कालेन प्रभूताः पुद्गलाः प्रदेशोदयेन झटिता भवन्ति, ततः 'प्रथमानाम' नन्तानुबन्धिनां उदयावलिकान्तसमये मिथ्यात्वं गतः क्षपितकर्मांशो जीवः मन्दप्रदेशोदयं करोतीति गाथार्थः ॥ १२६ ॥

**इत्थीए संजमभवे सव्वनिरुद्धंमि गंतुमिच्छत्तं । देवी लहु जेट्ठठिई उव्वट्टिय आवलीअंते ॥ १२७ ॥**

व्याख्या—करोति प्रदेशोदयमवधिज्ञानदर्शनयोः क्षपितकर्मांशः संयमं कृत्वाऽप्रतिपतितावोधज्ञानदर्शनो देवेषूपपन्नः, तत्रान्तर्मुहूर्त्तेन मिथ्यात्वंगतः, तत उत्कृष्टस्थितिवन्धको वन्धावलिकायां गतायामतिसंक्लिष्टो 'दीर्घाकर्षको मन्दावधिज्ञानदर्शनो मन्दप्रदेशोदयं करोतीति गाथार्थः ॥ १२१ ॥

**वेयणियउच्चसोयंतरायअरईण होइ ओहिसमो । निद्दादुगस्स उदए उक्कोसट्ठिइओ पडियस्स ॥ १२२ ॥**

व्याख्या—सातासातोच्चैर्गोत्रशोकान्तरायपञ्चकारतीनां दशानामपि प्रकृतीनां अवधिज्ञानावरणतुल्यो मन्दः प्रदेशोदयो वक्तव्यः । निद्राद्विकस्य उदये तदुत्कृष्टस्थितिवन्धात्प्रतिपतितस्य, यतोऽतिसंक्लिष्टस्य निद्रोदयो न भवत्ययं विशेषः, शेषमवधिज्ञानावरणसममिति गाथार्थः ॥ १२२ ॥

**मइसरिसं वरिसवरं तिरियगई थावरं च नीयं च । इंदियपज्जत्तीए पढमे समयंमि गिद्धितिगे ॥ १२३ ॥**

व्याख्या—मतिज्ञानावरणतुल्यं 'वरिसवरं'ति नपुंसकवेदं तिर्यग्गतिं स्थावरं च नीचैर्गोत्रम् । स्त्यानर्द्धित्रिकं चकारस्य व्यवहितसम्वन्धात् इन्द्रियपर्याप्तिप्रथमसमये यावत्युदीरणा भवति, तावन्मन्दोदय इति, देवलोके स्त्यानर्द्धित्रिकस्योदयाभावान्न भवतीति गाथार्थः ॥ १२३ ॥

**अपुमित्थिसोगपढमिल्लअरइरहियाण मोहपगईणं । अंतरकरणाउ गए सुरेसु उदयावलीअंते ॥ १२४ ॥**

व्याख्या—नपुंसकस्त्रीशोकानन्तानुबन्धिअरतिरहितानां मोहनीयप्रकृतीनां 'विंशतेः दर्शनत्रिकोपरितनद्वादशकषाय-

---

दीर्घापर्तनाकारक ।

गुणसेढीए भग्गो एत्तो बिइंदि पुढविकायत्तं । आयावस्स उ तव्वेइ पढमसमयंमि वट्टंतो ॥ ११९ ॥

॥ उत्तं उक्किट्ठसामित्तं । जहन्नसामित्तं वुच्चंति ॥

---

व्याख्या—प्रथमगुणश्रेणीतो 'भग्नः' परिपतितो मिथ्यादृष्टित्वं प्राप्त इत्यर्थः, गुणितकर्मांशः पञ्चेन्द्रियः पश्चात्प्राप्तो द्वीन्द्रियत्वं ततो दीर्घस्थितिकं कर्म्म स्वस्थित्या स्थापयित्वा पृथिवीकायत्वं प्राप्तः, द्वीन्द्रियग्रहणं यतस्तस्य स्थितिः स्वस्थितिरूपेण झटिति करोति, त्रीन्द्रियादीनां दीर्घकालेनातो न तद्ग्रहणं मतम्, आतपस्यानुभवनप्रथमसमये उत्कृष्टप्रदेशोदयं करोति, 'तव्वेइ' आतपानुभवक इति गाथार्थः ॥ ११९ ॥

उक्तं उत्कृष्टस्वामित्वम् । जघन्यस्वामित्वमाह–

देवो जहण्णयाऊ दीहुव्वट्टित्तु मिच्छुअंतम्मि । चउनाणदंसणातिगे एगिंदिगए जहण्णुदयं ॥ १२० ॥

व्याख्या—क्षपितकर्मांशो जघन्यस्थित्यादशवर्षसहस्रप्रमाणया देवो जातः सम्यक्त्वं प्रतिपद्यते, अन्तर्मुहूर्त्ते शेषे मिथ्यात्वं दीर्घोद्वर्त्तनया उद्वर्त्तयति, अतिसंक्लिष्टत्वाद् दीर्घस्थितिं च बध्नाति, ततः संक्लिष्ट एव मृत्वा एकेन्द्रियेषूपपन्नः स प्रथमसमये मतिश्रुतमनःपर्यायकेवलज्ञानावरणानां चक्षुरचक्षुकेवलदर्शनावरणानां च मन्दं प्रदेशोदयं करोति, तीव्रानुभागोदयत्वात् स्निग्धाः पुद्गला न बहवः क्षरन्तीति गाथार्थः ॥ १२० ॥

कुव्वइ ओहिदुगस्स उ देवत्तं संजमाउ संपत्तो । मिच्छुक्कोसुक्कड्ढिय आवलिगंते पएसुदयं ॥ १२१ ॥

प्रदेशोदयो भवतीति गाथार्थः ॥ ११६ ॥

**नारयतिरिदुगदुभगाइनीयमणुयाणुपुव्विगाणं तु । दंसणमोहक्खवगो तइयगसेढीआ पडिभग्गो ॥ ११७ ॥** 5 द्वारे उदयाधिकारः

व्याख्या--नारकद्विकतिर्यग्द्विकदुर्भगादेयायशोनीचैर्गोत्रमनुष्यानुपूर्विकाणां नवानां प्रकृतीनां दर्शनमोहनीयक्षपणायोत्थितो यस्ततो या तृतीयगुणश्रेणिः तस्याः प्रतिभग्नः उत्कृष्टप्रदेशोदयं करोति । कथं ? दर्शनक्षपकगुणश्रेणीं कृत्वा पश्चाद्देशविरतिं प्रतिपन्नः तद्गुणश्रेणीं कृत्वा भूयः सर्वविरतिं प्रतिपद्यते, स एव पश्चाद्दर्शनत्रिके क्षपितशेषे भूयोऽप्यविरतत्वं प्रतिपद्यते, तथापि श्रेणीत्रयमस्यास्ति, ततस्तासां मस्तकसमागमे वर्त्तमानो दुर्भगानादेयायशोनीचैर्गोत्राणां अत्रैवोत्कृष्टप्रदेशोदयं करोति । अथवा बद्धायुष्को नारकत्वेनोत्पन्नः सनरकद्विकानां पूर्वोक्तानां करोत्युत्कृष्टं प्रदेशोदयम् । अथवा तिर्यग्द्विकसहितानां स एव तासां तिर्यक्षूपपन्नः करोत्युकृष्टप्रदेशोदयम् । मनुजेषूपपन्नः, समनुजानुपूर्विकाणां तासां दुर्भगादीनां तथैव त्रिगुणश्रेणीमस्तकगतो गुणितकर्मांशः करोत्युत्कृष्टं प्रदेशोदयमिति गाथार्थः ॥ ११७ ॥

**संघयणपंचगस्स उ बीयाइतिगुणसेढिसीसम्मि । आहारुज्जोयाणं अपमत्तो आइगुणसीसे ॥ ११८ ॥**

व्याख्या—वज्रऋषभनाराचरहितस्य संहननपञ्चकस्य द्वितीयादित्रिगुणश्रेणीमस्तके वर्त्तमानमुत्कृष्टं प्रदेशोदयं करोति, कथं ? द्वितीयां देशविरतिगुणश्रेणीं, ततः स एव विशुद्धाध्यवसायः सर्वविरतिगुणश्रेणीं करोति, भूयो विशुद्ध्यमानोऽनन्तानुबन्धिविसंयोजनागुणश्रेणीं निर्वर्त्तयति, ततस्तासां तिसृणामपि यदा मस्तके वर्त्तमानः तत्संहननमनुभवति, तदोत्कृष्टप्रदेशोदयः । आहारकसप्तकोद्योतानां अप्रमत्तस्तदनुभवनकाले प्रथमगुणश्रेणीमस्तके वर्त्तमानः उत्कृष्टं प्रदेशोदयं करोतीति गाथार्थः ॥ ११८ ॥

तदुपरि निवेशयति, द्वयोरपि गुणश्रेण्योः मस्तकयोगो यदा भवति, तदा प्रभूतं कर्मदलं, तत्र मिथ्यात्वानन्तानुबन्धिनामुदये उत्कृष्टः प्रदेशोदयः। सम्यग्मिथ्यात्वमनुभवतस्तस्यैवोत्कृष्टः, स्त्यानर्द्धित्रिकस्योदये तासामुत्कृष्टः प्रदेशोदयः, स च तद्गुणाभ्रंशेऽपि भवति, तासां प्रमत्तेऽनुभवसम्भवात्, तिर्यग्योग्यापर्याप्तकानां मिथ्यात्वप्राप्तौ तद्भवप्राप्तौ चोत्कृष्टः प्रदेशोदयो भवतीति गाथार्थः॥११३॥

**से कालेंतरकरणं होही अमरो य अंतमुहुपरओ। उक्कोसपएसुदओ हासाइसु मज्झिमट्ठण्हं ॥ ११४ ॥**

व्याख्या–'से' अथ, यस्मिन् काले उपशमश्रेणीगतस्यान्तरकरणं भविष्यति तस्मिन् काले मृत्वाऽमरगतौ गते, तत्राऽप्यन्तर्मुहूर्त्ते व्यतीते, यतः तस्यातिक्रमे गुणश्रेणीमस्तकं माप्नोति तत्रोत्कृष्टः प्रदेशोदयो भवति हास्यादिषट्कस्य, मध्यमकषायाणां चाष्टानामप्रत्याख्यानप्रत्याख्यानावरणाभिधानानां स्वान्तरकरणकालमृतस्य स्वोदये इति गाथार्थः ॥ ११४ ॥

**हस्सट्ठिइंबंधित्ता अद्धाजोगाइट्ठितिनिसेगाणं। उक्कोसपए पढमोदयम्मि सुरनारगाऊणं ॥ ११५ ॥**

व्याख्या—'ह्रस्वां' जघन्यां, स्थितिं बध्वा 'अद्धे' ति बन्धकालो 'योगा' इति, मनोवाक्कायाः, प्रथमस्थितावाद्यसमये 'निषेको' दलनिक्षेपः, अद्धायोगप्रथमस्थितिनिषेकाणां उत्कृष्टपदे सति मृतस्य प्रथमस्थित्युदये सुरनारकायुषोः प्रदेशोदयो भवत्युत्कृष्ट इति गाथार्थः ॥ ११५ ॥

**अद्धाजोगुक्कस्से बंधित्ता भोगभूमिगेसु लहुं। सव्वप्पजीवियं वज्जइत्तु ओवट्टिया दोण्हं ॥ ११६ ॥**

व्याख्या—दीर्घबन्धकाद्धया उत्कृष्टेन योगेन बध्वा भोगभूमिषु तिर्यग्मनुष्येष्वायुष्कं, 'लघु' शीघ्रं, मृत्वोत्पन्नः त्रिपल्योपमायुष्केषु 'सर्वाल्पजीवित्वं' अन्तर्मुहूर्त्तमात्रं,'वर्जयित्वा' अपवर्त्तयित्वाऽपवर्त्तयति,ततः प्रथमसमये द्वयोस्तिर्यङ्मनुष्यायुषोरुत्कृष्टः

सप्तककार्म्मणसप्तकसंस्थानषट्कप्रथमसंहननवर्णादिविंशत्यगुरुलघूपघातपराघातविहायोगतिद्विकप्रत्येकस्थिरास्थिरशुभाशुभनिर्मा-णप्रकृतीनां द्वापञ्चाशतां गुणितकर्मांशस्य सयोग्यन्तसमये उत्कृष्टप्रदेशोदयः। सुस्वरदुस्वरयोः स एव स्वरनिरोधकाले, उच्छ्वासस्य स एव तन्निरोधकाले उत्कृष्टप्रदेशोदयं करोति। वेदनीयद्विकमनुजगतिपञ्चन्द्रियजातित्रसबादरपर्याप्तसुभगादेययश-स्तीर्थकरोच्चैर्गोत्राणां द्वादशानां गुणितकर्मांशस्यायोग्यन्तसमये उत्कृष्टः प्रदेशोदयो भवति। 'लघुक्षपणा' शीघ्रक्षपणा, तयाभ्युस्थि-तस्येति। कोऽर्थोऽष्टवार्षिकः संयमं प्रतिपन्नोऽन्तर्मुहूर्त्तेन क्षपकश्रेणीमुपस्थितो गुणितकर्मांशः तीव्रपरिणामो यस्तस्योत्कृष्टः प्रदे-शोदयः, चिरक्षपणया तु कर्मपुद्गलाः परिशटितशेषाः स्तोका भवन्ति। अवधिद्विकस्य तदुपलम्भवर्जितस्य, यतस्तदुत्पत्तौ प्रभूताः पुद्गलाः परिशटन्तीति गाथार्थः॥ १११॥

**पढमगुणसेढिसीसे निद्दापयलाणं कुणइ उवसंतो। देवत्तं झत्तिगओ वेउव्वियसुरदुगे स एव॥ ११२॥**

व्याख्या—प्रथमगुणश्रेणीशिरसि वर्त्तमानो निद्राप्रचलयोः करोत्युपशान्त उत्कृष्टप्रदेशोदयम्। स एव देवत्वं झटिति प्राप्तः स्वगुणश्रेणीमस्तकदलमनुभवमानो देवद्विकवैक्रियसप्तकानां उत्कृष्टप्रदेशोदयं करोतीति गाथार्थः॥ ११२॥

**तिरिएगंतुदयाणं मिच्छत्तणमीसथीणगिद्धीणं। अप्पज्जस्स य जोगे दुतिगुणसेढीण सीसाणं॥ ११३॥**

व्याख्या—तिर्यगेकान्तोदया एकद्वित्रिचतुरिन्द्रियजातयः स्थावरसूक्ष्मसाधारणप्रकृतयस्ताश्चैकान्तेनैव तिरश्चां योग्या उदयमाश्रित्य, मिथ्यात्वानन्तानुबन्धिसम्यग्मिथ्यात्वस्त्यानर्द्धित्रिकाणामपर्याप्तकस्य चासां सप्तदशानां प्रकृतीनां योगे-मेलापके, द्वितीयगुणश्रेणीमस्तकयोरुत्कृष्टः प्रदेशोदयो भवति। एतदेव भावयति—देशविरतिगुणश्रेणीसद्भावे, स एव सर्वविरतिगुणश्रेणीं

**खीणाइतिगे अस्संखगुणियगुणसेढिदलिय जह कमसो । सम्मत्ताइणेक्कारसण्ह कालो संखंसो ॥ १०८ ॥**

व्याख्या—क्षीणकषायसयोग्ययोगिनां या गुणश्रेण्यस्ताः कथिताः । एवमेता एकादश यथोत्तरास्वसङ्ख्येयगुणं दलं विशुद्धाध्यवसायत्वात् । कालस्तु सङ्ख्येयभागमात्रो यथोत्तरं भवति, अतः यथोत्तरं पृथुलतरा ह्रस्वाश्च भवन्ति । सम्यक्त्वगुण-श्रेणिदलाद्देशविरतिगुणश्रेणीदलमसङ्ख्येयगुणं, कालस्तु सङ्ख्येयभागमात्रः । एवं यथोत्तरास्वपि वक्तव्यमिति गाथार्थः ॥ ॥ १०८ ॥ उक्ता गुणश्रेणीप्ररूपणा । उत्कृष्टस्वामित्वमाह—

**झत्तिगुणाओ पडिए मिच्छत्तगएवि आइमा तिण्णि । लब्भंति न सेसाओ जं झीणासु असुभमरणं॥१०९॥**

व्याख्या—झटिति सर्वविरतिगुणात्पतिते मिथ्यात्वं गतेऽप्याद्यास्तिस्रो गुणश्रेण्यो लभ्यन्ते उदयमाश्रित्य, यतः सर्वासु गतिषु एताः सम्भवन्ति, नाष्टौ शेषाः, यतस्तासु यदि भवत्यशुभमरणं न विद्यमानास्विति गाथार्थः ॥ १०९ ॥

**उक्कोसपएसुदयं गुणसेढीसीसगे गुणियकम्मो । सव्वासु कुणइ ओहेण खवियकम्मो पुण जहण्णं ॥ ११० ॥**

व्याख्या—उत्कृष्टप्रदेशोदयं गुणश्रेणीशिरसि गतो गुणितकर्मांशः सर्वासु प्रकृतिषु करोत्योघतो—बाहुल्येन, तदर्थमिह प्ररूपणा, क्षपितकर्मांशस्तु जघन्यप्रदेशोदयं सर्वत्र करोतीति गाथार्थः ॥ ११० ॥

**सम्मत्तवेयसंजलणथाण खीणंतदुजिणअन्ताणं । लहुखवणाए अंते ओहिस्स अणोहिणुक्कोसो ॥ १११ ॥**

व्याख्या—सम्यक्त्ववेदसञ्ज्वलनप्रकृतीनामष्टानां क्षपकस्य गुणितकर्मांशस्यात्मीयात्मीयोदयान्तसमये वर्त्तमानस्योत्कृष्टः प्रदेशोदयो भवति । ज्ञानान्तरायदर्शनचतुष्कचतुर्दशानां क्षीणकषायान्तसमयेषु गुणितकर्मांशस्योत्कृष्टः प्रदेशोदयः, औदारिक-

मिथ्यात्वप्रदेशोदयश्चतुर्विधः अजघन्योऽनुत्कृष्टश्च, कथं ? क्षपितकर्मांशस्य प्रथमसम्यक्त्वमुत्पादयतः, कृतान्तरकरणस्य औपशमिकसम्यक्त्वात्मिथ्यात्वंगतस्य उदीरणान्ते वर्त्तमानस्य जघन्यः प्रदेशोदयः, स च सादिरध्रुवः, तस्यैव द्वितीयसमये मिथ्यात्वमनुभवतोऽजघन्यः प्रदेशोदयः सादिः, वेदकसम्यक्त्वाद्वा प्रतिपतमानस्य सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ पूर्ववत् । मिथ्यात्वस्यानुत्कृष्टोऽपि प्रदेशोदयश्चतुर्द्धा, कथं ? गुणितकर्मांशः देशविरतगुणश्रेणीमनुभवमानः सर्वसंयमगुणश्रेणी च कृत्वा द्वयोरपि गुणश्रेण्योर्मस्तकं यदैकत्र भवति, तदा मिथ्यात्वमनुभवमानस्योत्कृष्टः प्रदेशोदयो भवति, स च सामयिकः सादिरध्रुवश्च, द्वितीयसमयेऽनुत्कृष्टः, सम्यक्त्वाद्वा मिथ्यात्वंगतस्यानुत्कृष्ट, स च सादिः तत्स्थानमप्राप्तस्यानादिध्रुवाध्रुवौ पूर्ववत् । भणितशेषाः जघन्योत्कृष्टाः प्रदेशोदयाः साद्यध्रुवाः सम्भाविता एव आसां ध्रुवोदयानाम् । "सर्वे" चत्वारोऽपि उक्तशेषाणामध्रुवोदयानां साद्यध्रुवा भवन्ति, अध्रुवोदयत्वादेव सुगमा इति गाथार्थः ॥ १०६ ॥

उक्ता साद्यनादिप्ररूपणा । साम्प्रतं स्वामित्वविभावनाय गुणश्रेणीप्ररूपणायाह—

**सम्मत्तदेससंपुण्णविरइ उप्पत्तिअणविसंजोगे । दंसणखवणे मोहस्स समणे उवसंत खवगे य ॥ १०७ ॥**

व्याख्या—सम्यक्त्वोत्पत्तौ प्रथमा गुणश्रेणी, देशविरतौ द्वितीया, सर्वविरतौ तृतीया, अनन्तानुबन्धिविसंयोजने चतुर्थी, दर्शनत्रिकक्षपणे पञ्चमी, मोहनीयोपशमने षष्ठी, मोहनीयोपशान्ते सप्तमी, मोहनीयक्षपकेऽष्टमी, मोहनीयक्षीणे नवमी, सयोगिनि दशमी, अयोगिनि एकादशी भवति । चः समुच्चये इति गाथार्थः ॥ १०७ ॥

उक्ता गुणश्रेणयः ॥

चतुर्विधो मोहनीयेऽजघन्योऽनुत्कृष्टश्च, कथं? क्षपितकर्मांशे कृते त्वन्तरकरणे उदीरणोदये निवृत्ते उदयावलिकान्तसमये मोहनीयस्य जघन्यः प्रदेशोदयः स च सादिरध्रुवः, सामयिकश्च, तस्मात् द्वितीयसमयेऽजघन्यः प्रदेशोदयः सादिः, तत्स्थानमप्राप्तपूर्वस्यानादिः, ध्रुवाध्रुवौ पूर्ववत् । अनुत्कृष्टोऽपि चतुर्द्धा, कथं? उत्कृष्टप्रदेशोदयो गुणितकर्म्मांशमधिकृत्य वक्तव्यः, स च सूक्ष्मकषायान्तसमये सामयिकः सादिरध्रुवश्च भवति, उपशमश्रेणीतः प्रतिपतमानस्यानुत्कृष्टो मोहनीयस्य प्रदेशोदयः, स च सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ पूर्ववत् । आयुषश्चत्वारोऽपि भेदाः, साद्यध्रुवा उत्तमाधममध्यमस्थितसम्भवादध्रुवोदयत्वाच्च सुगमाः । शेषकर्मणां जघन्योत्कृष्टाः कथिता एवेति गाथार्थः ॥ १०५ ॥

**अजहण्णोऽणुक्कोसो धुवोदयाणं चउतिहा चउद्दा । मिच्छत्ते सेसासिं, दुविहा सव्वे य सेसाणं ॥ १०६ ॥**

भणिया साइणाइ परूवणा । इयाणिं गुणसेणीपरूवणं वुच्चंति—

व्याख्या—मिथ्यात्वरहितानां सप्तचत्वारिंशतां ध्रुवोदयप्रकृतीनां अजघन्यः प्रदेशोदयश्चतुर्विधो भवति, कथं? क्षपितकर्मांशो देवः सङ्क्लिष्ट उत्कृष्टस्थितिं बध्नन् प्रभूतप्रदेशाग्रमुद्वर्त्तयति, बन्धावसाने कृतकालः एकेन्द्रियेषूपपन्नस्तस्य प्रथमसमये जघन्यः प्रदेशोदयः सामान्यतः । अवधिज्ञानदर्शनावरणयोः देवस्य बन्धावलिकान्त्यसमये जघन्यः प्रदेशोदयः सामयिकः सादिरध्रुवश्च, द्वितीयसमयेऽजघन्योऽसावपि सादिस्तत्स्थानमप्राप्तस्यानादिर्ध्रुवाध्रुवौ पूर्ववत् । अस्या एव सप्तचत्वारिंशतोऽनुत्कृष्टतः प्रदेशोदयस्त्रिधा भवति, कथं? गुणितकर्मांशमाश्रित्योत्कृष्टप्रदेशोदयः स्वोदयान्तसमये भवति, स च सामयिकः सादिरध्रुवश्च, तदभावे उदयस्यैवाभावादनुत्कृष्टः सादिर्न सम्भवति, शेषकाले अनुत्कृष्टः प्रदेशोदयोऽनादिर्ध्रुवश्चाभव्यानां भव्यानामध्रुवो भवति ।

षट्त्रिंशतां क्रमानुभवनाद् भवति । शेषं स्थित्युदीरणावद् द्रष्टव्यमिति गाथार्थः ॥ १०३ ॥

भणितः स्थित्युदयः । अनुभागोदयो विधीयते—

**अणुभागदओ वि उदीरणाए तुल्लो जहण्णयं नवरि । आवलिगंते सम्मत्तवेयखीणंतलोभाणं ॥ १०४ ॥**

व्याख्या—अनुभागोदयोऽप्युदीरणातुल्यो. मूलोत्तरप्रकृतिप्रत्ययस्थानशुभाशुभस्वामित्वानि तुल्यानि, यथाऽनुभागोदीरणायां तथानुभागोदयेऽपि । नवरमयं विशेषः—उदयावलिकान्तसमये जघन्यानुभागोदयो वक्तव्यः, सम्यक्त्ववेदत्रयज्ञानान्तरायदर्शनचतुष्कसञ्ज्वलनलोभानां शेषप्रकृतीनामुदीरणा तुल्यं सर्वमिति गाथार्थः ॥ १०४ ॥

उक्तोऽनुभागोदयः, प्रदेशोदयमाह—

**अजहण्णोणुक्कोसो चउहतिहा छण्ह चउविहो मोहे । आउस्स साइ अधुवा सेसविगप्पा य सव्वेसिं॥१०५॥**

व्याख्या—अजघन्यः प्रदेशोदय श्चतुर्द्धा भवति, मोहायुर्वर्जानां षण्णां कर्मणां, कथं? क्षपितकर्मांशस्य देवस्य सङ्क्लिष्टस्य उत्कृष्टस्थितिबन्धं बध्नतः प्रभूतानुभागत्वान्न ते परिशटन्ति, तस्य प्रभूतं प्रदेशाग्रमुद्वर्त्तितं भवति, ततो बन्धावसाने कालं कृत्वा एकेन्द्रियेषूत्पन्नस्य प्रथमसमये जघन्यः प्रदेशोदयः स चैकसामयिकः सादिरध्रुवश्च, तस्माद् द्वितीयसमये अजघन्यः, स च सादिः, तत्स्थानमप्राप्तानां अनादिः, भव्याभव्ययोरध्रुवध्रुवाविति । तेषामेव षण्णां कर्मणामनुत्कृष्टः प्रदेशोदयस्त्रिविधो भवति, कथं? गुणितकर्मांशमाश्रित्य स्वोदयान्ते गुणश्रेणीशिरसि वर्त्तमानस्योत्कृष्टः प्रदेशोदयो भवति, स चैकसामयिकः सादिरध्रुवश्च, तदन्योऽनुत्कृष्टः, स च सादिर्न सम्भवति, उत्कृष्टोदयस्यान्ते उदयस्यैवाभावात्, अनादिध्रुवावभव्यानां भव्यानामध्रुव इति ।

प्राप्तस्यानादिरभव्यस्य ध्रुवो भव्यस्याध्रुव इति। त्रिधाऽवशेषाणां सप्तानां। कथं? ज्ञानदर्शनावरणान्तरायाणां क्षीणकषायान्तसमये, वेदनीयनामगोत्रायुषामयोग्यन्तसमयेऽध्रुवो भवत्युदयः,सादिर्नास्ति तयोरप्रतिपातात्, अनादिर्ध्रुवोऽभव्यानाम्। उत्तरप्रकृतीनामाह–मिथ्यात्वस्य चतुर्धा। कथं? प्राप्तसास्वादनभावस्य (सम्यक्त्वात् प्रतिपततस्य मिथ्यादृष्टेर्भवन्)सादिरभव्यस्यानादि ध्रुवो, भव्यस्याध्रुव इति। अध्रुवोदयानां द्विविधः सादिरध्रुवः, अध्रुवोदयित्वादेव भावितः। ध्रुवोदयानां त्रिधा। कथं? घातिध्रुवोदयानां क्षीण-कषायान्ते, नामध्रुवोदयानामयोग्यन्ते भवत्यध्रुवो, ध्रुवस्त्वभव्यानामनादिश्चेति गाथार्थः ॥ १०१ ॥ उक्तः प्रकृत्युदयः ॥

स्थित्युदय उच्यते—

**उदओ ठिइखएणं संपत्तीए सभावओ पढमो। सति तम्मि भवे बीओ पओगउदीरणाउदओ ॥ १०२ ॥**

व्याख्या—स्थितिरबाधाकालस्तत् क्षयेण सम्प्राप्तौ वा द्रव्यादिहेतूनां य उदयः स विपाकोदयः स्वभावोदयः प्रथम इति। सति–विद्यमानेऽस्मिन् द्वितीयो भवति प्रयोगोदयः, अध्यवसायप्रयोगेणोदयावलिकारहितानां स्थितीनां यद्दलमुदयस्थितौ प्रक्षिप्यानुभवति, स उदीरणोदयो भण्यत इति गाथार्थः ॥ १०२ ॥

**उदीरणजोग्गाणं अब्भहिगट्ठिइ उदयजोग्गाओ। इस्सुदओ एगट्ठिइण निद्दूणाए गियालाए ॥ १०३ ॥**

व्याख्या—उदीरणायोग्यानां उत्कृष्टस्थितीनां अभ्यधिका उदययोग्याः स्थितय एकचत्वारिंशतां प्रकृतीनां। ताश्च प्रकृत्युदयेऽभिहिताः। शेषं साद्यनादिध्रुवाध्रुवादिमवं उदीरणातुल्यं। जघन्योदयस्तासामेकचत्वारिंशतां निद्रापञ्चकरहितानां षट्त्रिंशतामेकस्थित्युदयो भवत्यन्ते चरमस्थितिरित्यर्थः। निद्रासु पुनः परावर्त्तनाकाले प्रभूतस्थितीनामन्यत्र क्षेपादेकस्थितिर्न भवति,

विशेषस्तकं वक्ष्य इति गाथार्थः ॥ ९८ ॥

**चरिमोदयमुच्चाणं अजोगिकालं उदीरणाविरहे । देसूणपुव्वकोडी मणुयाउयसायसायाणं ॥ ९९ ॥**

व्याख्या—त्रसबादरपर्याप्तसुभगादेययशोमनुजगतितीर्थकरपञ्चेन्द्रियजात्युच्चैर्गोत्राणां अयोगिकाल उदीरणया विनाप्युदयो भवति तदन्यत्र नास्तीति विशेषः । सातासातमनुजायुषां अप्रमत्तादिगुणेषु वर्त्तमानस्य देशोनपूर्वकोटिकालं यावदुदय एव शुद्धो भवति, अन्यत्रोदीरणा उदयस्य सहचरेति गाथार्थः ॥ ९९ ॥

**तइयच्चिय पज्जत्ती जा ता निद्दाण होइ पंचण्हं । उदओ आवलिअंते तेवीसाएउ सेसाणं ॥१००॥**

व्याख्या—यावदाहारशरीरेन्द्रियपर्याप्तयस्तावन्निद्राणामुदयः, एतदूर्ध्वं उदीरणासहचरो भवत्युदयः । शेषाणां त्रयोविंशतिप्रकृतीनां आवलिकामात्रं कालमुदय एव शुद्धः केवलो भवति । कथं ? ज्ञानान्तरायदशकदर्शनचतुष्काणां क्षीणकषायान्तावलिकायामुदय एव भवति, संज्वलनलोभस्य सूक्ष्मसम्परायान्तावलिकायामुदय एव भवति, नारकतिर्यग्देवायुषां स्वान्तावलिकामुदयेनैवानुभवति, मिथ्यात्वस्त्रीपुंनपुंसकवेदानां अन्तरकरणे कृते प्रथमस्थित्यामावलिकाशेषायामुदय एव शुद्धो भवति, सम्यक्त्वस्यैतच्छेषावलिकामुदयेनैवानुभवति शेषकाले उदयान्नास्ति विशेषः । शेषप्रकृतीनां च नास्ति विशेषः इति गाथार्थः ॥ १०० ॥

**मोहे चउहा तिविहोवसेसत्तण्ह मूलपगईणं । मिच्छत्तुदओ चउहा अधुवधुवाणं दुविह तिविहो ॥१०१॥**

**उत्तो पगइउदओ**

व्याख्या—मोहनीये चतुर्विधः साद्यनादिध्रुवाध्रुवभेदेन भवत्युदयः । कथं ? उपशान्तगुणस्थानात्पतमानस्य सादिस्तत्स्थानम-

व्याख्या—उक्तशेषाणामध्रुवबन्धिनीनां एकचत्वारिंशत्प्रकृतीनां उत्कृष्टतोऽन्तर्मुहूर्त्तं सन्ततो बन्धो भवति, उत्तरकाले त्वध्रुवबन्धित्वादवश्यं परावर्त्तते, जघन्यतः समयेनैवेति कास्ताः मध्यमसंस्थानसंहननजातिचतुष्काणि स्थावरादयो दश नरकाहारकहास्यारतिद्विकानि, आतपोद्योते स्त्रीनपुंसकवेदौ स्थिरशुभयशांसि हुण्डसंस्थानान्त्यसंहननासाताप्रशस्तविहायोगतय इति। तीर्थंकरायुषां जघन्यतोऽप्यन्तर्मुहूर्तमेव उत्कृष्टतो यद् भवति तदुक्तमेव, अतस्तीर्थंकरबन्धको यद्युपशमश्रेणिमारोहति, ततोऽबन्धको भवति नान्यथेत्यन्तर्मुहूर्त्तं। हुरवधारणे, नैवमाहारकस्य तद्धेतुसम्भवेऽपि अन्तर्मुहूर्त्तमेव बन्धः। ध्रुवबन्धिनीनां भङ्गकत्रयं अनाद्यनन्तः, अनादिसान्तः, सादिसान्तः मिथ्यादृष्टिकाल इवावगन्तव्यमिति गाथार्थः ॥ ९६ ॥

उक्तो बन्धविधिरुदयविधिमाह—

**होइ अणाइ अणंतो अणाइसंतो धुवोदयाणुदओ। साइसपज्जवसाणो अधुवाणं तह य मिच्छस्स ॥ ९७ ॥**

व्याख्या—भवत्यनाद्यपर्यवसानोऽनादिसान्तो ध्रुवोदयानामष्टचत्वारिंशतां प्रकृतीनां, वर्णादिविंशतिः तैजसकार्मणसप्तकं अगुरुलघुनिर्माणस्थिरास्थिरशुभाशुभज्ञानावरणान्तरायदशकदर्शनचतुष्कमिथ्यात्वानां विपाकोदय इति अभव्यभव्यानाश्रित्य-अध्रुवोदयानां पुनः सादिः सपर्यवसानो भवत्युदयोऽध्रुवोदयित्वादेव, तथा च मिथ्यात्वस्यापि प्रतिपतितसम्यग्दृष्टिमाश्रित्य भवतीति गाथार्थः ॥ ९७ ॥

**पयडिट्ठिइमाईया भेया पुव्वुत्तया इहं नेया। उदीरणउदयाणं जं नाणत्तं तयं वोच्छं ॥ ९८ ॥**

व्याख्या—प्रकृतिस्थित्यनुभागप्रदेशभेदाः पूर्वोक्ता बन्धवदत्राप्युदये द्रष्टव्याः। उदीरणोदययोर्नानात्वं—योऽत्र भेदो

यतो व्यवहारिकसत्त्वा अपि स्थावरकायमुपगताः कायस्थित्या इयन्तं कालं तिष्ठन्ति, न च तत्र वैक्रियाहारकयोः तद्विपक्षयोः बन्धोऽस्ति। पराघातोच्छ्‌वासत्रसबादरपर्याप्तप्रत्येकपञ्चेन्द्रियप्रकृतयः जघन्यतः समयमेकं बध्यन्ते. अध्रुवबन्धित्वात् सविपक्षत्वाच्च, उत्कृष्टतः सागरोपमाणां पञ्चाशीतं शतं। कथं? षष्ठपृथिव्यामुत्कृष्टस्थितिः द्वाविंशतिसागरोपमाणि तत्र चासां विपक्षबन्धासम्भवोऽसावपि नारको भवान्ते सम्यक्त्वमासाद्य मनुष्येष्वागच्छति, तत्र तथाविधमनुष्ठानं कृत्वा ग्रैवेयकेष्वेकत्रिंशत्सागरोपमस्थितिको देवो भवति, स च जन्मोत्तरकालं मिथ्यात्वोदयीभवति, च्यवनकाले सम्यक्त्वं गत्वा षट्षष्ठिसागरोपमाणि अच्युते वारत्रयेणानुभवति, पुनरन्तर्मुहूर्त्तं सम्यग्मिथ्यात्वं अनुभूय भूयोऽपि सम्यक्त्वं गच्छति, विजयादिषु वारद्वयेन षट्षष्ठिसागरोपमाणि समनुभवति, एतेषु च स्थानेषु गुणभवप्रत्ययादेव न तद्विपक्षाणां बन्धोऽस्तीति गाथार्थः ॥ ९४ ॥

**चउरंसउच्चसुभखगइपुरिसेसुस्सरतिगाण छावट्ठी। बिउणा मणुदुगउरलंगरिसहतित्थाण तेत्तीसं ॥ ९५ ॥**

व्याख्या—समचतुरस्रसंस्थानोच्चैर्गोत्रशुभविहायोगतिपुरुषवेदसुस्वरसुभगादेयानां जघन्यतः समयमेकं बन्धो भवति, सविपक्षत्वादुत्कृष्टतः त्रिपल्योपमाधिका सागरोपमाणां षट्षष्टिर्द्विगुणिता सन्ततो बन्धः। कथं? त्रिपल्योपमायुः तिर्यङ् मनुष्यो वा भवान्ते सम्यक्त्वमासाद्य प्राग्वत् द्वे षट्षष्ठी सागरोपमाणां संसारे भ्रमतीति। मनुष्यद्विकौदारिकाङ्गोपाङ्गप्रथमसंहननानां जघन्यतः समयमेकं बन्धो भवति, सविपक्षत्वात्, उत्कृष्टतस्त्रयस्त्रिंशत्सागरोपमाणि, तीर्थंकरस्य च। यतः पञ्चानुत्तरविमानेष्वियत्कालं स्थितिर्देवानामिति गाथार्थः ॥ ९५ ॥

**सेसाणंतमुहुत्तं समया तित्थाउगाण अंतमुहू। बंधो जहण्णओ वि हु भंगतिगं निच्चबंधीणं ॥ ९६ ॥**

व्याख्या—सप्तविधबन्धके मिथ्यादृष्टौ क्लिष्टे बलवति प्रथमकषायमिथ्यात्वस्त्यानर्द्धित्रिकाणां परमः प्रदेशबन्धो भवति। आसां सास्वादने बन्धव्युपरमः तत्र वाऽनन्तानुबन्धिनां साद्यादिश्चतुर्विधो बन्धो मिथ्यात्वप्रविभागप्राप्तेः प्राप्नोति तन्निषेधार्थं मिथ्यादृष्टौ। बलप्रकर्षख्यापनार्थमिदमाह—नामध्रुवाणां नवानां जघन्योऽत्रबलार्थसङ्क्लेशभणनेनैतद् ज्ञापयत्यासां साधारणेऽपर्याप्तके हीनबले [एकोन] त्रिंशद्बन्धके जघन्यप्रदेशबन्धो भवतीति गाथार्थः ॥९२॥ प्रदेशबन्धः समाप्तः ॥

**समयादसंखकालं तिरिदुगणीयाणि जाव बज्झंति। वेउव्वियदेवदुगं पल्लतिगं आउगंतमुहू ॥ ९३ ॥**

व्याख्या—तिर्यग्द्विकनीचैर्गोत्राणि जघन्यतः एकं समयं बध्यन्ते, द्वितीयसमये यतः परावृत्य तद्विपक्षभूतानि बध्नाति उत्कृष्टतोऽसङ्ख्येयकालं असङ्ख्येयलोकाकाशप्रदेशमानं बध्यन्ते, यतस्तेजोवायुकायिकेषु गतस्यैतान्येव बन्धमुपगच्छन्ति, न विपक्षकर्माणीति। वैक्रियदेवद्विके जघन्यतः समयं परावर्त्तमानत्वादुत्कृष्टतः पल्योपमत्रिकं, यतोऽसङ्ख्येयवर्षायुषस्तिर्यग्मनुष्या जन्मत आरभ्य ता एव प्रकृतीर्बध्नन्ति। आयूंषि यावदन्तर्मुहूर्त्तं तावच्चत्वार्यपि बध्यन्ते, नात्र जघन्यत समयसम्भव एतदुत्तरत्रापवदिष्यतीति गाथार्थः ॥ ९३ ॥

**देसूणपुव्वकोडी सायं अस्संखपोग्गला उरलं। परघाउस्सासतसचउपणिंदिपणसियमयरसयं ॥ ९४ ॥**

व्याख्या—सातं जघन्यतः समयमेकं बध्यते, सविपक्षत्वादुत्कृष्टतो देशोनपूर्वकोटिं यावत्, यतः सयोगिकेवलिनो नासातस्य बन्धका इति। औदारिकशरीरं जघन्यतः समयमेकं बध्यते सविपक्षत्वादुत्कृष्टतोऽसङ्ख्येयपुद्गलपरावर्त्ताः। कथं?

---

१ प्रथमकषायस्त्यानर्द्धित्रिकाणाम् ॥ २ अनुत्कृष्टन्धः ॥

व्याख्या–मौलानामौत्तराणां वाऽल्पतराणां प्रकृतीनां बन्धे सति पर्याप्तः संज्ञी यदोत्कृष्टयोगी भवति, तदाऽध्रुवबन्धिनीनां समयमेकमुत्कृष्टप्रदेशबन्धं करोति तुशब्दग्रहणं संज्ञिनोऽनेकगुणख्यापकम् । सातोच्चयशसां सूक्ष्मो, देवायुषोऽप्रमत्तः, शेषायुषां स्त्यानर्द्धित्रिकानन्तानुबन्धिस्त्रीनपुंसकमिथ्यात्वनीचैर्गोत्राणां मिथ्यादृष्टिः तिर्यग्द्विकैकेन्द्रियजातिउरलहुण्ड (दुःखस्वर्ज) स्थवरादिनव-ध्रुवनवानां प्रत्येकबादरयोश्चैकेन्द्रियप्रायोग्यत्रयोविंशतिबन्धके, द्वित्रिचतुःपञ्चेन्द्रियान्त्यसंहननौदारिकाङ्गोपाङ्गमनुष्यद्विकत्रसानाम पर्याप्तकत्रसयोग्यपञ्चविंशतिबन्धके, पराघातोच्छ्वासपर्याप्तकानामेकेन्द्रियप्रायोग्यपञ्चविंशतिबन्धके, आतपोद्योतयोरेकेन्द्रियप्रायोग्य-षड्विंशतिबन्धके स्थिरादिपञ्चसमचतुरस्रविहायोगतिद्विकवैक्रियषट्कदुःस्वराणां देवनारकयोग्याऽष्टाविंशतिबन्धके, मध्यमसंस्थान-संहननानां तिर्यग्मनुष्यप्रायोग्यैकोनत्रिंशद् बन्धके, मिथ्यादृष्टावुत्कृष्टः प्रदेशबन्धो भवति, यतोऽस्मिन्नेवाल्पतरप्रकृतिबन्धो भवति । प्रथमसंहननतीर्थंकरयोरेकोनत्रिंशद्बन्धकेष्वविरतादिषु, आहारद्विकस्याप्रमत्ते त्रिंशद् बन्धके, हास्यरत्योश्चारतिशोका-सातानामविरते परमः प्रदेशबन्धो भवति, समयमेकमिति । एतद्व्यत्यासे जघन्यो भवति । स चासंज्ञिनि हीनबले वैक्रियषट्कस्य, देवनारकायुषोः स्वबन्धाद्यसमये भवति । तुशब्दात्तीर्थंकराहारकाणामप्रमत्तो देवप्रायोग्यैकत्रिंशद् बन्धकः करोति । शेषाणाम-संज्ञीतिसाधारणापर्याप्तकः प्रथमसमयोत्पन्नो हीनबलस्तिर्यक्प्रायोग्यैकोनत्रिंशद् बन्धकः, तत्रासम्भविनामेकेन्द्रियप्रायोग्यपञ्च-विंशतिषड्विंशतिबन्धकः समयमेकं जघन्यं प्रदेशबन्धं करोतीति गाथार्थः ॥ ९१ ॥

**सत्तविह बंधि मिच्छे परमो अणमिच्छथीणगिद्धीणं । उक्कोससंकिलिट्ठे जहण्णओ नाम धुवियाणं ॥९२॥**

१ अत्रत्या मलयगिरिवृत्तिरवलोकनीया ।

व्याख्या—शेषा जघन्याजघन्योत्कृष्टाः त्रयोऽपि साद्यध्रुवा भवन्ति । शेषाणां ध्रुवबन्धिनीनां अध्रुवबन्धिनीनां च 'सर्वे' चत्वारोऽपि जघन्याजघन्योत्कृष्टाऽनुत्कृष्टाः साद्यध्रुवा भवन्ति । स्वामित्वमाह–यासां प्रकृतीनां यत्र बन्धव्यवच्छेदो भवति तासां तत्रैवोत्कृष्टः प्रदेशबन्धो भवतीति । द्वितीयकषायाणामविरते आयुषः प्रविभागतो मिथ्यात्वानन्तानुबन्धिप्रविभागतश्च, तृतीयकषायाणां देशविरते द्वितीयकषायप्रविभागतश्च, निद्राप्रचलयोरपूर्वकरणे आयुषः प्रविभागतः, स्त्यानर्द्धित्रिकविभागतश्च, एवं भयजुगुप्सयोरप्यपूर्वकरणे, पुंसञ्ज्वलनानां बादरकषाये क्रमेण (पञ्च) चतुस्त्रिद्व्येकबन्धकत्वेषु, सर्वेऽप्येते सप्तबन्धका उत्कृष्टयोगिनो मन्तव्याः । ज्ञानान्तरायदर्शनचतुष्काणां सूक्ष्मसम्पराये षड्बन्धके क्षपके सर्वोत्कृष्टयोगे समयमेकमुत्कृष्टः प्रदेशबन्धो भवति, तमेवैक समयं सादिर्भूत्वाऽध्रुवो भवतीति गाथार्थः ॥ ८९ ॥

**निययअबंधचुयाणं णुक्कोसो साइणाइ तमपत्ते । साई अधुवो धुवबंधियाण धुवबंधणादेव ॥ ९० ॥**

व्याख्या—आसामेव त्रिंशत्प्रकृतीनामबन्धकत्वस्थानाद् भ्रष्टानां जीवानां या यत्र बन्धमायाति, तस्यास्तत्रैवानुत्कृष्टः प्रदेशबन्धः प्रतिपतमानस्येति सादिः, अनादिः तत्स्थानमप्राप्तानां, सादिश्चावश्यमध्रुवः, अनादिश्चाभव्ये ध्रुव इति । अध्रुवबन्धिनीनां सर्वासां शुभानामशुभानां च साद्यध्रुवोऽसौ अध्रुवबन्धकत्वादेवानेनैव विधिना जघन्याजघन्योत्कृष्टा अपि द्रष्टव्या इति गाथार्थः ॥ ९० ॥

अध्रुवबन्धिनीनां स्वामित्वमाह—

**अप्पयरपगइबंधे उक्कोड जोगी उ सन्निपज्जत्तो । कुणइ पएसुक्कोसं जहण्णयं तस्स वच्चासे ॥ ९१ ॥**

सर्वासां बन्धात्, अतो न परभागतः, स्वभागतश्च भवत्येव, यतश्चत्वारोऽपि भागा अन्यतरायुषो भवन्तीत्यविकल्पमेतत्। शेषाणां पञ्चानां कर्मणामुभयतो भवत्युत्कृष्टः प्रदेशबन्धः, आयुष्कस्य बन्धाभावे परभागतो, मोहनीयस्य च स्वप्रकृतीनां विकलानां बन्धस्तद्भावे स्वभागतश्च 'परम' उत्कृष्टप्रदेशबन्ध उभयतोऽपि भवतीति गाथार्थः ॥ ८१ ॥

**उक्कोसमाइयाणं आउंमि न संभवो विसेसाणं। एवमिणं किंतु इमो निओ जोगट्ठितिविसेसो ॥ ८२ ॥**

व्याख्या—उत्कृष्टादीनामायुषि विशेषाणां सम्भवो नास्तीति पराभिप्रायो, यतः सर्वदैवाष्टमो मौलो भागश्चतुर्गुणः उत्तरप्रकृत्याश्रयो भागः। एवं हि सर्वदैव तुल्यता ? अत्रोच्यते, एवमेतदसन्दिग्धं, किन्त्वत्र योगस्थित्योर्विशेषेण विशेषः, बलवता गृहीतं कर्मदलं प्रभूतं भवति, बृहद् भागो भवति, एवं हि परमः प्रदेशबन्धः। तद्व्यत्यये जघन्य इति गाथार्थः ॥ ८२ ॥

**मोहाउयवज्जाण अणुक्कोसो साइयाइओ होइ। साई अधुवा सेसा आउगमोहाण सव्वे वि ॥ ८३ ॥**

व्याख्या—मोहनीयायुष्कवर्जानां यासां मूलप्रकृतीनां अनुत्कृष्टः प्रदेशबन्धः साद्यादिः चतुर्विधो भवति, शेषा जघन्याजघन्योत्कृष्टाः साद्यध्रुवा भवन्तीति गाथार्थः ॥ ८३ ॥

**छब्बंधगस्स उक्कोस–जोगिणो साइ अध्धुवुक्कोसो। अणुक्कोसो तच्चुआओ अणाइअधुवा धुवा सुगमा ॥८४॥**

व्याख्या—षट्बन्धकस्य सूक्ष्मसम्परायस्य आयुर्मोहनीययोर्बन्धापगमे उत्कृष्टयोगे वर्त्तमानस्य क्षपकस्योत्कृष्टः प्रदेशबन्धः समयमेकं भवति, उपशमश्रेण्यां तस्मात् स्थानात् च्युतस्यानुत्कृष्ट एवं द्वावपि साद्यध्रुवौ, तत्स्थानमप्राप्तानामनादिरभव्यानां ध्रुवो भव्यानामध्रुवो उत्कृष्ट इति गाथार्थः ॥ ८६ ॥

**कमसो वुड्ढठिईणं भागो दलियस्स होइ सविसेसो। तइयस्स सव्वजेट्ठो तस्स फुडत्तं जओ णप्पे ॥७८॥**

व्याख्या—'क्रमशः' परिपाट्या, बृहत्स्थितीनां कर्मणां एकपरिणामगृहीतस्य दलस्य भागः सविशेषो भवति, बृहत्तर इत्यर्थः। एवं हि ज्येष्ठो मोहनीयस्य, शेषघातित्रयस्य यद्यपि मोहनीयादल्पतरस्तथापि स्वस्थानतुल्यो, यद्यपि नामगोत्रयोः पूर्वोक्तेभ्यः स्वल्पतरस्तथापि स्वस्थाने तुल्यः तुल्यस्थितित्वादायुषः सर्वलघुरिति । एतदपवदति यः 'तृतीयस्य' वेदनीयस्य भागः स 'सर्वज्येष्ठः' सर्वोत्कृष्टस्तस्य स्पष्टत्वं सुखदुःखानुभवनव्यक्तिर्यतो नाल्पे दले भवतीति गाथार्थः ॥ ७८ ॥

**जं समयं जावइयाइं बंधए ताण एरिसविहीए। पत्तेयं पत्तेयं भागे निव्वत्तए जीवो ॥ ७९ ॥**

व्याख्या—'यस्मिन् समये' यस्मिन्नवसरे यावन्ति कर्माणि बध्नाति तावतां कर्मणां ईदृग्विधिना पूर्वोक्तन्यायेन प्रत्येकं प्रत्येकं भागान्निर्वर्त्तयति जीवः तेभ्यः प्रयच्छतीति गाथार्थः ॥ ७९ ॥

**जह जह य अप्पपगईण बंधगो तह तहत्ति उक्कोसं। कुणइ पएसबन्धं जहण्णयं तच्च वच्चासा ॥ ८० ॥**

व्याख्या—यथा यथा अल्पप्रकृतीनां मौलानामौत्तराणां च बन्धकः, तथातथोत्कृष्टप्रदेशबन्धं करोति, विभागानामल्पत्वादिति। जघन्यं तु तद्व्यत्ययेन प्रभूतप्रकृतिबन्धविभागानां बाहुल्यादिति गाथार्थः ॥ ८० ॥

**नाणंतराइयाणं परभागा आउयस्स नियगाओ। परमो पएसबन्धो सेसाणं उभयओ होइ ॥ ८१ ॥**

व्याख्या—ज्ञानान्तराययोः 'परभागतः' परभागप्राप्तेर्मोहायुषोर्भागविभागप्राप्तेरुत्कृष्टः प्रदेशबन्धो भवति स्वकीयप्रकृतीनां ध्रुवबन्धित्वादिति ध्रुवः। आयुषो निजभागादेवोत्कृष्टः प्रदेशबन्धो, यतः सर्वदैवायुषो बन्धेऽष्टमो विभागः, तद्बन्धे

स्थानानि योगा मनोवाक्कायास्तेषां स्थानविशेषाः अल्पबहुमाणचेष्टा विकल्पानिकृष्टजीववीर्यसमुदायाः सङ्घाता इत्यर्थः, तेभ्योऽप्य-सङ्ख्येयगुणाः प्रकृतिभेदा एकैकप्रकृतेस्तीव्रमन्दत्वविशेषास्तेभ्योऽपि प्रकृतीनां स्थितिविशेषा जघन्यस्थितेः समयवृद्ध्याऽसङ्ख्येयगुणा गाथार्थः ॥ ७५ ॥

ठितिबंधज्झवसाया तत्तो अणुभागबंधट्ठाणाणि । तत्तो कम्मपएसाऽणंतगुणा तो रसब्भेया ॥ ७६ ॥

॥ अणुभागबंधो सम्मत्तो

व्याख्या—तेभ्योऽपि प्रकृतिस्थितिबन्धाध्यवसायाः मोहनीयोदयविशेषाः तीव्रमन्दत्वविकल्पा असङ्ख्येयगुणास्तेभ्योऽप्यनुभागबन्धस्थानान्यनुभागबन्धाश्रयाः कषायोदया जीवस्य लेश्यापरिणामविशेषाः, असङ्ख्येयगुणास्तेभ्योऽप्येकाध्यवसायगृहीतकर्मपरमाणवोऽनन्तगुणा भवन्ति, तेभ्योऽप्येकपरिणामगृहीतस्य कर्मदलस्य निकृष्टरसविशेषा अनन्तगुणा भवन्तीति गाथार्थः ॥ ७६ ॥ ॥ अनुभागबन्धः समाप्तः ॥

एगपएसोगाढे सव्वपएसेहिं कम्मुणा जोगे जीवो पोग्गलदव्वे गेण्हइई साई अणाई वा ॥ ७७ ॥

व्याख्या—'एकप्रदेशावगाढानि' जीवावगाहक्षेत्रमात्रावस्थितानि सर्वैः प्रदेशैः प्रत्येकमात्रविभागैः 'कर्मण' इति औदारिकादिवर्गणानां सम्बन्धीनि, 'योग्यानी' ति तत्कालहेतुढौकितानि, जीवः पुद्गलात्मकद्रव्याणि गृह्णाति । 'सादीनि अनादीनि वा' प्रवाहापेक्षयाऽनादीनि प्रतिसमयं बन्धकत्वात्तीव्रमन्दत्वविवक्षया सादीनीति गाथार्थः ॥ ७७ ॥

तस्यैकाध्यवसायगृहीतस्य दलस्य भागपरिकल्पनामाह—

थिरसुभजससायाणं सप्पडिवक्खाण मिच्छ सम्मो वा। मज्झिमपरिणामो कुणइ थावरेगिंदिए मिच्छो ॥७३॥

व्याख्या—'स्थिरशुभयशःसातानां सप्रतिपक्षाणामि'ति, अस्थिराशुभायशोऽसातानां च मिथ्यादृष्टिर्वा जघन्यानुभागबन्धं करोति मध्यपरिणामः, यतो विशुद्ध्यमानपरिणामः शुभानामविशुद्ध्यमानपरिणामोऽशुभानामुत्कृष्टानुभागं करोति, अतो मध्यमपरिणाम एवासामुभयत्र बन्धसद्भावान्न दोष इति। स्थावरैकेन्द्रिययोर्जघन्यानुभागं मिथ्यादृष्टिरेव तद्योग्यविशुद्धपरिणामः करोति, स्थावरैकेन्द्रिययोः सहचरितयोरपि पृथगुच्चारणादातपस्य तु स एव सङ्क्लिष्ट इति गाथार्थः ॥ ७३ ॥

५ द्वारे जघन्यानुभागबन्धस्वामित्वम्

सुसराइ तिन्नि दुगुणा संठिइसंघयणमणुयविहजुयले। उच्चे चउगइच्छामिच्छा अरईसोयाण उ पमत्तो ॥७४॥

व्याख्या—सुस्वरसुभगादेयानां दुःस्वरानादेयदुर्भगानां च संस्थानानां संहननानां च सम्पूर्णानां मनुष्यगतिविहायोगतियुग्मयोरुच्चत्वस्य चैषां त्रयोविंशतीनां चतुर्गतिका अपि मिथ्यादृष्टयो जघन्यानुभागं कुर्वन्ति। तुशब्दाद्धास्यरत्योरपूर्वकरणः, पुरुषवेदस्य बादरकषायः क्षपक इति। सर्वत्र शुभपरावर्त्तमानानां मध्यमपरिणामोऽशुभप्रकृतिबन्धाभिमुखः, अशुभानां शुभप्रकृतिबन्धाभिमुखः अपरावर्त्तशुभानां सङ्क्लिष्टोऽशुभानां विशुद्धः। रतिशोकयोः प्रमत्तो जघन्यानुभागबन्धं करोति, यतस्तद्बन्धकेषु सोऽतिविशुद्ध इति गाथार्थः ॥ ७४ ॥

एषामनुभागबन्धस्थानानां बन्धाध्यवसायप्रमाणमाह—

सेढिअसंखेज्जंसो जोगट्ठाणा तओ असंखेज्जा। पयडीभेया तत्तो ठितिभेया होंति तत्तो वि ॥ ७५ ॥

व्याख्या—सप्तरज्जुप्रमाणस्य लोकाकाशस्यैकप्रदेशिकी पङ्क्तिः श्रेणिरभिधीयते—अस्या असङ्ख्येयभागमात्राणि योग-

जघन्यमपि, शेषाणामाह–

**आहारस्सपमत्तो कुणइ जहन्नं पमत्तयाभिमुहो। नरतिरिय चोद्दसण्हं देवाजोगाण साऊणं ॥ ७० ॥**

व्याख्या—आहारकद्विकस्याप्रमत्तः प्रमत्ताभिमुखो जघन्यानुभागं करोति। तिर्यञ्चो वा मनुष्या वा 'देवायोग्यानां' नारकसुरविकलसूक्ष्मत्रिकवैक्रियद्विकानां चतुर्दशानां 'स्वायुषां' मनुष्यतिर्यगायुषोरिति जघन्यानुभागं कुर्वन्ति, तद्योग्यसंक्लिष्टा इति गाथार्थः ॥ ७० ॥

**ओरालियतिरियदुगे नीउज्जोयाण तमतमा छण्हं। मिच्छनरयाणभिमुहो सम्मदिट्ठी उ तित्थस्स ॥ ७१ ॥**

व्याख्या—औदारिकद्विके शुभानां शुभाः सहचरा इत्युद्योते च पृथग्विभक्तिनिर्देशादीशानान्ता देवास्तद्योग्यसंक्लिष्टा जघन्यानुभागं कुर्वन्ति। तिर्यग्द्विकेऽशुभानामशुभाः सहचरा इति नीचैर्गोत्रे च तमस्तमा नारकाः सम्यक्त्वं प्रतिपत्तुकामाः, पूर्वोक्तत्रिकस्य चातिक्लिष्टा मिथ्यादृष्टयस्त एव षण्णां जघन्यानुभागं कुर्वन्ति। मिथ्यात्वनरकयोरभिमुखः सम्यग्दृष्टिस्तुशब्दादविरतः तीर्थंकरस्य जघन्यानुभागं करोति, तद्बन्धकेषु तस्यातिसंक्लिष्टत्वादिति गाथार्थः ॥ ७१ ॥

**सुभधुवतसाइचउरो परघायपणिंदिसास चउगइया। उक्कडमिच्छा ते च्चिय थीअपुमाणं विसुज्झंता ॥७२॥**

व्याख्या—शुभाश्च ध्रुवाः शुभवर्णादिचतुष्कागुरुलघुतैजसकार्मणनिर्म्माणाख्याः, 'त्रसादिचतस्रः' पराघातपञ्चेन्द्रियजात्युच्छ्वासानां पञ्चदशानां चतुर्गतिका अतिसङ्क्लिष्टमिथ्यादृष्टयः जघन्यानुभागं कुर्वन्ति। स्त्रीवेदनपुंसकयोस्त एव विशुद्ध्यमानपरिणामा अशुभयोरिति जघन्यानुभागं कुर्वन्तीति गाथार्थः ॥ ७२ ॥

सुराहारकवैक्रियद्विकपञ्चेन्द्रियजातिचतुरस्रोच्छ्वासपराघातप्रशस्तविहायोगतितीर्थकराणां त्रसादिनवानामेकविंशतेः क्षपणार्होऽपूर्वकरणः, यशःसातोच्चैर्गोत्राणां सूक्ष्मसम्परायक्षपकः समयमेकमुत्कृष्टमनुभागबन्धं करोति, अप्राप्तपूर्वकत्वात् सादिरनन्तरमेवाभावादध्रुवः, एवं शुभद्विचत्वारिंशतामिति उपशमश्रेण्याः प्रतिपतमानस्यासामनुत्कृष्टो साद्यध्रुवः, वर्णादयश्चत्वारः शुभगणेऽशुभगणे च तेन त्रिचत्वारिंशदशुभा ध्रुवबन्धिन्योऽष्टौ शुभा इति गाथार्थः ॥ ६८ ॥ अशुभध्रुवाणां जघन्याजघन्यौ सर्वशुभानामुत्कृष्टानुत्कृष्टौ उक्तौ, सर्वाशुभानामुत्कृष्टानुत्कृष्टानुभागबन्धमाह—

**सयलासुभायवाणं उज्जोयतिरिक्खमणुयआऊण। सण्णी करेइ मिच्छो समयं उक्कोसअणुभाग ॥ ६९ ॥**

व्याख्या—सकलानाम्-अशेषाणामशुभानां प्रकृतीनां ब्यशीतेः सञ्ज्ञिमिथ्यादृष्टिरतिक्लिष्टः समयमेकमुत्कृष्टानुभागबन्ध करोति, आतपोद्योततिर्यङ्मनुष्यायुषां शुभत्वात्, सुविशुद्धोऽभिहित एव, असावपि साद्यध्रुवः कदाचित्कसम्भवात्, अनुत्कृष्टोऽपि साद्यध्रुवो भूयोऽप्युत्कृष्टभावादिति। सामान्योक्तमपि विशेषित स्वामित्वमुच्यते नारकसूक्ष्मत्रिकाणां तिर्यग्मनुष्यायुषां च तिर्यञ्चो मनुष्या वा उत्कृष्टानुभागबन्ध कुर्वन्ति। कुत एतदवसीयते? देवनारकाणामासां बन्धाभावात्। एकेन्द्रियस्थावरातपानां मिथ्यादृष्टयो देवा, यत आसां नारका अप्यबन्धका, उद्योतस्य तमस्तमा नारकास्तिर्यग्द्विकान्त्यसंहननानां देवानारकाश्च मिथ्यादृष्टय उत्कृष्टानुभागबन्धं कुर्वन्ति,। तिर्यञ्चो मनुष्या वा अतिक्लिष्टा नारकप्रायोग्यानां बन्धका नेषाम्। शेषाशुभानामष्टषष्टिप्रकृतीनामसातनीचास्थिराद्युपघाताशुभविहायोगतिवर्णादिमध्यमसंहननचतुष्कपञ्चसंस्थानघातिपञ्चचत्वारिंशतां चतुर्गतिका मिथ्यादृष्टय उत्कृष्टानुभागबन्धं कुर्वन्तीति गाथार्थः ॥ ६९ ॥ उक्त सर्वासामुत्कृष्टानुभागस्वामित्व ध्रुवबन्ध्यशुभानां

न्योऽनुभागबन्धश्चतुर्द्धा भवति,शेषा उभयत्र त्रयो भेदाः साद्यध्रुवाः। अध्रुवबन्धिनीनां चत्वारोऽपि साद्यध्रुवा इति गाथार्थः॥६६॥

एतदेव स्वामित्वेन भावयति—

**असुभधुवाण जहण्णं बन्धगचरिमा कुणंति सुविसुद्धा। समयं परिचरमाणा अजहण्णं साइओ दो वि॥६७॥**

व्याख्या—अशुभध्रुवबन्धिनीनां जघन्यमनुभागबन्धं बन्धकचरमास्तद्बन्धकानां पश्चिमाः 'सुविशुद्धाः' अतिसुविशुद्धपरिणामाः कुर्वन्ति, त एवोच्यन्ते—अनन्तानुबन्धिस्त्यानर्द्धित्रिकमिथ्यात्वानां मिथ्यादृष्टिः समकं सम्यक्त्वसंयमं प्रतिपद्यमानः समयमेकं जघन्यानुभागबन्धं करोति, मध्यमकषायाणां अष्टानां सम्यग्दृष्टिः संयमं प्रतिपद्यमानः, निद्राद्विकाप्रशस्तवर्णाद्युपघातभयजुगुप्सानामपूर्वकरणः, संज्वलनानां बादरकषायक्षपकः, सम्पूर्णज्ञानावरणान्तरायदर्शनावरणचतुष्कानां सूक्ष्मकषायक्षपकः समयमेकं जघन्यमनुभागबन्धं करोति, अतोऽप्राप्तपूर्वकत्वात् सादिः, तदनन्तरमेवाभावादध्रुवः, एत एव जीवा उपशमश्रेण्याः प्रतिपतमाना अजघन्यमनुभागबन्धं कुर्वन्त्यसावपि एवमेव साद्यध्रुवो भवति, अप्राप्ततद्गुणानामनादिः, अभव्यानां ध्रुवः, त्रिचत्वारिंशतामशुभध्रुवबन्धिनीनामिति गाथार्थः ॥ ६७ ॥

**सयलसुभाणुक्कोसं एवमणुक्कोसगं च नायव्वं। वण्णाइ सुभमसुभा तेणं तेयालधुवअसुभा ॥ ६८ ॥**

व्याख्या—अगुरुलघुतैजसकार्मणनिर्माणशुभवर्णादिचतुष्काणां क्षपणार्होऽपूर्वकरण उत्कृष्टानुभागबन्धं करोति समयमेकं ततश्चासौ साद्यध्रुवः, उपशमाद् भ्रष्टः स एवानुत्कृष्टमनुभागबन्धं करोति असावपि साद्यध्रुवः, तद्गुणमप्राप्तानामनादिरभव्यानां ध्रुव इति। आतपोद्योततिर्यग्मनुष्यायुषां मिथ्यादृष्टिः, मनुष्यद्विकौदारिकद्विकाद्यसंहनननामविरता देवाः, देवायुषोऽप्रमत्तः,

सुरनरतिरश्चामायूंषि मुक्त्वा, यतस्तेषां विशुद्ध्या स्थितेः ह्रस्वत्वं तीव्रस्वभावानुभावत्वं वा व्यक्तम् । संक्लेशतोऽतोऽशुभता सिद्धैव द्रष्टव्या इति गाथार्थः ॥ ६९ ॥ स्थितिवन्धः समाप्तः ॥

**अणुभागो णुक्कोसो नामतइज्जाण घाइअजहण्णो । गोयस्स दोवि एए चउव्विहा सेसया दुविहा ॥ ६५ ॥**

व्याख्या—अनुभागोऽनुत्कृष्टो नामवेदनीययोः घातिनां ज्ञानदर्शनावरणमोहान्तरायाणामजघन्यो गोत्रस्य द्वावप्येतौ चतुर्विधौ भवतः साद्यनादि ध्रुवा इति, उक्तशेषभेदाः साद्यध्रुवा आयुषश्चत्वारोऽपीत्यक्षरार्थः । भावना तु मोहनीयस्य जघन्यानुभागवन्धं वादरक्षपको, ज्ञानदर्शनावरणान्तरायाणां जघन्यानुभागवन्धं सूक्ष्मः स्वान्तसमये एकं समयं करोति, नामगोत्रवेदनीयानां स एव सूक्ष्म उत्कृष्टानुभागवन्धं समयमेकं करोति, एवमेतौ द्वावप्यप्राप्तपूर्वकत्वात् सादी तदनन्तरमेवाभावादध्रुवौ, एवमेवोपशमश्रेण्यां घातिनामजघन्यो, नामगोत्रवेदनीयानामनुत्कृष्टः साद्यध्रुवो भव्येष्वनादि ध्रुवोऽभव्येष्विति । घातिनामुत्कृष्टानुभागवन्धं संज्ञिमिथ्यादृष्टिः करोत्येकं समयं स च साद्यध्रुवः, अनुत्कृष्टोऽपि तद्भ्रष्टाद् भवति स एव । नामवेदनीययोः मिथ्यादृष्टिर्जघन्यानुभागवन्धं समयमेकं करोति, मध्यमपरिणामः प्रकृत्योः शुभाशुभयोः सङ्क्रममाणः, अतः साद्यध्रुवोऽसौ, भूयस्तत्सम्भवात्, अजघन्योऽप्येवमेव गोत्रस्य सप्तमपृथिव्यां मिथ्यात्वस्य प्रथमस्थित्यन्तसमये जघन्यानुभागवन्धोऽऽसौ साद्यध्रुवः, अतस्तस्माच्च्युतस्याजघन्योऽसावपि साद्यध्रुवः, अप्राप्ततद्गुणस्यानादिः, अभव्यस्य ध्रुवश्चेति । आयुषोऽध्रुवत्वाच्चत्वारोऽपि भाविता एवेति गाथार्थः ॥ ६५ ॥

**सुभधुवियाणणुक्कोसो चउहा अजहण्ण असुभधुवियाणं । साईअधुवा सेसा चत्तारि वि अधुवबंधीणं ॥ ६६ ॥**

व्याख्या--शुभाश्च ताः ध्रुवाश्च शुभध्रुवास्तासामष्टानामनुत्कृष्टोऽनुभागवन्धः, अशुभध्रुववन्धिनीनां त्रिचत्वारिंशतामजघ-

कस्याप्रमत्तः प्रमत्ताभिमुखः। देवायुषो[1]ऽप्रमत्तो विशुद्ध्यमानो, यतः शुभायुस्त्रयस्य विशुद्ध्या स्थितेर्वृद्धिरित्युत्तरगाथायां भणिष्यत्येवेत्येवमष्टाविंशतिः। शेषाणां चतुर्गतिकाः संज्ञिमिथ्यादृष्टय उत्कृष्टां स्थितिं कुर्वन्ति समयमेकं, पश्चात्त एवानुत्कृष्टामतो द्वावपि साद्यध्रुवावेव। द्वितीयार्द्धेन जघन्यस्वामित्वमाह–एकेन्द्रिया जघन्यां सप्ताशीतिप्रकृतीनां स्थितिं कुर्वन्ति, "बादराः पर्याप्तका" इत्याद्यभिहितमेव। "असंज्ञी"ति देवत्रिकनरकत्रिकवैक्रियद्विकानामसंज्ञिनो जघन्यस्थितिं कुर्वन्ति, एकेन्द्रियेषु तासां बन्धाभावात्। क्षपकाश्च कासाञ्चिदाहारकतीर्थङ्कराणामपूर्वकरणः, पुरुषसञ्ज्वलनानां बादरकषायक्षपकः, सकलज्ञानावरणान्तरायदर्शनावरणचतुष्कसातोच्चयशःकीर्त्तीनां सूक्ष्मसम्परायक्षपकोऽन्तसमये समयमेक जघन्यं स्थितिबन्धं करोति, आहारकतीर्थकरवेदानां यद्यपि क्षपकश्रेण्यां जघन्यो बन्धस्तथापि अध्रुवबन्धित्वाच्चतुर्विधो न भवतीति गाथार्थः॥ ६३॥

**सव्वाण ट्ठिई असुभा उक्कोसुक्कोससंकिलेसेण। इयराउ विसोहीए सुरनरतिरियाउए मोत्तुं॥ ६४॥**

**॥ ट्ठितिबंधो सम्मत्तो**

व्याख्या—सर्वासां प्रकृतीनां स्थितिरशुभा भवत्यशुभहेतुत्वादशुभवृक्षस्याशुभफलवत्। तमेवाशुभहेतुं दर्शयति–उत्कृष्टा सर्वोत्कृष्टसङ्क्लेशतस्तीव्रकषायोदयाद् भवत्यशुभानां तीव्ररसा कटुविपाका शुभानामपि संसारनिवासमात्रफलैव, न शुभानुभावा नीरसत्वाद्वालुकाकवलवदतोऽशुभा इति। 'इतरा' जघन्या, सा 'विशुद्धा' प्रतिपतत् कषायोदयेन भवति। एतदेवापवदति–

---

१ उवलभ्यतेऽयमेव पाठः सर्वत्र, परं सम्यङ् न, अप्रमत्ताभिमुखप्रमत्तस्य बन्धप्रथमसमय एवोत्कृष्टस्य संभवादन्यत्राबाधाहान्यानुत्कृष्टा तस्मात् 'देवायुषः प्रमत्तः' इति सम्यग्. ॥

पाणां ध्रुवबन्धिनीनां बादरपर्याप्तकैकेन्द्रियः पृथिवीजलप्रत्येकवनस्पतिरूपः तद्योग्यविशुद्धपरिणामो जघन्यं स्थितिबन्धं समयमेकं करोति, एवं सादिस्तद्भावपरित्यागादध्रुवः । अष्टादशानां जघन्याभावेऽबन्धकः, शेषध्रुवबन्धिनीनां जघन्याभावेऽजघन्यबन्धकोऽतोऽसावपि सादिः, सादिश्चावश्यमध्रुव इति गाथार्थः ॥ ६१ ॥

**अट्ठाराण जहण्णा उवसमसेढीए परिवडंतस्स । साई सेसवियप्पो सुगमा अधुवधुवाणंपि ॥ ६२ ॥**

व्याख्या—अष्टादशानां अघन्यो भवत्युपशमश्रेण्याः प्रतिपततः सादिः, सादिश्चाध्रुवोऽवश्य भवति तत्स्थानमप्राप्तस्यानादिरभव्यस्य ध्रुव इति । शेषविकल्पाः (अष्टादशानां) अध्रुवबन्धिनीनां चत्वारोऽप्यध्रुवबन्धित्वादेव सुखेनैव भाव्यन्ते साद्यध्रुवा इति, ध्रुवबन्धिनीनामप्युत्कृष्टानुत्कृष्टौ साद्यध्रुवौ भावितावेव संज्ञिनि मिथ्यादृष्टौ तयोर्भावादिति गाथार्थः ॥ ६२ ॥

अस्यैवार्थस्य भावनाय स्वामित्वमाह—

**सवाणवि पयडीणं उक्कोसं सण्णिणो कुणंति ट्ठिइं । एगिंदिया जहण्णं असण्णि खवगा य काणंपि ॥ ६३ ॥**

व्याख्या—सर्वासां प्रकृतीनां उत्कृष्टस्थितिं संज्ञिनः अपिशब्दात्तीर्थङ्कराहारकदेवायुर्वर्जानां मिथ्यादृष्टयः कुर्वन्ति, पञ्चदशानां तिर्यञ्चो मनुष्या वा नारकविकलसूक्ष्मत्रिकाणां देवद्विकवैक्रियद्विकतिर्यग्मनुष्यायुषाम् । कुत एतदवसीयते ? देवनारकेषु तासां बन्धाभावात् । यद्यपि तिर्यग्मनुष्यायुषोर्बन्धका न तथाप्युत्कृष्टयोस्तयोरिति । षण्णां देवनारकाश्च कुर्वन्ति तिर्यक्द्विकौदारिकद्विकोद्योतान्त्यसंहनननानाम्, यतस्तिर्यग्मनुष्या अतिक्लिष्टा नरकप्रायोग्यानां बन्धकाः न तासाम् । ईशानान्ता देवाः त्रयाणां स्थावरैकेन्द्रियातपरूपाणां, यतो नारका अप्यासामबन्धकाः । तीर्थंकरस्याविरतो, यतस्तद् बन्धकेषु स एवाशुद्धः । एवमाहारकद्वि-

५ द्वा स्थि बन्ध स्वामि निरूप णाम् ॥८२

ध्रुवा एव। चत्वारोऽपि जघन्याऽजघन्योत्कृष्टाऽनुत्कृष्टा आयुष्येवमेव साद्यध्रुवा इति। आयुषः पृथग्भणनाच्छेषाः सप्तप्रकृतयो व्यक्ता एव। तुशब्दादुभयश्रेणी ज्ञापयति, क्षपकबादरान्तसमये मोहनीयस्य, षण्णां सूक्ष्मरागान्तसमये जघन्यः समयमेकं स्थितिबन्धः, स चाप्राप्तपूर्वकत्वात् सादिस्तदनन्तरमेवापगमादध्रुवो, यद्यपि वेदनीयस्योपशान्तादिषु जघन्यतरोऽस्ति स न गृह्यते, यतः स्थित्यनुभागबन्धो कषायप्रत्ययावभिहितौ। उत्कृष्टस्तु संज्ञिनि मिथ्यादृष्टौ यदाऽतिक्लिष्टत्वं भवति तदैकसमयं, तदनन्तरमनुत्कृष्टो, भूयोऽप्युत्कृष्टसम्भवादेवमुभावपि साद्यध्रुवौ। उपशमश्रेण्यां किञ्चिदविशुद्धपरिणामत्वादजघन्यो बन्धो सोऽपि जघन्यवत्साद्यध्रुवो भव्यानाम्, अभव्यानामनादिरबन्धकत्वमतिपतनाभावात् स च ध्रुवः। आयुषश्चत्वारोऽपि साद्यध्रुवा बन्धस्या-ध्रुवत्वात् भाविता एवेति गाथार्थः ॥ ५९ ॥

नाणंतरायदंसणचउक्कसंजलणट्ठीति अजहण्णा। चउहा सादी अधुवा सेसा इयराण सव्वाओ ॥ ६० ॥

व्याख्या—सम्पूर्णज्ञानान्तरायदर्शनावरणचतुष्कसञ्ज्वलनानामेषामष्टादशानां अजघन्या स्थितिश्चतुर्द्धा भवति, शेषा जघ-न्योत्कृष्टानुत्कृष्टा साद्यध्रुवा स्थितिः। इतरासां—अष्टादशशेषाणां, सर्वाः—जघन्याऽजघन्योत्कृष्टानुत्कृष्टाः स्थितयः साद्यध्रुवा भवन्तीति गाथार्थः ॥ ६० ॥

एतदेव भावयति—

अट्ठारसण्ह खवगो बायरएगिंदि सेसधुवियाणं। पज्जो कुणइ जहण्णं साई अधुवो अओ एसो ॥ ६१ ॥

व्याख्या—अष्टादशानां पूर्वोक्तानां क्षपक एकं समयं जघन्यस्थितिबन्धं करोति, यतः सोऽतिविशुद्धपरिणामः। शे-

तान्येवासङ्ख्येयगुणानि द्वीन्द्रियाणां तान्येव सङ्ख्येयगुणानि त्रीन्द्रियाणां एवं चतुरिन्द्रियासंज्ञिसंज्ञिनामपि नेतव्यानीति गाथार्थः ॥ ५६ ॥

**सव्वजहण्णावि ठिइ असंखलोगप्पएसतुल्लेहिं । अज्झवसाएहिं भवे विसेस अहिएहिं उवरुवरिं ॥ ५७ ॥**

व्याख्या–सर्वेषां कर्म्मणां सर्वजघन्या स्थितिः साऽप्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणैरध्यवसायैः क्रियते निष्पाद्यते बध्यत इति अध्यवसाया अत्र तीव्रतीव्रतरतीव्रतमगन्दमन्दतरमन्दतमकषायोदयविशेषाः ते चैवं विशेषाधिकैर्विशेषाधिकैः यथोत्तरं समयवृद्ध्या बध्नाति यावदुत्कृष्टस्थित्यन्तसमय इति गाथार्थः ॥ ५७ ॥

**अस्संखलोगखपएसतुल्लया हीणमज्झिमुक्कोसा । ठितिबंधज्झवसाया तीए विसेसा असंखेज्जा ॥ ५८ ॥**

व्याख्या–असङ्ख्येयलोकाकाशप्रदेशतुल्या बन्धाध्यवसाया हीनाया मध्यगाया उत्कृष्टायाश्च स्थितेः "सुपां सुपो भवन्ती" ति न्यायात् षष्ठ्यर्थे प्रथमाविभक्तिः, तस्याश्च स्थितेर्जघन्याया अप्यसङ्ख्येया विशेषाः, एतदेकेन्द्रियस्थितिमभिदधता दर्शितमेव ये स्थितिबन्धाध्यवसायहीना मध्यगा उत्कृष्टाश्च ते प्रत्येकं असङ्ख्येयलोकाकाशप्रदेशतुल्यास्तेषामसङ्ख्येयलोकानां वैचित्र्यान्न दोषः, तस्याश्च स्थितेरसङ्ख्येया विशेषाः प्रतिसमयमुच्यमानाः, सर्वोत्कृष्टापि स्थितिरसङ्ख्येयसमयात्मिका नानन्तसमयात्मिका इति गाथार्थः ॥ ५८ ॥

**सत्तण्हं अजहण्णो चउहा ठितिबन्धमूलपयडीणं । सेसा उ साइ अधुवा चत्तारि वि आउए एवं ॥ ५९ ॥**

व्याख्या–सप्तानामजघन्यश्चतुर्द्धा साद्यादिः स्थितिबन्धो मूलप्रकृतीनां भवति । शेषास्तु जघन्योत्कृष्टाऽनुत्कृष्टाः साध-

५ द्वारे स्थिति स्थानानां

**उक्कोसगट्ठितिबंधा पल्लासंखेज्जभागमेत्तेहिं । हसिएहिं समएहिं हसइ अबाहाए इगसमओ ॥ ५३ ॥**

व्याख्या—उत्कृष्टस्थितिबन्धात् पल्योपमासङ्ख्येयभागमात्रैः समयैर्ह्रसितैः ह्रासमुपगतैः अबाधाया एकः समयो ह्रसति एकसमयेन लघुर्भवति अनेन क्रमेण यावज्जघन्यस्थितिर्जघन्याऽबाधा भवति, भावना स्वमत्या कार्या इति गाथार्थः ॥ ५३ ॥

**जा एगिंदिजहण्णा पल्लासंखंससंजुया सा उ । तेसिं जेट्ठा सेसाण संखभागेहिं जा सण्णी ॥ ५४ ॥**

• व्याख्या—या एकेन्द्रियाणां जघन्या स्थितिः सा पल्योपमासङ्ख्येयभागमात्रसमयैरभ्यधिका तेषामुत्कृष्टा स्थितिर्भवति, शेषाणां द्वित्रिचतुरिन्द्रियाणां यावदसंज्ञी–असंज्ञीपञ्चेन्द्रियपर्यन्तानां पल्योपमसङ्ख्येयभागमात्रसमयैरभ्यधिका उत्कृष्टा स्थितिरिति गाथार्थः ॥५४॥

**पणवीसा पण्णासा सय दससय ताडिया एगिंदिट्ठिई । विगलासण्णीणकम्मा जायति जेट्ठा व इयरा वा ॥५५॥**

व्याख्या—पञ्चविंशत्या पञ्चाशता शतेन दशभिः शतैः ताडिता गुणिता एकेन्द्रियाणां स्थितिः विकलेन्द्रियाणां असंज्ञिनां क्रमात्–क्रमेण जायते ज्येष्ठेतरा वा उत्कृष्टा जघन्या वा इति । पञ्चविंशत्या गुणिता द्वीन्द्रियाणां, पञ्चाशता त्रीन्द्रियाणां, शतेन चतुरिन्द्रियाणां, सहस्रगुणाऽसंज्ञिनां स्थितिर्जघन्योत्कृष्टा वा भवतीति गाथार्थः ॥ ५५ ॥

**ठितिठाणाइं एगिंदियाण थोवाइं होंति सव्वाणं । बेंदीण असंखेज्जाणि संखगुणियाणि जह उप्पिं ॥ ५६ ॥**

व्याख्या–जघन्यस्थित्यन्तसमयादारभ्य समयवृद्ध्या यावदुत्कृष्टस्थित्यन्तसमयं, किमुक्तं भवति,–जघन्योत्कृष्टस्थित्योरन्तराले समयाः, तानि स्थितिस्थानानि उच्यन्ते । तान्येकेन्द्रियाणां सर्वजीवेषु सर्वस्तोकानि भवन्ति पल्योपमासङ्ख्येयभागसमयतुल्यानि

व्याख्या—अबाधासमयेषु दलनिक्षेपो न भवति, अतः मुक्त्वाबाधासमयान् तस्या अनन्तरसमये सर्वप्रभूतं दलं निक्षिपति, तस्मात् परतः प्रतिसमयं विशेषहीनं २ क्रमशः परिपाट्या नेतव्यं—ज्ञातव्यम्, यावदन्तस्थितिरिति गाथार्थः ॥ ५० ॥

अपवादमाह—

**आउस्स पढमसमया परभविया जेण तस्स उ अबाहा । पल्लासंखियभागं गंतुं अद्धद्धयं दलियं ॥ ५१ ॥**

व्याख्या—आयुष्कर्मणः प्रथमसमयादारभ्य एवमेव दलनिक्षेपः कार्यः, परभविका—अन्यभविका येन कारणेन तस्याबाधा, यद्यपि मनुष्यो मनुष्यायुष्कं बध्नाति, तथाप्यन्यप्रकृतीनामिव स्वजातीयप्राक्प्रकृतौ पूर्वदलमध्ये दलनिक्षेपो न भवति, तद्भवसमयेष्वेव निक्षिपति, परभवायुःशेषमबाधोच्यते यतस्तदुदयसमाप्तावितरस्योदयो भवति, उक्तं च—'[1]परभवपढमे समये' इत्यादि, पल्योपमासङ्ख्येयभागमात्रसमयेष्वतीतेषु प्राक्समयादन्तसमये दलार्द्धं भवति, एष क्रमः सर्वकर्मस्थितिषु मन्तव्य इति गाथार्थः ॥ ५१ ॥

**पलिओवमस्स मूलादसंखभागंमि जत्तिया समया । तावइया हाणीओ ठितिबंधुक्कोसए नियमा ॥ ५२ ॥**

व्याख्या—पल्योपमस्य वर्गमूलासङ्ख्येभागे यावत्मात्रसमयसङ्ख्याः तावन्मात्रा हानयः स्थितिबन्धे उत्कृष्टे सर्वकर्मसु नियमात्—निश्चयेन भवन्ति, आयुर्मोहनीयोत्कृष्टस्थित्योर्बृहदन्तरं कथमेतद् भवति, उच्यते—पल्योपमासङ्ख्येयभागस्य वैचित्र्यान्न दोष इति गाथार्थः ॥५२॥

---

१ परभवप्रथमे समये.

सप्तभागाः ४/७ सूक्ष्मत्रिके वामने विकलेन्द्रियजातित्रिके नव पञ्चत्रिंशद् भागाः ९/३५ [सात] स्त्रीवेदमनुष्यद्विकानां त्रयश्चतुर्दश भागाः ३/१४ हास्यरतिस्थिरादिपट्क ( पञ्चक ) शुभविहायोगतीनां सुगन्धशुक्लवर्णमधुररसशुभस्पर्शचतुष्काद्यसंहननसंस्थानानां सप्तभागः १/७ द्वितीययोः षट् पञ्चत्रिंशद्भागाः ६/३५ तृतीययोः पञ्चभागः १/५ चतुर्थयोरष्टौ पञ्चत्रिंशद् भागाः ८/३५ पञ्चमयोः संहननसंस्थानयोः नव पञ्चत्रिंशद्भागाः ९/३५ शेषाणां सागरोपमस्य द्वौ सप्तभागौ। एताः शेषाः त्रसागुरुलघु[1]अशुभवर्णादिचतुष्काणि १२ [2]वैक्रियास्थिरादिषट्के १२ औदारिकतिर्यग्गतिद्विके ४ पञ्चेन्द्रियैकेन्द्रियजाती २ निर्माणातपोद्योताशुभविहायोगतिचरमसंहननसंस्थानतैजसकार्मणशरीरनोचैर्गोत्रारतिशोकभयजुगुप्सानपुंसकस्थावरमिति, पञ्चचत्वारिंशदिति गाथार्थः ॥ ४८ ॥

**वेउविछक्के तं सहसताडियं जं असण्णिो। तेसिं पलियासंखं नूणं ठिइ अबाहूणियनिसेगो ॥ ४९ ॥**

व्याख्या—वैक्रियषट्कं तत्पूर्वोक्तं स्थितिमानं सागरोपमसप्तभागद्वयं सहस्रगुणितं स्थितिर्भवति २०००/७, यतो यस्मात्तासां असंज्ञिनो बन्धका नैकेन्द्रिया विकलेन्द्रियाः वा बन्धकाः, यतो देवनारकप्रायोग्यकर्मबन्धोऽसंज्ञिसंज्ञिनोरेव भवति, "पणवीसा पण्णासा" इत्यादि, भणिष्यत्येव पल्योपमासङ्ख्येयभागहीनं यत्तत्सहस्रताडितं मानं स्थितिर्भवति,सर्वस्थितयोऽबाधाहीनाः सत्यः निषेको मन्तव्यः, अबाधोनाग्रेषु समयेषु दलस्य निक्षेप इति, निषेको नाम तदुत्तरसमयेषु दलनिक्षेप इति गाथार्थः ॥ ४९ ॥

**मोत्तुमबाहा समए बहुगं तयणंतरे रइयदलियं। तत्तो विसेसहीणं कमसो नेयं ठियं जाव ॥ ५० ॥**

---

१ उक्तशेषाः शुभा वर्णरसा अप्यत्रैव द्रष्टव्याः २ गणनामात्रापेक्षया वैक्रियषट्कग्रहणं द्रष्टव्यं न तु स्थित्यपेक्षया

३ अस्यैव प्रकरणस्य गाथा ५६ ॥

कोटेरारतो हीनतरं संज्ञी न बध्नात्यभव्यः, तुशब्दादनायुषां सप्तानां कर्मणामिति ॥ ४५ ॥

उत्तरप्रकृतीनां जघन्यां स्थितिमाह—

**सुरनारयाउयाणं दसवाससहस्स लहु सतित्थाणं । इयरे अंतमुहुत्तं अंतमुहुत्तं अबाहावि ॥ ४६ ॥**

व्याख्या—देवनारकायुषोः दश वर्षसहस्राणि "लघु"रिति जघन्या तीर्थकरनाम्नश्च स्थितिर्भवति, "इतरे"ति मनुष्यतिर्यगायुषोरन्तर्मुहूर्त्तस्थितिः जघन्याबाधाप्यन्तर्मुहूर्त्तमेव चतुर्ष्वपि जघन्येनापि आयुष्कबन्धोत्तरकालमन्तर्मुहूर्त्तं रथातव्यमिति गाथार्थः ॥ ४६ ॥

**पुंवेए अड वासा अट्ठ मुहुत्ता जसुच्चगोत्ताणं । साए बारस हारगविग्घावरणाण किंचूणं ॥ ४७ ॥**

व्याख्या—पुरुषवेदेऽष्टौ वर्षाणि जघन्या स्थितिरष्टौ मुहूर्त्तानि यशःकीर्त्त्युच्चैर्गोत्रयोः, साते–सद्वेदनीये द्वादश मुहूर्त्तानि जघन्या स्थितिराहारकशरीरं तदङ्गोपाङ्गं विघ्नपञ्चप्रकारमन्तरायं आवरणं पञ्चप्रकारं ज्ञानावरणं तत्सहचरितं दर्शनावरणचतुष्कमेतासां षोडशानां प्रकृतीनां किञ्चिदूनं मुहूर्त्तं जघन्या स्थितिरिति गाथार्थः ॥ ४७ ॥

**दो मास एग अद्धं अंतमुहुत्तं च कोहपुव्वाणं । सेसाणुक्कोसाओ मिच्छत्तट्ठिइए जं लद्धं ॥ ४८ ॥**

व्याख्या—द्वौ मासावेको मासोऽर्द्धं मासोऽन्तर्मुहूर्त्तं च क्रोधमानमायालोभानां यथासङ्ख्येन सञ्ज्वलनानामनन्तरोदितप्रकृत्यधिकारादवगन्तव्यम्, शेषप्रकृतीनामुत्कृष्टस्थितिबन्धान् मिथ्यात्वोत्कृष्टस्थित्या यल्लब्धं सा जघन्या स्थितिरिति । एवं च मिथ्यात्वस्य सागरोपमं भवति, असाते निद्रापञ्चके च त्रयसप्तभागाः $\frac{3}{7}$ द्वादशानां च कषायाणां चत्वारः

**अंतोकोडाकोडी तित्थयराहार तीएँ संखाओ । तेत्तीस पलियसंखं निकाइयाणं तु उक्कोसा ॥ ४२ ॥**

व्याख्या—अन्तःकोटाकोटी तीर्थकराहारकशरीराङ्गोपाङ्गानां तस्या अन्तःकोटाकोटेरसङ्ख्येयभागादारभ्य तीर्थकरस्य त्रयस्त्रिंशत्सागरोपमाणि,आहारकद्वयस्य पल्योपमासङ्ख्येयभागमात्रं निकाचितानामवश्यं वेद्यानामुत्कृष्टा स्थितिरिति गाथार्थः॥४२॥

आह परः—

**अंतोकोडाकोडी ठिइए वि कहं न होइ तित्थयरे । संते तत्तिय कालं तिरिओ अह होइ उ विरोहो ॥ ४३ ॥**

व्याख्या—अन्तःकोटाकोटी यदि सत्ता तीर्थकरस्य तत तिर्यग्भवं विना कथं भ्रान्तः ! अथ तिर्यग्गतावपि गतस्ततः आगमविरोध इति ॥ ४३ ॥

उच्यते—

**जमिह निकाइयतित्थं तिरियभवे तं निसेहियं संतं । इयरम्मि नत्थि दोसो उव्वट्टोवट्टणासज्झे ॥ ४४ ॥**

व्याख्या—यदवश्यं वेद्यं तत्तीर्थकरं निषिद्धं न सद्भवति, इतरस्मिन्न दोषः, यतस्तत्प्रभूतस्थितिकमपि अपवर्त्तना करणेन लघुस्थितिकं क्रियते, उद्वर्त्तनया वा तदन्यप्रकृतित्वेनावस्थाप्यते, इति ॥ ४४ ॥

उत्कृष्टस्थितिसमानतानियमार्थमाह—

**पुव्वकोडीपरओ इगिविगलो वा न बंधए आउं । अंतो कोडाकोडीए आरओ अभवसण्णी उ ॥ ४५ ॥**

व्याख्या—वर्षाणां पूर्वकोटेः परतः पूर्वकोट्यभ्यधिकं नायुःकर्म एकेन्द्रियो विकलेन्द्रियो वा बध्नाति । अन्तःकोटा-

न सर्वेऽपि देवनारका आयुषो बन्धं कुर्वन्ति, तयोश्चायुस्त्रिभागो बहुः प्रभूतं भवति, पल्योपमैकादशसागरोपमाणीति काकुरेवं पूर्वकोटीत्रिभागोऽबाधापि न घटते ॥ ३९ ॥

अत्राह—

**पुव्वकोडी जेसिं आऊ अहिकिच्च ते इमं भणियं । भणियंपि नियअबाहं आउबंधंति अमुयंता ॥ ४० ॥**

व्याख्या—पूर्वकोट्यायुषो ये चतुर्गतिगमनयोग्या मनुष्यतिर्यञ्चस्तानधिकृत्यैवमुक्तं ते च वेद्यायुषस्त्रिभागे शेषे चतसृष्वपि गतिष्वायुषो बन्धं कुर्वन्ति, अतः पूर्वकोटित्रिभागोऽबाधोत्कृष्टा भवति, न दोषः तमपि पूर्वकोटित्रिभागं यद् भणितं तद् बध्यमानायुषो निजाबाधां न मुञ्चति, नैकमपि समयं कर्मदलरहितं विदधातीति भावः, यदनुभूयमानस्याशेषं साऽबाधा यतो नैककालमायुर्द्वयस्यानुभवनं भणितं च–'परभविया जेण तस्स उ अबाधा'[1] इति । अन्यच्च यावन्मात्रमनुभूयते, तावन्मात्रमेवोत्कृष्टेनापि बध्यते आयुरिति गाथार्थः ॥ ४० ॥

एतदेव भावयति—

**निरुवक्कमाण छमासा इगिविगलाणं भवट्ठिई तंसो । पलियासंखेज्जंसं जुगधम्मीणं वयंतण्णे ॥४१॥**

व्याख्या—निरुपक्रमायुषां देवनारकासङ्ख्येयवर्षायुषां षड्मासा अबाधा, एकेन्द्रियाणां विकलेन्द्रियाणां स्वभवे यदायुस्तस्य त्र्यंशोऽबाधा, केचन आचार्या युगलधर्मिणां पल्योपमासङ्ख्येयभागमबाधां भणन्तीति गाथार्थः ॥ ४१ ॥

---

१ परभविका येन तस्य त्वबाधा ।

विंशतिसागरोपमकोटाकोटयः ताश्चेगा भयजुगुप्से अरतिशोके नपुंसकं नीचैर्गोत्रं च नरकतिर्यगौदारिकवैक्रियद्विकान्यगुरुलघुत्रसादिचतुष्कं अस्थिरादिषट्कस्थावरातपोद्योतोपघातपराघातोच्छ्वासाशुभविहायोगतिनिर्माणैकेन्द्रियजातिपञ्चेन्द्रियजातितैजसकार्मणशरीराणीति शेषाः एतावन्मात्राणि वर्षशतान्यबाधा किमुक्तं भवति,—यस्याः यावन्त्यः कोटाकोटयः तावन्मात्राणि वर्षशतान्यबाधा तावन्मात्रेषु समयेषु न वेद्यदलनिक्षेपं करोतीति गाथार्थः ॥ ३६ ॥

**सुरनारयाउयाणं अयरा तेत्तीस तिण्णि पलियाणि । इयराणं चउसुवि पुव्वकोडि तंसो अबाहा उ ॥ ३७॥**

व्याख्या—सुरनारकायुषोरतराणि सागरोपमाणि त्रयस्त्रिंशदितरयोर्मनुष्यतिर्यगायुषोस्त्रीणि पल्योपमानि चतुर्ष्वपि तेषु पूर्वकोटित्र्यंशोऽबाधा भवति, तुशब्दोऽधिकार्थसूचको वेद्यमानायुषः त्रिभागे शेषेऽन्यस्यायुषो बन्धो भवति, तत्रारम्भवे त्रिभागस्य त्रिभागे शेषे एवं भूयो भूयो यावत् बन्ध इति ॥ ३७ ॥

एवमुक्ते त्वाह परः—

**वोलीणेसुं दोसुं भाएसुं आउयस्स जो बंधो । भणिओ असंभवाओ ण घडइ सो गतिचउक्केवि ॥ ३८ ॥**

व्याख्या—आयुषो द्वयोस्त्रिभागयोरतीतयोर्यो बन्धो भणितो न घटते स गतिचतुष्केऽप्यसम्भवाद्यत इति ॥ ३८ ॥

एतदेव भावयति परः—

**पलियासंखेज्जंसे बंधंति न साहिए नरतिरिच्छा । छम्मासे पुण इयरा तदाउ तंसो बहुं होति ॥ ३९ ॥**

व्याख्या—पल्योपमासङ्ख्येयभागेऽभ्यधिके त्रिपल्योपमायुषो नरतिर्यञ्चो नायुषो बन्धं कुर्वन्ति, षण्मासाभ्यधिकेऽवशेषे

कटुनीलयोः सार्द्धसप्तदश, तिक्तकृष्णदुर्गन्धगुरुकर्कशरूक्षशीतानां विंशतिकोटाकोटयः, गन्धस्पर्शानां द्वैविध्याद्दशविंशती एव भवतः। तुशब्दः पूर्वापरत्र, सूत्रेषु स्थितिशब्दस्य व्यापक इति गाथार्थः ॥ ३३ ॥

**तीसं कोडाकोडी असायआवरणअंतरायाणं। मिच्छे सयरि इत्थीमणुदुगसायाण पण्णरस ॥ ३४ ॥**

व्याख्या—त्रिंशत्कोटाकोटयः असातस्य, "आवरण"त्ति ज्ञानदर्शनावरणोत्तरप्रकृतीनां अन्तरायप्रकृतीनां च, सप्तति-र्मिथ्यात्वस्य, स्त्रीवेदमनुष्यद्विकसातानां पञ्चदश कोटाकोटयः उत्कृष्टा स्थितिरिति गाथार्थः ॥ ३४ ॥

**संघयणे संठाणे पढमे दस उवरिमेसु दुगवुड्ढी। सुहुमतिवामणविगले ट्ठारस चत्ता कसायाणं ॥ ३५ ॥**

व्याख्या—संहनने संस्थाने च प्रथमे दश,उपरितनेषु यथाक्रमं द्विकवृद्धिः द्रष्टव्या, द्वितीययोर्द्वादश, तृतीययोश्चतुर्दश, चतुर्थयोः षोडश, पञ्चमयोरष्टादश, षष्ठयोर्विंशतिः, 'सूक्ष्मत्रिकमिति' सूक्ष्मसाधारणापर्याप्तकानि, वामनसंस्थानं विकले-द्वित्रिचतु-रिन्द्रियजातय एतासां सप्तानां प्रकृतीनां अष्टादश कोटाकोटयः स्थितिरिति। वामनस्य केचिच्चतुर्थस्थानं वदन्ति, तन्न भवतीति प्रदर्शयन् भूयोऽप्यष्टादशकं वदन्तीति। कषायाणां षोडशानामपि चत्वारिंशत्कोटाकोटयो भवन्ति, उत्तरत्र नोकषायग्रहणादिह षोडशानामेव ग्रहणमिति गाथार्थः ॥ ३५ ॥

**पुंहासरईउच्चे सुभखगइथिराइछक्कदेवदुगे। दस सेसाणं वीसा एवइया बाह वाससया ॥ ३६ ॥**

व्याख्या—पुरुषवेदहास्यरत्युच्चैर्गोत्रेषु शुभविहायोगतिस्थिरादिषट्कमिति, स्थिरशुभसुस्वरसुभगादेययशांसि देवद्विक-मित्येतासां त्रयोदशानां प्रकृतीनां दश कोटाकोटयः स्थितिरेवमेतासां पञ्चसप्ततीनां स्थितिरुक्ता, सप्तानां वक्ष्ये, शेषाणां सप्तत्रिंशतां

प्राग्वद् सूक्ष्मत्रिकं सूक्ष्मसाधारणापर्याप्तप्रकृतयः विकलत्रिकद्वित्रिचतुरिन्द्रियजातयः एताः षोडश प्रकृतयोऽशेषसुरा न बध्नन्ति, आतपस्थावरैकेन्द्रियजातिसहिताः एता एवैकोनविंशतिः सर्वनारका न बध्नन्तीति गाथार्थः ॥ ३० ॥

प्रकृतिबन्धविधानं समाप्तमिति । मूलप्रकृतीनामुत्कृष्टस्थितिमानमाह—

**मोहसयरि कोडा कोडीओ वीसनामगोयाणं । तीसियराण चउण्हं तेत्तीसयराइं आउस्स ॥ ३१ ॥**

व्याख्या—मोहनीये सप्ततिकोटाकोटयः, विंशतिर्नामगोत्रयोः, त्रिंशदितराणां चतुर्णां, ज्ञानान्तरायदर्शनावरणवेदनीयानां स्थितिरिति वाक्यशेषः, त्रयस्त्रिंशदतराणि—सागरोपमाणि आयुषः उत्कृष्टास्थितिरिति गाथार्थः ॥ ३१ ॥

जघन्यस्थितिमानमाह—

**मोत्तुमकसाइ तणुया ठितिवेयणियस्य बारस मुहुत्ता । अट्ठ नामगोयाण सेसयाणं मुहुत्तंतं ॥ ३२ ॥**

व्याख्या—अकषायिणां या तन्वी—जघन्या स्थितिस्तां मुक्त्वा वेदनीयस्य द्वादश मुहूर्त्तानि कषायिणां जघन्या भवति, नामगोत्रयोरष्टावष्टौ मुहूर्त्तानि शेषाणां ज्ञानान्तरायदर्शनावरणमोहायुषामन्तर्मुहूर्त्तस्थितिरिति गाथार्थः ॥ ३२ ॥

उत्तरप्रकृतीनां प्रत्येकमुत्कृष्टस्थितिमानमाह—

**सुक्किलसुरभीमहुराण—दस उ तह सुभचउण्हफासाणं । अड्ढाइज्ज पवुड्ढी अंबिलहालिद्दपुव्वाणं ॥ ३३ ॥**

व्याख्या—शुक्लवर्णसुरभिगन्धमधुररसानां दश कोटाकोटयः सागरोपमाणां तथा शुभानां चतुर्णां स्पर्शानां—मृदुस्निग्धलघूष्माणां दशकोटाकोटयः, पञ्चार्धप्रवृद्धा अम्लहारिद्रपूर्वाणां अम्लरसहारिद्रवर्णयोः सार्द्धद्वादश, कषायरक्तयोः पञ्चदश,

व्याख्या—सादिरध्रुवश्च सर्वासां प्रकृतीनां बन्धो भवति, स्वकीयबन्धोपरमे सर्वासामध्रुवो भवति, भूयोऽपि बन्धं कुर्वतः सादिरिति, ध्रुवबन्धिनीनां सप्तचत्वारिंशत्प्रकृतीनां अनादिर्ध्रुवश्च भवतीत्येतद् भावयति, निजात्–आत्मीयाद् बन्धाच्च्युतानां सादिर्भवति । यस्याः प्रकृतेर्यत्राबन्धस्तद्दर्शयति, मिथ्यात्वस्त्यानर्द्धित्रिकानन्तानुबन्धिनां मिथ्यात्वसम्यग्मिथ्यादृष्ट्यादिषु, द्वितीयतृतीयकषायाणां देशविरतप्रमत्तयोर्निद्राप्रचलयोर्नामध्रुवाणां भयजुगुप्सयोश्च बादरादिषु सञ्ज्वलनानां सूक्ष्मादिषु ज्ञानान्तरायदर्शनचतुष्काणामुपशान्ते बन्धाभावो ध्रुव इत्यर्थः, इत्येतेभ्यः स्थानेभ्यश्च्युतानां तासां सादिर्भवति, तत्स्थानामप्राप्तानामनादिर्बन्धो यश्चानादिः सोऽभव्येषु ध्रुव इति भव्याभव्यान् सर्वत्राधिकृत्य भावनीयमिति गाथार्थः ॥ २८ ॥

तिर्यग्गतौ स्थितस्याबन्धयोग्याः प्रकृतीराह—

**नरयतिगं देवतिगं इगिविगलाणं विउव्वि नो बंधे । मणुयतिगुच्चं च गइंतसंमि तिरितित्थ आहारं ॥२९॥**

व्याख्या—नरकत्रिकं नरकगत्यानुपूर्व्यायूंषि, देवत्रिक देवगत्यानुपूर्व्यायूंषि वैक्रियशरीरमङ्गोपाङ्गं च एता अष्टावेकेन्द्रेयविकलेन्द्रियाणां बन्धं प्रत्ययोग्या भवन्ति, मनुष्यत्रिकं मनुजगत्यानुपूर्व्यायुंषि, उच्चैर्गोत्रं चैताः द्वादश गतित्रसानां–तेजोवायुकायिकानां न बन्धयोग्याः तिरश्चां सर्वेषामपि तीर्थकराहारकशरीराङ्गोपाङ्गानि न बन्धयोग्यानीति गाथार्थः ॥ २९ ॥

सर्वदेवानामबन्धयोग्या आह–

**वेउव्वाहारदुगं नारयसुरसुहुमविगलजाइतिगं । बंधहि न सुरा सेसायवथावरेगेंदि नेरइया ॥ ३० ॥**

व्याख्या—वैक्रियाहारकद्विकं–वैक्रियाहारकशरीरे तदङ्गोपाङ्गे च नारकसुरसूक्ष्मविकलजातित्रिकं नारकसुरयोः ( त्रिकं )

साद्यध्रुवावेति गाथाद्वयार्थः ॥ २४ ॥ २५ ॥

मूलोत्तरप्रकृतीनां जघन्यादीनाह–

**मूलुत्तरपगईणं जहण्णओ पगइबंध उवसंते । तब्भट्ठा अजहण्णो उक्कोसो सण्णिमिच्छम्मि ॥ २६ ॥**

व्याख्या—मूलप्रकृतीनां उत्तरप्रकृतीनां च जघन्यः प्रकृतिबन्धो भवत्युपशान्ते तस्माद् भ्रष्टात्–तस्मात् परिच्युतादजघन्यो भवति, उत्कृष्टस्तु संज्ञिनि मिथ्यादृष्टौ तस्मिन्नेवोत्कृष्टस्याबन्धेऽनुत्कृष्टो भवति, यत उपशान्ते मूलप्रकृतेरुत्तरप्रकृतेश्चैकस्याः बन्धः, संज्ञिनि मिथ्यादृष्टौ मूलप्रकृतीनामष्टानामुत्तरप्रकृतीनां चतुःसप्ततेः ताभ्यां भ्रष्टयोरजघन्यानुत्कृष्टौ भवत इति गाथार्थः ॥२६॥

साद्यादिप्ररूपणायाह–

**आउस्स साइ अधुवो बंधो तइयस्स साइअवसेसो । सेसाण साइयाई भव्वाभव्वेसु अधुवधुवो ॥ २७ ॥**

व्याख्या—मूलप्रकृतेरायुषः सादिरध्रुवो बन्धः, तृतीयस्य वेदनीयस्य साद्यवशेषो ध्रुवाध्रुवानादिरित्यर्थः, शेषाणां ज्ञानान्तरायदर्शनावरणनामगोत्रमोहनीयानां साद्यध्रुवानादिध्रुवा इति, जघन्यादित्वमाश्रित्य जघन्याजघन्योत्कृष्टानुत्कृष्टाः मूलप्रकृतीनां उत्तरप्रकृतीनां च बन्धाः साद्यध्रुवा भवन्ति, भव्येष्वध्रुवो यत्राध्रुवस्तत्र सादिरपि भवति, अभव्येषु ध्रुवो यत्र ध्रुवस्तत्रानादिना नियमेन भाव्यम्, एवमन्यत्रापि योज्यमिति गाथार्थः ॥ २७ ॥

उत्तरप्रकृतीनां साद्यादिबन्धसम्भवमाह—

**साई अधुवो सव्वाण होइ धुवबंधियाणणाइ धुवो । नियअब्बंधचुयाणं साई अणाई अपत्ताणं ॥ २८ ॥**

व्याख्या—यत्र सादिर्बन्धस्तत्र नियमान्निश्चयेनाध्रुवेनापि भाव्यम्, सादिरध्रुवो भवतीति भावः. अनादिबन्धस्तु जीव-मधिकृत्याध्रुवो ध्रुवो वा, अभव्यानां योऽनादिः स ध्रुवो यस्तु भव्यानां सोऽध्रुव इति भावः, नियमात्–निश्चयेन, यो ध्रुवः सोऽनादिर ध्रुवस्तु अध्रुव एव भवति भूयः सादिर्वा भवतीति गाथार्थः ॥ २३ ॥

अजघन्यानुत्कृष्टाभ्यामजघन्योऽनुत्कृष्टौ (जघन्याजघन्योत्कृष्टानुत्कृष्टेष्वजघन्योऽनुत्कृष्टः) चैकः केषांचित्प्रतिभाति, तद्व्यक्तीकरणायाह—

उक्कोसा पडिवडिए साइअणुक्कोसओ जहण्णाओ । अब्बंधा वा इयरो तदभावे दोवि अविसेसा ॥ २४ ॥
तेणाई ओहेणं उक्कोस जहण्णगो उ पुण साई । अधुवाण साइ सव्वे धुवाण ऽणाइ वि संभविणो ॥ २५ ॥

व्याख्या—' उत्कृष्टात्प्रतिपतिते साद्यनुत्कृष्टः जघन्यादबन्धाद्वा इतरो ऽजघन्य इति, तदभावे द्वावप्यविशेषौ इति पदानि । तावनादी ओघेन उत्कृष्टजघन्यकौ तु पुनः सादी, अध्रुवाणां सादिः सर्वे ध्रुवानां अनादिरपि सम्भविनाविति पदानि । पदार्थः–उत्कृष्टबन्धं यदा जीवः कृत्वा प्रतिपतति तस्मिन्नेव काले सादित्वेन सहानुत्कृष्टबन्धः स्पष्टतां याति, जघन्यबन्धं कृत्वा उपशमगुणादबन्धं वा, तदा तस्मात्प्रतिपतति तदा सादित्वेन सहेतरोऽजघन्यः स्पष्टतां याति, तेषां कारणानामभावेऽथवा सादित्वयोरभावे द्वावप्यविशिष्टौ [ भवतः, सत्तायां व्यवस्थितावप्यव्यक्तौ तावेवं व्यवस्थितौ ] अनादी भवतः, ओघेन–सामान्येन, प्रकृतिस्थित्यादिबन्धविशेषमनपेक्ष्य स्वभावत इति । उत्कृष्टजघन्यौ तु सादी भवतः । अध्रुवबन्धिनीनां सर्वासां प्रकृतीनां सर्वे जघन्याजघन्योत्कृष्टाऽनुत्कृष्टाः साद्यध्रुवा भवन्ति, ध्रुवबन्धिनीनां तु साद्यध्रुवावनादिध्रुवावपि सम्भविनावजघन्यानुत्कृष्टौ पुनः

नानि तान्येव सङ्क्षेपतो दर्श्यन्ते, सयोगिनः सच्चतुष्कं अघातिसंयोगजं ८०-८१-८४-८५ ज्ञानान्तरायदशकदर्शनचतुष्क-षट्काभ्यां सह जातं ९४-९६-९५-९७-९८-१००-९९-१०१ एतानि क्षीणकषायसत्स्थानानि, एवं लोभेन, सूक्ष्मसम्पराये, ९७-९८-१०१-१०२ मायया मानेन क्रोधेन पुरुषवेदेन षट्केन स्त्रीवेदेन नपुंसकेन षोडशकेन कषायाष्टकेन सह बादरकषाये नव चतुष्कानि भवन्ति, अतो मोहनीयसत्कर्मभिरष्टाविंशत्याद्यैर्निद्रात्रिकनामत्रयोदशकयुक्तानि क्षीणकषाय-सत्स्थानानि षट्चतुष्कप्रमाणानि भवन्ति अविरतादीनां, यत् पञ्चचत्वारिंशदधिकं शतं तदायुर्बन्धे षट्चत्वारिंशदधिकं शतं भवति, वायुतेजस्कायिकेष्वघातिकर्मप्रकृतीनां द्व्यशीतिघातिकर्मणां पञ्चचत्वारिंशदेवं सप्तविंशत्यधिकं शतं, तदेव तिर्यगायुर्बन्धेऽष्टा-विंशत्यधिकं शतं भवति, वनस्पतिकायिकानां तु स्थितिक्षयात् क्षीणेषु देवनरकगतियोग्येषु अघातिकर्मसु पञ्चाशीतिः प्रकृतयो भवन्ति,घातिकर्मणां पञ्चचत्वारिंशत्, एवं त्रिंशदुत्तरं शतं तदेवायुर्बन्धे एकत्रिंशदधिकं शतं भवति एवं प्रकारान्तरसम्भविनः पुनरु-क्तस्थानपरित्यागादष्टचत्वारिंशत्सत्स्थानानि, अत्राव्यक्तानि न सन्ति, अवस्थितानि चतुश्चत्वारिंशत्, एकादश द्वादश चतुर्नव-तिपञ्चनवतिस्थानानां सामयिकत्वात्, सप्तचत्वारिंशदल्पतराणि । सप्तदश भूताकाराणि, यतः सप्तविंशत्यधिकाच्छतादारभ्य भवन्ति, तत्रापि न त्रयस्त्रिंशदुत्तरं शतं यतस्तच्चा? तान्यधस्तनसत्स्थानानि च क्षपकेषु भवन्ति, तत्र च भूताकाराणायसम्भवो भाव्य इति गाथाद्वयार्थः ॥ २१ ॥

साद्यनादिबन्धानो सहचरितत्वमाह—

**साई अधुवो नियमा जीवविसेसा अणाइ अधुव धुवो । नियमा धुवो आणाइ अधुवो अधुवं व साई वा ॥२३॥**

स्थानानि अष्टसप्तषट्चतुस्त्रिद्व्येकाधिका विंशतिः त्रिद्व्येकाधिका दश पञ्चचतुस्त्रिद्व्येक इति प्रकृत्यवस्थानाद् पञ्चदशावस्थितानि, चतुर्दशाल्पतराणि, एक एव भूताकारः, यतः–चतुर्विंशतिषड्विंशत्योरष्टाविंशतिर्भवति, नान्यथेति, नास्त्यत्राऽव्यक्त। नाम्नो द्वादश सत्कर्मस्थानानि, त्रिद्विनवतिर्नवाष्टाशीतिरशीतिः नवषड्पञ्चसप्ततिः षडशीतिरष्टसप्ततिर्नवाष्टौ चेति, अत्र दशावस्थितानि नवाष्टसत्कर्मणः सामयिकत्वात् नास्त्यव्यक्तं, दशाल्पतरस्थानानि, यतः प्रथमचतुष्काद् द्वितीयचतुष्कगमनेन चत्वारि, द्वितीयचतुष्कात्तु नवाष्टगमने द्वे, चतुर्थस्थानात् प्रथमाध्रुवगमनं तस्मादपि तृतीयगमनमिति द्वे, आहारकचतुष्कोद्वलनेन द्वे, एवं दश, षड्भूताकारा यतः चरमाध्रुवात् क्रमेण प्रथमचतुष्के गमनमष्टाशीत्यादिभ्योद्विनतित्रिनवत्योश्च गमनं भवति, ॥ २० ॥

**एक्कार बारसासीइगि चउपंचाहिया य चउणउई। तत्तो चोद्दसहियसय पणवीसाओ य छायालं ॥ २१ ॥**

**बत्तीसं नत्थि सयं एवं अडयाल संतठाणाणि। जोगि अघाइचउक्के भण खिविउं घाइ संताणि ॥ २२ ॥**

गाथाद्वयव्याख्या—एकादश द्वादशायोगिस्थानेऽशीत्येकाशीतिचतुःपञ्चाशीतिरेतानि चत्वारि सयोगिनि, अघातिचतुष्कस्य षट् सत्स्थाननि, अतश्चतुर्नवतिस्तस्याः रूपवृध्या यावचतुर्दशोत्तरं शतं पञ्चविंशत्यधिकशताच्चावत्षट्चत्वारिंशदाधकं शतं, किन्तु द्वात्रिंशदधिकं शतं नास्ति, एवमनष्टचत्वारिंशत् सत्स्थानानि 'भण' कथय सत्कर्मण इति, ११, १२, ८०, ८१, ८४, ८५, ९४, ९५, ९६, ९७, ९८, ९९, १००, १०१, १०२, १०३, १०४, १०५, १०६, १०७, १०८, १०९, ११०, १११, ११२, ११३, ११४, १२५, १२६, १२७, १२८, १२९, १३०, १३१, १३३, १३४, १३५, १३६, १३७, १३८, १३९, १४०, १४१, १४२, १४३, १४४, १४५, १४६। क्षिप्त्वा घातिकर्मणां सत्स्था-

भूयप्पयरा इगि चउवीसं जण्णेइ केवली छउमं । अजओ न केवलित्तं तित्थयरियरा व अण्णोण्णं ॥२०॥

व्याख्या—प्रभूताकारा एकविंशतिरल्पतराश्चतुर्विंशतिर्यतः केवली छद्मस्थोदयेषु न याति, न वाऽतीर्थकरस्तीर्थङ्करोदयेऽप्यतः पञ्च प्रभूततरा न भवन्ति । 'अयतः' अविरतो न च केवलित्वं याति, चतुश्चत्वारिंशदुदयात् केवल्युदयेष्विति भावः, तीर्थङ्करोदयोऽप्यतीर्थकरोदयेषु, अतश्चतुर्विंशतिरल्पतरा इति, एतदेव भावयति,—नाम्नः प्रकृत्यष्टकं सातायुरुच्चैः सहैकादशातीर्थकरस्य भवन्ति, तीर्थङ्करस्य तीर्थङ्करेण सह द्वादश तावुभौ नामध्रुवोदययुक्तौ त्रयोविंशतिचतुर्विंशती भवतः, नात्रैकोऽपि प्रभूताकारः यतो नायोगी सयोगित्वं याति, तौ प्रत्येकोपघातौदारिकद्विकसंस्थानान्यतरप्रथमसहननैर्युक्तौ एकोनत्रिंशत्त्रिंशदुदयौ भवतः, तीर्थकरातीर्थकरयोरेकत्रिंशदुदयौ नाम्नः सातायुरुच्चैस्सह चतुस्त्रिंशत्त्रयस्त्रिंशदुदयौ भवतः, ताभ्यां स्वरनिरोधे त्रयस्त्रिंशद् द्वात्रिंशद् उदयौ, एताभ्यामुच्छ्वासनिरोधे द्वात्रिंशदेकत्रिंशदुदयौ, ११–१२–२३–२४–२९–३०–३१–३२–३३–३४ एते दश केवलिनामेव, एतेषु षट् प्रभूततराः, अल्पतरा नव नातः प्रतिपतनं, गुणं प्रति चतुश्चत्वारिंशदुदयः क्षायिकाविरतस्य भवान्तरे घातिकर्मणां विंशतिरघातिकर्म्मणां चतुर्विंशतिस्तदुत्तरोदयाः तस्यैव सम्यक्त्वभयजुगुप्सा[शेषोदय]निद्राप्रक्षेपाद् भवन्ति, मिथ्यादृष्टेः षट्चत्वारिंशदाद्या, दशोदये एकोनषष्टिः, मिथ्यादृष्टेः पञ्चचत्वारिंशन्न भवन्ति, तस्य भवान्तरे सप्तकोदयाभावः, भूताकारा अत्राविरतोदयेषु भवन्ति अल्पतराश्च, निद्राभयजुगुप्सानामध्रुवोदयित्वाद् भावयेत् । सत्कर्मणोऽपि ज्ञानान्तराययोरवस्थितसत्कर्म तैव । वेदनीयस्यैकमल्पतरं, अवस्थितमप्येकमेकविधस्य सामयिकस्थितित्वात्, गोत्रायुषोः द्वे अवस्थिते, एकं भूताकारं, अल्पतरं च, नास्त्यव्यक्तं । दर्शनावरणे द्विविधमवस्थितं, चतुःसत्कर्मणः सामयिकत्वात्, द्विविधमल्पतरं, भूताकारमव्यक्तसत्कर्म च नास्ति । मोहनीयस्य पञ्चदश सत्कर्म

अष्ट नव विंशतिरेकविंशतिः चतुर्विंशतिरतः एकवृद्ध्या यावदेकत्रिंशत्, तावन्नेतव्यानि, ८–९–२०–२१–२४–२५–२६–२७–२८–२९–३०–३१। अवस्थितोदयाः सर्वत्र स्थानतुल्याः, अव्यक्तोदया मोहनीयस्यैव नान्येषां तेऽपि पञ्च भवन्ति, एकपट् सप्ताष्टौ नव इति। तत्रैकः लोभोदय उपशान्तात्पततः, शेपास्तस्यैवामरगतौ त्रिकपायपुंयुग्मभयजुगुप्सासम्यक्त्वोदयेष्विति। दर्शनावरणे भूताकारोऽल्पतरश्चैकः, तौ मोहनीयेऽष्टावष्टौ। नाम्नि अष्टौ भूताकारोदयाः, यतोऽष्टौ भूत्वा न नवोदयो न च तस्मादपि विंशत्यादिः, तस्मादपि नैकविंशतिः, तदादिका अष्टौ भवन्ति संसारिणां समुद्घाते (च। अल्पतरास्तु नव भवन्ति, नवोदयान्नाष्टकोदयः, नाप्येकविंशत्युदयाद्विंशत्युदयः,) पञ्चविंशतिचतुर्विंशत्युदयौ नापचये भवतः, ततस्तौ संसारिष्वपचये नैव भवतः, तीर्थङ्करायोगिप्रतिपत्तौ स्वरादुच्छ्वासात् परापातविहायोगतिभ्यां प्रत्येकोपघातौदारिकद्विकसंस्थानसंहननेभ्यो ध्रुवोदयिभ्यो निरोधाद् भावयेदिति।

सामान्योत्तरप्रकृतीनामुदयस्थानान्याह—

**एक्कार बार ति चउक्क वीसा गुणतीसओ तु चउतीसा। चउआला गुणसट्ठी उदयठाणाइं छवीसं॥ १९॥**

व्याख्या–एकादश द्वादश त्रयोविंशतिः चतुर्विंशतिः एकोनत्रिंशतो यावच्चतुस्त्रिंशत् चतुश्चत्वारिंशतो यावदेकोनषष्टिरेवमुदयस्थानानि पड्विंशतिः, ११–१२–२३–२४–२९–३०–३१–३२–३३–३४–४४–४५–४६–४७–४८–४९–५०–५१–५२–५३–५४–५५–५६–५७–५८–५९–अत्राप्यव्यक्तोदयो नास्ति, यतो (नो)ऽनुदयः, अवस्थितोदयाः पड्विंशतिः, अन्तरालगतौ समुद्घाते च समयद्वयोपलब्धेः, भूताकारा एकविंशतिरल्पतराश्चतुर्विंशतिः॥१९॥ यत आह–

१ समुद्घाततरास्तुप्रवाश्च भवति' इति सर्वादर्शपुस्तकेषु.

अष्टाविंशतिरुपशान्तः प्रतिपतनोऽल्पतराः अप्यष्टाविंशतिः तदेव स्थानमारोहतः, एतदेव भाव्यते—उपशान्तः सातवेदनीयस्य बन्धकस्तस्माद् भ्रष्टः सूक्ष्मकषायित्वं गतः षण्णां मौलानां सप्तदशानामुत्तरप्रकृतीनां बन्धो भवति,सातोच्चयशःकीर्त्तिदर्शनावरणचतुष्कज्ञानान्तरायदशकमिति, भूयो बादरकषायित्वे लोभमायामानक्रोधपुंवेदबन्धकादष्टादशादिद्वाविंशतिपर्यवसानान् पञ्च बन्धान् करोति, अपूर्वकरणे भयजुगुप्सायुगलबन्धात् षड्विंशतिर्भवति, नाम्नोऽष्टाविंशतिबन्धके तस्मिन्नेव त्रिपञ्चाशद् भवति, एकोनत्रिंशद्बन्धके चतुष्पञ्चाशत्,त्रिंशद्बन्धके पञ्चपञ्चाशदेकत्रिंशद्बन्धके षट्पञ्चाशत्, निद्राद्विकत्रिंशद्बन्धके सप्तपञ्चाशत्,निद्राद्विकैकत्रिंशद् बन्धके अष्टपञ्चाशदपूर्वकरणे, तथाभूतस्याप्रमत्तस्य देवायुर्बन्धे एकोनषष्टिर्भवति, नाम्नोऽष्टाविंशतिबन्धकस्य चतुःकषायवृद्धौ देशविरतस्य षष्टिर्भवति, नाम्न एकोनत्रिंशद्बन्धकस्यैकषष्टिरिति नाम्नोऽष्टाविंशतिबन्धकस्यायुरबन्धे चतुःकषायबन्धे त्रिषष्टिरविरतस्य द्वापष्टिर्न सम्भवति, एकोनत्रिंशद्बन्धके चतुःषष्टिः, त्रिंशद्बन्धके पञ्चषष्टिस्तस्मिन्नेवायुर्बन्धके षट्षष्टिर्भवति, मिथ्यात्वस्त्यानर्द्धित्रिकानन्तानुबन्धिचतुष्कनामत्रयोविंशतिबन्धात् सप्तषष्टिर्भवति, पञ्चविंशतिबन्धादेकोनसप्ततिरायुरबन्धे सैवाष्टषष्टिर्भवति, षड्विंशतिरायुर्बन्धात् सप्ततिर्भवति, अष्टाविंशतिबन्धात् द्वासप्ततिः। सैवायुरबन्धादेकसप्ततिर्भवति, एकोनत्रिंशदायुर्बन्धात् त्रिसप्ततिस्त्रिंशद् बन्धाच्चतुःसप्ततिरुत्कृष्टतः १–१७–१८–१९–२०–२१–२२–२६–५३–५४–५५–५६–५७–५८–५९–६०–६१–६३–६४ ६५–६६–६७–६८–६९–७०–७१–७२–७३–७४ एतेषु च केचन भूयो भूयः सम्भवन्ति, तैर्नात्र प्रयोजनम्, तुशब्दात् अत्रोत्तरमभिहितं तत्रैकोत्तरा राशयो ग्राह्याः, तथाशब्द इति यथा बन्धे तथोदयेष्वपि स्वबुद्ध्या ज्ञेयम्। ज्ञानान्तरायायुर्वेदनीयगोत्राणामेकैकमुदयस्थान दर्शनावरणस्य द्वे—चतुः पञ्च वा, नव मोहनीयस्यैकद्विकचतुःपञ्चषट्सप्ताष्टनवदशेति। नाम्नो द्वादशोदयस्थानानि

बन्धात् सञ्ज्वलनलोभबन्धाच्च प्रतिपतितस्य दर्शनावरणस्य द्वौ, मोहनीयस्य नव, भूताकारबन्धा भवन्ति, ते च सुगमाः, श्रेणीमारोहतो द्वावल्पतरौ दर्शनावरणस्य, अष्टौ मोहनीयस्य, यतो मिथ्यात्वगुणात् सास्वादनगुणे द्वाविंशतिबन्धकान्नैकविंशतिबन्धकं प्रतिपद्यते, अतोऽष्टावल्पतराः, नाम्नो भूताकाराः षट्, अल्पतराः सप्त, यतो भूताकारा षट् क्रमेण भवन्ति, न सप्तमः, प्रतिपततोऽपि तस्यान्यत्र गतत्वादेकत्रिंशद् बन्धस्य। अल्पतरा अप्येकत्रिंशद् बन्धादुभयत्रस्थबन्धेषु गमनात् सप्त भावनीयाः, शेषेषु भूताकाराऽल्पतरौ न भवतः, अवस्थितिबन्धो बन्धस्थानसमः प्रतिपादित एवेत्ति गाथार्थः॥ १६ ॥ ५ भूयरा

**चउ छ बिइए नामंमि एगगुणतीसतीसअव्वत्ता। इगि सत्तरस य मोहे एक्केक्को तइयवज्जाणं॥ १७॥**

व्याख्या—चतुःषट्बन्धो द्वितीये दर्शनावरणे भवतः द्वौ अव्यक्तौ, चतुर्बन्ध उपशमाद् भ्रष्टस्य, षड्बन्धोऽमरगतौ गतस्य। नाम्नि त्रयोऽव्यक्तबन्धा एकोनत्रिंशत् त्रिंशदेकबन्ध इति। एकबन्ध उपशमात् प्रतिपतितस्य, मनुष्यगतियोग्या एकोनत्रिंशत्, तीर्थंकरयोग्या त्रिंशत्, एतौ द्वावव्यक्तौ बन्धाद्युपशमस्थेन काले कृते सुरगतौ गतस्य। मोहनीयेऽप्युपशमात् प्रतिपतितस्य लोभबन्धः एकविधोऽव्यक्तः, तस्मादेव सुरगतौ गतस्याविरतस्य सतो द्वितीयः सप्तदशेत्यव्यक्तः। एकैको वेदनीयवर्जानां ज्ञानान्तरायायुर्गोत्राणामिति गाथार्थः॥ १७॥

सामान्योत्तरप्रकृतीनां बन्धस्थानानि अभिधातुकाम आह—

**इग सत्तरिगुत्तरजा दुवीस छवीस तह तिपणणाई। जा चोवत्तरि बावट्ठिरहियबंधाउ गुणतीसं॥ १८॥**

सम्भवन्ति, एको भूताकारो यतः सप्तवेदको भूत्वाऽष्टवेदको भवति, द्वावल्पतरावुदयौ, नास्त्यत्राव्यक्तः, त्रयोऽवस्थितोदया इति। उदीरणायाः पञ्च स्थानानि द्विपञ्चषट्सप्ताष्टाविति मूलप्रकृतिषु त्रयो भूताकाराः, अत्र उपशान्तकषायः पञ्चोदीरको भूत्वा षट् सप्ताष्टोदीरको भवति, द्विकोदीरको न परावर्त्तते इति, चत्वारो(रोऽ)ल्पतराः अष्टोदीरको भूत्वा सप्तषट्पञ्चद्विकोदीरको भवति क्रमेणेति नास्त्यत्राप्यव्यक्तः, पञ्चाप्यवस्थितोदीरणास्थानानि। चतुः सप्ताष्टौ त्रीणि सत्कर्मस्थानानि, भूताकाराव्यक्तौ नचात्र भवतः, द्वेऽल्पतरस्थाने सप्तकचतुष्के, अवस्थितस्य सत्कर्मणः त्रीणि स्थानानीति गाथार्थः ॥१४॥ उत्तरभेदानधिकृत्याह–

**बंधठाणा तिदसट्ठ दंसणावरणमोहनामाणं। सेसाणेगमवट्ठियबंधो सव्वत्थ ठाणसमो ॥ १५ ॥**

व्याख्या–बन्धस्थानानि त्रीणि दशाष्टौ यथासङ्ख्येन दर्शनावरणमोहनीयनाम्नां भवन्ति। शेषाणां ज्ञानान्तरायायुर्गोत्र-वेदनीयानां एकं बन्धस्थानं समुदितानां, नव षट् चतसृणां प्रकृतीनां बन्धात्त्रिधैव दर्शनावरणस्य बन्धः, द्वाविंशत्येकविंशतिसप्त-दशत्रयोदशनवपञ्चचतुस्त्रिद्व्येकप्रकृतिबन्धाद्दश मोहनीयबन्धस्थानानि, त्रयोविंशतिपञ्चविंशतिषड्विंशतिअष्टाविंशतिएकोनत्रिंशत्-त्रिंशदेकत्रिंशदेकप्रकृतिबन्धादष्टौ नाम्नो बन्धस्थानानि, ज्ञानान्तराययोरेकं, पञ्चानामपि सहचरितत्वात्, गोत्रायुर्वेदनीयानां तु तदन्यतरस्याः प्रकृतेर्बन्धादेकैकं स्थानम् , अवस्थितिबन्धाः सर्वत्र मूलोत्तरप्रकृतिषु स्थानतुल्याः यत्र यावन्ति स्थानानि, तत्र तावन्तोऽवस्थितबन्धा इति गाथार्थः ॥ १५ ॥

**भूओगारा दो णव छप्पयरा दुगट्ठ सत्त कमा। मिच्छाओ सासणत्तं न एक्कतीसेक्कगुरु जम्हा ॥१६॥**

व्याख्या—भूताकारा द्वौ नव षट्, अल्पतरा द्वौ अष्टौ सप्त क्रमात्–क्रमेण दर्शनावरणमोहनीयनाम्नां भवन्ति, दर्शनचतुष्क-

नश्च, पुनस्तेऽप्यनन्तरोदिता द्विविधा ज्ञातव्या मूलोत्तरप्रकृतिभेदतो–भेदेन एषा बन्धसङ्कलना सूक्ष्मधिया भावनीयेति गाथार्थः॥११॥

अन्येऽपि मूलोत्तरप्रकृत्याश्रिताः चत्वारो बन्धप्रकारा भवन्ति, तानाह–

**भूओगारप्पयरग अव्वत्त अवट्ठिओ य विण्णेया। मूलुत्तरपगईबंधणासिया ते इमे सुणसु ॥ १२ ॥**

व्याख्या–प्रभूताकारोऽल्पतरोऽव्यक्तोऽवस्थितश्चेति विज्ञेयाः, पूर्वबन्धात् सङ्ख्यां प्रति यदाधिको भवति, तदा प्रभूताकारः, यदा तु पूर्वबन्धादुत्तरबन्धो हीनस्तदाऽल्पतरो बन्धः, यदाऽबन्धकस्य बन्धो भवति तदा अव्यक्त इति संज्ञाज्ञातव्याः, यदा भूयो भूयस्तत्सङ्ख्ययैव विदधाति, तदावस्थितबन्धः, मूलोत्तरप्रकृतिगतास्ते त्वमी श्रृणुत इति गाथार्थः ॥ १२ ॥

मूलप्रकृतिषु बन्धस्थानान्याह–

**इगछादिमूलियाणं बंधट्ठाणा हवन्ति चत्तारि। अव्वंधगो न बंधइ इइ अव्वत्तग अओ णत्थि ॥ १३ ॥**

व्याख्या–एकषडादिमौलानामिति एकं षट् सप्ताष्टौ वा कर्माणि बध्यन्ते एव, मूलप्रकृतीनां चत्वारि बन्धस्थानानि। अबन्धको भूत्वा मूलप्रकृतीनां बन्धको न भवतीत्यतोऽव्यक्तबन्ध इह नास्ति, भूताकारास्त्रयोऽल्पतराश्च, चत्वारोऽवस्थिता इति गाथार्थः ॥ १३ ॥ अत्रैवातिदेशमाह–

**भूओगारप्पयरगअवत्तअवट्ठिया जहा बंधे। उदओदीरणसंतेसु वावि जह संभवं नेया ॥ १४ ॥**

व्याख्या–भूताकाराल्पतरकाव्यक्तावस्थिता यथा बन्धे उदयादीरणासत्स्वपि यथासम्भवं ज्ञेयाः, वाशब्दो यत्तदोर्नित्यसम्बन्धख्यापकः, यथा बन्धे तथा उदयादिष्वपि ज्ञेया इति मूलप्रकृतीनां चत्वारि सप्ताष्टौ त्रीण्युदयस्थानान्येतानि

स्वोदयेनानुभवति पश्चात्सप्तकं समकं विनाशयति, नपुंसकोदयेनारूढस्तेनैव सह वा स्त्रीवेदमप्यनुभवति, तस्यापि पश्चिमावलिका-कालं स्वोदयेनैवानुभवति, पश्चात् सप्तकं समकं विनाशयति, पुरुषवेदोदयेनारूढः प्रथमं नपुंसकं पश्चात् स्त्रीवेदं क्षपयति, ततः सप्तकं समकं प्रारम्भयति, समयहीनावलिकाद्वये शेषे हास्यादिषट्कं क्षपयति, ततः स्वोदयेनानुभवमानो जीवः शेषं क्रोधं क्षपयति, एवमेतासामुदये उदीरणा भाज्या, शेषाणां यावदुदयस्तावदुदीरणापीतिगाथार्थः ॥ ८ ॥

अधुना बन्धप्रकारमाह–

**होंति अणाइ अणंतो अणाइ संतो य साइ संतो य । बंधो अभव्वभव्वोवसंतजीवेसु इइ तिविहो ॥ ९ ॥**

व्याख्या–अनाद्यपर्यवसितोऽनादि ध्रुव इत्यर्थः, अनादि सपर्यवसानोऽनाद्यध्रुवः, सादिसपर्यवसानः साद्यध्रुव इत्यर्थः, त्रिविधो बन्धो यथासङ्ख्येनाभव्यभव्योपशान्तजीवेषु तद्विषय इति नान्यथेति गाथार्थः ॥ ९ ॥

त्रिविधस्यापि बन्धस्योत्तरभेदान् दर्शयन्नाह–

**पयडी ठिईपएसा–णुभावभेया चउव्विहेक्केक्को । उक्कोसाणुक्कोसगजहण्णअजहण्णया तेसिं ॥ १० ॥**

व्याख्या–एकैकस्य बन्धस्य प्रत्येकं चत्वारो भेदा भवन्ति, प्रकृतिबन्धस्थितिबन्धानुभागबन्धप्रदेशबन्धाख्यास्तेषामपि चतुर्णां बन्धानां प्रत्येकं चत्वारो भेदा भवन्ति, उत्कृष्टानुत्कृष्टजघन्याजघन्याख्याः इति गाथार्थः ॥ १० ॥

**तेवि हु सादिअणादीधुवअधुवभेयओ पुणो चउहा । ते पुण दुविहा नेया मूलुत्तरपगतिभेएणं ॥ ११ ॥**

व्याख्या–तेऽप्यनन्तरोदिताश्चत्वारः साद्यनादिध्रुवाध्रुवभेदतो–भेदेन हुशब्दाधिक्याच्चतुर्विधा अन्वेष्टव्याः, सम्भविनोऽसंभवि-

हननयोरुपशान्तकषायं यावत्, दर्शनषट्कज्ञानान्तरायाणां क्षीणकषायं यावदुदयः, उदीरणा च, नामध्रुवोदयसंस्थानषट्कोपघात-त्रिकौदारिकविहायोगतिद्विकप्रत्येकसुस्वरदुःस्वराद्यसंहननानां यावत्सयोगिकेवली तावदुदय उदीरणा च, त्रसादित्रयं सुभगादित्रयं मनुष्यगतिपञ्चेन्द्रियजातितीर्थंकरोच्चैर्गोत्राणां तु सयोगिन्येवोदीरणा, न परतस्तदुदय एवायं विशेषः, अत एकादशसु गुणेषु यावदुदयस्तावदुदीरणापीति गाथार्थः ॥ ७ ॥

उदयेऽप्युदीरणा यासां भाज्या ता उपदर्शयन्नाह–

**निद्दाउदयवईणं समिच्छपुरिसाण एगचत्ताणं । एयाणं चिय भज्जा उदीरणा उदए नन्नासिं ॥ ८ ॥**

व्याख्या—सामान्योपन्यासान्निद्रापञ्चकं गृह्यते, चतुस्त्रिंशतामुदयवतीनां ज्ञानान्तरायायुर्दर्शनचतुष्कसातासातस्त्री नपुंसकोच्चैर्गोत्रवेदकसम्यक्त्वसंज्वलनलोभत्रससुभगादित्रिकपञ्चेन्द्रियजातिमनुष्यगतितीर्थङ्कराणां समिथ्यात्वपुरुषवेदानामेकचत्वारिंशतां एतासामेव भाज्या उदये उदीरणा नान्यासामेकाशीतिप्रकृतीनां यावदुदयस्तावदुदीरणापीत्यर्थः, एतेदेव भावयति–निद्रातृतीयपर्याप्ति यावदुदीणाव्ययगमेनानुभवत्यूर्ध्वमुदीरणा, आयुषां भवान्तावलिकाकालमुदयेनानुभवति, ज्ञानान्तरायदर्शनचतुष्काणां क्षीणकपायान्तावलिकाकालमुदयेनानुभवति, नामनवकोच्चैर्गोत्रसातासातानामयोगिकालमुदयेनानुभवति जीव इति गम्यते, लोभस्य सूक्ष्मकषायान्तावलिकाकालमुदयेनानुभवति, एवं सम्यक्त्वस्यापि क्षायिकसम्यक्त्वोत्पत्तौ, मिथ्यात्वस्य तु प्रथमस्थित्यावलिकाशेषायां उदीरणाव्ययगमेऽप्युदयो भवति तदुदयसमाप्तावौपशमिकसम्यक्त्वप्राप्तिर्भवति, क्षकपश्रेणीं स्त्रीवेदोदयेनारूढः प्रथमं नपुंसकं विनाशयति, ततः स्त्रीवेदमप्युदीरणोदयाभ्यां अनुभवति, शेषावलिकाकालं यावत्तां पुनः

पण्णां वेदनीयायुषोस्तु पुनः उदीरणाव्यपगमेऽपि किञ्चिन्न्युनपूर्वकोटिकालं यावदुदयो भवति। अद्धा–कालोऽभिधीयते, आवलिका तद्विभागाभिधानं क्रीडाविशेपस्यापीदमेवाभिधानं अतो विशेषणं क्रियते, अद्धावलिका कालावलिका तन्मात्र उदये घातिकर्मणामुदीरणा नास्ति तुशब्दाधिक्यान्नामगोत्रयोस्त्वयोगिकालं यावदुदीरणा नास्तीति गाथार्थः ॥ ६ ॥

उत्तरप्रकृत्युदीरणामाह–

**सायासायाऊणं जाव पमत्तो अजोगि सेसुदओ। जा जोगि उदीरिज्जइ सेसेसुदया सोदयं जाव ॥ ७ ॥**

व्याख्या—सातासातमनुष्यायुषां यावत्प्रमत्तस्तावदुदीरणा, न परतः, अयोगिनः शेषोदयः प्रकृतिदशकमित्यर्थः, यावत्सयोगिकेवली तावदुदीर्यते, शेषैकादशगुणप्रकृत्युदयाः, स्वस्थानं स्वोदयं यावदुदीर्यन्ते न परत इति समासार्थः, व्यासार्थस्तु मिथ्यात्वातपसूक्ष्मत्रिकाणां मिथ्यादृष्टावुदय उदीरणा च। अनन्तानुबन्धिजातिचतुष्कस्थावराणां सास्वादनं यावदुदय उदीरणा च, सम्यग्मिथ्यात्वस्य सम्यग्मिथ्यादृष्टावुदयः उदीरणा च, वैक्रियषट्कदुर्भगानादेयायशस्तिर्यग्मनुष्यानुपूर्वीदेवनारकायुर्द्वितीयकषायाणामविरतं यावदुदयः उदीरणा च, नीचैर्गोत्रतृतीयकषायोद्योततिर्यग्गत्यायुषां यावद्देशविरतं तावदुदयः, उदीरणा च, स्त्यानर्द्धित्रिक[1]आहारकद्विकप्रकृतीनां प्रमत्तं यावदुदय उदीरणा च, सातासातमनुष्यायुषां उदयः परतोऽप्यस्ति नोदीरणा अयं विशेषः, [2]सम्यक्त्वार्द्धनाराचकीलिकाच्छिन्नपुष्टसंहनननामप्रमत्तं यावदुदयः उदीरणा च, एवं हास्यादिषट्कस्यापूर्वकरणं यावत्, वेदत्रिकस्य संज्वलनत्रिकस्य च बादरकषायं यावत् संज्वलनलोभस्य सूक्ष्मकषायं यावत्, द्वीतीयतृतीयसं-

१ आहारद्विकस्य प्रमत्त पवाद्य अप्रमत्तोदयाविवक्षणात्। २ अविरतादप्रमत्तं यावत्।

एतदेव जीवस्थानेष्वाह–

**बंधंति सत्त अट्ठ य उदिण्णसत्तट्ठगा उ सव्वेवि । सत्तट्ठछेगबंधगभंगा पज्जत्तसण्णिंमि ॥ ४ ॥**

व्याख्या–बध्नन्ति सप्तायुर्वर्जानि संपूर्णान्यष्टौ वा, उदीर्णविद्यमानाष्टकास्तु सर्वेऽपि–सर्वजीवस्थानजीवाः, सप्ताष्टषडेका बन्धकत्वविकल्पा अपि संज्ञिनि पर्याप्तके सम्भवति, तुशब्दाधिक्यादष्टसप्तचतुर्विधोदयसत्कर्मविकल्पाश्च भवन्तीति गाथार्थः ॥४॥

उदयमसङ्गेनैवोक्ता सत्कर्मता, उदीरणामाह–

**जाव पमत्तो अट्ठण्हुदीरगो वेयआउवज्जाणं । सुहुमो मोहेण य जा खीणो तप्परओ नामगोयाणं ॥ ५ ॥**

व्याख्या–मिथ्यादृष्टेर्यावत्प्रमत्तगुणस्तावज्जीवोऽष्टानामपि कर्मणामुदीरको भवति, स एवायुषि आवलिकाशेषोदये सप्तकर्मोदीरको भवति, अथाप्रमत्तगुणाद्यावत्सूक्ष्मकषायगुणस्तावत् षण्णां वेदनीयायुःशेषाणामुदीरको भवति, आवलिकाशेषोदये मोहनीये सूक्ष्मसम्परायोऽपि पञ्चानामुदीरको, वेदनीयायुर्मोहनीयैश्च वर्जानां तच्छेषाणां पञ्चानां कर्मणां उपशान्तगुणाद्यावत् क्षीणकषायगुणो जीवस्तावदुदीरकः, स एव क्षीणकषायो ज्ञानावरणदर्शनावरणान्तरायेष्वावलिकाशेषोदयेषु नामगोत्रयोरेवोदीरको भवति, तत्परस्तु सयोगिजिनो नामगोत्रयोरुदीरको भवति, चशब्दादधिकोऽर्थोऽसौ प्रतिपादित एव । उदये उदीरणा भवति, अतः सापवादं वक्तुकाम आह–

**जावुदओ ताव उदीरणा वि वेयणियआउवज्जाणं । अद्धावलियासेसे उदए उ उदीरणा नत्थि ॥ ६ ॥**

व्याख्या–यावन्मात्रं कालमुदयोऽस्ति तावन्मात्रमुदीरणापि भवति, किमष्टानामपि? नेत्याह– वेदनीयायुष्कशेषाणां

अधुना पञ्चमद्वारमारभ्यते तस्य चेयं सम्बन्धप्रतिपादिका आदिगाथा—

**बद्धस्सुदओ उदये उदीरणा तदवसेसयं संतं। तम्हा बंधविहाणे भण्णंते इह भणियव्वं ॥ १ ॥**

व्याख्या—बद्धस्य कर्मणः सतः उदयोऽनुभवनं भवति, अनुभूयमाने कर्मणि प्रक्षिप्यऽनुदयप्राप्तं प्रयोगेणानुभूयते यत्सा उदीरणा, ताभ्यां यत् नानुभूतं तत्सद् भवति, तस्माद् बन्धविधाने भण्यमाने इत्यनेन प्रकारेण भणितव्यमिति गाथार्थः ॥ १ ॥

गुणस्थानेषु मूलप्रकृतिबन्धविधिमाह—

**जा अपमत्तो सत्तट्ठ बंधगा सुहुम छण्हमेयस्स। उवसंतखीणजोगी सत्तण्हं णियट्टिमीसअणियट्टी ॥ २ ॥**

व्याख्या—यावदप्रमत्तगुणस्थानं तावत् सप्तानां अष्टानां वा मूलप्रकृतीनां बन्धक मोहायुषोवर्जयित्वा सूक्ष्मसम्परायः षण्णां बन्धक एकस्य वेदनीयस्य उपशान्तक्षीणमोहयोगिनो बन्धकाः, आयुष्कवर्जानां सप्तानां निवृत्तिसम्मिथ्यादृष्टिअनिवृत्ति-बादरा बन्धका इति गाथार्थः ॥ २ ॥

बद्धस्योदयमाह—

**जा सुहुमसंपराओइण्णसंताइं ताव सव्वाइं। सत्तट्ठुवसंतखीणे सत्त सेसेसु चत्तारि ॥ ३ ॥**

व्याख्या—यावत्सूक्ष्मसम्परायगुणस्थानं उदीर्णानि उदयं गतानि सन्ति विद्यन्ते तावत्सर्वाणि अशेषाणि कर्माणीति ग-म्यतेऽधिकारादुपशान्तकषायस्य सप्तोदीर्णान्यष्टौ विद्यमानानि, क्षीणकषाये सप्त, शेषयोः योग्ययोगिनोश्चत्वारि उदयं गतानि विद्यमानानि च भवन्तीति गाथार्थः ॥ ३ ॥

यासां गुणस्थानहेतुको न भवति ता उपरि वक्ष्यामः, परीषहा अपि कर्मोदयहेतवोऽतस्तानाह—

**खुप्पिवासुण्हसीयाणि सेज्जा रोगो वहो मलो । तणफासो चरिया य दंसेक्कारसजोगिसु ॥ २१ ॥**

व्याख्या–क्षुत्पिपासाशीतोष्णानि शय्या रोगो वधो मलः तृणस्पर्शश्चर्याश्च चकारोऽनुक्तार्थः दशमशकपरीषहः एते एकादश सयोगिषु भवन्ति ॥

**वेयणियभवा एए पन्ना नाणाउ आइमे । अट्ठमम्मि अलाहोत्था छउमत्थेसु चोद्दस ॥ २२ ॥**

व्याख्या–एते पूर्वोक्ता एकादश परीषहा वेदनीयोदय हेतवः सयोगिषु भवन्ति, प्रज्ञाऽज्ञानपरीषहौ च ज्ञानावरणोदये भवतः, अन्तरायोदयेऽलाभोत्थो भवति, सर्वेऽप्येते चतुर्दश छद्मस्थानां सम्भवन्ति

**निसेज्जा जायणाक्कोसो अरई इत्थिणग्गया । सक्कारो दंसणं मोहा वावीसा चेव रागिसु ॥ २३ ॥**



व्याख्या—निषद्या याचनाऽऽक्रोशः अरतिः स्त्री नग्नता चकारोऽधिकार्थसूचकः सत्कारपुरस्कारपरीषहः एते सप्त चारित्रमोहनीयोदयाद् भवन्ति । दर्शनपरीषहो दर्शनमोहनीयोदयात् प्रादुर्भवति, एवकारोऽवधारणार्थः, एते द्वाविंशतिपरीषहाः सम्पूर्णाः सरागिष्वेव भवन्ति, समाप्तं च हेतुद्वारमुद्देशतो, ग्रन्थतः शतपञ्चकेन । उक्तं चतुर्थद्वारम्

व्याख्या—षोडश मिथ्यात्वनिमित्ता बध्यन्ते, पञ्चत्रिंशदविरत्या च, शेषाः कषायैरपि योगैरपि सातवेदनीयमिति पदानि। पदार्थः—यद्यपि सर्वस्यापि कर्मणश्चत्वारोऽपि हेतवोऽविशेषणाभिहितास्तथापि प्राधान्याङ्गीकरणाद् व्यपदिश्यन्ते, षोडशानां कर्मप्रकृतीनां मिथ्यात्वमेव बन्धहेतुः यतस्तास्तद्विघाते न बध्यन्ते, पञ्चत्रिंशदविरत्या मिथ्यात्वेन च, यतस्तासामविरता एव बन्धका न परतोऽतोऽविरतिरेव प्रधानहेतुः, शेषाः पुनः पञ्चषष्टिः कषायैरपि बन्धमाप्नुवन्ति, मिथ्यात्वाविरतिभ्यामपि, योगैरपि सातवेदनीयं मिथ्यात्वाविरतिकषायव्यपगमेऽपि बध्यते ततश्चतुर्हेकमेतदिति गाथार्थः ॥ १९ ॥

**तित्थयराहाराणं बंधे सम्मत्तसंजमा हेऊ। पयडीपएसबंधा जोगेहि कसायओ इयरे ॥ २० ॥**

व्याख्या—तीर्थकराहारकाणां बन्धे सम्यक्त्वसंयमौ हेतू प्रकृतिप्रदेशबन्धौ योगेभ्यः कषायत इतरौ इति पदानि। पदार्थः—तीर्थकरनामगोत्रस्य त्रिविधमपि सम्यक्त्वं हेतुराह—यद्येवं क्षायिकौपशमिकेऽपि हेतू स्तः ततः सर्वसिद्धानां तीर्थकरत्वपूर्वकं सिद्धत्वं तद्बान्धश्च मुक्तानामपि प्रसज्यते, तयोरेकरूपत्वात् तथा च दोष इति, अत्रोच्यते—अध्रुवबन्धिनीनां प्रकृतीनां हेतौ सत्यपि बन्धो विकल्पेन प्रतिपादितोऽन्यच्च "[1]सेसाउ कसाएहि वि" इति भणनात् तीर्थकराहारकप्रकृतयो न निषिद्धाः सम्यक्त्वसंयमावपि तत्सापेक्षौ अतः कषाययोगयोर्वैचित्र्ये सम्यक्त्वभेदेऽपि न दोषः क्षायोपशमिकहेतुतायां कृतायां त्वपूर्वकरणेऽस्याबन्धः प्राप्नोति, तच्चानिष्टमिति एवमाहारकशरीराङ्गोपाङ्गयोः विशिष्टसंयमो हेतुः। प्रकृतिप्रदेशबन्धौ योगवैचित्र्याद्विचित्रौ भवतः, कषायेभ्य इतरौ स्थित्यनुभागबन्धौ कषायवैचित्र्याद्विचित्रौ भवतः। एवमनेकधा हेतुजाल स्वबुद्ध्या योजनीयम्। उदयो बन्धो वा

---

१ अस्य द्वारस्य गाथा १९

१-१-१-२-३-४-३ एतेऽङ्काः परस्परगुणिताः द्वासप्ततिर्भवन्ति ७२, एते षोडश हेतवः, भयप्रक्षेपात् सप्तदश भवन्ति ७२,
१-६-१-२-१-४-१

जुगुप्साप्रक्षेपेऽपि ७२, उभयप्रक्षेपादष्टादश हेतवः ७२ भवन्ति, सर्वेऽष्टाशीतं शतद्वयं २८८, एते पर्याप्तबादरहेतवः। सूक्ष्मापर्याप्तकस्य यन्त्रं १-१-१-२-३-४-३ एतेषामङ्कानां परस्परगुणनाज्जाता द्वासप्ततिः ७२, एते षोडश हेतवः भयप्रक्षेपात्सप्तदश
१-६-१-२-१-४-१

७२, जुगुप्साप्रक्षेपाच्च ७२, उभयप्रक्षेपादष्टादश हेतवो भवन्ति ७२, सर्वेऽप्यष्टाशीतं शतद्वयं २८८ एते सूक्ष्मापर्याप्तकहेतवः सूक्ष्मपर्याप्तकयन्त्रं १-१-१-२-३-४-१ परस्पराङ्कगुणनाज्जाताः चतुर्विंशतिः २४, एते षोडश हेतवः भयप्रक्षेपात् सप्तदशहेतवो
१-६-१-२-१-४-१

भवन्ति २४ जुगुप्साप्रक्षेपाच्च २४, उभयप्रक्षेपादष्टादशहेतवः २४, सर्वेऽपि षण्णवतिः ९६ एते सूक्ष्मपर्याप्तकहेतवः। सर्वेऽप्येकत्र (संज्ञिपर्याप्तवर्ज) जीवस्थानहेतुसङ्ख्या षोडश सहस्राणि १६००० । आह जघन्येनापि षोडश हेतवः सूत्रेऽभिहिताः कथमपर्याप्तकेषु पञ्चदशोदाहृताः, अत्रोच्यते—योगानां विषमभणनाद् गुणद्वैविध्यं ख्यापयति, यस्मिन् पक्षे सास्वादनस्तत्र मिथ्यात्वाभावात् पञ्चदश भवन्ति, पूर्वोक्तं योगद्वयं च, षोडश तु जीवस्थानव्यापित्वात् मुख्यतयैवोक्ता न दोष इति, जीवगुणस्थानेषु विशेषहेतवोऽभिहिताः, अधुना कर्मणो विशेषहेतुप्रतिपादनायाह—

**सोलस मिच्छनिमित्ता बज्झहि पणतीस अविरईए य। सेसाउ कसाएहिं वि जोगेहिंपि सायवेयणियं॥१९॥**

हेतवो भवन्ति ९६, जुगुप्साप्रक्षेपाच्च ९६, उभय प्रक्षेपात् सप्तदशहेतवः ९६, एते द्वींद्रियापर्याप्तकसास्वादनस्य, द्वीन्द्रियापर्याप्तकस्य मिथ्यादृष्टेर्यन्त्रं १–१–२–२–३–४–३ परस्पराङ्कवधेन जातं चतुश्चत्वारिंशदधिकं शतं १४४ एते षोडश इतेवः,

१–६–१–२–१–४–१

भयप्रक्षेपात्सप्तदश हेतवः १४४। जुगुप्साप्रक्षेपेणापि सप्तदश १४४। उभयप्रक्षेपादाष्टादश हेतवः १४४ उभयगुणहेतवः सर्वेऽपि षष्ठ्यधिकानि नवशतानि ९६० एते द्वीन्द्रियापर्याप्तकस्य बन्धहेतवः। द्वीन्द्रियपर्याप्तकस्य यन्त्रं १–१–२–३–४–२ परस्पराङ्क-

१–६–२–१–४–१

वधेन षण्णवतिः ९६ एते षोडश हेतवः, भयप्रक्षेपात् सप्तदश हेतवः ९६, जुगुप्साप्रक्षेपाच्च ९६, उभयप्रक्षेपादष्टादश हेतवः ९६, सर्वेऽषि चतुरशीत्यिधिकं शतत्रयं ३८४, एते द्वीन्द्रियपर्याप्तकविकल्पाः। वादरापर्याप्तकयन्त्रं १–१–२–३–४–२ एतेऽङ्काः

६–१–२–१–४–१

परस्परगुणाज्जाताः अष्टचत्वारिंशत् ४८, एते पञ्चदश हेतवः। भयप्रक्षेपात्षोडश हेतवः ४८, जुगुप्साप्रक्षेपेऽपि ४०, उभय-प्रक्षेपात्सप्तदश हेतवः ४८, एते वादरापर्याप्तकसास्वादनस्य। मिथ्यादृष्टिवादरस्य यन्त्रं १–१–१–२–३–४–३ एतेऽङ्काः

१–६–१–२–१–४–१

परस्परगुणिताः द्वासप्ततिर्भवन्ति ७२, एते षोडश हेतवः भयप्रक्षेपात् सप्तदश हेतवः ७२, जुगुप्साप्रक्षेपाच्च ७२, उभय प्रक्षेपादष्टादश हेतवः ७२, उभयगुणहेतुसर्वसङ्ख्या चत्वारिशतान्यशीत्यधिकानि ४८०, एते वादरापर्याप्तकहेतवः। वादरपर्याप्तकयन्त्रं

परस्परघाते द्विनवतं शतं १९२ एते षोडश हेतवः, त एव भयप्रक्षेपात् सप्तदश हेतवः १९२, जुगुप्साप्रक्षेपेऽपि सप्तदश हेतवः १९२ उभयप्रक्षेपादष्टादश हेतवः १९२ सर्वेऽप्येकत्र सप्तशतान्यष्टषष्ट्यधिकानि ७६८ एते चतुरिन्द्रियपर्याप्तकविकल्पाः। त्रीन्द्रियापर्याप्तकस्य यन्त्रं १-३-२-३-४-३ / ६-१-२-१-४-१ परस्पराङ्कगुणनाच्चतुश्चत्वारिंशदधिकं शतं १४४, एते पञ्चदश हेतवः भयप्रक्षेपात् षोडश हेतवो भवन्ति १४४, जुगुप्साप्रक्षेपाच्च षोडश १४४, भयजुगुप्साप्रक्षेपात् सप्तदश हेतवो भवन्ति १४४, सर्वेऽपि षट्सप्तत्यधिकानि पञ्चशतानि ५७६, एते सास्वादनत्रीन्द्रियस्य। त्रीन्द्रियापर्याप्तकमिथ्यादृष्टेर्यन्त्रं १-१-३-२-३-४-३ / १-६-१-२-१-४-१ परस्पराङ्कवधात् षोडशाधिकं शतद्वयं २१६ एते षोडशहेतुविकल्पाः, भयप्रक्षेपात् सप्तदश हेतुविकल्पाः २१६, जुगुप्साप्रक्षेपाच्च सप्तदश हेतवः २१६, उभयप्रक्षेपादष्टादश हेतवो भवन्ति, २१६ उभयगुणहेतवः सर्वेऽपि चतुर्दशशतानि चत्वारिंशदधिकानि १४४० एते त्रीन्द्रियापर्याप्तकविकल्पा भवन्ति, पर्याप्तकत्रीन्द्रिययन्त्रं १-१-३-२-३-४-२ / १-६-१-२-१-४-१ परस्पराङ्कवधेन चतुश्चत्वारिंशदधिकं शतं १४४ एते षोडश हेतुविकल्पाः, भयप्रक्षेपात् सप्तदश हेतवः १४४ जुगुप्साप्रक्षेपात् सप्तदशहेतवः १४४, भयजुगुप्साप्रक्षेपादष्टादश हेतवो भवन्ति १४४ सर्वेऽप्येकत्र षट् सप्तत्यधिकानि पञ्चशतानि ५७६ एते त्रीन्द्रियपर्याप्तकस्य विकल्पाः। द्वीन्द्रियापर्याप्तकस्य यन्त्रं १-२-२-३-४-२ / ६-१-२-१-४-१ परस्पराङ्कवधेन जाताः षण्णवतिः ९६, एते पञ्चदश हेतवः, एत एव भयप्रक्षेपात् षोडश

मिथ्यात्वयोगादेते पोडश हेतवः, अङ्कानां परस्परघातात्पष्ट्यधिका त्रिशती ३६०, एते षोडश हेतवः भयप्रक्षेपात् सप्तदश भवन्ति, भङ्गास्तावन्त एव ३६०, जुगुप्साप्रक्षेपेऽपि सप्तदशहेतवः, भङ्गास्तावन्त एव ३६०, उभयप्रक्षेपेऽष्टादश हेतवः भङ्गास्तावन्त एव ३६०, एवं गुणद्वये सर्वसङ्ख्या चतुर्विंशतिशतानि २४०० एते एवापर्याप्तसंज्ञिनि। पर्याप्तासंज्ञियन्त्रं १–१–५–२–३–४–२
१–६–१–२–१–४–१

अङ्कानां परस्परघातः शतद्वयं चत्वारिंशदधिकं २४०, एते षोडश हेतवः भयप्रक्षेपात् सप्तदश, भङ्गास्त एव २४० अथवा जुगुप्साप्रक्षेपात् सप्तदश, भङ्गास्त एव २४०, उभयप्रक्षेपादष्टादश, भङ्गास्त एव २४०, सर्वेऽप्येकत्र नव शतानि षष्ठ्यधिकानि ९६० एते ऽसंज्ञिपर्याप्तकस्य। एवं चतुरिन्द्रियाऽपर्याप्तकस्य यन्त्रं १–४–२–३–४–२ परस्परघातेन द्वानवतं शतं १९२
६–१–२–१–४–१

एते पञ्चदश हेतवः भयप्रक्षेपात् षोडश हेतवो भवन्ति १९२, अथवा जुगुप्साप्रक्षेपात् षोडश हेतवो भवन्ति १९२, उभयप्रक्षेपात् सप्तदश १९२, एते सास्वादनहेतवः। चतुरिन्द्रियापर्याप्तमिथ्यादृष्टिर्यन्त्रं १–१–४–२–३–४–२ एते षोडश हेतवः
१–६–१–२–१–४–१

परस्परवधात् शतद्वयमष्टाशीतं २८८, एते हेतुविकल्पाः भयप्रक्षेपात् सप्तदशहेतवो भवन्ति, तत्राप्येतावन्त एव २८८, अथवा जुगुप्साप्रक्षेपात्सप्तदश भङ्गास्त एव २८८, उभयप्रक्षेपादष्टादश हेतवस्तत्रापि भङ्गास्तावन्त एव २८८, उभयगुणभङ्गानामेकोनविंशतिशतानि विंशत्युत्तराणि १९२० एते चतुरिन्द्रियापर्याप्तकस्य। पर्याप्तचतुरिन्द्रययन्त्रं १–१–४–२–३–४–२ एतेषां
१–६–१–२–१–४–१

सर्वेऽप्येकत्र सप्तदशशतानि षष्ठ्यधिकानि १७६० एते सम्यग्दृष्टेः। सास्वादनयन्त्रं ३-३-५-२-४-१ / १-१-१-२-४-६ वेदाहतयोगा नव ९ एकहीनाः ८ शेषाङ्कगुणा जातानि त्रीणि शतानि विंशत्यधिकानि ३२०, त एव चतुर्दशानन्तानुबन्धिसहिता एते पञ्चदश हेतवः। एत एव पञ्चदश भययुक्ताः षोडश हेतवः भङ्गास्तावन्त एव ३२०, एवं जुगुप्साप्रक्षेपेऽपि ३२०, उभयप्रक्षेपात् सप्तदशात्रापि विकल्पाः तावन्त एव ३२०, सर्वेऽप्येकत्र द्वादश शतान्यशीत्यधिकानि १२८० एते सास्वादनस्य। मिथ्यादृष्टियन्त्रं १-१-५-२-३-४-५ / १-६-१-२-१-४-१ त एव पूर्वोक्ताः पञ्चदश मिथ्यात्वयुक्ताः षोडश भवन्ति, सर्वाङ्कवधः षट्शतानि ६०० एते षोडश हेतवः, त एव षोडश भयप्रक्षेपात् सप्तदश भवन्ति, भेदास्तावन्त एव ६००, एवं जुगुप्साप्रक्षेपेऽपि ६००, त एव षोडशोभयप्रक्षेपादष्टादश भवन्ति, भेदास्तावन्त एव ६००, सर्वेऽप्येकत्र चतुर्विंशतिशतानि २४०० त्रिगुणाश्रिताः चत्वारिंशदधिकानि चतुष्पञ्चाशच्छतानि ५४४० एते संज्ञ्यपर्याप्तकस्य। असंज्ञ्यपर्याप्तकस्य यंत्रं १-५-२-३-४-२ / ६-१-२-१-४-१ अङ्कानां परस्परघाते शतद्वयं चत्वारिंशदधिकं २४०, एते पञ्चदश हेतवो भयप्रक्षेपात्षोडश भवन्ति भङ्गास्तावन्त एव २४०, त एव जुगुप्साप्रक्षेपाच्च षोडश भवन्ति भेदास्तावन्त एव २४०, उभयप्रक्षेपात्सप्तदश भवन्ति, भेदास्तावन्त एव २४०, एते सास्वादनगुणभङ्गाः ९६०। मिथ्यादृष्टियन्त्रं १-१-५-२-३-४-२ / १-६-१-२-१-४-१

पुनर्बादराणां त्रयः काययोगा औदारिकवैक्रियवैक्रियमिश्राः, सूक्ष्माणां पुनरेक औदारिककाययोगः संज्ञिन्यपर्याप्तके गुणास्त्रयः मिथ्यादृष्टिसास्वादनाविरताख्याः चकारकरणात् सूक्ष्मापर्याप्तकवर्जितेषु शेषेषु बादरविकलासंज्ञिष्वपर्याप्तकेष्वपि द्वितीयः सास्वादनगुणो भवति, तत्र च जघन्याः पञ्चदश हेतवो भवन्ति, मिथ्यात्वाभावादिति तत्र कार्मणौदारिकमिश्रावेव द्वौ काययोगौ भवतः यतोऽसौ करणापर्याप्तकेषु भवति न पर्याप्तकेष्विति गाथार्थः ॥ १७ ॥

विशेषयोगानाह—

**उरलेण तिण्ण छण्हं सरीरपज्जत्तयाण मिच्छाणं। सविउव्वेणं सण्णिस्स सम्म मिच्छस्स वा पंच ॥ १८ ॥**

व्याख्या—औदारिकेण त्रिणि षण्णां शरीरपर्याप्तकानां मिथ्यादृष्टीनां सवैक्रियेण संज्ञिनः सम्यग्दृष्टेर्मिथ्यादृष्टेर्वा पञ्चेति पदानि। पदार्थस्तु षण्णामपर्याप्तकानां शरीरपर्याप्तौ औदारिकयोगो भवति, तेन सह पूर्वोक्तौ द्वौ त्रयो भवन्ति, तस्मिंश्च काले सास्वादनभावं त्यजति, तस्य षडावलिकाकालिकत्वात्, अतस्तेषां मिथ्यादृष्टीनामिति, सवैक्रियेणौदारिकेण संज्ञिनोऽपर्याप्तकस्य सम्यग्दृष्टेर्मिथ्यादृष्टेर्वा पञ्च योगा भवन्ति, पूर्वोक्तास्त्रय इति गाथार्थः ॥ १८ ॥ संज्ञिनोऽपर्याप्तकस्य सम्यग्दृष्टेश्चतुर्दशहेतुयन्त्रकस्य पूर्वसूचितस्य न्यासः, ५–३–५–२–४–१ योगाहतवेदानां पञ्चत्रिगुणाः चतुर्भिरूना ११ इन्द्रिययुग्मकषायसङ्ख्या गुणा ४४०

१–१–१–२–३–६

चतुःशतानि, चत्वारिंशदधिकानि एते चतुर्दश हेतवः। भयप्रक्षेपात् पञ्चदश, तत्रापि विकल्पा एतावन्त एव ४४०, अथवा जुगुप्साप्रक्षेपात् पञ्चदश, तत्रापि भेदा एतावन्त एव ४४०, भयजुगुप्साप्रक्षेपात् षोडश भवन्ति, भेदास्तावन्त एव ४४०,

पर्याप्तकसंज्ञी पुनः गुणस्थानकस्थ एव त्रयोदशस्थानापन्न उक्त एव नेहोच्यत इति गाथार्थः ॥ १५ ॥

अत्रापि चक्ररचनाविशेषमाह–

**मिच्छत्तं एक्कं चिय छक्कायवहो ति जोगसण्णिम्मि । इंदियसंखा सुगमा असण्णिविगलेसु दो जोगा॥१६॥**

व्याख्या–मिथ्यात्वं एकमेव षट्कायवधः त्रयो योगा संज्ञिनि इन्द्रियसङ्ख्या सुगमा असंज्ञिविकलेषु द्वौ योगौ इति पदानि । पदार्थस्तु–मिथ्यात्वमेकमेवानभीगृहीतं द्वादशानामसंज्ञिनां, सम्पूर्णानां षण्णां कायानां वधः तेषां, तेष्वविरतत्वात् । आह– यद्येवं प्राग्भङ्गप्ररूपणा न घटते तेषामप्यविरतत्वादित्यत्रोच्यते–तेषां संज्ञिनां योगत्रयव्यापारात् द्रव्यभावोभयबन्धाः सम्भवन्ति, प्राणव्यपरोपणमज्ञातस्य द्रव्यवधः जीवशङ्कयाऽजीवस्य वधे भाववधः सङ्कल्पितस्य जीवस्य वध उभयवध इति । तेषु च तीव्रतीव्रतरतीव्रतमाः बन्धाः प्रतिपादिताः, अतोऽत्र भङ्गप्ररूपणा घटते । असंज्ञिनां तु पुनः मनोव्यापाराभावात् द्रव्यवध एवासावपि प्रतिक्षणं यद्यपि न भवति. तथाप्यविरतत्वाद्बन्धो भवति, न दोष इति । संज्ञिन्यपर्याप्तके त्रयो योगाः । कार्मणौदारिकमिश्रवैक्रियमिश्राख्याः, इन्द्रियसङ्ख्या सुगमा पञ्चेन्द्रियाणां पञ्च चतुरिन्द्रियाणां चत्वार्येवं शेषेष्वपि वाच्यम्, असंज्ञिविकलानामपर्याप्तकानां द्वौ योगौ कर्मणौदारिकमिश्रौ पर्याप्तकानामपि द्वौ योगौ औदारिकोऽसत्यामृषावाक् चेति गाथार्थः ॥ १६ ॥

**एवं च अपज्जाणं वायरसुहुमाण पज्जयाण पुणो । तिण्णेक्ककायजोगा सण्णि अपज्जे गुणा तिण्णि ॥ १७ ॥**

व्याख्या—एवं चापर्याप्तानां बादरसूक्ष्माणां पर्याप्तानां पुनः त्रयः एकः काययोगः संज्ञिनि अपर्याप्ते गुणास्त्रय इति पदानि । पदार्थस्तु–यथाऽसंज्ञिविकलानां तथा बादरसूक्ष्मैकेन्द्रियाणामप्यपर्याप्तकानां द्वौ योगौ कार्मणौदारिकमिश्रौ, पर्याप्तानां

योगभेदात् षोडशाभ्यधिकशतद्वयं २१६ एते पञ्च हेतुसमुदायाः। भयप्रक्षेपादेत एव षड् भङ्गसमुदायाः भङ्गास्त एव २१६ जुगुप्साप्रक्षेपेऽपि षट् समुदायाः भङ्गास्त एव २१६ उभयप्रक्षेपे सप्त समुदायाः भङ्गास्त एव २१६ सर्वेऽप्येकत्र अष्टौ शतानि चतुःषष्ठ्यधिकानि ८६४ एते अपूर्वकरणहेतवः। बादरस्य यन्त्रकं ४—९ / १—१ कषाययोगभेदात् षट्त्रिंशद् द्विकसंयोगा भवन्ति ३६ एते द्विकसमुदायाः। बादरस्य पञ्चबन्धकस्य वेदोदयोऽप्यस्ति, अतो वेदप्रक्षेपात्त्रयो हेतवः भङ्गास्त एव त्रिगुणाः अष्टोत्तरं शतं १०८ एते त्रिहेतुसमुदायाः। सर्वेऽप्येकत्र चतुश्चत्वारिंशदधिकं शतं १४४ एते बादरकषायहेतवः। सूक्ष्मादीनां यन्त्राभावो गुणनाभावादिति। सूक्ष्मकषायस्य एक एव कषायः, एको योगः, ९। उपशान्तस्य नवैव। क्षीणकषायेऽपि नवैव हेतवः। सयोगिनि सप्तैव हेतवः, ७। यतो योगकृतो बन्धस्ते च तेष्वियत्प्रमाणा इति। गुणस्थानहेतुसङ्ग्राहिणिगाथामाह—

**सव्वगुणठाणएसु विसेसहेऊण एत्तिया संखा। छायाललक्खबासीइ सहस्ससय सत्तसयरी य ॥१४॥**

व्याख्या—गुणस्थानेषु सर्वेष्वपि विशेषहेतूनां सङ्ख्या इयन्मात्रा षट्चत्वारिंशल्लक्षाः द्व्यशीतिसहस्राणि शतानि सप्त सप्ततिश्चेति गाथार्थः॥ ४६८२७७० उक्ता गुणेषु हेतवः। साम्प्रतं जीवस्थानेष्वाह—

**सोलट्ठारसहेऊ जहण्ण उक्कोसया असण्णीणं। चोद्दट्ठारसपज्जत्तस्स सण्णिणो सण्णिगुणगहिओ ॥ १५ ॥**

व्याख्या—षोडशाष्टादशहेतू जघन्योत्कृष्टकौ असंज्ञिनां चतुर्दशाष्टादशापर्याप्तकस्य संज्ञिनः संज्ञिगुणगृहीतः इति पदानि। पदार्थः-द्वादशानामसंज्ञिनां जघन्येनापि षोडश बन्धहेतवः उत्कृष्टेनाष्टादश, संज्ञिनि अपर्याप्तके चतुर्दश जघन्येनोत्कृष्टतोऽष्टादश,

दो रूवाणि पमत्ते चयाहि एकं तु अप्पमत्तंमि । जं इत्थिवेयउदए आहारगमीसगा नत्थि ॥ १३ ॥

व्याख्या—द्वे रूपे प्रमत्ते त्यज एकं तु अप्रमत्ते यस्मात् स्त्रीवेदोदये आहारकमिश्रकौ न स्तः, पदानि । पदार्थः–योगाहत-वेदेभ्य इत्यनुवर्त्तते प्रमत्ते द्वे रूपे त्यज अप्रमत्ते तु पुनः रूपं त्यज यत् स्त्रीवेदोदये आहारकमिश्रौ काययोगौ यथासम्भवं न स्तः, प्रमत्तस्य द्वावपि न स्तः अप्रमत्तस्याहारको नास्तीति गाथार्थः ॥ १३ ॥ प्रमत्तयन्त्रकम्–१३–३–२–४ प्रमत्तादीनां पञ्च हेतवः,
१–१–२–१
युग्मं वेदः कषायः योगश्च, योगैस्त्रिवेदभेदादेकोनचत्वारिंशद् भेदाः ३९ द्विकोनाः ३७ युग्मभेदात् द्विगुणाः चतुःसप्ततिः ७४ कषाय-भेदाच्चतुर्गुणाः षण्णवतिः शतद्वयं २९६ एते पञ्च हेतुसमुदायाः । त एव पञ्च भयप्रक्षेपात् षट्,त एव भङ्गाः २९६, जुगुप्साप्रक्षेपेऽपि षड्, भङ्गास्त एव २९६ एवमुभयप्रक्षेपात् सप्त हेतवः भङ्गास्त एव २९६ सर्वेऽप्येकत्र एकादश शतानि चतुरशीत्यधिकानि ११८४ एते प्रमत्तभङ्गाः । अप्रमत्तेयन्त्रम्–११–३–२–४ वेदाहतयोगास्त्रयस्त्रिंशत् ३३ रूपापगमे ३२ युग्मभेदाद् द्विगुणाः चतुःषष्टिः ६४ सापि
१–१–२–१
कषायभेदाच्चतुर्गुणाः षट्पञ्चाशदधिकं शतद्वयं २५६ एते पञ्च हेतुसमुदायाः । एवं भयेन सह षट् भङ्गास्त एव २५६, एवं जुगु-प्साप्रक्षेपेऽपि षट्, भङ्गास्त एव २५६, उभयप्रक्षेपेऽपि सप्त हेतवः भङ्गास्त एव २५६ सर्वेऽपि मिलिताः चतुर्विंशत्यधिकं सहस्रं १०२४ एतेऽप्रमत्तभङ्गाः अपूर्वकरणे यन्त्रं २–३–४–९ युग्मयोर्वेदभेदात् षट्, तेऽपि कषायभेदाच्चतुर्विंशतिः २४ असावपि नव-
२–१–१–१

वधभयप्रक्षेपात् त्रयोदश भवन्ति, तत्र त्रयोदश शतानि विंशत्युत्तराणि भङ्गानां १३२०, एवं पञ्चकायवधजुगुप्साप्रक्षेपेऽपि १३२०, अथवा चतुष्कायवधभयजुगुप्साप्रक्षेपात् त्रयोदश भवन्ति, तत्रापि षट्षष्टिशतानि भङ्गानां ६६००, सर्वेऽप्येकत्र द्विनवतिशतानि चत्वारिंशदुत्तराणि ९२४० एते त्रयोदश हेतुसमुदायाः । त एव पूर्वोक्ता अष्टौ पञ्चकायवधभयजुगुप्साप्रक्षेपाच्चतुर्दश भवन्ति, तत्र विंशत्युत्तराणि त्रयोदश शतानि भङ्गानां १३२० एते चतुर्दश हेतुसमुदायाः । सर्वेऽप्येकत्र लक्षं त्रिषष्टिसहस्राणि षट्शतानि अशीत्यधिकानि भङ्गानां १६३६८० एते देशविरतिभङ्गकाः । गतौ मिथ्यात्वाविरतिहेतू, अनन्तानुबन्धिकायवधभङ्गकचारणा च । "अणबन्धिभयदुगुंछाण" कस्मादित्थमुपन्यास उच्यते अनन्तानुबन्धिनां मिथ्यादृष्टावेव चारणा विकल्पेनोदयादतः प्रथमोच्चारणं कायवधभङ्गानां तु देशविरतं यावच्चारणा अतो द्वितीयस्थाने भणनम् । भयजुगुप्सायोस्तु हास्यादिषट्कस्य उदयं मत्यपूर्वकरणं यावद् गमनादित्थमुपन्यासः, आहाविरतेर्द्वादशमभेदस्य मनोऽभिधानस्य मिथ्यादृष्ट्यादिषु प्राग्बन्धहेतुतामुक्त्वा किमिति युगपत् बन्धहेतुषु न दाशताऽत्रोच्यते—"तन्मनश्चित्तभेदेषु, चरल्लीनं न दृश्यते । सङ्ख्याधिक्यं च नो कुर्याद् बन्धहेतुस्तथापि तत् ॥१॥ आह भोः को विशेषोऽत्र विरताविरतचित्तयोः । बन्धं प्रति महानत्र विशेषोऽस्ति स उच्यते ॥ २ ॥ सङ्ख्यावस्त्रत्वसाम्येऽपि विशेषश्वेतरक्तयोः । यथेहास्ति तथाऽत्रापि स्थितेर्भेदाच्च चिन्तयेत् ॥ ॥ ३ ॥ " यथा मांजिष्ठं वस्त्रं बहुमूल्यं श्वेतादथवा कृष्णमपवित्रं श्वेतादिति विशेषः । एवं सयोगिमनसा कृतो बन्धः सामयिको भवति अविरतियुक्तमनसा कृतो बन्धः सागरोपमकोटाकोटीः स्थितौ करोतीति, रसादिभिश्च विशेषः स्वमत्या चिन्तयेत् ॥ ममत्वाममत्वयोर्विशेषमाह—

---

१ अस्य द्वारस्य गा. ९ ।

भेदात् पट्शतानि ६०० तान्यपि एकादशयोगभेदात् पट्पष्ठिशतानि ६६०० एत अष्टकहेतुसमुदायाः। त एव पूर्वोक्ता अष्टौ द्विकायवधप्रक्षेपात् नव भवन्ति, तत्र त्रयोदश सहस्राणि शतद्वयं च १३२००। अथवा भयप्रक्षेपात् नव तत्र पट्पष्ठिशतानि ६६००, अथवा जुगुप्साप्रक्षेपान्नव तत्रापि पट्पष्ठिशतानि ६६००, सर्वेऽप्येकत्र पड्विंशतिसहस्राणि शतचतुष्कं च २६४००, एते नव हेतुसमुदायाः। एत एव पूर्वोक्ता अष्टौ त्रिकायवधप्रक्षेपाद्दश भवन्ति, त्रिकसंयोगा अत्र दश भवन्ति, ततो भङ्गकानां त्रयोदशसहस्राणि द्विशतोत्तराणि १३२००, अथवा द्विकायवधभयप्रक्षेपात् दश, दशाऽत्र द्विकसंयोगाः, भङ्गानां त्रयोदशसहस्राणि द्विशताभ्यधिकानि १३२००, द्विकायवधजुगुप्साप्रक्षेपेऽपि १३२०० अथवा पूर्वोक्ता अष्टौ भयजुगुप्साप्रक्षेपाद्दश भवन्ति, तत्र पट्पष्ठिभङ्गकशतानि ६६००, सर्वेऽप्येकत्र पट्चत्वारिंशत्सहस्राणि द्विशतं च ४६२००, एते दश हेतुसमुदायाः। त एव पूर्वोक्ता अष्टौ चतुष्कायवधप्रक्षेपादेकादश भवन्ति, तत्र पट्पष्ठिशतानि भङ्गानां ६६००, अथवा त्रिकायवधभयप्रक्षेपादेकादश, तत्र त्रयोदशसहस्राणि शतद्वयं च भङ्गानां १३२००, एवं त्रिकायवधजुगुप्साप्रक्षेपेऽपि १३२००, अथवा द्विकायवधभयजुगुप्साप्रक्षेपादेकादस भवन्ति, तत्रापि त्रयोदश सहस्राणि शतद्वयं च भङ्गानां १३२००, सर्वेऽप्येकत्र पट्चत्वारिंशत्सहस्राणि शतद्वयं ४६२००, एते एकादश हेतुसमुदायाः। त एव पूर्वोक्ता अष्टौ पञ्चकायवधप्रक्षेपाद् द्वादश भवन्ति, तत्र त्रयादश शतानि विंशत्युत्तराणि भङ्गानां १३२०, अथवा चतुष्कायवधभयप्रक्षेपाद् द्वादश भवन्ति, तत्र पट्पष्ठिभङ्गकशतानि ६६००, एवं चतुष्कायवधजुगुप्राप्रक्षेपेऽपि ६६००, अथवा त्रिकायवधभयजुगुप्साप्रक्षेपाद् द्वादश, त्रयोदश सहस्राणि द्विशतं च भङ्गानां १३२००, सर्वेऽप्येकत्र सप्तविंसतिसहस्राणि सप्तशतानि विंशत्युत्तराणि २७७२० एते द्वादश हेतुसमुदायाः। त एव पूर्वोक्ता अष्टौ पञ्चकाय-

पञ्चकायवधप्रक्षेपात् त्रयोदश भवन्ति, तत्र भङ्गानां चतुरशीतिशतानि ८४०० अथवा चतुष्कायवधप्रक्षेपात् त्रयोदश भवन्ति, तत्र भङ्गानां एकविंशतिसहस्राणि २१०००, एवं चतुष्कायवधजुगुप्साप्रक्षेपेऽपि २१०००, अथवा त्रिकायवधभयजुगुप्साप्रक्षेपात् त्रयोदश भवन्ति, तत्राऽप्यष्टाविंशतिभङ्गकसहस्राणि २८०००, सर्वेऽप्येकत्र अष्टसप्ततिसहस्राणि चत्वारि शतानि ७८४००, एते त्रयोदश हेतुसमुदायाः । त एव पूर्वोक्ता नव षट्कायवधप्रक्षेपाच्चतुर्दश भवन्ति, तत्र भङ्गानां चतुर्दश शतानि १४००, अथवा पञ्चकायवधभयप्रक्षेपाच्चतुर्दश भवन्ति, तत्र चतुरशीतिभङ्गकशतानि ८४००, एवं पञ्चकायवधजुगुप्साप्रक्षेपेऽपि ८४००, अथवा चतुष्कायवधभयजुगुप्साप्रक्षेपाच्चतुर्दश, तत्र भङ्गानामेकविंशतिसहस्राणि २१०००, सर्वेऽप्येकत्र एकोनचत्वारिंशत् सहस्राणि शतद्वयं च ३९२००, एते चतुर्दशहेतुसमुदायाः । त एव पूर्वोक्ता नव षट्कायवधभयप्रक्षेपात् पञ्चदश भवन्ति, तत्र चतुर्दश भङ्गकशतानि १४००, एवं षट्कायवधजुगुप्साप्रक्षेपेऽपि १४००, अथवा पञ्चकायवधभयजुगुप्साप्रक्षेपात् पञ्चदश भवन्ति, तत्र भङ्गानां चतुरशीतिशतानि ८४००, सर्वेऽप्येकत्र मिलिताः सहस्राण्येकादश शतद्वयं च ११२०० एते पञ्चदश समुदायाः । त एव पूर्वोक्ता नव षट्कायवधभयजुगुप्साप्रक्षेपात् षोडश भवन्ति, तत्र चतुर्दश शतानि १४०० एवं सर्वेऽप्येकत्र लक्षत्रयं द्विपञ्चाशत्सहस्राण्यष्टौ शतानि ३५२८०० एते चाविरतहेतुसमुदायाः । देशविरतस्य त्रसकायविरतेः पञ्चकायस्तेषामेकद्विकत्रिकचतुष्पञ्चसंयोगाश्चारणीया, अस्याष्टौ हेतवः, एकः कायः एकमिन्द्रियं एकं युग्ममेको वेदो द्वौ कषायावेको योग इत्यष्टौ चक्रं

५–५–२–३–४–११
१–१–२–१–२–१

एकैककाये पञ्चेन्द्रियाणीति पञ्चविंशतिभेदाः २५ ते द्वियुग्मभेदात् पञ्चाशत्, सापि वेदात् सार्द्धं शतम् १५०, तदपि चतुष्कषाय-

र्थस्तु अविरते योगाहतवेदेभ्य इत्यनुवर्त्तते चत्वारि रूपाणि त्यज, यतश्चत्वारो भङ्गाः न संभवन्ति, स्त्रीवेदोदये वैक्रियमिश्रकार्म्मणौ योगौ न भवतः, स्त्रीनपुंसकवेदयोरुदये औदारिकमिश्रो न भवतीति गाथार्थः ॥ १२ ॥

एकः काय एकमिन्द्रियमेकं युग्ममेको वेदः त्रयः कषाया एको योगः एते नव जघन्यहेतवः, चक्ररचना–१३–३–६–५–२–४
१–१–१–१–२–३

अत्र प्रथमं योगैर्वेदान् गुणयेत्, ततः पूर्वोक्तं भङ्गचतुष्टयमुद्धरेत, शेषाः पञ्चत्रिंशत् ३५, भूयः शेषाङ्कैर्गुणिता जातानि चतुरशीतिशतानि ८४००, एते नवकसमुदायाः भावना प्रागेवाभिहिताः। एत एव पूर्वोक्ता नव द्विकायप्रक्षेपाद्दश भवन्ति, अत्र भङ्गानां एकविंशतिसहस्राणि २१०००, अथवा भयप्रक्षेपाद्दश, तत्र चतुरशीतिशतानि ८४०० एवं जुगुप्साप्रक्षेपेऽपि ८४०० सर्वेऽप्येकत्र सप्तत्रिंशत्सहस्राणि अष्टौ शतानि ३७८०० एते दश समुदायाः। त एव पूर्वोक्ता नव त्रिकायवधप्रक्षेपादेकादश भवन्ति, तत्राष्टाविंशतिसहस्राणि २८०००, अथवा द्विकायवधभयप्रक्षेपादेकादश भवन्ति, तत्रैकविंशतिसहस्राणि २१०००, एवं द्विकायवधजुगुप्साप्रक्षेपेऽपि २१०००, अथवा भयजुगुप्साप्रक्षेपादेकादश भवन्ति, अत्र चतुरशीतिभङ्गशतानि ८४००, सर्वेऽप्येकत्राष्टसप्ततिसहस्राणि चत्वारि शतानि ७८४००, एते एकादश समुदायाः। त एव पूर्वोक्ता नव चतुष्कायवधप्रक्षेपात् द्वादश भवन्ति, तत्र प्राग्वदेकत्रिंशतिभङ्गकसहस्राणि २१०००, अथवा त्रिकायवधभयप्रक्षेपात् द्वादश भवन्ति, तत्र भङ्गानां अष्टाविंशतिसहस्राणि २८०००, एवं त्रिकायवधजुगुप्साप्रक्षेपेऽपि २८०००, अथवा द्विकायवधभयजुगुप्साप्रक्षेपात् द्वादश भवन्ति, तत्रैकविंशतिभङ्गकसहस्राणि २१००० सर्वेऽप्येकत्राष्टानवतिसहस्राणि ९८०००, एते द्वादश हेतुसमुदायाः। त एव पूर्वोक्ता नव

सहस्राणि १८०००, एवं सर्वेऽप्येकत्र मिलिताश्चतुरशीतिसहस्राणि ८४०००, एते द्वादश समुदायाः । त एव पूर्वोक्ता नव पञ्चकायवधप्रक्षेपात् त्रयोदश भवन्ति, तत्र द्वासप्ततिशतानि भङ्गानां ७२००, अथवा चतुष्कायवधभयप्रक्षेपात् त्रयोदश भवन्ति, तत्र अष्टादश भङ्गकसहस्राणि १८०००, एवं चतुष्कायवधजुगुप्साप्रक्षेपेऽपि १८०००, अथवा त्रिकायवधभयजुगुप्सा-प्रक्षेपात् त्रयोदश भवन्ति, चतुर्विंशतिभङ्गसहस्राणि २४०००, सर्वेऽप्येकत्र मिलिताः सप्तपष्ठिसहस्राणि शतद्वयं च ६७२०० एते त्रयोदशसमुदायाः । त एव पूर्वोक्ता नव पट्कायवधप्रक्षेपाच्चतुर्दश भवन्ति, अत्र भङ्गकशतानि द्वादश १२००, अथवा पञ्चका-यवधभयप्रक्षेपाच्चतुर्दश भवन्ति, अत्र द्वासप्ततिभङ्गकशतानि ७२००, एवं पञ्चकायवधजुगुप्साप्रक्षेपेऽपि ७२००, अथवा चतुष्काय-वधभयजुगुप्साप्रक्षेपाच्चतुर्दश तत्र अष्टादश सहस्राणि भङ्गानां १८०००, एवं सर्वेऽपि त्रयस्त्रिंशत्सहस्राणि पट्शतानि ३३६००, एते चतुर्दश समुदायाः । त एव पूर्वोक्ता नव पट्कायवधभयप्रक्षेपात्पञ्चदश भवन्ति, तत्र प्राग्वत् भङ्गानां द्वादश शतानि १२००, एवं पट्कायवधजुगुप्साप्रक्षेपेऽपि १२००, अथवा पञ्चकायवधभयजुगुप्साप्रक्षेपात् पञ्चदश भवन्ति, तत्र प्राग्वत् भङ्गानां द्वासप्त-तिशतानि ७२००, एते सर्वेऽपि पण्णवतिशतानि ९६०० एते पञ्चदश समुदायाः । पूर्वोक्ता एव नव पट्कायवधभयजुगुप्साप्रक्षेपात् षोडश भवन्ति, भङ्गानां द्वादश शतानि १२००, सर्वेऽपि सम्यग्मिथ्यादृष्टिहेतवो मिलिता लक्षत्रयं चतुर्विंशतिशतानि ३०२४००, एते सम्यग्मिथ्यादृष्टिहेतवः । अविरतहेतुविशेषमाह—

चत्तारि अविरए चय थीउदए विउव्विमीसकम्मइया । इत्थीनपुंसगउदए ओरालियमीसगो जन्नो ॥१२॥

व्याख्या—चत्वारि अविरते त्यज स्त्रीउदये वैक्रियमिश्रकार्म्मणौ स्त्रीनपुंसकोदये औदारिकमिश्रको यस्मान्नेति पदानि । पदा-

द्वादश सहस्राणि षष्ठ्यधिकं शतं १२१६० एते षोडश समुदायाः। त एव पूर्वोक्ता दश षट्कायवधभयजुगुप्साप्रक्षेपात् सप्तदश भवन्ति, तत्र भङ्गकशतानि पञ्चदश विंशत्युत्तराणि १५२०, एवमेते सास्वादनबन्धहेतवः सर्वेऽप्येकत्र मीलिता लक्षत्रयं त्र्यशीतिसहस्राणि चत्वारिंशद्भङ्गाः ३८३०४० भवन्ति, उक्ताः सास्वादनबन्धहेतवः॥ सम्यग्मिथ्यादृष्टेस्त एव दश अनन्तानुबन्ध्युदयवर्जिता नव भवन्ति, १-१-२-१-३-१ एकैककायवधे पञ्चेन्द्रियव्यापाराः, एवं त्रिंशद् भङ्गाः एकैकयुगले त्रिंशदेव षष्ठिः, एकैकवेदे

६-५-२-३-४-१०

षष्ठिरतोऽशीतं शतं, एकैककषायेऽशीतं शतम्, अतश्चतुर्भिः कषायैः विंशत्युत्तराणि सप्तशतानि ७२० एवं दशयोगभेदा द्वासप्ततिशतानि ७२०० एते नव हेतवः। एत एव पूर्वोक्ता नव द्विकायवधप्रक्षेपात् हेतवो दश भवन्ति, प्राग्वत् सङ्ख्याष्टादश सहस्राणि १८०००, अथवा भयप्रक्षेपाद्दश तत्र द्विसप्ततिशतानि ७२००, जुगुप्साप्रक्षेपाच्च दश, तत्रापि द्विसप्ततिशतानि ७२००, एवमेकत्र दशसमुदायानां द्वात्रिंशत्सहस्राणि चत्वारि शतानि ३२४०० एते दश हेतवः। एत एव पूर्वोक्ता नव त्रिकायवधप्रक्षेपादेकादश भवन्ति, तत्र चतुर्विंशतिसहस्राणि २४०००, तथा द्विकायवधभयप्रक्षपात् एकादश भवन्ति, तत्र अष्टादश सहस्राणि १८००० एवं द्विकायवधजुगुप्साप्रक्षेपेऽपि १८०००, अथवा भयजुगुप्साप्रक्षेपादेकादश भवन्ति, तत्र भङ्गानां द्विसप्तनि ७२००, एवं सर्वेऽपि मिलिताः, सप्तषष्ठिसहस्राणि शतद्वयं च ६७२००, एवमेते एकादश समुदायाः। एत एव पूर्वोक्ताः नव चतुष्कायवधप्रक्षेपात् द्वादश भवन्ति, तत्र चाष्टादश सहस्राणि १८०००, अथवा त्रिकायवधभयप्रक्षेपात् द्वादश भवन्ति, तत्र चतुर्विंशतिभङ्गकसहस्राणि २४०००, एव त्रिकायवधजुगुप्साप्रक्षेपेऽपि २४०००, अथवा द्विकायवधभयजुगुप्साप्रक्षेपात् द्वादश अत्राप्यष्टादश

एवं द्विकायवधजुगुप्साप्रक्षेपेऽपि २२८००, अथवा भयजुगुप्साप्रक्षेपात् द्वादश, तत्रैकनवतिशतानि विंशताधिकानि ९१२० एवं सर्वेऽपि द्वादश समुदायाः पञ्चाशीतिसहस्राणि विंशत्युत्तरं शतं ८५१२०, एते द्वादश समुदायाः । एत एव पूर्वोक्ता दश चतुष्कायवधप्रक्षेपात् त्रयोदश भवन्ति, प्राग्वत्तत्र द्वाविंशतिसहस्राण्यष्टौ शतानि २२८००, अथवा भयत्रिकायवधक्षेपात् त्रयोदश, तत्र त्रिंशत्सहस्राणि चत्वारि शतानि ३०४००, एवं त्रिकायवधजुगुप्साप्रक्षेपेऽपि ३०४००, अथवा द्विकायवधभयजुगुप्साप्रक्षेपात् त्रयोदश, तत्र भङ्गानां द्वाविंशतिसहस्राण्यष्टौ शतानि २२८००, सर्वोऽप्येकत्र चतुःषष्टिशतान्वितो लक्षः १०६४०० एते त्रयोदश हेतुसमुदायाः । त एव पूर्वोक्ता दश पञ्चकायवधप्रक्षेपाच्चतुर्दश भवन्ति, तत्रैकनवति शतानि विंशत्युत्तराणि ९१२०, अथवा चतुष्कायवधभयप्रक्षेपाच्चतुर्दश, तत्र द्वाविंशतिसहस्राणि अष्टौ शतानि २२८००, एवं चतुष्कायवधजुगुप्साप्रक्षेपेऽपि २२८००, अथवा त्रिकायवधभयजुगुप्साप्रक्षेपाच्चतुर्दश, तत्र भङ्गसङ्ख्यात्रिंशत् सहस्राणि चत्वारि शतानि ३०४००, सर्वेऽप्येकत्र मिलिताः पञ्चाशीतिसहस्राणि विंशत्युत्तरशतं ८५१२० एते चतुर्दश समुदायाः । त एव पूर्वोक्ता दश षट्कायवधप्रक्षेपात् पञ्चदश भवन्ति, तत्र पञ्चदश शतानि विंशत्युत्तराणि १५२०, पञ्चकायवधभयप्रक्षेपाद्वा तत्रैकनवतिशतानि विंशत्युत्तराणि ९१२०, एवं पञ्चकायवधजुगुप्साप्रक्षेपेऽपि ९१२०, अथवा चतुष्कायवधभयजुगुप्साप्रक्षेपात् पञ्चदश, तत्र द्वाविंशतिसहस्राणि अष्टौ शतानि २२८०० सर्वेऽप्येकत्र कृता द्विचत्वारिंशत्सहस्राणि पष्ठ्यधिकानि पञ्चशतानि ४२५६०, एते पञ्चदश समुदायाः । त एव पूर्वोक्ता दश षट्कायवधभययुक्ताः षोडश भवन्ति, तत्र पञ्चदश शतानि विंशत्युत्तराणि १५२० षट्कायवधजुगुप्साप्रक्षेपेऽपि १५२०, अथवा पञ्चकायवधभयजुगुप्साप्रक्षेपात् षोडश, तत्रैकनवति शतानि भङ्गानां विंशत्युत्तराणि ९१२०, सर्वेऽप्येकत्र

साखादनस्थविशेषमाह—

**सासायणम्मि रूवं चय वेयहयाण नियगजोगाणं। जम्हा नपुंस उदए वेउव्वियमीसगो नत्थि ॥ ११ ॥**

व्याख्या—साखादने रूपं त्यज वेदाहतेभ्यो निजकयोगेभ्यः यस्मान्नपुंसकोदये वैक्रियमिश्रको नास्ति पदानि। पदार्थः—सास्वादने मिथ्यात्वाभावात् प्रथमपदं गतम्, शेपाः पूर्वोक्ता नवानन्तानुबन्धिविकल्पाभावाद्दश अस्मिन् चक्रे १—१—१—१—२—४

१३—३—६—५—२—४

प्रथमं वेदैः योगान् हत्वा रूपमपनयेत्, एकैकवेदोदये त्रयोदश योगास्त्रिभिर्वेदैरेकोनचत्वारिंशत् नपुंसकोदये न भवति वैक्रियमिश्रः, शेषाः अष्टत्रिंशत् ३८ एते चैकैके कायवधे अतः षड्गुणा अष्टाविंशत्यधिकं शतद्वयं एते चैकैकेन्द्रियव्यापारेऽपि भवन्ति, अतः पञ्चगुणं चत्वारिंशदधिकान्येकादश शतानि ११४० एतान्येकैके युग्मेऽतो अशीत्यधिकानि द्वाविंशतिशतानि २२८० एतान्येकैके कषायोदये अतश्चतुर्गुणानि विंशत्यधिकान्येकनवतिशतानि ९१२० एते हेतुदशकसमुदायाः। एवं शेपेष्वपि भावना कार्या ॥ ११ ॥

दश पूर्वोक्ता एव द्विकायवधप्रक्षेपादेकादश तत्र प्राग्वत् द्वाविंशतिसहस्राण्यष्टौ शतानि २२८००, भयप्रक्षेपाद्वा एकादश तत्रैकनवतिशतानि विंशत्युत्तराणि ९१२०, एवं जुगुप्साप्रक्षेपेऽपि ९१२०, सर्वेऽप्येकादश हेतुसमुदाया एकचत्वारिंशत्सहस्राणि चत्वारिंशदधिकानि ४१०४० एते एकादश समुदायाः। पूर्वोक्ता दश त्रिकायवधप्रक्षेपात् द्वादश भवन्ति, तत्र प्राग्वत् आशतानि त्रिंशत्सहस्राणि चत्वारि शतानि ३०४००, अथवा भयद्विकायवधप्रक्षेपात् द्वादश, तत्र द्वाविंशतिसहस्राण्यष्टौ शतानि २२८००,

एते पञ्चदश समुदायाः । त एव पूर्वोक्ता दश षट्कायवधभयप्रक्षेपात् षोडश भवन्ति, तत्र षड्भङ्गसहस्राणि ६०००, षट्कायवधजुगुप्साप्रक्षेपेऽपि ६०००, षट्कायवधानन्तानुवन्धिप्रक्षेपेऽष्टसप्ततिशतानि ७८०० पञ्चकायवधभयजुगुप्साप्रक्षेपे षट्त्रिंशत्सहस्राणि ३६०००, पञ्चकायवधभयानन्तानुवन्धिप्रक्षेपे षट्चत्वारिंशत्सहस्राणि अष्टौ शतानि ४६८००,एव पञ्चकायवधजुगुप्सानन्तानुवन्धिप्रक्षेपेऽपि ४६८०० चतुष्कायवधभयजुगुप्सानन्तानुवन्धिप्रक्षेपे सप्तदशसहस्राधिकं लक्षं ११७०००, एते सर्वेऽपि षोडश हेतुसमुदायाः द्वेलक्षे षट्षष्टिसहस्राणि चत्वारि शतानि २६६४००, एते षोडश समुदायाः । त एव पूर्वोक्ता दश षट्कायवधभयजुगुप्साप्रक्षेपेण सप्तदश हेतवो भवन्ति, तत्र भङ्गानां षट्सहस्राणि ६०००, षट्कायवधभयानन्तानुवन्धिप्रक्षेपेऽष्टसप्ततिशतानि ७८००, एवं षट्कायवधजुगुप्सानन्तानुवन्धिप्रक्षेपेऽपि ७८००, पञ्चकायवधभयजुगुप्सानन्तानुवन्धिप्रक्षेपे षट्चत्वारिंशत्सहस्राण्यष्टौ शतानि ४६८००, एवं सर्वेऽपि सप्तदश हेतुसमुदायाः अष्टषष्टिसहस्राणि चत्वारि शतानि ६८४००, एते सप्तदश हेतुसमुदायाः । त एव पूर्वोक्ता दश षट्कायवधभयजुगुप्सानन्तानुवन्धिप्रक्षेपादष्टादश हेतवो भवन्ति, तत्राष्टसप्ततिशतानि भङ्गानां ७८००, एवं मिथ्यादृष्टेः, सर्वेऽप्येकत्र हेतुसमासा मिलिताः चतुस्त्रिंशल्लक्षाः सप्तसप्ततिसहस्राणि षट्शतानि ३४७७६०० मिथ्यादृष्टिहेतवः समाप्ताः ॥ ९ ॥

अनन्तानुवन्धिविकल्पितोदयकारणमाह—

अणउदयरहियमिच्छे जोगा दस कुणइ जं ण सो कालं। अणणुदओ पुण तदुवलगसम्मदिट्ठिस्स मिच्छुदए॥१०॥

व्याख्या—अनन्तानुबन्ध्युदयरहितमिथ्यादृष्टौ योगा दश करोति यतो न स कालं अनन्तानुबन्धिअनुदयः पुनः, तदुद्वलकसम्यग्दृष्टेः, मिथ्यात्वोदय इति पदानि, पदार्थस्तु व्याख्यात एवास्याः ॥ १० ॥

कलक्षं १२००००, एवं त्रिकायवधजुगुप्साप्रक्षेपेऽपि १२००००, त्रिकायवधानन्तानुबन्धिप्रक्षेपे लक्षं षट्पञ्चशत्सहस्राणि १५६०००, द्विकायवधभयजुगुप्साप्रक्षेपेण च त्रयोदश, तत्रापि नवतिसहस्राणि ९००००, द्विकायवधभयानन्तानुबन्धिप्रक्षेपे लक्षं सप्तदशसहस्राणि भङ्गानां ११७०००, एवं द्विकायवधानन्तानुबन्धिजुगुप्साप्रक्षेपेऽपि ११७०००, एवं त्रयोदशसमुदाय-हेतूनां सर्वसङ्ख्या अष्टौ लक्षा षट्पञ्चाशत्सहस्राणि शतान्यष्टौ ८५६८००, गतास्त्रयोदश हेतव इति। त एव पूर्वोक्ता दश पञ्चकायवधयुक्ताश्चतुर्दश भवन्ति, तत्र षट् पञ्चकसंयोगाः प्राग्वत् षट्त्रिंशद्भङ्गसहस्राणि ३६०००, चतुष्कायवधभयप्रक्षेपाच्चतुर्दश नवतिभङ्गकसहस्राणि ९००००, चतुष्कायवधजुगुप्साप्रक्षेपेऽपि ९००००, चतुष्कायवधानन्तानुबन्धिप्रक्षेपे लक्षं सप्तदश सहस्राणि ११७०००, त्रिकायवधभयजुगुप्साप्रक्षेपे विंशत्युत्तरं लक्षं १२००००, त्रिकायवधभयानन्तानुबन्धिप्रक्षेपे षट्पञ्चाशत्स-हस्राणि लक्षं १५६०००, एवं त्रिकायवधजुगुप्सानन्तानुबन्धिप्रक्षेपेपि १५६०००, द्विकायवधभयजुगुप्साऽनन्तानुबन्धिप्रक्षेपे सप्तदशोत्तरं लक्षं ११७०००, सर्वेऽपि चतुर्दश हेतुसमुदाया अष्टौ लक्षा द्व्यशीतिसाहस्राणि ८८२०००. एते चतुर्दश हेतुसमुदायाः। त एव पूर्वोक्ता दश षट्कायवधयुक्ताः पञ्चदश भवन्ति, तत्र षट्काययोग एकस्तत्र षट्सहस्राणि प्राग्वत् ६०००, पञ्चकाय-वधभयप्रक्षेपाच्च पञ्चदश, तत्र भङ्गानां षट्त्रिंशत्सहस्राणि ३६०००, एवं पञ्चकायवधजुगुप्साप्रक्षेपेऽपि ३६०००, पञ्चकायवधा-नन्तानुबन्धिप्रक्षेपे षट्चत्वारिंशत्सहस्राण्यष्टौ शतानि ४६८००, चतुष्कायवधभयजुगुप्साप्रक्षेपे नवतिसहस्राणि९००००, चतुष्का-यवधभयानन्तानुबन्धिप्रक्षेपे सप्तदशोत्तरं लक्षं ११७०००,एवं चतुष्कायवधजुगुप्सानन्तानुबन्धिप्रक्षेपेऽपि११७०००, त्रिकायवधभ-यजुगुप्सानन्तानुबन्धिप्रक्षेपे षट्पञ्चाशत्सहस्राधिकं लक्षं१५६०००,पञ्चदशहेतुसमुदायानां षड्लक्षा अष्टचत्वारिंशच्छतानि६०४८००,

त्रिंशत्, एकैकेन्द्रियव्यापारे पूर्वोक्तास्त्रिंशदेवं सार्धं शतं, एकैकयुग्मे सार्धं शतमेवं त्रीणि शतानि एकैकवेदे त्रीणि शतानि वेदत्रैविध्यादेव नव शतानि, एकैककषाये नवशतानि कषायचातुर्विध्यादेव षट् त्रिंशच्छतानि। तान्यपि योगानां दशविधत्वात् षट्त्रिंशत्सहस्राणि भवन्ति, ३६००० इयन्त एव दश हेतवः। त एव दश हेतवो भययुक्ता एकादश समुदाया भवन्ति, यतस्तद्विभाषोदयसङ्ख्यायां षट्त्रिंशत्सहस्राण्येव ३६०००, एवं जुगुप्साप्रक्षेपेऽपि ३६०००, अथवाऽनन्तानुबन्धिप्रक्षेपादेकादश तत्र योगत्रयोदशकरणे षट्चत्वारिंशत्सहस्राण्यष्टौ शतानि भङ्गानां ४६८००, अथवा कायद्वयवधसंयोगप्रक्षेपादेकादश ते च पञ्चदश द्वियोगाः, ततः प्राग्वल्लब्धानि भङ्गानां नवतिसहस्राणि ९००००, सर्वे द्वे लक्षेऽष्टाशीतिशतानि २०८८०० एकादश समुदाया एते। एत एव दश संयोगा भयजुगुप्सायुक्ताः द्वादश संयोगा भवन्ति, सङ्ख्यया षट् त्रिंशत्सहस्राणि ३६०००, अथवा भयानन्तानुबन्धियुक्तास्तत्र त्रयोदश योगास्ततः षट्चत्वारिंशत्सहस्राणि अष्टौ शतानि च ४६८००, जुगुप्सानन्तानुबन्धिप्रक्षेपेऽपि ४६८००, अथवा त्रिकायवधप्रक्षेपात् द्वादश स्युः, तेऽपि विंशतिः, ततः प्राग्वल्लब्धा भङ्गाः, लक्षं विंशतिसहस्राणि १२००००, भयद्विकायवधक्षेपाल्लब्धानि प्राग्वन्नवतिसहस्राणि ९००००, एवं जुगुप्साद्विकायवधक्षेपेऽपि ९००००, अनन्तानुबन्धिद्विकायवधक्षेपे प्राग्वल्लब्धानि, लक्षं सप्तदशसहस्राणि ११७०००, पञ्च लक्षाः षट् चत्वारिंशत्सहस्राणि षट् शतान्येते सर्वेऽपि द्वादश समुदाया हेतूनामिति ५४६६००, त एव पूर्वोक्ता दश भयजुगुप्सानन्तानुबन्धियुक्तास्त्रयोदश भवन्ति, अत्र त्रयोदश योगा भङ्गानां षट्चत्वारिंतसहस्राण्यष्टौ शतानि ४६८००, चतुष्कायवधप्रक्षेपाच्च त्रयोदश भवन्ति, तत्र पञ्चदश भङ्गास्ततः प्राग्वल्लब्धानि हेतुत्रयोदशकानां नवतिसहस्राणि ९००००, त्रिकायवधभयप्रक्षेपे विंशतिसहस्रोत्तरं भङ्ग-

ष्टिः प्राप्तमिथ्यात्वोदयस्यापि सतामपि न सङ्क्रमावलिकां यावदनन्तानुबन्धिनामुदयस्तदुदयाभावे च मरणाभावाच्च न भवान्तरभाविनो वैक्रियौदारिकमिश्रकार्मणा भवन्ति, अनन्तानुबन्धिभयजुगुप्साविकल्पितोदयाः चत्वार उत्तरगुणेषु प्रागुपन्यस्तहेतुनामभावं सूचयतीति गाथार्थः ॥ ७ ॥

प्रकृतिव्यत्यासादनेके दशका भवन्ति, तत्प्रयोगमाह–

**इच्चेसिमेगगहणे तस्संखाभंगया उ कायाणं । जुयलस्स जुगं चउरो सया ठ्वेज्जा कसायाणं ॥ ८ ॥**

व्याख्या–इत्येषामेकग्रहणे तत्सङ्ख्याभङ्गकास्तु कायानां । युगलस्य युगं चत्वारः सदा स्थापयेत् कषायाणामिति पदानि । पदार्थस्तु–मिथ्यात्वमित्येकग्रहणे तत्सङ्ख्यापञ्चकाङ्कं स्थापयेत्, कायानां त्वेककद्विकत्रिकचतुष्कपञ्चषट् संयोगान् यथाप्राप्तान् स्थापयेत्, एकग्रहणे च षट् । अन्यतरैकेन्द्रियग्रहणेन तत्सङ्ख्या पञ्च, युगलस्य ग्रहणे युगमिति द्वौ, वेदस्येत्येकग्रहणे तत्सङ्ख्या त्रीणि, कषायाणां क्रोधसञ्ज्वलनसम्भवेऽपि बहुवचननिर्देशाच्चत्वारः स्थापयेत्, योगस्येत्येकपदनिर्देशात् तत्सङ्ख्या दशात्र, एषा अङ्करचना ॥ ५–६–२–३–४–१० इति गाथार्थः ॥ ८॥ ५ ॥ चक्राङ्करचनतः सङ्ख्यानयनमाह–

**जा बायरो ता घाओ विगप्प इइ जुगवबंधहेऊणं । अणबन्धिभयदुगुछाण चारणा पुण विमज्झेसु ॥ ९ ॥**

व्याख्या–यावद् बादरकषायः तावद् घातो विकल्पा इति, युगपद्बन्धहेतूनां अनन्तानुबन्धिभयजुगुप्सानां चारणा पुनर्विमध्येष्विति पदानि । पदार्थस्तु–यावद्बादरकषायः तावदवस्थिताङ्कानां घातः परस्परगुणनं विकल्पा युगपद्बन्धहेतूनां भेदा भवन्ति, इत्यनेन प्रकारेण एतदेव भावयति, पञ्चधा मिथ्यात्वं तद्भेदात्पञ्च भेदा एकैकमिथ्यात्वभेदे कायभेदाः षड् भवन्ति

**दस दस नव नव अडपंच जइतिगे दुदुग सेसयाणेगो। अड सत्त सत्त सत्तग छ द्दो दो दो इगि जुया वा ॥६॥**

व्याख्या—दश दश नव नवाष्टौ पञ्च यतित्रिके द्विद्विकं शेषकाणां एकः अष्ट सप्त सप्त सप्तक षट् द्वि एकयुता वेति पदानि। पदार्थस्तु—युगपत्कालभाविनो मिथ्यादृष्टौ जघन्यादशोत्कृष्टतोऽष्टादश तदन्तर्गता मध्यमा बन्धहेतवो भवन्ति, एवं सास्वादने जघन्या दशोत्कृष्टाः सप्तदश, सम्यग्मिथ्यादृष्टौ जघन्या नवोत्कृष्टाः षोडश, अविरते च, देशविरते जघन्या अष्टावुत्कृष्टतः चतुर्दश, प्रमत्ताप्रमत्तापूर्वकरणेषु जघन्याः पञ्चोत्कृष्टाः सप्त, अनिवृत्तिबादरे जघन्येन द्वौ त्रय उत्कृष्टतः, सूक्ष्मसम्परायादीनां गाथापूर्वार्द्धोक्ता एव द्वेकसङ्ख्या भवति, द्वितीयार्द्धोक्तानां तेषामसम्भवात्, शेषाणां पूर्वार्द्धोक्ता जघन्या, उभयोक्ता यथासङ्ख्येन उत्कृष्टास्तदन्तर्भाविनो मध्यमा हेतवो भवन्तीति गाथार्थः ॥ ६ ॥ १०-१०-९-९-८-५-५-२-२-१-१-१

युगपत्कालभाविहेतुसमुदायानां प्ररूपणाय यंत्रकमाह— ८-७-७-७-६-२-२-२-१

**मिच्छत्तएक्ककायादिघायअण्णयर अक्खजुयलुदओ। वेयस्स कसायाण य जोगस्सणभयदुगुंछा वा ॥ ७ ॥**

व्याख्या—मिथ्यात्वं एककायादिघातोऽन्यतराक्षयुगलोदयः, वेदस्य कषायाणां च योगस्य अनन्तानुवन्धिभयजुगुप्सा वेति पदानि। पदार्थस्तु—मिथ्यादृष्टिहेतुदशकसमुदायस्यावयवाभिधानानि, प्रथमं मिथ्यात्वं, द्वितीयः षट्कायान्यतरस्य वधः, तृतीयः पञ्चेन्द्रियान्यतरस्य स्वविषयाविरतित्वेन व्यापार इति वाक्यशेषः, हास्यरतिअरतिशोकयुगलान्यतरोदयात् पञ्च षष्ठो वेदान्यतरादयः, अप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनानां क्रोधाद्यन्यतरत्रिकं एवं नव योगस्य त्रयोदशान्यतरस्य दशान्यतरस्य वा व्यापार इति वाक्यशेष इति, दश अनन्तानुवन्ध्युदये त्रयोदश भवन्ति, न दश योगा, यतः समुद्वलितानन्तानुवन्धिनः सम्यग्दृ-

गुणेष्वेवोत्तरहेतुसम्भवमाह—

**पणपण्णपण्णतियछहियचत्तगुणचत्तछक्कचउसहिया।। दुजुय य वीस सोलस दस नव नव सत्तहेऊ उ ॥ ५ ॥**

व्याख्या—पञ्चपञ्चाशत् पञ्चाशत्त्रिकषट्काभ्यां अभ्यधिका चत्वारिंशत् एकोनचत्वारिंशत् षट्चतुःसहिता द्वियुता च विंशतिः षोडश दश नव नव सप्त हेतवस्त्विति पदानि, पदार्थः—आहारकशरीरद्विकवर्जाः सर्वोत्तरहेतवो मिथ्यादृष्टौ भवन्ति, त एवापगतपञ्चमिथ्यात्वाः पञ्चाशत्सास्वादने भवति, त एवानन्तानुबन्धिकषायकार्मणौदारिकवैक्रियमिश्रसप्तकवर्जास्त्रिचत्वारिंशत्सम्यग्मिथ्यादृष्टौ भवन्ति, एत एव पूर्वोक्ताः पञ्चाशदनन्तानुबन्धिरहिताः षट्चत्वारिंशदविरतस्य भवन्ति, त एव पूर्वोक्तास्त्रिचत्वारिंशत् त्रसकायाविरत्यप्रत्याख्यानकषायरहिता वैक्रियमिश्रशरीरयुक्ता एकोनचत्वारिंशद्धेतवो देशविरते भवन्ति, एत एव एकोनचत्वारिंशत् एकादशाविरतिप्रत्याख्यानावरणचतुष्करहिता आहारकशरीरद्वययुक्ताः प्रमत्ते षड्विंशतिर्भवन्ति, त एव षड्विंशतिः वैक्रियाहारकमिश्राभ्यां रहिताश्चतुर्विंशतिरप्रमत्ते, त एवाहारकवैक्रियाभ्यां रहिताः द्वाविंशतिः अपूर्वकरणे, त एव हास्यादिषट्करहिताः षोडशानिवृत्तिबादरे, त एव वेदत्रयसञ्ज्वलनत्रयरहिता दश सूक्ष्मसम्पराये भवन्ति, औदारिकमनोवाक्चतुष्कयोगा नवोपशान्तक्षीणमोहयोर्बन्धहेतवो भवन्ति, मनोवागौदारिकद्विकानि कार्मणं चैते सप्त सयोगिनि हेतवो भवन्ति, शरीरस्थस्याप्ययोगिनो बन्धाभावः क्रिया भावादिति, तुशब्दो विशेषणार्थः, किं विशेषयति ? पर्याप्तसंज्ञिजीवस्थानस्यैते विशेषाः, शेषाणामेकमनभिगृहीतं मिथ्यात्वमेवं शेषहेतवोऽपि सम्भविनो भावनीया इति गाथार्थः ॥५॥

सत्तामात्रहेतवोऽभिहिता युगपत्कालभाविनो जघन्यमध्यमोत्कृष्टानाह—

श्रेय इति भावः, प्रथमः चकारः समुच्चये द्वितीयचकारोऽनुक्तसूचकः, 'तेसट्ठा तिन्नि सया' इत्यादि, अथवा 'जावइया वयणपहा' इत्यादि, एवकारोऽवधारणे, बन्धहेतुत्वे पञ्चैव नाभ्यधिकानि, शेषा विशेषास्तदन्तर्गता एव द्रष्टव्या इति गाथार्थः ॥२॥

शेषोत्तरभेदानाह—

**छक्कायवहो मणइंदियाण अजमो असंजमो भणिओ। इति बारसहा सुगमा कसाय जोगा उ पुव्वुत्ता ॥३॥**

व्याख्या—षट्कायवधो मनइन्द्रियाणामयमोऽसंयमो भणित इति द्वादशधा, सुगमाः कषाययोगास्तु पूर्वोक्ता इति पदानि। पदार्थः—पृथिव्यप्तेजोवायुवनस्पतित्रसवधभेदात् षड्भेदोऽसंयमः स्पर्शनरसनघ्राणचक्षुःश्रोत्राणां स्वविषयगृद्धावनिवारणं, मनसश्च सत्यादिचतुर्भेदावस्थितस्यैव यदभ्यधिकं भोगादिष्वसन्तोषः, तुशब्दाद्वाक्काययोरप्ययमः इत्यनेन प्रकारेण द्वादशविधोऽसंयमो भणितः, षोडश कषायाः नव नोकषायाः सुज्ञाताः, योगास्तु पुनः पूर्वोक्ता नोच्यन्त इति गाथार्थः ॥ ३ ॥

मूलहेतून् गुणस्थानेषु योजयितुकाम आह—

**चउपच्चइओ मिच्छे तियचउ मीससासणाविरए। दुगपच्चओ पमत्ता उवसंता जोगपच्चइओ ॥ ४ ॥**

व्याख्या—मिथ्यादृष्टौ चतुःप्रत्ययः—चतुर्हेतुको बन्धः, सम्यग्मिथ्यादृष्टिसास्वादनाविरतेष्वविरतिकषाययोगप्रत्ययो बन्धो गुणप्रत्यययोच्चारणात् त्रयोदशजीवस्थानेष्वपि चत्वारो हेतवः, संज्ञिनि करणापर्याप्तके त्रयो वा, देशविरतस्य किञ्चिन्न्यूनास्त्रय एव, यतस्त्रसैकदेशादविरतिपरिणामाच्चासौ निवृत्तः, प्रमत्तादारभ्य सूक्ष्मसम्परायं यावत्कषाययोगप्रत्ययो बन्धः, उपशान्तक्षीणमोहसयोगिनां योगहेतुको बन्धः, अयोगिनो बन्धाभावो हेत्वभावादिति गाथार्थः ॥ ६ ॥

उक्तं वन्धव्यद्वारम् । अधुना चतुर्थं हेतुद्वारमुच्यते—

**बंधस्स मिच्छ अविरइ कसाय जोगा य हेयवो भणिया । ते पंच दुवालसपण्ण–वीसपण्णरसभेइल्ला ॥१॥**

व्याख्या—वन्धस्य मिथ्यात्वाविरतिकषाययोगाश्च हेतवोभणिताः, ते पञ्चद्वादशपञ्चविंशतिपञ्चदशभेदवन्त ' इति पदानि । पदार्थस्तु जीवकर्मपुद्गलसंश्लेषो वन्धस्तस्य मिथ्यात्वाविरतिकषाययोगाश्चत्वारो मूलहेतवो भणिताः, चकारोऽनुक्तसमुच्चयार्थः, ' पंडणीय अंतरातिय ' इत्यादि भातकर्म विशेषहेतवोऽशेषाः सङ्गृहीताः, तेषां मूलहेतूनां उत्तरभेदसङ्ख्या यथासङ्ख्येन पञ्च द्वादश पञ्चविंशतिः पञ्चदशेति गाथार्थः ॥ १ ॥

तानेव भेदानभिधातुकाम आह—

**आभिग्गहियं अणभिग्गहियं च अभिणिवेसियं चेव । संसइयमणाभोगं मिच्छत्तं पंचहा होइ ॥२॥**

व्याख्याः—अभिगृहीतं अनभिगृहीतं च आभिनिवेशिकं च एव सांशयिकमनाभोगं मिथ्यात्वं पञ्चधा भवति, इति पदानि । पदार्थस्तु–अभि–आभिमुख्येन तत्त्वबुद्ध्या गृहीतं यथा भौतभागवतवौद्धादिभिः, न अभिगृहीतं अनभिगृहीतं यथैकद्वि-त्रिचतुरिन्द्रियैर्भद्रकैश्च, अभिनिवेशे भवं आभिनिवेशिकं अर्हत्प्ररूपितपदार्थमोद्दलनं गोष्ठामाहिलस्येव, संशये भवं सांशयिकं जीवादि-पदार्थेष्वेकदेशाश्रद्धानम्, अथ (इदं) सर्वज्ञप्ररूपितं नवेति, आभोगनमाभोगो नाभोगः अनाभोगः–आगमस्यापर्यालोचोऽज्ञानमेव

---

१ ' प्रत्यनीकान्तरायिक '

वसरं स्वभवान्तसमये आयुषां, ज्ञानान्तरायदर्शनचतुष्कस्य (करूपाणां) चतुर्दशानां क्षीणकषायान्तसमये, चरमोदयाः नामनवकं-मनुष्यगतिः पञ्चेन्द्रियजातिः त्रसस्रुभगादित्रितये तीर्थङ्करं चेति, उच्चैर्गोत्रं सातमसातं चैतासां द्वादशानां अयोग्यन्तसमये, सञ्ज्वलन-लोभस्य सूक्ष्मसम्परायान्ते, वेदकस्य स्वक्षयान्तसमये, स्त्रीनपुंसकयोः क्षपकश्रेण्यां बादरकषायस्य सङ्ख्येयेषु भागेष्वतीतेषु तदु-दयान्तसमये, स्वविपाकानुभवनं यतोऽन्त्यसमयेऽपि भवत्यतः एता उदयवत्यः, यद्यपि सातासातयोः स्त्रीनपुंसकयोश्च अनुदयव-तीत्वमपि सम्भवति, तथाऽप्युत्तमगुणाश्रयणादुदयवतीत्वं ग्राह्यम्, । शेषं तु चतुर्दशोत्तरशतमनुदयवतीनां, कथं ? नाम्नो नवकत्र-योदशकवर्जिता एकसप्ततिः सुज्ञाना नीचैर्गोत्रं च एता उदयगतासु स्वजातीयासु प्रक्षिप्य परानुभावेनोपान्त्यसमयेऽनुभवत्ययोगीति, एवं क्षीणकषायो निद्राद्वयं, मिथ्यात्वसम्यग्मिथ्यात्वे तदपि सम्यक्त्वे प्रक्षिप्य सप्तकक्षपकोऽनुभवति, अनन्तानुबन्धिनस्तु सप्तकक्षपकः तेषां क्षपणसमये तद्दलं बध्यमानासु चारित्रमोहनीयप्रकृतिषु गुणसङ्क्रमेण सङ्क्षिपति, तदनुभावं विधाय उदयावलिकागतं उदयगतासु सङ्क्रमयति तदनुभावेनानुभवति, तेष्वयं क्षपणविधिः स्थावरसूक्ष्मसाधारणातपोद्योतैकेन्द्रियविक-लेन्द्रियनारकद्विकतिर्यग्द्विकप्रकृतयः त्रयोदश बध्यमानायां यशःकीर्त्तौ, ता अनुदयवतीः, तदनुभावात्-तद्रसविपाकविधा-यिगुणसङ्क्रमेण सङ्क्रमयति, तासामुदयावलिकागतं दलं नाम्न उदयगतासु च प्रक्षिप्य तद्व्यपदेशेनानुभवति, स्त्यानर्द्धित्रिकमप्येवं दर्शनावरणचतुष्के प्रक्षिपति, उदयागतं तदनुभावेनानुभवति, एवमुक्तशेषा अष्टौ कषायास्तथा हास्यादिषट्कं पुरुषवेदं सञ्ज्वलना उत्तरोत्तरप्रक्षेपेणानुभवति, अतोऽनुदयवत्य इति गाथार्थः ॥ ६७ ॥

समाप्तं तृतीयद्वारं ग्रन्थशतैः सप्तभिः ७०० ॥

आयुश्चतुष्कवर्जिताः शेषाः षष्टिप्रकृतयः उदयवन्धोत्कृष्टा इति, कथमित्युच्यते. मनुष्यादिः, यथायोगं मिथ्यादृष्टिरनुदये पञ्चदशानां उत्कृष्टस्थितिं बन्धेनैव करोति, अनुदयबन्धोत्कृष्टा इति। शेषाः पञ्चेन्द्रियजातिः, वैक्रियद्विकं, हुण्डसंस्थानं, पराघातोच्छ्वासोद्योताशुभविहायोगति नामध्रुवबन्धिन्यो नवास्थिरादिषट्कं, त्रसादिचतुष्कं, नीचासातं, षोडश कषाया, मिथ्यात्वं, ज्ञानान्तरायदशकं, दर्शनचतुष्कं, एताः षष्टिरुदयबन्धोत्कृष्टाः, विशेषतः प्रतिप्रकृति कर्म्मप्रकृतिः भावनीया, आयुषां परस्परसङ्क्रमणं नास्ति, बद्धमप्यायुर्दलं न पूर्वबद्धस्योपचयाय भवति, पृथगवतिष्ठते, अतोनैकेनापि प्रकारेणोत्कृष्टा स्थितिसत्कर्मता भवति, अतः संज्ञाचतुष्टयातीतानीति गाथार्थः ॥ ६५ ॥

क्षपकश्रेण्युपयोग्यभिधानद्वयमभिधातुकाम आह—

**चरमसमयम्मि दलियं जासिं अण्णत्थ संकमे ताओ। अणुदयवइ इयराओ उदयवई होन्ति पयईओ ॥६६॥**

व्याख्या—'चरमसमये' अन्त्यसमये, दलं यद् व्यवस्थितं तत् यासामन्यत्र अन्यासु प्रकृतिषु सङ्क्रमयेज्जीवः परिणामविशेषेण नयेत्, अन्यप्रकृतिव्यपदेशेनानुभवेत् न स्वोदयेनेति भावः ता अनुदयवत्यः, इतरा याः स्वोदयेन चरमसमये जीवोऽनुभवति ता उदयवत्य इत्यभिधानयद्वयलक्षणमिति गाथार्थः ॥६६॥

ता एवाभिधातुकाम आह—

**णाणंतरायआउग-दंसण चउवेयणीयमपुमित्थी। चरिमुदयउच्चवेयग-उदयवई चरिमलोभो य ॥६७॥**

व्याख्या—ज्ञानान्तरायायुष्कदर्शनचतुर्वेदनीयापुंस्त्रियः चरमोदयोच्चवेदका उदयवत्यश्चरमलोभश्चेति पदानि। पदार्थौ यथा-

उदयकालेऽनुभूयमानानां स्वबन्धोत्कृष्टं स्थितिसत्कर्म यासां ता उदयबन्धोत्कृष्टाभिधाना एवमनुदये बन्धादुत्कृष्टं स्थितिसत्कर्म यासां ता अनुदयबन्धोत्कृष्टा, उदयेऽन्याभ्यः सङ्क्रमेण उत्कृष्टं स्थितिसत्कर्म यासां ता उदयसङ्क्रमोत्कृष्टाः, अनुदये सङ्क्रमेण उत्कृष्टं स्थितिसत्कर्म यासां ताः अनुदयसङ्क्रमोत्कृष्टा इति गाथार्थः ॥ ६२ ॥ ता एवाह–

**मणुगइसायं सम्मं थिरहासाईछवेयसुभखगई । रिसभचउरंसगाईपणुच्च उदसंकमुक्कोसा ॥ ६३ ॥**

व्याख्या–मनुष्यगतिः सातं सम्यक्त्वं स्थिरादिषट् हास्यादिषट् वेदत्रयं शुभविहायोगतिः, ऋषभादिपञ्च संहननानि, चतुरस्रादिपञ्चसंस्थानानि, उच्चैर्गोत्रं, एतास्त्रिंशत्प्रकृतयः उदयसङ्क्रमोत्कृष्टाः, कथं ? आसां प्रागुपन्यस्तानां उदयप्राप्तानां विपक्षभूता नरकगत्यसातमिथ्यात्वादिषूत्कृष्टस्थितिं विधाय भूय उदयप्राप्तानामेव बन्धं करोति, बध्यमानासु तासु विपक्षदलं सङ्क्रमयति, यतः शुभानां स्वबन्धेन स्तोका भवति, अशुभानामुत्कृष्टा स्थितिः, अतः सङ्क्रमादेवोत्कृष्टा स्थितिरासामत एव तन्नाम इति गाथार्थः ॥ ६३॥

**मणुयाणुपुव्विमीसग–आहारगदेवजुयलविगलाणि । सुहुमादितिगं तित्थं अणुदयसंकमण उक्कोसा ॥६४॥**

व्याख्या—मनुजानुपूर्वी सम्यग्मिथ्यात्वं आहारकयुगलं देवयुगलं विगलेन्द्रियजातित्रिकं सूक्ष्मादित्रिकं तीर्थङ्करनाम एताः त्रयोदशानुदयसङ्क्रमोत्कृष्टाः, कथमित्युच्यते ? मिथ्यादृष्टिमनुष्यस्य एता अनुदयप्राप्ता मिथ्यात्वे नामोत्कृष्टस्थितिकाः प्रकृतीश्च बद्धा प्राग्वत्तथाविधो भूत्वा तद्बन्धक इति भावः, ततोऽनुदये सङ्क्रमयति, अतोऽनुदयसङ्क्रमोत्कृष्टा इति गाथार्थः ॥६४ ॥

**नारयतिरिउरलदुगं छेवट्ठेगिंदिथावरायावं । निद्दा अणुदयजेट्ठा उदउक्कोसापराणाऊ ॥ ६५ ॥**

व्याख्या—नारकतिर्यगौदारिकद्विकानि अन्त्यसंहननमेकेन्द्रियस्थावरातपः निद्रापञ्चकं एताः पञ्चदश अनुदयबन्धोत्कृष्टाः,

पूर्वोद्दिष्टाः सप्तविंशतिप्रकृतीराह–

**चउरंसउसहपरघाउसासपुंसगलसायसुभखगई । वेउव्वउरलसुरनरतिरिगोयदुसुसरतसतिचऊ ॥ ६० ॥**

व्याख्या–चतुरस्रर्षभपराघातोच्छ्वासपुंसकलसातशुभखगतयः । वैक्रियौदारिकसुरनरतिर्यग्गोत्रद्विकसुस्वरत्रसत्रिकचतुः पदानि, पदार्थस्तु चतुरस्रसंस्थानवज्रर्षभनाराचसंहननपराघातोच्छ्वासपुरुषवेदपञ्चेन्द्रियजातिसातशुभविहायोगतिरित्यष्टौ, वैक्रियौदारिकदेवनरतिर्यग्गोत्रद्विकैर्द्वादशं सुस्वरसुभगादेयत्रसादिचतुष्कं एताः सप्तविंशतिरुभयाः सान्तरनिरन्तरा इति गाथार्थः ॥ ६० ॥

अभिधानकारणमाह–

**समयाओ अंतमुहू उक्कोसे जाण संतरा ताओ । बंधे हियम्मि उभया निरंतरा तंमि उ जहण्णे ॥ ६१ ॥**

व्याख्या–समयादन्तर्मुहूर्त्तं उत्कृष्टो यासां सान्तरास्ताः, बन्धेऽधिके उभयाः, निरंतरास्तस्मिंस्तु जघन्य इति पदानि । पदार्थस्तु समयः कालविशेषः तस्मादारभ्य यासां नैरन्तर्येणान्तर्मुहूर्त्तं यावद् बन्धो न तत्परतः उत्कृष्टेनापि, ताः सान्तराभिधानाः, समयादारभ्याभ्यधिकमसङ्ख्येयकालेनाप्यन्तर्मुहूर्त्तं नैरन्तर्येण या वध्यन्ते ता उभयाः सान्तरनिरन्तरा इति, जघन्येनापि या अन्तर्मुहूर्त्तं यावद् वध्यन्ते नैरन्तर्येण तुशब्दात् ध्रुवबन्धिन्यश्च ता निरन्तरा इति गाथार्थः ॥ ६१ ॥

अथ प्रकृतीनां यथार्थमभिधानचतुष्टयमाह–

**उदए वाऽणुदए वा बंधाओ अण्णसंकमाओ वा । ठितिसंतं जाण भवे उक्कोसं ता तयक्खाओ ॥ ६२ ॥**

व्याख्या–उदयो वाऽनुदयो वा बन्धादन्यसङ्क्रमाद्वा स्थितिसत्कर्म यासां भवेदुत्कृष्टं तास्तदाख्या इति पदानि, पदार्थस्तु

**वोच्छिज्जंति समंचिय कमसो सेसाण उक्कमेणं तु । अट्ठण्हमजससुरतिग वेउव्वाहारजुयलाणं ॥ ५८ ॥**

व्याख्या—व्यवच्छिन्ते सममेव क्रमशः शेषाणामुत्क्रमेण तु अष्टानामयशःसुरत्रिकवैक्रियाहारकयुगलानामिति पदानि । पदार्थस्तु-शेषाणां षडशीतिप्रकृतीनां बन्धोदययोः क्रमेण व्यवच्छेदः, अष्टानामुत्क्रमेण प्रथममुदयस्य पश्चाद् बन्धस्येत्यर्थः, भावना-ज्ञानान्तरायदशकदर्शनषट्कं संस्थानषट्कं, नामध्रुवोदया द्वादश, सुस्वरदुःस्वरविहायोगत्यौदारिकयुग्मे, प्रत्येकं, वज्रऋषभनाराचं, उपघातत्रिकं, मनुजायुः सातासातोश्चायोगिनवकानां प्रकृतीनां अष्टपञ्चाशतां, बन्धकातीतेषु क्षीणकषायसयोगायोगिगुणेषु उदयः अतो भाविता एव, स्थावरनरकत्रिकजातिचतुष्कान्त्यसंहननन्पुंसकानां दशानामपि मिथ्यादृष्टौ बन्धः सास्वादनदिषूदयः दुर्भगोद्योतानादेयतिर्यक्स्त्यानर्द्धित्रिकनीचस्त्रीमध्यमसंहननचतुष्कानां पञ्चदशानां सास्वादनो बन्धकः,अविरतादिषूदयः,अरतिशोकसञ्ज्वलनलोभाः भाविता एव,एषा षडशीतिः शेषा उत्क्रमेणाष्टानामिति सुरत्रिकवैक्रियद्विकायशसां प्रमत्तादिषु बन्ध, उदयस्त्वविरते, आहारकद्विकस्या. पूर्वकरणे बन्धः, प्रमत्ते उदय, एवं भाव्यमिति गाथार्थः ॥५८॥ सान्तरास्सान्तरनिरन्तरा निरन्तरा इति प्रकृतीनां त्रैविध्यमाह—

**धुवबंधिणी तित्थयरनाम आउयचउक्क बावण्णा । एया निन्तराओ सगवीसुभय संतरा सेसा ॥ ५९ ॥**

व्याख्या—ध्रुवबन्धिन्यः तीर्थंकरनाम आयुःचतुष्कं द्वापञ्चाशत् एता निरंतराः, सप्तविंशतिरुभयाः, सान्तरा शेषा इति पदानि। पदार्थः—ध्रुवबन्धिन्यः सप्तचत्वारिंशत्पूर्वोक्तास्तीर्थङ्करनाम आयुश्चतुष्कयुक्ता द्वापञ्चाशदेता निरंतराः प्रकृतयः, सप्तविंशतिरुभया वक्ष्यमाणाः, शेषाः सान्तराः अरतिहास्यनरकाहारकद्विकान्यसाताशुभविहायोगतिस्त्रीनपुंसकातपोद्योतैकेन्द्रियविकलजातयः, आद्यरहितानि संहननसंस्थानानि, स्थिरशुभयशःस्थावरादिदशकं एता एकचत्वारिंशच्छेषा इति गाथार्थः ॥ ५९ ॥

व्याख्या–देवनरकायुर्वैक्रियषट्काहारयुगलतीर्थानां बन्धोऽनुदयकाले ध्रुवोदयानां तूदये इति पदानि, पदार्थस्तु–देवत्रिकस्य देवगतौ नरकत्रिकस्य नरकगतौ वैक्रियद्विकस्योभयत्र तत्रोदयो न बन्धस्तासां, केवलप्राप्तौ तीर्थङ्करनामोदयो, न तत्र बन्धः, आहारककरणव्यापृतस्य न बन्धोऽतः एकादशानामनुदये बन्धः भवोदयानामुदये बन्धो भवत्वादेव भावितम्, तुशब्दविशेषणाच्छेषाणां त्र्यशीतिप्रकृतीनामुदये वानुदये वा बन्धो भवति, पञ्च निद्राः पञ्चजातयः षट् संहननानि, षट् संस्थानानि, पञ्चविंशतिः कषायाः उपघातत्रिकातपोद्योतवेदनीयगोत्रयुग्मानि ४ मनुष्यतिर्यक्त्रिके ६ औदारिकविहायोगतियुग्मे ४ त्रसादिचतुष्कसुस्वरादिचतुष्कयुग्मानि १६ एतासां तिर्यग्मनुष्यगतिस्थजीवानां भवबन्धिनीनामुदयपरावर्त्त उभयं शेषाणां स्वभवयोग्यानां बन्धे परभवयोग्यानामबन्धे उदयो भावनीय इति गाथार्थः ॥ ५६ ॥ बन्धोदयव्यवच्छेदः कासाञ्चित्समकं, प्रथमं बन्धस्य पश्चादुदयस्य अन्यासां प्रथमं उदयस्य पश्चात्तु बन्धस्येति व्यत्ययेनापरासामिति त्रैविध्यं प्रकृतीनामभिधातुकाम आह–

**गयचरमलोभधुवबंधि मोहहासरतिमणुयपुव्विणं । सुहुमतिगआयवाणं सपुरिसवेयाण बंधुदया ॥ ५७ ॥**

व्याख्या–गतचरमलोभध्रुवबन्धिमोहहास्यरतिमनुजानुपूर्वीणां सूक्ष्मत्रिकातपानां सपुरुषवेदानां बन्धोदयौ, व्यवच्छिद्येते सममेवेत्युत्तरगाथायामिति पदानि । पदार्थस्तु, सञ्ज्वलनलोभवर्जा अष्टादश मोहनीयध्रुवा हास्यरतिपुंवेदैः सहैकविंशतिः २१ मनुजानुपूर्विसूक्ष्मत्रिकातपैः षड्विंशतिः २६ । आसां बन्धोदयौ समकं तिष्ठतः, कथं ? सूक्ष्मत्रिकातपमिथ्यात्वानां मिथ्यादृष्टौ, अनन्तानुबन्धिनां सास्वादने, मनुजानुपूर्वीद्वितीयकषायाणां अविरते, तृतीयकषायाणां देशविरते, हास्यरतिभयजुगुप्सानामपूर्वकरणे, सञ्ज्वलनत्रिकपुंवेदयोः बादरे, समं बन्धोदयौ व्यवच्छिद्येते इति गाथार्थः ॥ ५७ ॥

व्याख्या—उत्कृष्टस्थित्यध्यवसायैरेकस्थानिको भविष्यति, शुभानां तन्न, यतः स्थित्यसङ्ख्येयगुणा त्वनुभागा इति पदानि। पदार्थः—यैरध्यवसायविशेषैः शुभप्रकृतीनामुत्कृष्टा स्थितिर्भवति, तत्सङ्क्लेशेन एकस्थानिको रसो भविष्यतीति पराभिप्रायः, शुभानां तन्न भवति, यस्माद्—यतः स्थित्यध्यवसायेभ्योऽसङ्ख्येयगुणा अनुभागबन्धाध्यवसायाः, तुशब्दः विशेषणाय, असङ्ख्येयाध्यवसायैरप्येका स्थितिः समयवृद्धावसङ्ख्येया स्थितिविशेषाः, एकैकस्थितौ असङ्ख्येया रसस्पर्द्धकविशेषाः, एवं हि द्विस्थानिकरसस्यैवासङ्ख्येया विशेषा भवन्ति उत्कृष्टस्थितौ, न त्वेकस्थानिकरस इति गाथार्थः ॥ ५४ ॥

सत्कर्मणः सम्बन्धमाह—

**दुविहमिह संतकम्मं धुवाधुवं सूइयं चसद्देणं। धुयसंतं चिय पढमा जओ न नियमाविसंजोगो ॥ ५५ ॥**

व्याख्या—द्विविधमत्र सत्कर्म, ध्रुवाध्रुवं सूचितं चशब्देन, ध्रुवसन्त एव प्रथमाः यतो न नियमात् विसंयोग इति पदानि। पदार्थः—द्विविकल्पं सत्कर्म, ध्रुवमध्रुवं च, यत्सर्वसंसारिणामप्राप्तोत्तरगुणानां सातत्येन भवति, तद् ध्रुवं, यत्कादाचित्कभावि तदध्रुवं, चशब्देन सूचितम्, अनन्तानुबन्धिन उद्वलितान् असद्भूतान् मत्वा तानध्रुवान् यः कल्पयति तं प्रत्याह—ध्रुवा एव ते, यतस्तेषामुद्वर्त्तनमपि विसंयोगोऽपि उत्तरगुणाविर्भूतो न सर्वजीवानामतो ध्रुवाः, उत्तरगुणकृतं तु सर्वासामप्यध्रुवत्वं, न तेषामेव, सम्यक्त्वसम्यग्मिथ्यात्वतीर्थकराहारकाणामुत्तरगुणाप्राप्तौ सत्त्वात एव प्राप्तगुणान्तमध्रुवा इति गाथार्थः ॥५५॥

स्वानुदये स्वोदये उभयस्मिंश्च बन्धः यतोऽतस्त्रिविधाः प्रकृतयो भवन्ति, ता अभिधातुकामआह—

**देवनिरयाउ वेउव्विछक्कआहारजुयलतित्थाणं। बंधो अणुदयकाले धुवोइयाणं तु उदयम्मि ॥ ५६ ॥**

व्याख्या—केवलद्विकस्य सूक्ष्मः, हास्यादिषु कथं न करोत्यपूर्वः। शुभगादीनां मिथ्या दृष्टिः क्लिष्ट एकस्थानिकरसमिति पदानि. पदार्थस्तु केवलज्ञानदर्शनावरणयोः सूक्ष्मो हास्यादिचतुष्कस्यापूर्वकरणः, 'शुभगादीनां' शुभानां मिथ्यादृष्टिः स घातिक्लिष्टः क्लिष्टमिति बन्धकाले एकस्थानिकरसं न करोति न विदधातीत गाथार्थः ॥ ५१ ॥ अत्रोच्यते—

जलरेहसमकसाएवि एगठाणी ण केवलदुगस्स। जं तणुयंपि हु भणियं आवरणं सव्वघाइं से ॥५२॥

व्याख्या—जलरेखासमकषायैरपि एकस्थानिको न केवलद्विकस्य, यतस्तनुकमपि हु भणितं आवरणं सर्वघाति तयोरिति पदानि। पदार्थस्तु—जलरेखातुल्येऽपि कषायोदये एकस्थानिकरसो न भवति केवलद्विकस्य, यतस्तस्यातितनुकोऽपि सर्वघात्येव रसः प्रतिपादितः, हुशब्दस्यावधारणार्थत्वादिति गाथार्थः ॥ ५२ ॥ पुनरप्याह—

सेसासुभाणवि न जं खवगियराणं न तारिसा सुद्धी। न सुहाणंवि हु जम्हा ताणं बंधो विसुज्झंते ॥५३ ॥

व्याख्या—शेषाशुभानामपि न, यतः क्षपकेतराणां न तादृक् शुद्धिः, न शुभानामपि हु, यस्मात् तासां बन्धो विशुद्ध्यमान इति पदानि। पदार्थस्तु—ज्ञानदर्शनावरणसप्तकान्तरायपञ्चकपुरुषसञ्ज्वलनेभ्यः अन्यासां शेषाशुभानामपि नैवैक (स्थानिक) रसबन्धः, हुशब्दस्यावधारणार्थत्वात्, यतो—यस्मात्क्षपकेतराणां प्रमत्ताप्रमत्तापूर्वकरणानां सञ्ज्वलनोदयेऽपि तादृशा शुद्धिर्नास्ति यतः एकस्थानिकरसकरणसामर्थ्यं स्यात्, अतो द्विस्थानिक एव रसः, शुभानामपि स एव भवति जघन्यो नान्यो, यस्मात् शुभप्रकृतीनां मिथ्यादृष्टौ विशुध्यमाने बन्धो भवति, अतिसङ्क्लिष्टे त्वशुभानामिति गाथार्थः ॥ ५३ ॥ आह परः—

उक्कोसठितिअज्झवसाणेहिं एगठाणिओ होही। सुभियाण तं न जं ठितिअसंखगुणिया उ अणुभागा ॥५४॥

भिमायः, उच्यते न–नैवमेतत्, आयुषः परभवे यस्मात् सर्वथा नोदयः, स्वभावाविष्टत्वात्, गतयस्त्वस्मिन्नेव भवे सर्वाः सङ्क्रमेण संवेद्यन्त इति, यतो मोक्षगामिनः शेषाः अपि मनुष्यभवे क्षयं यान्ति, अतो जीवविपाकिन्य एवेति गाथार्थः ॥ १६६ ॥

क्षेत्रविपाकमाश्रित्याह–

**अणुपुव्वीणं उदओ किं संकमणेण नत्थि संतेवि । जह खेत्तहेउओ ताण न तह अण्णाण सविवागो ॥१६७॥**

व्याख्या–आनुपूर्वीणामुदयः किं सङ्क्रमणेन नास्ति ? येन ताः क्षेत्रविपाकित्वेनोपदिश्यन्ते, न जीवविपाकित्वेन गतिवत्, अत्रोच्यते, विद्यमानेऽपि सङ्क्रमे यथा तासां नियतक्षेत्रप्राधान्येन स्वकीयो विपाकोदयो न तथाऽन्यासामतः क्षेत्रविपाकिन्य एव इति गाथार्थः ॥ १६७ ॥ जीवविपाकत्वमधिकृत्याह–

**संपप्प जीवकाला काओ उदयं न जंति पगईओ । एवमिणमोहहेउं आसज्ज विसेसियं नत्थि ॥ १६८ ॥**

व्याख्या–सम्प्राप्य जीवकालौ काः उदयं न यान्ति प्रकृतयः ? । एवमेतत् ओघहेतुं आश्रित्य विशेषितं नास्तीति पदानि । पदार्थः–जीवकालौ हेतुत्वेन प्राप्य कास्ताः प्रकृतयो या उदयं न यान्ति ! ताभ्यां विना उदयाभावात्, सर्वदाऽनयोरव्यवच्छेदादिति भावः, तस्मात् सर्वा जीवविपाकिन्यो भवन्त्विति काकुः ? उच्यते–एवमेतद्धेतुसामान्यग्रहणे, विशेषहेतुग्रहणेत्वासां यथा विशिष्टाः द्रव्यक्षेत्रभवाः पुद्गलादिविपाकिप्रकृतिहेतवः एवं जीवकालयोरपि विशेषमधिकृत्य जीवविपाकिनीनामेव हेतुत्वमवसेयम्, यतस्तद्भावेऽपि सर्वासामनुदयादिति गाथार्थः ॥ १६८ ॥ रसविपाकमधिकृत्य कश्चिदाह–

**केवलदुगस्स सुहुमो हासाइसु कह न कुणइ अपुव्वो ?। सुभगाईणं मिच्छो किलिट्ठओ एगठाणिरसं ।१६९।**

गलविपाकिन्यः, किमुक्तं भवति-अकर्मपुद्गलसाहचर्येण कर्मद्रव्यस्य व्यक्तेः स्फुटता भवतीति भावः, शरीरादीनां यथाहारौषधभेषजादिभिर्दृश्यते सा प्रसभमिति, क्षेत्रप्राधान्यादुचितक्षेत्रप्राप्तावेव विपाको यासां तास्तथा, एवमुचितभवप्राप्तावेव विपाको यासां तास्तथा, भवनं भावो जीवस्यावस्थान्तरभावित्वं तद्धेतुर्यासां तास्तथा, जीवावस्थान्तरविशेषात्तासामुदयोपलब्धिर्भवतीति भावः शेषाभिधानानि ध्रुवसत्कर्माध्रुवसत्कर्मोद्वलनकर्मेत्यादीनि सुगमानि इति गाथार्थः ॥ १६४ ॥

एवमुक्ते कश्चिदाह-

**अरइरईणं उदओ किं ण भवे पोग्गलाणि संपप्प । अप्पुट्ठेहिंवि किं नो एवं कोहाइयाणंपि ? ॥ १६५ ॥**

व्याख्या-अरतिरत्योरुदयः किं न भवेत् पुद्गलान् सम्प्राप्य । अस्पृष्टैरपि किं नो एवं क्रोधादीनामपि पदानि । पदार्थस्तु-कण्टकादिद्रव्यं प्राप्यारतेः स्रक्चन्दनादि प्राप्य रतेः कस्माद्विपाकोदयो न भवति, शरीरसंस्थानादीनां पुद्गलविपाकिनीनामिव' अत्रोच्यते-अस्पृष्टैरपि पुद्गलैः किं तयोरुदयो न भवति ? अपि तु भवत्येव, यतः प्रियाप्रियकथासम्बन्धेनापि तदुदयो भवति, तथाविधजीवस्य संवेदनमित्यतो जीवविपाकित्वमेव, अन्यच्च तदुदये शुभाशुभपुद्गलैः सहायं कर्त्तव्यमेव, नैष नियमो, यथा पुद्गलविपाकिनीनां, एवं क्रोधादयोऽपि भावनीया इति गाथार्थः ॥ १६५ ॥

भवविपाकमाश्रित्याह-

**आउव्व भवविवागा गई न आउस्स परभवे जम्हा । नो सव्वहावि उदओ गईण पुण संकमेणत्थि ॥१६६॥**

व्याख्या-आयुरिव भवविपाकिन्यो गतयः, नायुषः परभवे यस्मान्नो सर्वथाप्युदयो गतीनामपि, अतो भवविपाकिन्य इत्य-

ननसंस्थानानुपूर्व्यातपोद्योतविहायोगतित्रसादिवेदहास्यरतिसातोच्चायूंषि एताः सोत्तराः षट्षष्ठिप्रकृतयो बन्धोदयाभ्यामपि परस्परं विरुद्धाः अतः परावर्त्तमाना इति गाथार्थः ॥ १६२ ॥

विपाक इति व्याख्यानयन्नाह—

**दुविहा विवागओ पुण हेउविवागाओ रसविवागाओ । एक्केक्कावि य चउहा जओ चसद्दो विगप्पेणं ॥१६३॥**

व्याख्या—द्विविधा विपाकतः पुनः हेतुविपाकतो रसविपाकतो, एकैका अपि च चतुर्धा, यतश्चशब्दो विकल्पेनेति पदानि। पदार्थस्तु—विपाकमधिकृत्य प्रकृतयो द्विधा भवन्ति, हेतुविपाका रसविपाकाश्च, हेतुप्राधान्येन विपाकनिर्देशो यासां तास्तथा, रसप्राधान्येन विपाकनिर्देशो यासां तास्तथा, पुनः भूय एकैकाः चतुर्विधा भवन्ति,तत्र हेतुविपाकाः पुद्गलक्षेत्रभवभावभेदाच्चतुर्विधाः, रसविपाका अपि चतुस्त्रिद्व्येकरसस्थानभेदाच्चतुर्विधा एव, कुत एतदवसीयते ? यतो द्वारगाथायां चशब्दो विकल्पेन कर्त्राभिप्रेत इति गाथार्थः ॥ १६३ ॥

हेतुविपाकमधिकृत्याह—

**जा जं समेच्च हेउं विवागउदयं उवेंति पगईओ । ता तव्विवागसण्णा सेसभिहाणाइं सुगमाइं ॥१६४॥**

व्याख्या—या यं समेत्य हेतुं विपाकोदयमुपयान्ति प्रकृतयः, तास्तद्विपाकसंज्ञाः, शेषाभिधानानि सुगमानीति पदानि। पदार्थस्तु—द्रव्यक्षेत्रकालभवभावाख्याः पञ्च हेतवः प्राग् येऽभिहिताः उदयं प्रति त एव प्राधान्येन व्यवस्थाप्य सर्वसाधारणकालरहिता निर्दिश्यन्ते, कर्मपुद्गलद्रव्योदये यासामकर्मपुद्गलास्तथाविधपरिणामभावे तद्भावमुपेत्योपचयहेतुत्वेन वर्त्तन्ते ताः पुद्-

पदार्थस्तु—यासामघातिकर्मप्रकृतीनां हन्तव्यविषयो नास्ति तासामपि सर्वघातिरसो भवति, रसस्थानस्पर्द्धकान्यधिकृत्य घातिकर्मसंयोगात् हेतोर्यथा चौरता भवति चौरसङ्गेनेह लोके—अस्मिन् जने, तद्वियोगेऽसर्वघातित्वं संजातमेवेति गाथार्थः ॥ १६० ॥

देशघातिविषयं प्रदर्शयन्नाह—

**घाइखओवसमेणं सम्मचरित्ताइं जाइं जीवस्स । ताणं हणंति देसं संजलणा णोकसाया य ॥ १६१ ॥**

व्याख्या—" घातिक्षयोपशमेन सम्क्त्वचारित्रे ये जीवस्य । तयोर्घ्नन्ति देशं सञ्जलना नोकषायाश्चेति पदानि । पदार्थस्तु—सर्वघातिमोहनीयस्य क्षयोपशमेन सम्यक्त्वचारित्रे ये जीवस्य तयोर्मालिन्यं कुर्वन्ति सञ्ज्वलना नोकषायाश्चोदयमाप्ता विपाकानुभवनेनानुभूयमाना इति गाथार्थः ॥ १६१ ॥ परावर्त्तनद्वारमधिकृत्याह—

**विणिवारिय जा गच्छइ बंधं उदयं व अण्णपगईए । सा हु परियत्तमाणी अणिवारेंती अपरियत्ता ॥१६२॥**

व्याख्या—विनिवार्य या गच्छति बन्धमुदयं वाऽन्यप्रकृतेः, सा हु परावर्त्तमाना, अनिवारयन्ती अपरावर्त्त'इति पदानि । पदार्थस्तु—बन्धमुदयं वा हुशब्दाधिक्यादुभयं वा विनिवार्य—विनिवर्त्यान्यस्याः प्रकृतेर्या स्वतो बन्धमुदयमुभयं वा याति सा परावर्त्तमाना, या तु बन्धोदयोभयं प्रति नान्यस्या उपघातं करोति सा अपरावर्त्तमाना, एतदेव भाव्यते—एकोनत्रिंशत्प्रकृतयः पूर्वोक्ता बन्धोदयोभयकालेषु नान्यप्रकृतेः निरोधं कुर्वन्ति, अतोऽपरावर्त्तमाना इति, षोडश कषायाः पञ्चनिद्राः, ध्रुवबन्धित्वात् यद्यप्येता एकविंशतिप्रकृतयो बन्धं प्रति परोपरोधं न कुर्वन्ति तथापि स्वोदये स्वजातीयप्रकृत्युदयनिरोधात्परावर्त्तमाना भवन्ति, स्थिरशुभास्थिराशुभप्रकृतयस्तु यद्यप्युदये न विरुद्धाः तथापि बन्धं प्रति परावर्त्तमानाः, शेषा गतीन्द्रियौदारिकादिशरीराङ्गोपाङ्गसंह-

तदेव रसस्वरूपं वक्तुकाम आह–

**जो घाएइ सविसयं सयलं सो होइ सव्वघाइरसो । सो निच्छिद्दो निद्धो तणुओ फलिहब्भहरविमलो ॥१५८॥**

व्याख्या–' यो घातयति स्वविषयं सकलं स भवति सर्वघातिरसः, सुगममर्द्धम्, स निच्छिद्रः स्निग्धः तनुकः स्फटिकभ्राहार विमल ' इति पदानि । पदार्थस्तु–सर्वघातिरसो[1] निच्छिद्रो भवति स्फटिकवत्, स्निग्धो हारवत्तनुकः सूक्ष्मोऽभ्रपटलवत्, स्फटिकाभ्रहारवद्विमला वेति गाथार्थः ॥ १५८ ॥

देशघातिस्वरूपमाह–

**देसविघाइत्तणओ इयरो कटकंबलंसुसंकासो । विविहबहुछिद्दभरिओ अप्पसिणेहो अविमलो य ॥१५९॥**

व्याख्या–' देशविघातित्वादितरः कटकम्बलांशुकसङ्काशः विविधबहुच्छिद्रभृतोऽल्पस्नेहोऽविमलश्चे'ति पदानि । पदार्थस्तु देशघातित्वाद्धेतोरितरो देशघातिरसः कटसदृशो बृहच्छिद्रविवक्षया, कम्बलसदृशो मध्यमच्छिद्रविवक्षया, अंशुकसदृशोऽतिसूक्ष्मच्छिद्रविवक्षया, एवं स्थूर[2]त्वादिविवक्षया छिद्रसङ्ख्याविवक्षया वा व्याख्या कार्या, अल्पस्नेहो वैमल्यरहितश्चेति गाथार्थः ॥१५९॥

अघातिरसस्वरूपमाह–

**जाण ण विसओ घाइत्तणंमि ताणंपि सव्वघाइरसो । जायइ घाइसमासेण चोरया चेहऽचोराणं ॥१६०॥**

व्याख्या–" यासां न विषयो घातित्वे तासामपि सर्वघातिरसो जायते घातिसमासेन, चौरता चेहाचौराणामि"ति पदानि ।

---

१ 'ताम्रभाजनवन्निश्छिद्रा घृतमिवातिशयेन स्निग्धः द्राक्षावत्तनुकस्तनुप्रदेशोपचितः स्फटिकाभ्रगृहवच्चातीव निर्मलः' इतिमल । २ 'लत्वंवि' क.

व्याख्या—'अव्यवच्छिन्न उदयो यासां प्रकृतीनां ता ध्रुवोदयाः व्यवच्छिन्नोऽपि हु सम्भवति यासा 'मध्रुवोदयास्ता' इति पदानि । पदार्थस्त्वयं—जीवकर्मसम्बन्धादव्यवच्छिन्नोऽनुसन्ततो यासामुदितकालं यावदुदयस्ता ध्रुवोदयाः, प्रतिनिवृत्तो न भवतीति भावः । यासां तु व्यवच्छिन्नोऽपि—विनाशमुपगतोऽपि भूयः प्रादुर्भवति तथाविधहेतुसम्बन्धं प्राप्य ता अध्रुवोदयाख्याः । हु शब्दो विशेषणार्थः, किमत्र विशिनष्टि ?—एतदप्राप्तोत्तरगुणानां गृह्यते, अथवा मिथ्यात्वस्य ध्रुवोदयता अप्राप्तोपशमसम्यक्त्वस्यैवेति, यत उपशमसम्यक्त्वचारित्रप्राप्तावसाधारणगुणहेतोरनुदयोऽपीष्यते, तदपगमे भूयोऽपि ध्रुवता तथैव स्थिता, न क्षायोपशमिकसम्यक्त्वसम्यग्मिथ्यात्वाभ्यां विहन्यते, यतस्तदुदये तस्यैवान्यथापरिणामपरिणतस्योदयो, यतस्ते प्रतिपतितपरिणामास्तदुदयमेव गच्छन्ति, तयोश्च तदवयवत्वादिति गाथार्थः ॥ १५६ ॥

सर्वघात्यशुभशुभद्वाराण्यधिकृत्याह—

असुभसुभत्तणघाइत्तणाइं रसभेयओ मुणेज्जाहि । सविसयघायणभेएण वा वि घाइत्तणं णेयं ॥ १५७ ॥

अशुभशुभत्वघातित्वानि रसभेदतो मन्वीथाः, स्वविषयघातनभेदेन वापि घातित्वं ज्ञेयमिति पदानि । पदार्थस्तु—शुभत्वमशुभत्वं च रसविशेषतो जानीहि, अशुभविपाकाः कटुरसा अशुभा भवन्ति, शुभविपाका जीवाल्हादप्राधान्यजनकाः शुभा भवन्ति, सर्वघातिरसाः सर्वघातिन्यो भवन्ति, देशघातिरसेन देशघातिन्यो भवन्ति, स्वविषयघातनभेदेन वा घातित्वं ज्ञेयम्, याः स्वविषयं सर्वं निघ्नन्ति ताः सर्वघातिन्यो भवन्ति, यः स्वविषयः सः प्रागेवाभिहित इति गाथार्थः ॥ १५७ ॥



१ त्वमपि.

प्राधान्यं बन्धहेतुत्वे नत्वविरतेः, तस्या अपि मोहनीयोदयहेतुत्वात्, उक्तं च-'पयडीपएसबंधा' इत्यादिनेति गाथार्थः ॥१५४॥
उदयं प्रति प्रकृतीनां हेतून् व्याख्यानयन्नाह-

दव्वं खेत्तं कालो भवो य भावा य हेयवो पंच । हेउसमासेणुदओ जायइ सव्वाण पयडीणं ॥ १५५ ॥

व्याख्या-'द्रव्यं क्षेत्रं कालो भवश्च भावश्च हेतवः पञ्च हेतुसमासेनोदयो जायते, सर्वासां प्रकृतीना'मिति पदानि । पदार्थस्त्वयम्-द्रव्यक्षेत्रकालभवभावा उदयं प्रत्येते हेतवः, चशब्दात्प्रकृतीनां क्षयक्षयोपशमोपशमभावांश्चाङ्गीकृत्य एत एव हेतवः, अन्यच्च यद्यपि कालं विना चत्वारो हेतवः प्रकृतीनां पृथक्पृथगवस्थितानां प्राधान्येन निर्दिष्टाः, तथापि समुदितास्तथाविध सयोगप्राप्तावेव हेतुत्वमर्हन्ति, एतदेव भावयति-यतो मिथ्यादृष्टिगुणस्थानेऽपि पिण्डप्रकृतयः परावर्त्तमानाश्च नैककालमुदयं प्राप्नुवन्ति, न चोदयप्राप्तानामपि तीव्रमन्दादयो विशेषाः, अतस्ते तद्विशिष्टहेतुसम्बन्धे नैव भवन्ति, यच्च प्रतिगुणं प्रकृतयो व्यवच्छिन्नाः सत्यो नोदयमर्हन्ति, तदपि जीवस्यान्यथाभवनात्, कालस्य चाभिनवत्वादप्राप्तपूर्वकत्वं हेतोः प्रसह्य गम्यते, अतस्तथाविधहेतुयोग्यानामेवोदयो भवति, अतोऽशेषाणामपि प्रकृतीनां समुदितास्तथाविधसंयोगमुपगता एवोदयहेतवो नान्यथेति । एवं हि हेतुसमासेन-सम्बन्धेन सर्वासां प्रकृतीनामुदयो, द्वितीयः चकारः समुच्चये, इति गाथार्थः ॥ १५५ ॥

उदयविषयं प्रकृतीनां ध्रुवाध्रुवत्वं दर्शयन्नाह-

अव्वोच्छिण्णो उदओ जाणं पगईण ता धुवोदइया । वोच्छिण्णोऽवि हु संभवइ जाण अधुवोदया ताओ १५६

---

१ प्रकृतिप्रदेशबन्धौ ।

स्त्रीवेदस्योदयो वरविमाने । तस्मान्निकाचितत्वादभूत्तयोर्मानवे स भवे ॥ ५ ॥ लोकेऽपि सिद्धमेतन्निगूढदोषस्तथाविधं प्राप्य ? प्रोद्गलनकरं द्रव्यं यात्युदयं नास्त्यतो दोषः ॥ ६ ॥ अन्यच्च तयोः समये न क्षायिकदृष्टिता नियमिताऽतः । आकर्षसम्भवाद् गुणपाते बन्धोऽपि न हु दुष्टः ॥ ७ ॥ इति । आह—यद्येवमपूर्वकरणगुणस्थानाद्यविभागे कतरद्धेत्वभावान्निद्राप्रचलयोर्बन्धाभावो नामध्रुवाध्रुवबन्धिप्रकृतीनां तु तस्यैव मध्यविभागे हास्यरतिभयजुगुप्सानां तदन्तभागे बन्धाभावो भवतीति, अत्रोच्यते, हुशब्दो विशेषणार्थः, किमत्र विशिनष्टि?—हेतोस्तद्योग्योदयविशेषाणामप्यभावे प्रकृतिबन्धाभावो भवतीत्येतद्विशेषयति, अत्र च गुणस्थानके हास्यरत्युदयविशेषाः प्राधान्येन बन्धहेतवः प्रतिपत्तव्याः, यतोऽध्रुवप्रकृतिबन्धे बन्धहेतव उदयविशेषाः भिन्नाः न सामान्यहेतवो, अन्यच्च अनुभागबन्धेऽपि रसस्थानानि चतुःस्थानिकादीनि कषायोदयविशेषतोऽभिहितानि, तीर्थंकराहारकायुषामाप स्वहेतूनां केचिदुदयविशेषा हेतवो न सर्वेऽपीति न्यायान्न दोषोऽयमथवा योगानां मोहनीयोदयविशेषाणां च बन्धिनां स्त्यानर्द्धित्रिकस्य चानन्तानुबन्धिनो अविरत्यादिसहकारिकारणसापेक्षा हेतव इत्येवं हेत्वभावे बन्धाभाव इत्यञ्जसैव सिद्धं, आह—यद्येवं ततोऽनन्तानुबन्ध्युदयं विनाऽपि पीठमहापीठयोस्तपस्विनोः निर्हेतुकः कथं स्त्रीवेदस्य बन्धः संवृत्तः? यत्फलं ब्राह्मीसुन्दरीभाव इति, उच्यते—"बाहुसुबाह्वोः साध्वोर्गुणकीर्त्तनजनिततीव्रसङ्क्लेशात् । जाता तयोर्गुरुं प्रति लेश्या कृष्णा तदा तीव्रा ॥ १ ॥ सा चागमेऽपि सिद्धा प्रमत्तगुणवर्त्तिनां न दोषोऽत्र । तस्या निगूहनात्तन्मायावित्वं तयोर्व्यक्तम् ॥ २ ॥ सञ्ज्वलनाऽपि च माया पूर्वनिबद्धस्य युवतिवेदस्य । स्थितिरसवृद्धिं तीव्रां करोति बन्धं विनाऽप्युदिता ॥ ३ ॥ यस्मात् स्थितिरसाघतः कथितस्तस्या विशुद्धितः समये । तस्मादवश्यवेद्यं करोति तीव्रं रसं तस्य ॥ ४ ॥ नास्ति च त्रिविष्टपाग्रे

पदार्थस्तु 'निज' आत्मीयो यो 'हेतुः' कारणं तत्सम्भवेऽपि–तत्सन्निधानेऽपि 'भजनीयो' विकल्प्यो बन्धा यासां ताः प्रकृतयोऽध्रुवबन्धिन्यो, यास्तु हेतौ सत्यभजनीयबन्धास्ता ध्रुवबन्धिन्य इति । आह–यद्येवमविरतिप्रत्यये सत्यपि सम्यग्मिथ्यादृष्ट्यविरतसम्यग्दृष्टिगुणस्थानजीवाः स्त्यानर्द्धित्रिकमनन्तानुबन्धिकषायप्रकृतीश्च कस्मान्न बध्नन्तीति, अत्रोच्यते–हेतवो ह्यत्र त्रिविधा अभिहिताः सामान्योक्ताः सामान्यविशेषोक्ता विशेषविशेषोक्ताश्च, ते हि यथोत्तरं बलवन्ता भवन्ति। प्रत्येकं च ते बन्धबन्धकभेदाद् द्वेधा। तत्र 'बंधस्स मिच्छअविरइ' इत्याद्यविशेषितस्य सामान्यस्य कर्मणोऽभिहिताः बन्धकहेतुनिरपेक्षाः बन्धसामान्योक्ताः, बन्धकानां त्वमी सामान्येनोक्ताः 'चउपच्चइओ मिच्छे'त्यादि। ये तु 'सोलस मिच्छनिमित्ता' इत्यादि, ते प्रकृतिबन्धं प्रति सामान्यविशेषोक्ताः, यत एकपक्षावधारणेन हेतुत्वं कथमुच्यते, मिथ्यात्वप्राधान्येनैव षोडश बध्यन्ते, ननु तासामेव मिथ्यात्वं हेतुः सामान्यहेतुत्वेन सर्वासां भणितत्वात्, एवमविरतिहेतुप्राधान्येनैव पञ्चत्रिंशतां बन्धः, न तु पञ्चत्रिंशतामेव, अष्टषष्टिः कषायप्राधान्येनैव बध्यन्ते, ननु अष्टषष्टीनामेव कषायहेतुत्वं, योगप्राधान्येनैव सातस्य बन्धो, नतु सातस्यैव योगैर्बन्धः, एवमेते बन्धत्वं प्रतीत्य सामान्यविशेषोक्ताः, ये तु 'पणपन्न' इत्यभिहितास्ते बन्धकानां सामान्यविशेषोक्ताः, यतो नैककालं प्रादुर्भवन्ति सम्पूर्णाः ये तु जीवगुणस्थानेषु, तद्गुणाधिष्ठिता यौगपद्येन प्रादुर्भवन्ति, ते 'देस २ नव नव' इत्यादिनाऽभिहिताः, तैश्च विशेषविशेषोक्तैः विशेषविशेषोक्तानां 'मिच्छे सोलस पणुवीस सासाणो' इत्यादीनां बन्धो भवत्येव, अतोऽनन्तानु-

---

१ चतुर्थद्वारस्य गाथा ४। २ चतुर्थद्वारस्य गाथा १९। ३ चतुर्थद्वारस्य गाथा ४। ४ चतुर्थद्वारस्य गाथा ५। ५ चतुर्थद्वारस्य गाथा ६। ६ मिथ्यादृष्टौ षोडश पञ्चविंशतिः सास्वादने' प्रा. कर्मस्तवे गाथा २।

पदार्थस्तु सुगमत्वाय विव्रियते—सम्यक्त्वं सम्यग्मिथ्यात्वं चाभव्यानां प्रभूतभव्यानां च न भवति। सम्यक्त्वे हेतौ सत्यपि तीर्थंकरनाम संयमे सत्यप्याहारकशरीरं तदङ्गोपाङ्ग च कस्यचिद् भवति, कस्यचिन्नेति, उच्चैर्गोत्रं 'वैक्रियषट्कमिति वैक्रियशरीरं तदङ्गोपाङ्गं देवनारकगत्यानुपूर्व्यः,एताः सप्त प्रकृतयोऽसम्प्राप्तत्रसत्वस्य न भवन्ति, स्थावरभावगतस्य तु उद्वलनप्रयोगेण स्थितिक्षयेण वा असत्यो भवन्ति, मनुष्यद्विकयुक्ता एता वाय्वग्निकायिकजीवमध्यगतस्योद्वर्त्त(ल)ना प्रयोगेणासत्यो भवन्ति, देवनरनारकायुष्काणि तु तेषां न सम्भवन्त्येव, तिर्यगायुष्कं त्वहमिन्द्रदेवानाम्, एवमध्रुवसत्यो, अष्टादश भावनीयाः, शेषं चतुरधिकं शतं ध्रुवसत्प्रकृतीनां, बन्धन-सङ्घातादिका एतदन्तर्गता एव द्रष्टव्याः, ध्रुवत्वं चासां सम्यक्त्वलाभात् परतः (प्राक्) सर्व जीवेषु सदैव सम्भवादिति गाथार्थः॥१५२॥

उद्वर्त्त(ल)नप्रकृतिप्रमाणमभिधातुकाम आह—

**पढमकसायसमेया एयाओ आउतित्थवज्जाओ। सत्तरसुव्वलणाओ तिगेसु गतिआणुपुव्वाऊ॥ १५३॥**

व्याख्या—प्रथमकषायसमेता एता आयुस्तीर्थवर्जाः सप्तदशोद्वृत्तिन्यस्त्रिकेषु गत्यानुपूर्व्यायूंषि इति पदानि। पदार्थस्तु—' प्रथम-कषाया' अनन्तानुवन्धिनः तैः समेताः पूर्वोक्ता अष्टादश आयुष्कतीर्थकरनामवर्ज्जा सप्तदशसङ्ख्या उद्वर्त्त(ल)न स्वभावा भवन्ति, देवत्रिकादयोऽत्रोच्यते, तत्र तद्गतिरानुपूर्व्यायुरितित्रिकं मन्तव्यमिति गाथार्थः॥ ३५॥

द्वारगाथोक्तपदानामर्थं स्पष्टयन्नाह—

**नियहेउसंभवे वि हु भयणिज्जो होइ जाण पयडीण। बंधो ता अधुवाओ धुवा अभयणीयबंधाओ॥१५४॥**

व्याख्या—"निजहेतुसम्भवेऽपि हु भजनीयो भवति यासां प्रकृतीनां बन्धस्ता अध्रुवाः, ध्रुवा अभजनीयबन्धा" इति पदानि।

नाग्मन्दोदयैः त्रिस्थानिकरसवन्धोऽशुभप्रकृतीनां भवति, रेणुरेखासदृशैः कषायैः मन्दोदयैरशुभप्रकृतीनां द्विस्थानिकरसवन्धो भवति,जलरेखासदृशैः कषायैरतिमन्दोदयैरेकस्थानिकरसवन्धः, तुशब्देन विशेषितत्वात् पूर्वोक्तानामेव सप्तदशाशुभप्रकृतीनां भवति, न शेषशुभाशुभप्रकृतीनामिति । शुभप्रकृतीनां पाषाणरेखासमकषायैः द्विस्थानिको रसः भूरेखातुल्यैस्त्रिस्थानिकः, वालुकाजल-रेखातुल्यैः कषायैश्चतुःस्थानिको रसस्पर्द्धकानां वन्धो भवति, व्यत्यासादिति वचनादिति गाथार्थः ॥ १५० ॥

तस्यैव रसस्योपमामाह—

**घोसाडइनिंबुवमो असुभाण सुभाण खीरखंडुवमो । एगट्ठाणो उ रसो अणंतगुणिया कमेणियरा ॥ १५१ ॥**

व्याख्या—'घोषातकीनिम्बोपमोऽशुभानां शुभानां क्षीरखण्डोपमः, एकस्थानस्तु रसोऽनन्तगुणिताः क्रमेणेतरे' इति पदानि। पदार्थस्त्वयम्—घोषातकीनिम्बरसोपमोऽशुभप्रकृतीनामेकस्थानिको रसः तुशब्दविशेषितत्वाद् ज्ञापयत्येकस्थानिकरसस्पर्द्धकानि असङ्ख्येयव्यक्तिव्यक्तानि, सर्वजघन्यस्पर्द्धकस्येयमुपमा अनन्तासुर सव्यक्तिव्यतीतासु तदुत्तरस्पर्द्धकः, एवं द्वित्रिचतुःस्थानिकान्यप्यसङ्ख्येयव्यक्तीनि स्पर्द्धकानि, परस्परमनन्तगुणत्वमतो भावनीयम् । शुभप्रकृतीनां एकस्थानिकरसव्यैवाभावाद् द्विस्थानिकरसः, सर्वजघन्यरसस्पर्द्धकस्य क्षीरखण्डमित्युपमा, भूयः स्पर्द्धकवृद्धावुत्तरस्पर्द्धकेष्वनन्तगुणा वृद्धिरिति गाथार्थः ॥ १५१ ॥

द्वारगाथाचकारसूचितं सत्प्रकृतीनां ध्रुवाध्रुवत्वभिधातुकाम आह—

**उच्चं तित्थं सम्मं मीसं वेउव्विछक्कमाऊणि । मणुदुगआहारदुगं अट्ठारस अधुवसंताओ ॥ १५२ ॥**

व्याख्या—'उच्चैर्गोत्रं तीर्थं सम्यक्त्वं सम्यग्मिथ्यात्वं वैक्रियषट्कं आयूंषि मनुजद्विकाहारकद्विकं अष्टादशाध्रुवसत्य' इति पदानि ।

दर्शनावरणान्तरायप्रकृतीनां सर्वेषोदयं प्रति देशघातिरसस्पर्द्धकानामेवोदयस्ततो भावद्वयं भावितमेव, बन्धं प्रति चतुर्विधानामपि सम्भवोऽस्तीति गाथार्थः ॥ १४८ ॥

बन्धं प्रति सर्वप्रकृतीनां रसस्थानान्यभिधातुकाम आह–

**आवरणमसव्वग्घं, पुंसंजलणंतरायपयडीओ । चउठाणपरिणयाओ, दुतिचउठाणाओ सेसाओ ॥ १४९ ॥**

व्याख्या–'आवरणमसर्वघ्नं पुंसंज्वलनान्तरायप्रकृतयः, चतुःस्थानपरिणता द्वित्रिचतुःस्थानाः शेषा' इति पदानि । पदार्थस्तु 'आवरणं' ज्ञानावरणं दर्शनावरणं च 'असर्वघ्नं' असर्वघाति मतिश्रुतावधिमनःपर्यायज्ञानचक्षुरचक्षुरवधिदर्शनावरणाख्याः सप्त प्रकृतयः, पुरुषवेदसंज्वलनकषायदानाद्यन्तरायप्रकृतयश्चैताः सप्तदशापि 'चतुःस्थानपरिणता' एकद्वित्रिचतुःस्थानिकरसपरिणामपरिणतास्तत्स्वरूपवन्त्य इति, शेषप्रकृतयस्त्रिस्थानपरिणता द्वित्रिचतुःस्थानिकरसपरिणामपरिणताः, शेषनोकषायाणां द्विस्थानिकरसोदयेनैव देशघातित्वं नैकस्थानिकेनेति विशेषयति इति गाथार्थः ॥ १४९ ॥

रसहेतूनां विभागमभिधातुकाम आह–

**उप्पलभूमीवालुयजलरेहासरिससंपराएसु । चउठाणाइँ असुभाण सेसयाणं तु वच्चासा ॥ १५० ॥**

व्याख्या–' उपलभूमीवालुकाजलरेखासदृशसम्परायैश्चतुःस्थानादयोऽशुभानां शेषकाणां तु व्यत्यासादिति ' पदानि । पदार्थस्तु–रेखाशब्दः प्रत्येकं सम्बन्धनीयः, उपलरेखेति पाषाणरेखा, तया प्रभूतकालोदयव्यपदेशेनातितीव्रत्वं कषायाणां प्रतिपाद्यते, पाषाणरेखासदृशैः कषायैः सर्वासामशुभप्रकृतीनां चतुःस्थानिकरसबन्धो भवति, आतपशुष्कतडागभूरेखासदृशैः कषायैर्-

व्याख्या-'चतुस्त्रिस्थानरसानि सर्वेविघातीनि भवन्ति, स्पर्द्धकानि द्विस्थानकानि मिश्राणि देशघातीनि शेषाणी'ति पदानि । पदार्थस्तु-चतुःस्थानिकत्रिस्थानिकरसाभ्यां यानि निर्वृत्तानि स्पर्द्धकानि तान्युदयमाप्तानि स्वहन्तव्यसर्वघातीनि भवन्ति, द्विस्थानिकरसस्पर्द्धकानि मिश्राणि कानिचित्सर्वघातीनि कानिचिद्देशघातीनि भवन्ति, शेषाण्येकस्थानिकरसस्पर्द्धकानि सर्वाण्यपि देशघातीनीति गाथार्थः ॥ १४७ ॥

**निहएसु सव्वघाईरसेसु फड्डेसु देसघाईणं । जीवस्स गुणा जायंति ओहीमणचक्खुमाईया ॥ १४८ ॥**

व्याख्या-"निहतेषु सर्वघातिरसेषु स्पर्द्धकेषु देशघातिनां जीवस्य गुणा जायन्ते अवधिमनश्चक्षुरादय' इति पदानि । पदार्थस्तु-शुभपरिणामशक्त्येण 'निहतेषु सर्वघातिरसस्पर्द्धकेषु, देशघातिरसत्वेन व्यवस्थापितेष्विति भावः । देशोपघातकानामपि क्षणे २ समयादुत्तरसमये सङ्ख्यातीताशुभरसविभागैर्विमुच्यमानस्येति वाक्यशेषः, एवंभूतस्य जीवस्यावधिमनःपर्यायज्ञानचक्षुर्दर्शनादयो गुणाः 'जायन्ते' क्षयोपशमजाः प्रादुर्भवन्ति, किमुक्तं भवति? यदा अवधिज्ञानस्य सर्वघातिरसस्पर्द्धकानामुदयस्तदा तद्विषय औदयिक एव शुद्धो भावो भवति, यदा तु देशघातिरसस्पर्द्धकानामुदयस्तदा तदुदयादौदयिकभावो भवति, तथा 'देशावरणोदये सत्यपि यो हन्तव्यविषयस्य देशप्रादुर्भावः स क्षायोपशमिको भावः, आह-यद्येवं ततः सर्वघातिप्रदेशोदये मोहनीयस्य कथं क्षायोपशमिको भाव इत्युच्यते- ते हि प्रदेशा रसभावेनाप्रधाना यथासम्भवं देशघातिवेद्यमानरसान्तर्गताः स्वरूपमप्रकटयन्तो देशघातिरसप्राधान्यात् क्षायोपशमिकभावं जनयन्ति, एवं मनःपर्यायज्ञानचक्षुरवधिदर्शनानामपि भावना कार्या, मतिश्रुतज्ञानाचक्षु-

---

१ 'स्वविषयस्योदयप्राप्तानि तानि सर्वघातीनि भवन्ति' क

वैगोत्रस्याप्युद्वलितस्य, आयुःप्रकृतीनां च पर्यायभाविनीनां भवत्येवाय भङ्गकः, द्व्याद्यायुर्बन्धाभावाच्च पर्यायभावित्वमिति गाथार्थः ॥ १४५ ॥

उदये कर्मप्रकृतीनां क्षयोपशमः सम्मोहजनको मन्दबुद्धीनां तदपनोदायाह–

उदयच्चिय अविरुद्धो, खाओवसमो अणेगभेओ त्ति । जइ भवति तिण्ह एसो पएसउदयंमि मोहस्स ॥१४६॥

व्याख्या–'उदय एवाविरुद्धः क्षायोपशमिकोऽनेकभेद इति, यदि भवति त्रयाणां एष प्रदेशोदये मोहनीयस्ये'ति पदानि । पदार्थस्तु–उदयप्राप्तानामेव क्षयोपशमो भवति, यदि भवति, नावश्यंतया स सर्वप्रकृतिषु भवति, त्रयाणां ज्ञानावरणदर्शनावरणान्तरायाणां एष क्षयोपशमः, स चानेकभेदः असङ्ख्येयव्यक्तिभिर्व्यक्तः स्फुट इत्यर्थः, कर्मत्रयस्य ध्रुवोदयित्वादविरोधः, तदुदयाभावे क्षायोपशमिकभावाभावाच्चाविरोधः । मोहनीयस्य तु क्षयोपशमः प्रदेशोदये भवति, यतोऽनन्तानुबन्धिमिथ्यात्वानां प्रदेशोदये दर्शनमोहनीयस्य क्षयोपशमः, द्वितीयकषायप्रदेशोदये देशविरतिचारित्रमोहनीयस्य क्षयोपशमः, तृतीयकषायप्रदेशोदये सर्वविरतिचारित्रमोहनीयस्य क्षयोपशमः, विपाकोदये तु तदभावात् । इतिशब्दाधिक्याच्छेषप्रकृतीनां विपाकोदये प्रदेशोदये च क्षयोपशमो भवति, अयमत्र विशेषः अध्रुवोदयित्वात् प्रदेशोदये क्षयोपशमे तद्देशविघातित्वं न भवति, विपाकोदयक्षयोपशमे तु तद्देशविघातित्वो मालिन्यकृतो भवन्तीति गाथार्थः ॥ १४६ ॥

प्रकृतीनामौदयिकभावो द्विधा भवति–शुद्धः क्षायोपशमिकभावानुगतश्च, तद्व्यक्तीकरणाय स्पर्द्धकप्ररूपणामाह–

 चउतिट्ठाणरसाइं, सव्वविघाईणि होंति फड्डाणि । दोठाणियाणि मीसाणि देसघाईणि सेसाणि ॥१४७॥

भवन्ति, तत्प्राधान्याच्छेषप्रकृतीनां तद्भावानुगामित्वमप्रधानतां च विशेषयति, केवलज्ञानदर्शनावरणनिद्रासु क्षायोपशमिकभाव एव नास्तीति च, क्षायिकभावे सति केवलज्ञानादयो गुणा भवन्ति, ज्ञानावरणक्षये केवलज्ञानं, दर्शनावरणक्षये केवलदर्शनं, मोहनीयक्षये क्षायिकचारित्रं, अन्तरायक्षये दानादिपञ्चलब्धयो भवन्ति, अघातिकर्मक्षयेऽपगतसर्वव्यपदेशो भवति, वर्णादिगुणरहित इत्यर्थः। औदयिकभावे सति तासु तासु प्रकृतिषु उदयप्राप्तासु तद्व्यपदेशः औदयिकभावाभिव्यक्तिर्भवति, यथा प्रबलज्ञानावरणोदये अज्ञानी वेदनीयोदये सुखी दुःखी वा नामोदये नरकपञ्चेन्द्रियत्रसबादरपर्याप्तादीनि अभिधानानि, एवं मोहनीयोदये क्रोधी मानीत्यादयः पुरुषाभिव्यक्तयो भवन्तीति गाथार्थः ॥ १४४ ॥

पारिणामिकभावभावनायाह—

नाणंतरायदंसणवेयणियाणं तु भंगया दोण्णि। सादिसपज्जवसाणोऽवि होइ सेसाण परिणामो ॥ १४५ ॥

व्याख्या—ज्ञानान्तरायदर्शनवेदनीयानां तु भङ्गकौ द्वौ सादिसपर्यवसानोऽपि भवति शेषाणां पारिणामिक' इति पदानि। पदार्थस्तु—परिणतिः परिणामः परिणामे भवः पारिणामिको जीवप्रदेशकर्मपुद्गलानां मिश्रीभवनमिति भावः, तत्र ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां द्वौ भङ्गकौ भव्यानधिकृत्यानादिसपर्यवसानः अभव्यानधिकृत्यानाद्यपर्यवसान इति भङ्गद्वयम्, सादिसपर्यवसान इत्यन्योऽपि तृतीयभङ्गको भवति शेषकर्मणां; तुशब्दो विशेषणार्थः, किमत्र विशेषयति—एषां मोहनीयायुर्नामगोत्राणां काश्चिदुत्तरप्रकृतीरधिकृत्यायं भङ्गकः। मूलप्रकृतिविषये पूर्वोक्तमेव, यतः—पञ्चेन्द्रियप्राप्तौ वैक्रियषट्कस्य प्राप्तिः, सम्यक्त्वप्राप्तौ तीर्थंकरनाम्नः, संयमप्राप्तौ आहारकद्विकस्य, औपशमिकभावप्राप्तौ सम्यक्त्वसम्यग्मिथ्यात्वयोः, मनुष्यद्विको-

मोहस्सेव उवसमो खाओवसमो चउण्ह घाईणं । खयपरिणामियउदया अट्ठण्हवि होंति कम्माणं ॥ १४३ ॥

व्याख्या—'मोहस्यैवोपशमः, क्षयोपशमश्चतुर्णां घातिनां, क्षयपारिणामिकोदयाः अष्टानामपि भवन्ति कर्मणा'मिति पदानि । पदार्थस्तु—मोहनीयस्यैवोपशमभावो, नान्येषां कर्मणाम,क्षायोपशमिकभावश्चतुर्णां घातिकर्मणामेव, नाघातिकर्मणाम् । क्षयपारिणामिकौदयिकभावाः अष्टानामपि भवन्ति, मूलप्रकृतिग्रहणे बाहुल्येन तदुत्तरप्रकृतयो गृहीता एवेति गाथार्थः ॥१४३॥

अमी भावा यथा भवन्ति तथा भावयितुकाम आह—

सम्मत्ताइ उवसमे, खाओवसमे गुणा चरित्ताई । खइए केवलमाई, तव्ववएसो उ उदईए ॥ १४४ ॥

व्याख्या—'सम्यक्त्वाद्युपशमे क्षयोपशमे गुणाश्चारित्रादयः क्षायिके केवलादयः तद्व्यपदेशस्त्वौदयिके' इति पदानि । पदार्थस्तु—मोहनीयस्योपशमभावे सति औपशमिकसम्यक्त्वसर्वविरतिरूपौ गुणौ जीवस्य प्रादुर्भवतः, घातिकर्मणां क्षयोपशमभावे सति चारित्रादयो गुणाः प्रादुर्भवन्ति । आह—ज्ञानदर्शने परित्यज्य चारित्रादयो गुणाः किमित्यभिधीयन्ते ? उच्यते—ज्ञानदर्शनयोस्तद्भावेऽवश्यंभावित्वज्ञापनार्थं, घातिकर्मप्रकृतिषु च कासुचिदपि क्षयोपशमभावाभावज्ञापनार्थं च चारित्रादयो गुणा अभिहिताः, तत्र मतिज्ञानावरणादिक्षयोपशमे सति मत्यादीनि चत्वारि ज्ञानानि, चक्षुर्दर्शनावरणादीनां क्षयोपशमे सति दर्शनत्रयमेवमन्तरायक्षयोपशमे सति दानादिपञ्चलब्धयो भवन्ति । मिथ्यात्वप्रथमकषायक्षयोपशमे वेदकसम्यक्त्वं, द्वितीयकषायक्षयोपशमे देशविरतिचारित्रं, तृतीयकषायक्षयोपशमे सर्वविरतिचारित्रमिति चारित्रादयो गुणाः । तुशब्दो विशेषणार्थः, किमत्र विशेषमिति—एतासां त्रयोदशानां प्रकृतीनामुपशमेन क्षयेण वा औपशमिकाः क्षायिका वा सम्यक्त्वादयो गुणास्तद्भावविशिष्टा

शुभं च ग्राह्यम्, चः समुच्चये इति गाथार्थः ॥ १३९ ॥ १४० ॥

उक्तानि पञ्चापि द्वाराणि सप्रतिपक्षाणि । विपाकमधिकृत्य हेतुविपाकिन्यश्चतुर्विधास्ता अभिधातुकाम आह—

आयावं संठाणा संघयणसरीरअंगउज्जोयं । नामधुवोदयउवपरघायं पत्तेयसाहारं ॥ १४१ ॥

उदइयभावा पोग्गल—विवागिणो आउ भवविवागीणी । खेत्तविवागणुपुव्वी जीवविवागाउ सेसाओ ॥१४२॥

व्याख्या—'आतपं संस्थानानि संहननशरीराङ्गोद्योतं नामध्रुवोदयोपघातपराघातं प्रत्येकसाधारणं औदायिकभावाः, पुद्गलविपाकिन्यः, आयूंषि भवविपाकीनि, क्षेत्रविपाकिन्य आनुपूर्व्यः, जीवविपाकिन्यः शेषा' इति पदानि । पदार्थस्तु—आतपनाम संस्थानसामान्यग्रहणात् षट्संस्थानानि, एवं संहननानि षडेव, ध्रुवोदयान्तर्गततैजसकार्मणवर्जानि त्रीणि शरीराणि, तदङ्गोपाङ्गानि च उद्योतनाम नाम्नो ध्रुवोदयाः पूर्वोक्ता द्वादश, 'निम्माणथिराथिर' इत्यादि, उपघातनाम पराघातनाम प्रत्येकसाधारणनामेति षट्त्रिंशन्नामप्रकृतय औदयिकभावानुगताः पुद्गलविपाकिन्यश्च द्रष्टव्याः । आयुषश्चतस्रोऽपि प्रकृतयो भवविपाकिन्यः । क्षेत्रविपाकिन्यश्चतस्रोऽप्यानुपूर्व्यः । शेषा विंशत्युत्तरशतमधिकृत्य षट्सप्ततिप्रकृतयो भवन्ति, कथं ? पञ्चचत्वारिंशत् घातिकर्मोत्तरप्रकृतयः, सातासाते उच्चैर्गोत्रं नीचैर्गोत्रं त्रसादित्रिकं स्थावरादित्रिकं सुस्वरचतुष्कं दुःस्वरचतुष्कं गतिचतुष्कं जातिपञ्चकं विहायोगतिद्विकं उच्छ्वासनाम तीर्थङ्करनामेति, जीवविपाकिन्य इति गाथाद्वयार्थः ॥१४१ ॥ १४२ ॥

नामप्रकृतीनां पुद्गलविपाकित्वेनाधिकृतानां प्रसङ्गेनौदयिकभावत्वमभिहितं, अतोऽनेनैवाधिकारेण सर्वप्रकृतीनां यथासम्भवं भावानभिधातुकाम आह—

**नाणंतरायदंसणचउक्क परघायतित्थउस्सासं । मिच्छभयकुच्छधुव बंधिणीउ नामस्सऽपरियत्ता ॥ १३८ ॥**

व्याख्या–ज्ञानान्तरायदर्शनचतुष्कं पराघाततीर्थोच्छ्वासं मिथ्यात्वभयजुगुप्सा ध्रुवबन्धिन्यो नाम्नोऽपरावर्त्ता' इति पदानि ' पदार्थस्तु–ज्ञानान्तराययोः सामान्यग्रहणात्पञ्च पञ्च 'दर्शनचतुष्कं' चक्षुरचक्षुरवधिकेवलदर्शनावरणरूपं, पराघाततीर्थङ्करनामोच्छ्वासप्रकृतयः, तथा मिथ्यात्वभयजुगुप्सा नामध्रुवबन्धिन्यो नव पूर्वोक्ताः, एवमेकोनत्रिंशत्सङ्ख्यास्त्वपरावर्त्तमानाः, शेषा एकनवतिसङ्ख्या उदयं बन्धं चाधिकृत्य परावर्त्तमानस्वरूपा इति गाथार्थः ॥ १३८ ॥

पञ्चममशुभद्वारमधिकृत्याह–

**मणुयतिगं देवतिगं, तिरियाऊसास अट्ठतणुयंगं । विहगइवण्णाइ सुभं, तसाइ दस तित्थनिम्माणं ॥ १३९ ॥**
**चउरंसउसभआयव–परघायपणिंदिअगुरुसाउच्चं । उज्जोयं च पसत्था, सेसा बासीइ अपसत्था ॥ १४० ॥**

व्याख्या–' मनुष्यत्रिकं देवत्रिकं तिर्यगायुरुच्छ्वासाष्टतन्वङ्गं विहायोगतिवर्णादिशुभं त्रसादिदश तीर्थनिर्माणं ॥ चतुरस्रर्षभातपपराघातपञ्चेन्द्रियागुरुलघुसातोच्चं उद्योतं च प्रशस्ताः शेषा द्व्यशीतिरप्रशस्ता ' इति पदानि । पदार्थस्तु–गत्यानुपूर्व्यायुरिति त्रिकं, तच्च मनुष्योपलक्षितं देवोपलक्षितं च, तिर्यगायुरुच्छ्वासोऽष्टौ–शरीरपञ्चकं तदङ्गोपाङ्गत्रिकमिति, विहायोगतिवर्णादिचतुष्कं, शुभं, त्रसादयो दश, 'तस बायर' इत्याद्यभिहिता एव, तीर्थङ्करनाम निर्माणनामेति प्रथमगाथोक्ताः त्रयस्त्रिंशत् ॥ चतुरस्रं संस्थानं वज्रर्षभनाराचसंहननं, आतपनाम पराघातपञ्चेन्द्रियजात्यगुरुलघुसातवेदनीयं उच्चैर्गोत्रमुद्योतं चैता नव, सर्वा अपि द्विचत्वारिंशत्प्रकृतयः शुभसंज्ञाः । शेषाः द्व्यशीतिप्रकृतयो अशुभाः, वर्णादिचतुष्कं शुभविशेषणाद-

तदावरणे,क्षायोपशमिकदर्शनप्रकर्षस्य निद्राः, देशचारित्रस्य द्वितीयकषायाः,सर्वविरतिरूपचारित्रस्य तृतीयकषायाः सर्वघातिनः, अत एता विंशतिप्रकृतयः सर्वघातिन्यः । तासां शेषाः तच्छेषाः, घातिकर्मचतुष्टयप्रकृतिभेदानां पञ्चचत्वारिंशत्प्रमाणानामुक्त-शेषाः पञ्चविंशतिभेदाः देशघातित्वाद्देशघातिनो भवन्ति । पुनःशब्दस्त्वघातिकर्मप्रकृतीनां हन्तव्याभावात् स्वरूपतया अघाति-त्वाद् घातिद्वारं त्रिधा सूचयति, अथवा द्वितीयार्धस्यान्यथा व्याख्या-तेषां सम्यक्त्वादीनां प्राप्तव्यापेक्षया शेषलक्षणस्य घातिन्यः तद्भावाद्देशघातिन्यो भवन्ति, किमुक्तं भवति ?-मतिश्रुतावधिमनःपर्यायज्ञानचक्षुरचक्षुरवधिदर्शनसम्यक्त्वदेशविरतिसर्वविरति-चारित्राणां पुनःशब्दाधिक्याद्दानलाभभोगोपभोगवीर्याणां च देशघातं कुर्वन्तीति देशघातिन्य इति गाथार्थः ॥ १३६ ॥

अतस्ता एव वक्तुकाम आह–

**नाणावरणचउक्कं, दंसणतिग नोकसाय विग्घपणं । संजलण देसघाई, तइयविगप्पो इमो अन्नो ॥ १३७ ॥**

व्याख्या–'ज्ञानावरणचतुष्कं दर्शनत्रिकं नोकषाया विघ्नपञ्चकं सञ्ज्वलना देशघातिनस्तृतीयविकल्पोऽयमन्य' इति पदानि । पदार्थस्तु ज्ञानावरणप्रकृतिभिः स्वोदयप्राप्ताभिः ज्ञानचतुष्कस्य विद्यमानस्य देशविघातः क्रियते, एवं स्वस्वविषयबाधक-प्रकृत्युदयेन दर्शनत्रिकदानादिपञ्चकस्य, नोकषायसञ्ज्वलनैः सम्यक्त्वदेशसर्वविरतिचारित्राणि देशखण्डितानि क्रियन्ते, सर्व-घात्यघातिभिन्नोऽयं तृतीयविकल्पोऽन्य इति गाथार्थः ॥ १३७ ॥

परावर्त्तमानद्वारमधिकृत्याह–

---

१ "तयोः केवलज्ञानदर्शनयोः शेषहन्तव्यस्य तच्छेशहन्तव्यस्य देशघातित्वाद्देशघातिन्यो भवन्तिः" क.

सुगमाः। ज्ञानान्तरायदशकमपि सुगमम्, चक्षुरचक्षुरवधिकेवलदर्शनमिथ्यात्वमिति पञ्चदश घातिकर्मप्रकृतयः, एवं सप्तविंशतिः 'नित्योदया' ध्रुवोदयाः। उक्तशेषा अध्रुवोदयास्त्रिनवतिः प्रकृतयः, ताश्च सुगमाः, आह-उदयमाश्रित्य द्वाविंशत्युत्तरं शतमभिहितम्, कस्माच्छेषाः पञ्चनवतिः प्रकृतयो न भवन्तीत्यत्रोच्यते-सम्यक्त्वसम्यग्मिथ्यात्वयोः प्रभूतजीवेपूदयाभावान्मिथ्यात्वमधिकृतं, तयोश्च मिथ्यात्वावयवभूतयोरप्रधानतात्र विवक्षिता ततस्त्रिनवतिरेव शेषाः, इति गाथार्थः ॥ १३४ ॥

सर्वघातिप्रकृतीरधिकृत्याह-

केवलियणाणदंसणआवरणं बारसाइमकसाया। मिच्छत्तं निद्दाओ, इति वीसं सव्वघाईओ ॥ १७ ॥

व्याख्या-'केवलिकज्ञानदर्शनावरणं द्वादशाद्यकषाया मिथ्यात्वं निद्रा इति विंशतिः सर्वघातिन्य' इति पदानि। पदार्थस्तु-केवलज्ञानदर्शनयोरावरणे, अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यावरणाख्या आद्या द्वादश कषायाः, मिथ्यात्वं, निद्राः, सामान्यग्रहणाद्बहुवचननिर्देशाद्विंशतिसंख्यानिर्देशाच्च पञ्चेति, घातिकर्मचतुष्कान्तर्गता विंशत्युत्तरप्रकृतयः सर्वघातिस्वरूपा मन्तव्याः, इत्यनेन प्रकारेण वक्ष्यमाणेनेति गाथार्थः ॥ १३५ ॥

सर्वघातिनाम्नः प्रयोजनमाह-

सम्मत्तनाणदंसणचरित्तघाइत्तणाउ घाईओ। तस्सेस देसघाइत्तणाउ पुण देसघाईओ ॥ १३६ ॥

व्याख्या-'सम्यक्त्वज्ञानदर्शनचारित्रघातित्वाद् घातिन्यः तच्छेषा देशघातित्वात्पुनर्देशघातिन्य' इति पदानि। अर्थघटना त्वेवम्-मिथ्यात्वं प्रथमकषायाः सम्यक्त्वोदयस्य सर्वघातं कुर्वन्तीति सर्वघातिन्यः, एवं केवलज्ञानस्य केवलदर्शनस्य च

पदार्थस्तु—प्रतिपदं सूत्रकार एव वक्ष्यति ॥ १३२ ॥

ध्रुवबन्धिप्रकृतिप्रतिपादनायाह—

**नाणंतरायदंसण, धुवबंधि कसायमिच्छभयकुच्छा । अगुरुलघुनिमिणतेयं, उवघायं वण्णचउकम्मं ॥ १३३ ॥**

व्याख्या—' ज्ञानान्तरायदर्शनकषायमिथ्यात्वभयजुगुप्साः ध्रुवबन्धिन्यः अगुरुलघु निर्माणं तैजसं उपघातं वर्णचतुः कार्मणं ' इति पदानि । प्राकृतत्वाच्छन्दोवशाच्चैवं द्रष्टव्यानि । पदार्थस्तु आवरणशब्दलोपात् ' ज्ञाने ' ति ज्ञानावरणं, सामान्यभणनात् पञ्चप्रकारमेवमन्तरायमपि । दर्शनावरणं नवप्रकारं, कषायाः षोडशप्रकाराः, आह—एतेऽपि सामान्यग्रहणात् पञ्चविंशतिविधाः कथं न गृह्यन्ते ?, ननु भयजुगुप्सयोरुत्तरग्रहणानर्थक्यादत्र षोडशप्रकारा एव ते ग्राह्याः, तथा मिथ्यात्वभयजुगुप्साः, एता अष्टात्रिंशद् घातिकर्मप्रकृतयः, अगुरुलघुनामनिर्माणनाम तैजसनाम उपघातनाम वर्णगन्धरसस्पर्शनाम कार्मणनामेति नवाघातिकर्मप्रकृतयः, एवं सर्वा अपि सप्तचत्वारिंशद् ध्रुवबन्धिन्यः, बन्धमाश्रित्य ध्रुवाध्रुवत्वं, अतो विंशत्युत्तरशतमत्राधिकृतमुत्तरभेदास्तु प्राग्वत्तदन्तर्गता एव द्रष्टव्या इति गाथार्थः ॥ १३३ ॥

ध्रुवोदयद्वारमधिकृत्याह—

**निम्माणथिराथिरतेयकम्मवण्णाइ अगुरुसुहमसुहं । नाणंतरायदसगं, दंसणचउमिच्छ निच्चुदया ॥ १३४ ॥**

व्याख्या—निर्माणस्थिरास्थिरतैजसकार्मणवर्णाद्यगुरुलघुशुभाशुभं द्वन्द्वसमासः, ज्ञानान्तरायदशकं दर्शनचतुःमिथ्यात्वं अनुस्वारलोपान्नित्योदया ' इति पदानि । पदार्थस्तु—प्रथमार्द्धाभिहिता द्वादशाऽघातिकर्मप्रकृतयो वर्णादिचतुष्कस्य सुगमत्वात्

ओरालियाइयाणं, संघाया बंधणाणि य सजोगे। बंधसुभसंतउदया, आसज्ज अणेगहा नाम ॥ १३० ॥

व्याख्या–औदारिकादीनां सङ्घाताः बन्धनानि च स्वयोगे बन्धशुभसदुदयानाश्रित्यानेकधा नामेति पदानि। पदार्थस्तु औदारिकादीनां शरीराणां स्वसंयोगात् पञ्च सङ्घाता बन्धनानि च भवन्ति, तानि च प्रागभिहितान्येव, सङ्घाताः बन्धनवद् द्रष्टव्या इति हृदयं, बन्धमाश्रित्य विंशत्यधिकं प्रकृतिशतं, शुभाशुभत्वमाश्रित्य चतुर्विंशत्यधिकं शतं, सत्कर्म समाश्रित्याष्टचत्वारिंशदुत्तरं शतं अष्टपञ्चाशदधिकं वा, उदयमाश्रित्य द्वाविंशत्यधिकं प्रकृतिशतं भवति, तच्च प्राग्गाथायां भावितमेव यथा भवति। नामयतीति नामकर्मेति गाथार्थः ॥ १३० ॥

वर्णादिचतुष्कस्य द्विधोपन्यस्योत्तरभेदानां शुभाशुभाभिधित्सयाह–

नीलकसिणं दुगंधं, तित्तं कडुयं गुरु खरं रुक्खं। सीयं च असुभनवगं, एगारसगं सुभं सेसं ॥ १३१ ॥

व्याख्या–नीलं कृष्णं दुर्गन्धं तिक्तं कटुकं गुरु कर्कशं रूक्षं शीतं चाशुभनवकं एकादशकं शुभं शेषं' पदानि। पदार्थस्तु–नीलकृष्णवर्णावशुभौ दुर्गन्धः तिक्तकटुकरसौ गुरुकर्कशरूक्षशीतस्पर्शाश्चाशुभनवकं, 'शेष' मिति शुक्लपीतरक्तवर्णाः सुगन्धो मधुराम्लकषायरसाः लघुमृदुस्निग्धोष्णस्पर्शा इत्येकादशकं शुभं, चः समुच्चये इति गाथार्थः ॥ १३१ ॥

सर्वप्रकृतीनां स्वरूपप्रतिपादिकां द्वारगाथामाह–

धुवबंधिधुवोदयसव्वघाइपरियत्तमाणअसुभाओ। पंच वि सप्पडिवक्खा पगईउ विवागओ चउहा ॥ १३२ ॥

व्याख्या–ध्रुवबन्धिध्रुवोदयसर्वघातिपरावर्त्तमानाशुभाः पञ्चापि सप्रतिपक्षाः प्रकृतयो विपाकतश्च चतुर्धेति पदानि,

वेउव्वाहारोरालियाण सगतेयकम्मजुत्ताणं । नव बंधणाणि इयरदुजुत्ताणं तिण्णि तेसिं च ॥ १२९ ॥

व्याख्या–' वैक्रियाहारकौदारिकाणां स्वकतैजसकार्मणयुक्तानां नव बन्धनानि, इतरद्वियुक्तानां त्रीणि तेषु चेति पदानि । अर्थघटना त्वेवम्–वैक्रियशरीरपुद्गलाः स्वकैरिति वैक्रियशरीरपुद्गलैरेव सहानुबद्धा यतो भवन्ति तत्प्रथमं बन्धनं, त एव वैक्रियशरीरपुद्गलाः तैजसशरीरपुद्गलैः सहानुबद्धाः द्वितीयं बन्धनं, त एव वैक्रियशरीरपुद्गलाः कार्मणशरीरपुद्गलैः सहानुबद्धाः तृतीयं बन्धनं, एवमाहारकशरीरेऽपि बन्धनत्रयं, औदारिकेऽपि, एवं नव बन्धनानि भवन्ति, इतरद्विशरीरपुद्गलानां संश्लेषो यस्तत्तेषां बन्धनं, औदारिकतैजसकार्मणबन्धनम्, एवं वैक्रियतैजसकार्मणबन्धनं आहारकतैजसकार्मणबन्धनं, एवमेतत्त्रिकसहितानि नव द्वादश, तयोश्च तैजसकार्मणयोः त्रीणि, तैजसशरीरपुद्गलैः सह संश्लेषो यस्तत्तैजसतैजसबन्धनमेवं कार्मणकार्मणबन्धनं, तैजसकार्मणबन्धनं, एवमेतत्त्रिकेण सह पञ्चदश, आह-पञ्चानां शरीराणां द्विकादिषड्विंशतिसंयोगा भवन्ति, तत्तुल्यबंधनानि च कस्मान्न भवन्तीत्यत्रोच्यते, वैक्रियाहारकौदारिकाणां परस्परविरुद्धानामन्योऽन्यं सम्बन्धाभावात् पञ्चदशैवेति । आह-यदि पञ्चदश बन्धनानि भवन्ति, अतोऽनेनैव क्रमेण संघाता अपि कस्मान्नाभिधीयन्ते, यथा पाषाणयुग्मस्यापि कृतसङ्घातस्योत्तरकालं वज्रलेपादिना बन्धनं क्रियते, अत्रोच्यते–स्वशरीरपुद्गलानां स्वशरीरपुद्गलैः सह यानि बन्धनानि तानि शुभानि, लोकेऽपि स्वजातौ संयोगाः शुभा इति प्राधान्यख्यापनाय पञ्चैव सङ्घाता अभिहिताः, चः समुच्चय इति गाथार्थः ॥ १२९ ॥

सङ्घातसाम्यद्वारेणाभिहितबन्धनान्तर्गतबन्धनभेदप्राधान्यख्यापनायाह–

विसयं तरहा जाणे जसकित्तिनामं तु ॥३॥" एता विंशतिर्यतस्त्रसादयो दश दश स्थावरादयश्च, त्रसादिचतुष्कं स्थिरादिषट्कं सूक्ष्मादित्रिकं एवमादयोऽन्तर्गणास्तु उभयत्रावगन्तव्याः, एवं च त्रिणवतिर्नामोत्तरप्रकृतयो भवन्ति । तृतीयगाथाचकारोऽन्याचार्यमते त्र्युत्तरनामप्रकृतिशतव्यापकः, तच्च पञ्चदशभेदबन्धनतो भवति, इति गाथार्थः ॥ १२७ ॥

बन्धोदयसत्प्रकृतिसङ्ख्याजनितसम्मोहापनोदायाह–

**ससरीरंतरभूया, बंधणसंघायणा उ बंधुदए । वण्णाइविगप्पावि हु, बंधे नो सम्ममीसाइं ॥ १२८ ॥**

व्याख्या–'स्वशरीरान्तर्भूता बन्धनसङ्घातास्तु बन्धोदये वर्णादिविकल्पा अपि हु बन्धे नो सम्यक्त्वमिश्रे' इति पदानि । पदार्थस्तु–'स्वशरीरान्तर्भूताः' स्वशरीरान्तर्गता बन्धनसङ्घातनप्रकृतयो द्रष्टव्याः, किमुक्तं भवति ?-औदारिकशरीरग्रहणे औदारिकबन्धनसङ्घातनप्रकृतयोऽपि गृहीता एवाविनाभावित्वाद् द्रष्टव्याः, एवं सर्वशरीराणाम् । बन्धश्चोदयश्च बन्धोदयस्तस्मिन्, तुशब्दो विशेषणार्थः, किं विशिनष्टि ?–तेषां स्थित्युदयबन्धकालाः स्वशरीरतुल्या ज्ञेयाः । वर्णादीनां विकल्पाः वर्णविकल्पाः-वर्णगन्धरसस्पर्शविकल्पास्तत्प्रतिभेदाः षोडश बन्धोदयं प्रति ध्रुवत्वाद् वर्णगन्धरसस्पर्शग्रहणे गृहीता एव द्रष्टव्याः,[1] अतो द्वाविंशत्यधिकं शतमुदये भवति, बन्धे तु सम्यक्त्वमिश्रे अपि नो भवतः, यतः परिणामपरिणतया तदेव मिथ्यात्वं त्रिधा परिणमयति बन्धेऽतो विंशत्यधिकं शतं, शेषप्रकृतीनां निरर्थकत्वादुच्चारणं न क्रियते, हुरिति निपातः स चाधिकार्थसूचकः, शुभाशुभप्रकृतिविवक्षायां चतुर्विंशत्यधिकं शतं भवति, तच्चाव्यक्तवर्णादिचतुष्टयस्य शुभाशुभत्वद्वैविध्यकरणेन भवति इति गाथार्थः ॥१२८॥

१ 'बन्धोदयं प्रति ध्रुवत्वात्तेऽपि षोडश प्रतिभेदा गृहीता एव द्रष्टव्याः" क.

"एगो करेइ रागा बीओ न करेइ दोसवाहुल्ला । को तस्स वक्कंतस्साएज्जणएज्जयाणुदओ ॥१॥" पगरिसपत्ताएज्जे हियमियफुडसच्चवक्कया होइ । विवरीए एयं चिय विवरीयं अनयवाइत्तं ॥ २ ॥ यशःकीर्त्तिनामोदयादुदास्यजनप्रशस्यो भवति, अयशःकीर्त्तिनामोदयादुदास्यजनैर्निन्दितस्वभावो भवति । आह चोदकः—"तस्सेव केइ जसकित्तिकित्तया अजसकित्तया अण्णे। पायो राईणं वेति अतिएसं इदयाईणं ॥१॥" उच्यते—"जइ कहवि धाउवेसम्मयाइ दुद्धंपि जायए कडुयं । निंबो महुरो कस्सइ न पमाणं तहवि तं होइ ॥ २ ॥ विवरीयदव्वगुणभासणाए अपमाणया उ तस्सेव । सग्गुण

---

१ "सुभगदुर्भगयोः कर्मणोः उदयेऽपि न विद्यते (विशेषोऽनयोः) तथा विशेषः। यदुदीर्णेऽपि सुभगे न सर्वजनवल्लभो भवति ॥१॥" २ 'सङ्ख्यातीता भेदा उदयविशेषेण सर्वप्रकृतीनाम्। तत्कालोदयविशेषात् भवति प्रियो वाऽप्रियो वापि॥१॥ अनुपकृतेऽपि बहूनां यः खलु प्रियस्तस्य सुभगनामोदयः । उपकारकारकोऽपि हु न राचते दुर्भगस्योदयेन ॥ २ ॥ सुभगोदयेऽपि हु कश्चित् कञ्चिदासाद्य दुर्भगो यद्यपि । जायते तद्दोषात् यथाऽभव्याना तीर्थकरः ॥३॥ " ३ ' द्वयाः अप्येतया उदयो युगपत् प्रत्यक्षसिद्धितः सिद्धः । यत्तुल्यमपि हु भणितं करोत्येको न पुनरन्य. ॥१॥ " ४ "एकः करोति रागात् द्वितीयो न करोति द्वेषबाहुल्यात् । कस्तस्य वाक्यवतः आदेयानादेययोरुदयः ॥ १ ॥ प्रकर्षप्राप्तादेये हितमितस्फुटसत्यवाक्यता भवति । विपरीते एतदेव विपरीतमनृतवादित्वम् ॥२॥" ५ "तस्यैव केचित् यशःकीर्तिकीर्तका अयशःकीर्त्तका अन्ये । प्रायो राज्ञां ब्रुवते च अतिदेशमिन्द्रकादीनाम् ॥ १ ॥" यदि कथमपि धातुवैषम्ये दुग्धमपि जायते कटुकम्। निम्बो मधुरः कस्यचित् न प्रमाणं तथापि तद्भवति ॥ २ ॥ विपरीतद्रव्यगुणभासनात् अप्रमाणता तु तस्यैव । सद्गुणविपर्यं तस्मात् जानीयात् यशःकीर्त्तिनाम तु ॥ ३ ॥"

दयादष्टमहाप्रातिहार्ययुक्ताश्चतुस्त्रिंशदतिशया अनुभूयन्ते तत्तीर्थकरनाम, एता गाथायुग्मोपन्यस्ताः त्रिसप्ततिः नामप्रकृतय इति । 'त्रसी उद्वेजने' त्रसनामकर्मोदयात्त्रसाः, तद्विपक्षनामोदयात् स्थावराः, बादरनामकर्मोदयाद्बादराः, न स्थूरत्वविवक्षयैव, यतः पृथिव्युदककायिकानामसङ्ख्येयजीवानां शरीरपिण्डो दृष्टिगोचरमायात्यतो बादरनामोदयिन एव बादराः, तद्विपक्षनामोदयात् सूक्ष्माः, स्वजात्युचितपर्याप्तिलब्धियोग्याः पर्याप्तकाः, तद्विपक्षनामोदयादपर्याप्तकाः, स्वप्रदेशैरेकं शरीरमौदारिकवैक्रियाहारकान्यतरद् व्याप्तं यदुदयाज्जीवेन तत्प्रत्येकनाम, यदुदयात्पुनरनन्तजीवैरप्येकमेवौदारिकं शरीरं व्याप्तं तत्साधारणनाम, स्थिरनामकर्मोदयात् स्थिररूपाणि जीवानामङ्गोपाङ्गानि भवन्ति, अस्थिरनामोदयादस्थिराणि, शुभनामोदयात् शुभान्यङ्गोपाङ्गानि शिरोहस्तकल्पानि, अशुभनामकर्मोदयादशुभान्यङ्गोपाङ्गानि बस्तिपादकल्पानि, सुस्वरनामकर्मोदयाज्जीवानां हंसस्वरकल्पः स्वरो भवति, दुःस्वरनामकर्मोदयात् काकोलूकस्वरकल्पः स्वरो भवति, सुभगनामकर्मोदयादुपकारक्रियारहितोऽपि जनप्रियो भवति, दुर्भगनामकर्मोदयादुपकारं कुर्वन्नपि जनाप्रियो भवति, आह चोदकः—“सुभगदुभगाण कम्मा—णुदयेऽवि न विज्जए (विसेसोत्ति) तह विसेसो । जमुइण्णेऽवि हु सुभगे न सव्वजणवल्लहो होइ ॥ १ ॥” उच्यते—“संखाईया भेया उदयविसेसेण सव्वपगईणं । तक्कालुद्दयविसेसा होंति पिओ अप्पिओ वाऽवि ॥१॥ अणुवकरएवि बहूणं जो हु पिओ तस्स सुभगनामुदओ। उवगारकारगोऽविहु न रुच्चए दुब्भगस्सुदए ॥२॥ सुभगुदयेऽविहु कोई, किंचो आसज्ज दुब्भगो जइवि। जायइ तद्दोसाओ जहा अभवाण तित्थयरो ॥ ३ ॥” आदेयनामकर्मोदयाद् ग्राह्यवाक्यो भवति, अनादेयकर्मोदयादग्राह्यवाक्यो भवति, आह चोदकः— “दोण्हवि एयाणुदओ जुगवं पच्चक्खसिद्धिओ सिद्धो । जं तुल्लंपि हु भणियं, करोति एको न उण अण्णो ॥ १ ॥” उच्यते

एव, पिपीलिकादीनां तु सूक्ष्मत्वात्केवलिगम्यानीत्यलं प्रसङ्गेनेति । संस्थानमपि षड्विधमेव, समचतुरस्रं प्रथमं, न्यग्रोधमण्डलं द्वितीयं, स्वाति तृतीयं, वामनं चतुर्थं, कुब्जं पञ्चमं, हुण्डं षष्ठं, चकारोऽन्यमतसूचकः, केचिद्वामनसंस्थानं पञ्चमस्थानेऽभिदधति, एषां लक्षणं 'तुल्लं वित्थरबहुलं' इत्यादिना प्रतिपादितम्, सम्यक् स्थीयन्ते येषु प्राणिभिस्तानि संस्थानानि। वर्णः पञ्चप्रकारः—श्वेतपीतरक्तनीलकृष्णाख्यः । गन्धो द्विधा—सुगन्धो दुर्गन्धश्च । रसः पञ्चधा—मधुराम्लकषायकटुकतिक्ताख्यः । स्पर्शोऽष्टधा—गुरुलघुमृदुकर्कशस्निग्धरूक्षशीतोष्णलक्षणः । भवाद् भवं नयत्यानुपूर्व्या यया साऽनुपूर्वी वृषभाकर्षणरज्जुकल्पा, सा च चतुर्द्धा, गतिवत् । विहायसा गतिर्विहायोगतिः, साद्विविधा—प्रशस्ता अप्रशस्ता च, गजहंसादीनां प्रशस्ता, खरकरभादीनामप्रशस्ता, एवं चतुर्दशस्वपि पिण्डप्रकृतिषु पञ्चषष्टिरुत्तरभेदा भवन्ति । अगुरुलघुनामकर्मोदयात् स्वशरीरं न गुरु नापि लघु प्रतिभाति । स्वशरीरोपहननमित्युपघातः । स्वशरीरबलप्रतापादिभिः परस्याभिभवनं पराघातः । ऊर्ध्वं वातोद्गमो यः स उच्छ्वासः । एतच्च अगुरुलघुचतुष्कं । एवं वर्णगंधरसस्पर्शा अपि वर्णादिचतुष्क तज्जातिग्रहणात् । सूर्यविमानरत्नपृथिवीजीवजनितदाहो यस्तदातपनाम । शशितारकमणिजलकाष्ठादिविमलत्वप्रकर्षो यस्तदुद्योतनाम । आह-आतपोद्योतयोः परस्परविरुद्धयोरप्यग्निकायिकेषु युगपदुदयो दृश्यत इति कथमित्युच्यते—तेषां यदुष्णत्वं तत्तैजसशरीरस्योदयप्रबलत्वात् प्रभूतजीवत्वाच्चेष्टव्यम्, नातपोदय इति, यच्च प्रकाशकत्वं तद्रक्तवर्णस्यातिस्फुटत्वान्नैवोद्योतनामकर्मोदयः, अग्निवायुकायिकेषूभयोरप्यागमे निषिद्धत्वादिति । यदुदयात् स्वजात्यनुरूपाण्यङ्गोपाङ्गानि निष्पद्यन्ते तन्निर्माणनाम । यदु-

१ " तुल्यं विस्तारबहुलं "

**गइयाइयाण भेया, चउ पण पण ति पण पंच छच्छक्कं । पणदुग पणट्ठचउदुग, पिंडुत्तरभेय पणसट्ठी ॥ १२७ ॥**

व्याख्या—'गत्यादिकानां भेदाश्चतुष्पञ्च पञ्च त्रिः पञ्च पञ्च षट् षट्कं । पञ्च द्विकं पञ्चाष्टौ चतुर्द्विकं पिण्डोत्तरभेदाः पञ्चषष्टि'-रिति पदानि । पदार्थस्तु गाथाचतुष्टयस्यापि (उच्यते)—गतिरेवादिर्यासां चतुर्दशानां पिण्डप्रकृतीनां ता गत्यादयस्तासां यथासङ्ख्येनैते प्रभेदा द्रष्टव्याः । गतिनाम चतुर्विधं सुरनरतिर्यग्नरकगतिभेदाद् , गमनं गतिः । एकद्वित्रिचतुष्पञ्चेन्द्रियजातिभेदात् पञ्चधा जातिः, जननं जातिः । औदारिकवैक्रियाहारकतैजसकार्मणभेदात् पञ्चधा शरीरं, शीर्यत इति शरीरं । औदारिकाङ्गोपाङ्गं वैक्रियाङ्गोपाङ्गं आहारकाङ्गोपाङ्गमिति त्रिधा अङ्गोपाङ्गं । औदारिकौदारिकबन्धनं वैक्रियवैक्रियबन्धनं आहारकाहारकबन्धनं तैजसतैजसबन्धनं कार्मणकार्मणबन्धनं, औदारिकशरीरपुद्गलानां औदारिकैः पुद्गलैः सह संश्लेपः पाषाणयोर्वज्रलेपेनेवेति पञ्चधा बन्धनं । एवमौदारिकपुद्गलानां औदारिकपुद्गलैः सह सुश्लिष्टसन्धिसञ्चयकरणं यतः काष्ठयोरिव स सङ्घातः, स च शरीरभेदात् पञ्चधा द्रष्टव्यः । संहननं षड्विधं, वज्रऋषभनाराचं प्रथमं, ऋषभनाराचं द्वितीयं, नाराचं तृतीयं, अर्द्धनाराचं चतुर्थं, कीलिका पञ्चमं, छिन्नानि-अन्तरितानि पुष्टानि-अस्थीनि येन प्रभवता तच्छिन्नपुष्टं षष्ठं संहननं, तानि चास्थिविन्यासविशेषतो भवन्ति, 'रिसहो य होइ पट्टो' इत्यादिप्रतिपादितत्वाद्, आह—यद्येवं विकलेन्द्रियाणां संहननोदयोऽस्थ्यभावेऽपि कथं भवतीत्युच्यते—योऽयमस्थिविन्यासविशेषोऽभिहितोऽसौ बलप्रकर्षख्यापको भवति, अन्यथोभयग्रहपट्टकीलिकास्थियन्त्रे सति गात्रसङ्कोचविकाशाभावः सम्भाव्यते, अतः पिपीलिकादीनां क्षुद्रसत्त्वानां यद्यप्यस्थीनि न सम्भाव्यन्ते तथापि कायबलमधिकृत्य संहननमुच्यते, यथाऽस्थिराद्भावेऽपि अल्पबलः पुरुषोऽसंहननोऽथवा शङ्खादीनां द्वीन्द्रियाणामपि दृश्यन्त

१ "न्यन्तराणि' २ ऋषभश्च भवति पट्टः"

वेद्यगोत्रे। पुनरप्याह–यथा सातं शुभमादावुक्तं तथोच्चैर्गोत्रमपि किमिति नोक्तमित्युच्यते–उपान्त्यसमये नीचैर्गोत्रस्यैव क्षयः, अतस्तदेव प्रथममुक्तं, सातासातयोस्त्वनियमः, अतः शुभमादावुक्तम्, एवमन्येऽप्यर्था बन्धोदयादिगताः स्वबुद्ध्योत्क्रमभणने वाच्याः, अलं विस्तरेणेति गाथार्थः ॥ १२३ ॥

नामोत्तरप्रकृतीरभिधातुकाम आह–

**गइजाइसरीरंगं, बंधण संघायणं च संघयणं। संठाणवण्णगंधरस–फासअणुपुव्विविहगगई ॥ १२४ ॥**

व्याख्या–गतिजातिशरीराङ्गं बन्धनं सङ्घातनं च संहननं संस्थानवर्णगन्धरसस्पर्शानुपूर्व्योविहायोगतयः, एता गत्यादयः चतुर्दश पिण्डप्रकृतयो नाम्नोऽभिहिता इति गाथार्थः ॥ १२४ ॥

**अगुरुलहु उवघायं, परघाउस्सासआयवुज्जोअं। निम्माण तित्थनामं, चोद्दस अड पिंडपत्तेया ॥ १२५ ॥**

व्याख्या–अगुरुलघूपघातं पराघातोच्छ्वासातपोद्योतं निर्माण तीर्थनाम, चतुर्दशाष्टौ पिण्डप्रत्येकाः, यथासङ्ख्येनैता आद्याश्चतुर्दश पिण्डप्रकृतयोऽष्टौ प्रत्येकमवस्थिता इति गाथार्थः ॥ १२५ ॥

**तसबायरपज्जत्तं पत्तेय थिरं सुभं च नायव्वं। सुस्सरसुभगाइज्जं जसकित्ती सेयरा वीसं ॥ १२६ ॥**

व्याख्या–त्रसबादरपर्याप्तकं प्रत्येकं स्थिरं शुभं च ज्ञातव्यम्। सुस्वरसुभगादेयं यशःकीर्त्तिः सेतरा विंशतिः। त्रसादयो दश इतरा विपक्षभूता अपि दशैव विंशतिः ॥ १२६ ॥

उक्ता नामोत्तरप्रकृतयो द्विचत्वारिंशत्, पिण्डप्रकृतिप्रभेदानाह–

माहु आयरिया ॥२॥ "ग्राम्यसुखे सुखसंज्ञा, येषामपि भवति मन्दबुद्धीनाम्। तदपि बुधैः परिकथितं, दुःखप्रतिघातमात्रमिति ॥ १ ॥" [2]दुक्खाभावो न सुहं ताइवि ण सुहाइ जाइं सोक्खाति। भोत्तुणऽसुहाइं (दुहाइं) सुहाइं जाइं ताइं चिय सुहाइं ॥ १ ॥"। उत्तमजातित्वं प्रशस्यता पूज्यत्वं चोच्चैर्गोत्रं, तद्विपरीतं नीचैर्गोत्रं, आह–' यद्येवं ततः सङ्गमकादिभिरप्रशंसाद्यपमानैः क्रियमाणैरपि वर्द्धमानतीर्थाधिपतेः कथं नीचैर्गोत्रोदयो न भवति? उत्तमजातिसम्पन्नानामपि सिंहहंसादीनां कथमुच्चैर्गोत्रोदयो न भवतीति, अत्रोच्यते, यदि गुरुकर्मोदयवशगैरधोगामिभिरप्रशंसादि क्रियते "[3]जे जत्तिया उ हेऊ भवस्स' इत्यादि सूत्रं सफलं कुर्वद्भिः भगवतः कोऽत्र नीचैर्गोत्रोदय इति? सिंहादीनामुत्तमजातित्वेऽपि हीनगतित्वान्नीचैर्गोत्रोदय इष्यते नारकाणामिव, देवानां तु सर्वेषामपीष्यते उच्चैर्गोत्रं, उत्तमगतित्वात्, मनुजानामुभयोरप्युदयो भवति, मध्यमगतित्वादसाधारणक्रियाविशेषाच्च, प्रकृतिव्यत्यासोऽपि घटत एवात्रेति। आह–स्वस्थानप्राप्तं वेदनीयं विहाय कस्मान्मोहनीयस्योपन्यासः क्रियते? अत्रोच्यते–मोहनीयभणने घातिकर्मचतुष्कमव्यवच्छिन्नमुक्तं भवति, तत्क्षये च केवलज्ञानदर्शनप्राप्तिरेतद् ज्ञापितं भवति। यद्येवं ततस्तदनन्तरं वेदनीयं किमिति नाभिधीयते? अत्रोच्यते–तत्प्रकृत्या सहोपान्त्यसमये गोत्रप्रकृतिः क्षयमुपयाति, चरमसमये वेदनीयेन सह गोत्रं सामस्त्येन तुल्यप्रकृतित्वाद् क्षयं यात्यतः स्वस्थानं विहायैकत्राभिहिते

प्रकारितमजातं साद्यपर्यवसितं अनिच्छितक्रम् (इच्छानिक्रान्तं)। यत् सिद्धानां स्वरूपं तदेव सुखमाहुराचार्याः ॥२॥ " २ "दुःखाभावो न सुखं तान्यपि न सुखानि यानि पौद्गलिकानि) सौख्यानि। भुक्त्वाऽसुखानि (दुःखानि) सौख्यानि यानि तान्येव सुखानि ॥ १ ॥ ३ " " ये यावन्तस्तु हेतवो भवस्य ॥ ४ ॥ प्रो।

सम्यक्त्वानां प्रतिपतितसम्यक्त्वानां च केषाञ्चिन्मिथ्यात्वमेवैकं भवति न नित्यं दर्शनत्रयमिति, अस्यार्थस्य ख्यापनार्थमित्थमुपन्यासः। अन्यच्च-क्षायोपशमिकसम्यक्त्वचारित्रयोस्तु केषाञ्चिज्जीवानां युगपत् प्राप्तिश्चेष्यते, अतो न दोषः। षड्विंशतिविधं मोहनीयं ज्ञापितं चैवं भवति। आयुष्कशब्दः प्रत्येकं सम्बन्धनीयः, ततश्च सुरायुष्कं नरायुष्कं तिर्यगायुष्कं नारकायुष्कमेवं चायुःकर्म चतुर्भेदं भवति, अस्य चैवं क्रमोपन्यासोऽभिमतः प्राधान्याद्, अन्यथा भणने प्रयोजनं वाच्यम्। 'सातं' सुखं आल्हादरूपम्, 'असातं' तदेव विपर्यस्तं दुःखरूपमेवं वेदनीयं द्विभेदं, आह—यद्येवं ततः सातासातयोरभावेन तत्परमाणुक्षये सिद्धानां सुखदुःखाभावः, तेषां चात्यन्तिकं सुखमिष्यते, तच्च पाषाणकल्पानां न घटते, अत्रोच्यते—ननु तेषामेव सुखं, यतस्तदपौद्गलिकं, यत्तु पौद्गलिकं तत्परमार्थतो न सुखं, सुखाभासमेव तत्, यतो यदेव दुःखशमकं तदेव सुखं प्रतिभाति, न च तत्सुखं परमार्थतो, दुःखशमनहेतुत्वात्, एतदेव भाव्यते—यथा कश्चित् क्षुद्वेदनार्त्तो मोदकादिभिर्द्रव्यैः तदुपशमं कर्तुमारभते, तस्य च तैर्मोदकादिभिः स्तोकैः रसनोपकृतं दुःखं प्रभवति, किञ्चिच्च क्षुद्वेदनोपशमो, न च तत्सुखं, प्रभूतैश्च तैः क्षुद्वेदनोपशमः स्यात् न च तत्सुखं, तद्विसूचिकादिकृतं दुखं तु भवत्येव, क्षुद्वेदनोपशमप्रमाणैरपि तैस्तदुपशमो भवति, न च तत्सुखं, तद्भक्षणायासकृतं तु दुःखं भवत्येव, क्षुद्वेदनोपशमसमयाश्च सततं क्रमेण व्यवस्थिताः, प्रायः प्रकोपसमयश्चोत्तरकाले, अतोऽत्र संसारे दुःखमेवानुबद्धं, न सुखं, ततः सुखाभासमेव तत्परमार्थतः, अन्यैरप्युक्तम्-"[1]सायासायाभावे न सुही सिद्धत्ति केइ मन्नंति। तं नो जं पोग्गलियं विवक्खपडिगारहेउमयं ॥१॥ अकयपकारियजाय, सातिअपज्जवसियं अनिच्छियपयं। जं सिद्धाण सरूवं तमेव सुह-

[1] "सातासातभावे न सुखी सिद्ध इति केचिन्मन्यन्ते तन्न यत् पौद्गलिकं विपक्षप्रतिकारहेतुमयम् ॥ १ ॥ अकृत-

सोलस कसाय नव नोकसाय दंसणतिगं च मोहणीयं । सुरनरतिरिनिरयाऊ सायासायं च नीउच्चं ॥१२३॥

व्याख्या–षोडश कषायाः नव नोकषायाः दर्शनत्रिकं च मोहनीयं । सुरनरतिर्यग्नरकायूंषि सातासातं च नीचोच्चं' इति पदानि । अर्थघटना त्वेवम्–षोडश कषायाः कषायमोहनीयं, नव नोकषाया–नोकषायमोहनीयं, द्वितीयार्द्धे चकारः समुच्चये, कषाया नोकषायाश्च चारित्रमोहनीयमिति वाक्यशेषः, प्रथमार्द्धे चकारः पुनःशब्दार्थः, दर्शनत्रिकं पुनः दर्शनमोहनीयं भवति । कषः–संसारः तस्यायाः–प्राप्तयः कषायाः क्रोधमानमायालोभाख्याः, ते च प्रत्येकं चतुर्द्धा भवन्ति, अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनाख्याः अनन्तकालमतिप्रभूतं कालमनुबन्धमुदिताः कुर्वन्तीत्यनन्तानुबन्धिनः, न विद्यते प्रत्याख्यानं यदुदये तेऽप्रत्याख्यानकषायाः,प्रत्याख्यानं मर्यादयाऽऽवृण्वन्ति ये ते प्रत्याख्यानावरणाःते सर्वविरतिं आवृण्वन्ति, न तु देशविरतिमिति भावः । सम्यक् सर्वविरतिरूपचारित्रत्रयाविनाशेन ज्वलन्तीति सञ्ज्वलनाः, अविशेषितकषायग्रहणे चत्वारो मूलभेदा वा पञ्चविंशतिर्वा सर्वत्र मन्तव्याः, नोशब्दो देशप्रतिषेधे, ततः सम्पूर्णकषायकार्यकरणक्षमा न भवन्तीति नोकषायाः । चकारोऽनूक्तार्थसूचकः, नोकषाया द्विविधाः हास्यरत्यरतिशोकभयजुगुप्सा इति हास्यादिषट्कम्, पुंस्त्रीनपुंसका इति वेदत्रयं, एतच्च पञ्चविंशतिभेदं चारित्रमोहनीयमिति । मिथ्यात्वं सम्यङ्मिथ्यात्वं सम्यक्त्वमेवं त्रिविधं दर्शनमोहनीयम्, एवमष्टाविंशतिविधं मोहनीयं भवति । एवं व्याख्याते कश्चिदाह– प्रथमं दर्शनमोहनीयस्यैवोपशमः क्षयो वा पश्चाच्चारित्रमोहनीयस्येतिकृत्वा तेनैव क्रमेणोपन्यासो घटते, नान्यथेत्यत्रोच्यते–चारित्रमोहनीयप्रकृतयः प्रतिपद्यमानचारित्राणां प्रतिपतितचारित्राणां वाऽप्राप्तचारित्राणां च सर्वजीवानां सर्वा अपि अभिहितप्रमाणा भवन्ति, दर्शनत्रयं तु नैवम्, यतोऽनवाप्त-

मिति मन्तव्यम्, सामान्यनिद्राग्रहणात् निद्रापञ्चकं वा प्रतिपत्तव्यम्, सामान्यदर्शनावरणग्रहणे अविशेषेण नवविधमपि ग्राह्यं, इत्यभिहिते कश्चिदाह—निद्राः पञ्चापि दर्शनावरणमभिहितं भवता, यच्च ताभिराव्रियते दर्शनं तच्च नास्ति, एवं ताः कथं दर्शनावरणम् ? इत्यत्रोच्यते—चक्षुरचक्षुरवधीनां यद्दर्शनं त्रिविधमपि क्षायोपशमिकत्वादनेकव्यक्तिव्यक्तं, तत्प्रबोधः—तद्विकाशस्तद्वैमल्यमितियावत् स यासामुदये निनराम्-अतिशयेन द्राति—कुत्सितो भवति असद्रूपः तत्त्वतः- स्वभावात्सर्वथा च्युतो भवति ताः निद्राः, क्षयोपशमिकदर्शनाविर्भूतवैमल्यस्य सर्वथा विघातिकाः, नतु क्षायोपशमिकोपयोगस्य, यतोऽसावन्यकर्मक्षयोपशमज इति भावः। अन्यैरप्युक्तम्-"छउमत्थ कालिएहिं जं दिट्ठं जिणवरेहिं सव्वेहि। वीरो (बुद्धो) तंपि न पासति केवलनाणे समुप्पन्ने ॥ ३ ॥" यस्याः सुखेनैव व्यपगमो भवति प्रतिबोधविभवनेन सा निद्रा, एवं यस्या दुःखेन व्यपगमो भवति सा निद्रानिद्रा, या स्थितस्याप्येति प्रतिबोधविघानेन सा प्रचला, एवं या भ्रमतोऽप्येति सा प्रचलाप्रचला, यस्यास्तूदये दिनचिन्तितमपि व्यापारं प्रतिबोधरहितो जन्तुः करोति सा स्त्यानर्द्धिः, उक्तं च-"सुहपडिबोहा निद्दा दुहपडिबोहा य निद्दनिद्दा य। पयला होइ ठियस्स य पयलापयला य चंकमतो ॥ १ ॥" इति गाथार्थः ॥ १२२ ॥

मोहनीयादीनामुत्तरप्रकृतीरभिधातुकाम आह—

---

१ णे निद्रापञ्चकं वा २ छद्मस्थकालिकैर्यद्दृष्टं जिनवरैः सर्वैः वीरो (बुद्ध) तदपि न पश्यति, केवलज्ञाने समुत्पन्ने ॥१॥ अत्रेयं गाथाऽसङ्गता प्रतिभाति। ३ 'सुखप्रतिबोधा निद्रा दुःखप्रतिबोधा च निद्रानिद्रा च। प्रचला भवति स्थितस्य च प्रचलाप्रचला च चंक्रमतः' ॥ १ ॥

ज्ञानावरणं श्रुतज्ञानावरणं अवधिज्ञानावरणं मनःपर्यवज्ञानावरणं केवलज्ञानावरणं, एवं पञ्चप्रकारं 'प्रथम' मिति, ज्ञानावरणं कर्मेति । यथाऽऽवरणशब्दस्तथान्तरायशब्दोऽपि प्रतिभेदं योजनीयः, 'चरिम' मिति अन्तरायशब्दार्थः, ततश्चायमर्थः—दानान्तरायं लाभान्तरायं भोगान्तरायं उपभोगान्तरायं वीर्यान्तरायम् । दीयते इति दानं, लभ्यत इति लाभः, भुज्यत इति भोगः, उपभुज्यत इत्युपभोगः प्राणिनेति गम्यते, विविधमनेकप्रकारमीरयति प्रवर्त्तयति यत्प्राणिनं क्रियासु तस्यान्तरायं वीर्यान्तरायं, एवं पञ्चप्रकारं चरममित्यन्तरायं । ज्ञानावरणीयानन्तरं कस्मादन्तरायं प्रतिपाद्यते इति ? उच्यते, अस्यानेनैव सह सत्तोदयोदीरणाबन्धाः तुल्यप्रकृतिस्थितित्वं चास्यार्थस्य ख्यापनार्थमिति गाथार्थः ॥ १२१ ॥

दर्शनावरणस्योत्तरप्रकृतीरभिधातुकाम आह—

**नयणेयरोहिकेवल-दंसण आवरणयं भवे चउहा । निद्दापयलाहिं छहा, निद्दाइ दुरुत्त थीणद्धी ॥ १२२ ॥**

व्याख्या—'नयनेतरावधिकेवलदर्शनावरणकं भवेच्चतुर्द्धा । निद्राप्रचलाभ्यां षोढा निद्रादिः द्विरुक्तः स्त्यानर्द्धय'इति पदानि । पदार्थस्तु—दर्शनशब्दः प्रथमार्धभेदेषु प्रत्येकं सम्बन्धनीयः, नयनाभ्यां दर्शनं नयनदर्शनं तस्यावरणं नयनदर्शनावरणम्, 'इतरत्' शेषेन्द्रियैर्दर्शनं अनयनदर्शनं तस्यावरणं अनयनदर्शनावरणं अचक्षुर्दर्शनावरणमितियावत्, एवमवधिदर्शनावरणीयं केवलदर्शनावरणीयं, एवं दर्शनावरणीयं 'चतुर्द्धा' चतुष्प्रकारं भवति, चतुःसङ्ख्यदर्शनावरणग्रहणेऽन्यत्राप्यासामेव ग्रहणं प्रतिपत्तव्यम्, निद्राप्रचलाभ्यां सहिता एव चतस्रः षड् भवन्ति, षड्ग्रहणे एता एव षड् प्रतिपत्तव्याः, निद्रादिद्विरुक्तप्रकृती च स्त्यानर्द्धिश्च निद्रादिद्विरुक्तस्त्यानर्द्धयः, किमुक्तं भवति ?—निद्रानिद्रा प्रचलाप्रचला स्त्यानर्द्धिरेवं स्त्यानर्द्ध्युपलक्षितं त्रिक- ॥३

इति गोत्रं, शुभाशुभां वाचमुच्चारणकालानन्तरार्थप्रतिपत्तिजनकत्वात्पालयतीतियावद्, गूयते शुभाशुभता प्राणिनां यद्व-शात्तद्वा गोत्रम्, अन्तरं व्यवधातं तस्यायः हेतुर्यत्तदन्तरायं, दानाद्यनुभवतो विघातरूपतयोपतिष्ठते यत्तदन्तरायं, प्रथमः चकारः समुच्चये, द्वितीयस्त्वेवंकारार्थः, एवमष्टौ प्रकृतयः इत्युक्तं भवति, तथाशब्दः पूर्वाचार्योक्तक्रमोपन्यासप्रदर्शनार्थः, उत्तरत्रोत्तरप्रकृतिभणनादिह मूलप्रकृतयो मन्तव्या इति गाथार्थः ॥ ११९ ॥ उत्तरप्रकृतिसङ्ख्यामाह—

पंच णव दोण्णि अट्ठा–वीसा चउरो तहेव बायाला। दोन्नि य पंच य भणिया, पयडीओ उत्तरा चेव ॥ १२० ॥

व्याख्या–' पञ्च नव द्व्यष्टाविंशतिश्चत्वारः तथैव द्वौ चत्वारिंशत् द्वौ च पञ्च, भणिताः प्रकृतय उत्तराश्चैवेति ' पदानि । पदार्थस्तु–यथासङ्ख्येन ज्ञानावरणीयस्य पञ्चोत्तरभेदाः, दर्शनावरणीयस्य नव, वेदनीयस्य द्वौ, मोहनीयस्य अष्टाविंशतिर्भे-दाः, आयुष्कस्य चत्वारः, नाम्नो द्वाचत्वारिंशद्, गोत्रस्य द्वौ, अन्तरायस्य पञ्च, तथैव भणिता उत्तरप्रकृतयो येन क्रमेणा-भिहिता मूलप्रकृतय इति योजना, प्रथमचकारः सर्वप्रकृतीनां प्रत्येकमसङ्ख्येयव्यक्तिख्यापकः, द्वितीयचकारो नामकर्मग उत्तरभेदानामप्युत्तरभेदसंसूचकः, तृतीयचकारः समुच्चयार्थः। ततश्च एवमेवैताः प्रकृतयो भणिताः, नान्यथेति गाथार्थः ॥१२०॥

तानेवोत्तरभेदान् वक्तुकाम आह—

मइसुयओहीमणकेवलाण आवरणयं भवे पढमं। तह दाणलाभभोगोव–भोगविरियंतरायं चरिमं ॥१२१॥

व्याख्या–' मतिश्रुतावधिमनःपर्यायकेवलानामावरणकं भवेत् प्रथमं, तथा दानलाभभोगोपभोगवीर्यान्तरायकं चर-ममिति पदानि । पदार्थस्तु–आवरणशब्दः प्रतिभेदं सम्बन्धनीयः, प्रथममिति च ज्ञानावरणशब्दार्थः, ततश्चायमर्थो–म

तेरस विबंधगा ते, अट्ठविहं बंधियव्वं कम्मं । मूलुत्तरभेयं ते साहिमो ते निसामेह ॥ ११८ ॥

व्याख्या—अत एतेभ्यो गुणस्थानविशेषेभ्यः त्रयोदश 'विबन्धका' विविधमनेकप्रकारं विशेषेण वा बन्धका विबन्धकाः, अयोगी तु बन्धहेत्वभावादबन्धक इति, बन्धव्यं पुनरष्टविधं कर्म, तस्य कर्मणो मूलभेदानुत्तरभेदांश्च साधयामः तान् 'शृणुत' निशामयत, हे लोका ! इति गाथार्थः ॥ ११८ ॥

॥ समाप्तं द्वितीयं द्वारम् ॥ ७००

॥ अथ तृतीयं द्वारम् ॥

उक्तं द्वितीयं बन्धकद्वारम् ॥ अधुना तृतीयं बन्धव्यद्वारमभिधातुकाम आह—

नाणस्स दंसणस्स य, आवरणं वेयणीय मोहणीयं । आउय नामं गोयं, तहंतरायं च पयडीओ ॥ ११९ ॥

व्याख्या—'ज्ञानस्य दर्शनस्य चावरणं वेदनीयं मोहनीयं । आयुष्कं नाम गोत्रं तथान्तरायं च प्रकृतयः' इति पदानि । पदार्थस्तु—ज्ञायन्ते जीवादयः पदार्था येन तज्ज्ञानं, तस्यावरणं ज्ञानावरणं, त एव दृश्यन्तेऽवलोक्यन्ते येन तद्दर्शनं तस्यावरणं दर्शनावरणं, ज्ञानदर्शनयोर्विशेषसामान्यरूपो विशेषः, विद्यतेऽस्ति सर्वसंसारिणां अनेकार्थत्वाद्धातूनां संसारिभिरनुभूयते चेति वेदनीयं, मोहयति सदसद्विवेकविकलान् प्राणिनः करोतीति मोहनीयम्, चतुर्गतिसमापन्नः प्राणी स्थानात् स्थानान्तरमेति यद्वशात् तदायुः आयुरेव आयुष्कम्, नामयत्यधममध्यमोत्तमासु गतिषु प्राणिनं प्रह्वीकरोतीति नाम, गां त्रायत

संसयकरणं जंपि य, जो तेसु अणायरो पयत्थेसु । तं पंचविहं मिच्छं तद्दंसी मिच्छादिट्ठीओ ॥ २ ॥ उवसमअद्धाएँ ठिओ मिच्छमपत्तो तमेव गंतुमणो । सम्मं आसायंतो सासायणगो मुणेयव्वो ॥ ३ ॥ जह गुडदहीणि विसयायभावरहियागि होंनि मीसाणि । भुंजंतस्स तहोभयदिट्ठीए मीसदिट्ठीउ ॥ ४ ॥ तिविहेवि हु संमत्ते, थोवावि ण विरति जस्स कम्मवसा । सो अविरओ त्ति भणइ, देसो पुण देसविरईए ॥ ५ ॥ विगहाकसायनिद्दासद्दाइरओ भवे पमत्तोत्ति । पंचसमिओ तिगुत्तो अपमत्तजई मुणेयव्वो ॥ ६ ॥ अप्पुव्वं अप्पुव्वं, जहुत्तरं जो करेइ ठिइखंडं । रसखंडं तग्घायं च सो खलु अपूव्वकरणोत्ति ॥ ७ ॥ विणियट्टंति विसुद्धिं, समयपविट्ठावि जत्थ अण्णोण्णं । तं तु णियट्टिट्ठाणं विवरीयमओ य अनियट्टी ॥ ८ ॥ थूलाण लोभखंडाण वेयंतो बायरो मुणेयव्वो । सुहुमाण होति सुहुमो, उवसंतेहिं तु उवसंतो ॥ ९ ॥ खीणंमि मोहणीए खीणक-साओ सजोगि जोगाणं । होइ पउत्तो तत्थ उ, अपउत्तो होनि उ अजोगी ॥ १० ॥ इति गाथार्थः ॥ ११७ ॥

---

१ जीवादिपदार्थेषु, जिनोपदिष्टेषु याऽश्रद्धा । श्रद्धाऽपि च मिथ्या, विपरीतप्ररूपणा या च ॥१॥ संशयकरणं यदपि च, यस्तेष्वनादरः पदार्थेषु । तत्पञ्चविध मिथ्यात्वं, तद्दर्शनी मिथ्यादृष्टिस्तु ॥२॥ उपशमाद्धायां स्थितो, मिथ्यात्वमप्राप्त-स्तमेव गन्तुमनाः । सम्यक्त्वमास्वादयन्, सास्वादनो ज्ञातव्यः ॥३॥ यथा गुडदधिनी विशदात्मभावरहिते भवतो मिश्रे। भुञ्जतः(स्वादः)स्तथोभयदृष्ट्या मिश्रदृष्टिस्तु ॥४॥ त्रिविधेऽपि खलु सम्यक्त्वे स्तोकापि न विरतिर्यस्य कर्मवशात् । स अविरत इति भण्यते, देशः पुनर्देशविरत्या ॥ ५ ॥ विकथाकषायनिद्राशब्दादिरतो भवेत् प्रमत्त इति । पञ्चसमितस्त्रिगुप्तोऽप्रमत्तयति-र्ज्ञातव्यः ॥६॥ अपूर्वं अपूर्वं यथोत्तरं यः करोति स्थितिखण्डम् । रसखण्डं तद्घातं च स खल्वपूर्वकरण इति ॥७॥ विनिवर्तंते विशुद्धिं समकप्रविष्टा अपि यत्रान्योन्यम् । तत्तु निवृत्तिस्थानं, विपरीतमतश्चानिवृत्तिः ॥ ८ ॥ स्थूलाँल्लोभखण्डान् वेदयन् बादरो ज्ञातव्यः । सूक्ष्मान् भवति सूक्ष्म उपशान्तैस्तूपशान्तस्तु ॥ ९ ॥ क्षीणे मोहनीये क्षीणकषायः सयोगी योगेषु भवति प्रवृत्तस्तत्र तु अप्रवृत्तो भवति त्वयोगी ॥ १० ॥

देशविरताः सास्वादनाः सम्यग्मिथ्यादृष्टयोऽविरतसम्यग्दृष्टय एते चत्वारोऽपि यथोत्तरमसङ्ख्येयगुणा इति गाथार्थः ॥११४॥

उक्कोसपए संता, मिच्छा तिसु गईसु होंतिऽसंखगुणा। तिरिएसऽणंतगुणिया, सन्निसु मणुएसु संखगुणा ११५

व्याख्या–उत्कृष्टपदभाविन एव यदा सन्तो–भवन्ति तदा तेभ्योऽपि तिसृषु गतिषु मिथ्यादृष्टयोऽसङ्ख्येयगुणा भवन्ति, तिर्यग्गतौ अनन्तगुणाः। संज्ञिषु मनुष्येषु सङ्ख्येयगुणाः स्वजातीयाविरतेभ्यो, न सर्वविरतेभ्य इति गाथार्थः ॥ ११५ ॥

एगिंदियसुहुमियरा सन्नियरपणिंदिया सबितिचऊ। पज्जत्तापज्जत्ता भेएणं चोद्दसग्गामा ॥ ११६ ॥

व्याख्या–एकेन्द्रियाः सूक्ष्माः सूक्ष्मनामकर्मोदयाद् 'इतरे' तद्विपक्षभूताः, बादरा बादरकर्मोदयिनः, 'संज्ञिनः' समनस्का 'इतरे' असंज्ञिनः अमनस्का उभयेऽपि पञ्चेन्द्रियाः, द्वित्रिचतुरिन्द्रिया स्वस्वनामकर्मोदयिनः एते सप्त पर्याप्तकाः, एत एव सप्त अपर्याप्तकाः, अपर्याप्तनामकर्मोदयाल्लब्ध्यपर्याप्तकाः, पर्याप्तनामकर्मोदयिनो यद्यपि करणापर्याप्तकास्तथापि पर्याप्तकवद्द्रष्टव्याः, एतानि चतुर्दश स्थानान्यखिलजीवसङ्ग्राहकाणीति गाथार्थः ॥ ११६ ॥

संज्ञिपर्याप्तकस्य भूयश्चतुर्दश भेदानाह–

मिच्छासासणमिस्सा, अविरयदेसा पमत्त अपमत्ता। अपुव्वबायरसुहुमोवसंतखीणा सजोगियरा ॥ ११७ ॥

व्याख्या–मिथ्यादृष्टिः, सास्वादनः, सम्यग्मिथ्यादृष्टिः, अविरतसम्यग्दृष्टिः, देशविरतः, प्रमत्तयतिः, अप्रमत्तयतिः, निवृत्तिरपूर्वकरणो वाऽनिवृत्तिबादरो [वा] सूक्ष्मकषायः,उपशान्तकषायः, क्षीणकषायः,सयोगी,अयोगी, कषायशब्दलोपादिति समासार्थः, " जीवाइपयत्थेसुं, जिणोवदिट्ठेसु जा असद्दहणा। सद्दहणाऽविय मिच्छा, विवरीयपरूवणा जा य ॥ १ ॥

२ द्वा
अल
बहुत

सर्वेऽपि पूर्वेभ्यो विशेषाधिका इति गाथार्थः ॥ १११ ॥

पज्जत्तापज्जत्ता, सुहुमा किंचिहिय भव्वसिद्धीया । तत्तो बायरसुहुमा निगोय वणस्सइ जिया तत्तो ॥११२॥

व्याख्या—पर्याप्ताऽपर्याप्ताः सर्वेऽपि सूक्ष्माः पूर्वोक्तेभ्यो विशेषाधिकास्तेभ्योऽपि भव्या विशेषाधिकाः, तेभ्योऽपि बादरसूक्ष्मसकलनिगोदजीवाः, जीवाशब्दस्योभयसम्बन्धात् विशेषाधिकास्तेभ्योऽपि सामान्यवनस्पतिकायिका विशेषाधिका इति गाथार्थः ॥ ११२ ॥

एगिंदिया तिरिक्खा, चउगइमिच्छा य अविरइजुया य । सकसाया छउमत्था, सजोगसंसारि सव्वेवि ॥११३॥

व्याख्या—वनस्पतिकायिकेभ्य एकेन्द्रिया विशेषाधिका, एकेन्द्रियेभ्यस्तिर्यञ्चो विशेषाधिकाः, तिर्यग्भ्योऽपि चतुर्गतिमिथ्यादृष्टयो विशेषाधिकाः, तेभ्योऽप्यविरताः, तेभ्योऽपि सकषायाः, तेभ्योऽपि छद्मस्थाः, तेभ्योऽपि सयोगिनः, तेभ्योऽपि संसारस्थाः (तेभ्योऽपि सामान्येन सर्वेऽपि) जीवाः) प्रतिपदं वक्तव्याः, किञ्चिदधिकत्वं च क्षपकश्रेण्यादिषु यथासम्भवं सकषायादीनां भावनीयमिति गाथार्थः ॥ ११३ ॥

उवसंत खवगजोगी, अपमत्तपमत्तदेससासाणा । मीसा विरया चउ चउ जहुत्तरं संखसंखगुणा ॥ ११४ ॥

व्याख्या—उपशान्तेभ्यः क्षपकाः सयोगिनोऽप्रमत्ताः प्रमत्ताश्चत्वारोऽपि यथोत्तरं सङ्ख्येयगुणाः उत्कृष्टसम्भवे, प्रमत्तेभ्यो

---

१ खेचरपञ्चेन्द्रियतिर्यग्योनिस्त्रीभ्यः पर्याप्तचतुरिन्द्रियपर्यन्ताः सर्वे यथोत्तरं संख्येयगुणाः प्रज्ञापनायां प्रतिपादिताः अत्र त्वन्यथेति । अग्रेतनेषु उत्कृष्टपदग्रहादत्रान्यद्वा किंचित्पदमभिप्रेत स्यात्

पर्याप्ता यथोत्तरं विशेषाधिकाः, तेभ्योऽप्यसङ्ख्येयगुणाः अपर्याप्ताः सूक्ष्मनिगोदा इति गाथार्थः ॥ १०८ ॥

संखेज्जगुणा तत्तो, पज्जत्ताणंतया तओऽभव्वा । पडिवडियसम्म सिद्धा, वणबायरजीवपज्जत्ता ॥ १०९ ॥

व्याख्या–अपर्याप्तसूक्ष्मनिगोदेभ्योऽपि सूक्ष्मपर्याप्ता निगोदाः सङ्ख्येयगुणा भवन्ति, तेभ्योऽप्यनन्तगुणा अभव्याः, तेभ्योऽप्यनन्तगुणाः प्रतिपतितसम्यग्दृष्टयः, तेभ्योऽप्यनन्तगुणाः सिद्धाः, सिद्धेभ्योऽपि वनस्पतिकायिका बादराः पर्याप्तका अनन्तगुणा इति गाथार्थः ॥ १०९ ॥

किंचिंहिया सामन्ना, एए उ असंख वण अपज्जत्ता । एए सामन्नेणं विसेस अहिया अपज्जत्ता ॥ ११० ॥

व्याख्या–पर्याप्तबादरवनस्पतिकायिकेभ्य एकेन्द्रियाः पर्याप्ता बादरा विशेषाधिकाः, एत इति तुशब्दादेत एव बादरा वनस्पतिकायिका अपर्याप्ता अनन्तरेभ्योऽसङ्ख्येयगुणाः, एत एव अपर्याप्ता बादराः (विशेषाधिकाः ततः) सामान्येनैकेन्द्रिया (बादराः) विशेषाधिकाः पूर्वेभ्यः, इति गाथार्थः ॥ ११० ॥

सुहुमा वणा असंखा, विसेसअहिया इमे उ सामन्ना । सुहुमवणा संखेज्जा पज्जत्ता सव्व किंचिहिया ॥१११॥

व्याख्या–अपर्याप्ता इत्यनुवर्त्तमानेऽपि भूयः प्रागपर्याप्तकग्रहणं सूक्ष्मवनस्पतीनां प्रत्येकत्वाभावं ज्ञापयति, ततस्ते सूक्ष्मा (अपर्याप्ताः) वनस्पतिकायिका नियमतः साधारणा अनन्तरेभ्योऽसङ्ख्येयगुणाः, एत एव सूक्ष्मा अपर्याप्ता एकेन्द्रिया विशेषाधिकाः, अनन्तरेभ्यः सूक्ष्मा वनस्पतिकायिकाः पर्याप्ताः सङ्ख्येयगुणाः, अनन्तरेभ्यस्त एव सूक्ष्माः पर्याप्ता एकेन्द्रियाः

ऽप्यसङ्ख्येयगुणाः सप्तमपृथिवीनारकाः, तेभ्योऽपि षष्ठयां नारकाः असंख्येयगुणाः तेभ्योऽप्यसङ्ख्येयगुणाः सहस्रारदेवा इति गाथार्थः ॥ १०० ॥

सुक्कंमि पंचमाए, लंतयचोत्थीए बंभतच्चाए । माहिंद सणंकुमारे, दोच्चाए मुच्छिमा मणुया ॥ १०१ ॥

व्याख्या–सहस्रारदेवेभ्योऽप्यसङ्ख्येयगुणाः शुक्रकल्पनिवासिनो देवास्तेभ्योऽपि पञ्चम्यां पृथिव्यां नारका असङ्ख्येयगुणास्तेभ्योऽपि लान्तककल्पदेवा असङ्ख्येयगुणाः, तेभ्योऽपि चतुर्थपृथिव्यां नारका असङ्ख्येयगुणाः, तेभ्योऽपि ब्रह्मकल्पदेवा असङ्ख्येयगुणास्तेभ्योऽपि तृतीयपृथिव्यां नारका असङ्ख्येयगुणाः, तेभ्योऽपि माहेन्द्रदेवाः असङ्ख्येयगुणाः, तेभ्योऽपि सनत्कुमारदेवा असङ्ख्येयगुणाः, तेभ्योऽपि द्वितीयनरकपृथिव्यां नारका असङ्ख्येयगुणाः, तेभ्योऽपि सम्मूच्छिममनुष्या उत्कृष्टपदभाविनः असङ्ख्येयगुणा भवन्तीति गाथार्थः ॥ १०१ ॥

ईसाणे सव्वत्थवि, बत्तीसगुणाओ होंति देवीओ । संखेज्जा सोहम्मे तओ असंखा भवणवासी ॥ १०२ ॥

व्याख्या–तेभ्यः सम्मूर्च्छजमनुष्येभ्योऽसङ्ख्येयगुणा ईशानदेवास्तेभ्यस्तद्देव्यो द्वात्रिंशद्गुणाः, ताभ्यो देवीभ्यः सङ्ख्येयगुणाः सौधर्मदेवास्तेभ्यस्तद्देव्यो द्वात्रिंशद्गुणाः, ताभ्योऽप्यसङ्ख्येयगुणा भवनपतयस्तेभ्योऽपि तद्देव्यो द्वात्रिंशद्गुणा इति गाथार्थः ॥ १०२ ॥

रयणप्पभिया खहयर–पणिंदिसंखेज्ज तत्तिरिक्खीओ । सव्वत्थ तओ थलयर–जलयर वण जोइसा चेवं १०३

व्याख्या–भुवनपतिदेवीभ्योऽपि रत्नप्रभा नारका असंख्येयगुणाः यतः सर्वेऽपि भुवनपतयस्तेभ्य असङ्ख्येयभागमात्रा

शेषगुणजीवानां भावत्रयं भवति । मिथ्यादृष्टेरौदयिकपारिणामिकौ सम्पूर्णौ भवतः, क्षायोपशमिकस्य तु अज्ञानत्रयं चक्षुरचक्षुदर्शने, दानलाभभोगोपभोगवीर्यलब्धयः, एते दश भेदा भवन्ति, न शेषाः । सास्वादनस्यापि अभव्यत्वमिथ्यात्वे विहाय शेषं तथैव । सम्यग्मिथ्यादृष्टेस्तु मिथ्यात्वं सम्यग्मिथ्यात्वभावोपगतं उदये भवति, नान्यो विशेषः। सयोग्ययोगिनोरपि भावत्रयं क्षायोपशमिकौपशमिकयोरभावादिति, तत्र औदयिके मनुष्यगत्यसिद्धत्वे शुक्ललेश्याप्याद्यस्य, पारिणामिके जीवभव्यत्वे, क्षायिके नवापि सम्पूर्णाः, सम्यक्त्वचारित्रे केवलज्ञानदर्शने पञ्च लब्धय इति । तुशब्दाज्जीवस्थानेष्वपि यदेव मिथ्यादृष्टेर्भावत्रयं तदेव द्वादशस्थानेषु स्त्रीपुरुषवेदशुभलेश्यात्रयदेवनरकमनुष्यगतिविभङ्गवर्जं यथासम्भवं चक्षुर्दर्शनवर्जं च तथैव मन्तव्यम् । संज्ञ्यपर्याप्तकस्तु मिथ्यादृष्टिसास्वादनाविरतत्वभावयुक्तो वक्तव्यः, संज्ञिपर्याप्तकस्तु सर्वगुणस्थानान्तर्गत एवाभिहितो नोच्यत इति गाथार्थः ॥ ९८ ॥ उक्तं भावद्वारम् । अल्पबहुत्वमाह तच्च तावज्जीवस्थानेषु—

थोवा गब्भयमणुया, तत्तो इत्थी उ तिघणगुणिया उ । बायरतेउक्काइय, तासिमसंखेज्ज पज्जत्ता ॥ ९९ ॥

व्याख्या—सर्वजीवेभ्यः स्तोका गर्भजा मनुष्याः संज्ञिनस्तेभ्योऽपि तद्युवत्यस्त्रिघनगुणा—सप्तविंशतिगुणा इत्यर्थः, ताभ्योऽपि बादराः पर्याप्तकास्तेजस्कायिका असङ्ख्येयगुणा इति गाथार्थः ॥ ९९ ॥

तत्तोणुत्तरदेवा, तत्तो संखेज्ज जाणओ कप्पो, तत्तो असंखगुणिया, सत्तम छट्ठी सहस्सारो ॥ १०० ॥

व्याख्या—तेभ्योऽपि अग्निकायिकेभ्योऽनुत्तराः—पञ्चोत्तरविमानवासिनो देवा असङ्ख्येयगुणाः, तेभ्योऽपि नवमाष्टमसप्तमषष्ठपञ्चमचतुर्थत्रिद्व्याद्यग्रैवयकेष्वच्युतारणप्राणतानताख्येषु कल्पेषु परिपाट्योत्तारोत्तरेषु देवा[अ] सङ्ख्येयगुणाः, तेभ्यो-

व्याख्या–अविरताद्येषु चतुर्षु गुणस्थानेष्वविरतदेशविरतप्रमत्ताप्रमत्ताख्येषु त्रयश्चत्वारो वा भावा भवन्ति, कथमेतद् ? उच्यते–औदयिकभावस्यैकविंशतिर्भेदाः, तेभ्योऽविरतस्यैकोनविंशतिर्भवन्ति, लेश्याषट्कं गतिकषायचतुष्कं वेदत्रयं अविरतिसिद्धत्वमिति मिथ्यात्वाज्ञाने न स्तः । देशविरतस्य देवनरकगतिवर्ज्जास्त एव सप्तदश, तिर्यग्गत्यविरतिवर्जिताश्च पञ्चदश प्रमत्ताप्रमत्तयोरिति । पारिणामिकस्य त्रयो भेदा, जीवत्वं भव्यत्वं चास्ति चतुर्णामपि, नास्त्यभव्यत्वम् । क्षायोपशमिकस्याष्टादश भेदाः, तेभ्योऽविरतस्य मतिज्ञानादिज्ञानत्रयं अचक्षुश्चक्षुरवधिदर्शनत्रयं पञ्च लब्धयः सम्यक्त्वं चैते द्वादश सन्ति, सर्वदेशविरतिमनःपर्यायज्ञानाज्ञानत्रयं तु षड् न । देशविरतस्य देशविरतिसहिता एत एव त्रयोदश, प्रमत्ताप्रमत्तयोर्मनःपर्यायसर्वविरतिसहिताश्चतुर्दश, एवमेतेष्वेते त्रयो भावाः । औपशमिकभावे औपशमिकं सम्यक्त्वं तच्च क्षायिकक्षायोपशमिकयोराद्यं यदा मोक्षबीजभूतं सम्भवति, तदा एषां चतुर्थो भावः, क्षायोपशमिकसम्यक्त्वक्षयेण यदा क्षायिकं सम्यक्त्वं भवति, तदा चैषां चतुर्थो भावः । एवमुपशमश्रेण्यां अपूर्वकरणबादरसूक्ष्मकषायाणामेतदुभयचतुष्कं, किन्तु लेश्यानां शुक्ललेश्यैव, सूक्ष्मसम्परायस्य यद्यपि चारित्रान्तरमुच्यते तथापि क्षायोपशमिकचारित्रान्नातिवर्त्तते,यत उक्तम्–' [1]लोभाणू वेयंतो जो खलु उवसामगो व खवगो वा ' इत्यादि, उपशान्तकषायस्य तु यदा सम्यक्त्वचारित्रे औपशमिके भवतः, तदा चत्वारो भावाः, यदा तु क्षायिकसम्यक्त्वं औपशमिकचारित्रं प्रतिपद्यते प्रतिपातियथाख्यातं, तदा पञ्चभावाः, क्षीणकषायस्य तु पूर्वोक्तास्त्रयः क्षायिकसम्यक्त्वचारित्रभावयुक्ताः, क्षपकापूर्वकरणादीनां तु क्षायिकसम्यक्त्वभावयुक्ताश्चत्वारः औपशमिकभावाभावादिति ।

१ ' लोभाणून् वेदयन् यः खलूपशामको वा क्षपको वा.'

प्राप्तसम्यक्त्वेनावश्यं सेद्धव्यमिति भावः, क्षीणकषायादीनां प्रतिपाताभावादन्तरमेव नास्तीति गाथार्थः ॥ ९५ ॥ अनेकजीवाश्रयं गुणान्तरमाह—

**वासपुहुत्तं उवसामगाण विरहो छमास खवगाणं । नाणाजीएसु सासाण मीसाणं पल्लसंखंसो ॥ ९६ ॥**

व्याख्या—वर्षपृथक्त्वेनावश्यमुपशामकैर्भूयोऽपि भाव्यं प्रागुपशामकेभ्य इति, क्षपकैस्तु प्राक्क्षपकेभ्यः षड्भिर्मासैरन्यैर्भाव्यम्, सास्वादनः सम्यग्मिथ्यादृष्टिर्वा पल्योपमासङ्ख्येयभागेऽतीते प्रागुत्पन्नेभ्यः स चान्यो वावश्यं नानाजीवेभ्यः उत्कृष्टान्तरे पि जघन्यतस्तु एकसमयेन प्रतिपद्यत इति गाथार्थः ॥ ९६ ॥

**सम्माई तिन्नि गुणा कमसो सगचोद्दपन्नरदिणाणि । छम्मास अजोगित्तं न कोवि पडिवज्जए सययं ॥९७॥ द्वारम् ॥**

व्याख्या—अविरतत्वगुणं प्राक्प्रतिपत्तेरुत्कृष्टतोऽन्यः सप्त दिनानि यावत् न कश्चित्प्रतिपद्यते, देशविरतिगुणं चतुर्दशदिनानि, सर्वविरतिगुणं पञ्चदशदिनानि यावन्न प्रतिपद्यते, तत्परतः प्रतिपद्यत एव । अयोगित्वं तु षड्मासान्यावत् 'सन्ततम्' अव्यवच्छिन्नं इयन्तं कालं न कश्चित्प्रतिपद्यते, सततमनवरतं वाऽतीतानागतवर्त्तमानकालेष्वनेन न्यायेनान्तरं भवति मिथ्यादृष्टेस्तु पल्योपमासङ्ख्येयभागमात्रं उत्कृष्टतोऽन्तरं यतः—सास्वादनेनोत्तरकाले मिथ्यादृष्टिना भाव्यम्, तस्यान्यगुणाभावादिति भावः । एतच्च सुज्ञानमेव । जघन्यतः समयमेकं स्थित्वा सर्वेऽपि गुणा भूयोऽपि प्रादुर्भवन्ति इति गाथार्थः ॥९७॥

गतमन्तरद्वारम्, भागद्वारमल्पबहुत्वान्तर्गतमेव ज्ञातव्यम् । इदानीं भावद्वारमुच्यते—

**सम्माइचउसु तिय चउ, उवसमगुवसंतयाण चउ पंच । चउ खीण अपुव्वाणं, तिन्नि उ भावावसेसाणं ॥९८॥ द्वारम् ॥**

व्याख्या—सर्वस्थानेभ्यश्च्युतस्य उत्कृष्टमन्तरं जीवस्य व्यावहारिकस्थावरकायस्थितिकालोऽसङ्ख्येयाः पुद्गलपरावर्त्ताः,
एतदेवापवदति, सर्वार्थसिद्धौ नास्त्यन्तरं, द्वितीयोत्पत्तेरभावात् । विजयवैजयन्तजयन्तापराजितेषूत्कृष्टतो द्विसागरोपमस्थि-
निकवैमानिकेषु स्थित्वा तेष्वेवोत्पद्यते, नरकेष्वप्यनेनैवानुमानेन जघन्यमुत्कृष्टमन्तरमवगन्तव्यमिति गाथार्थः ॥ ९४ ॥ एक-
जीवाश्रयगुणान्तरमाह—

**पलियासंखो सासायणंतरं सेसयाण अंतमुहू । मिच्छस्स बे छसट्ठी, इयराणं पोग्गलद्धंतो ॥ ९५ ॥**

व्याख्या—जघन्येनापि सास्वादनः स्वगुणं परित्यज्य पल्योपमासङ्ख्येयभागमात्रेण कालेन व्यतीतेन तमेव गुणं प्राप्नोति,
यतः सम्यक्त्वसम्यग्मिथ्यात्वपुञ्जौ इयता कालेन मिथ्यात्वभावेन परिणमय्य तत्रैव निक्षेपतः तदुत्तरकाले भूयोऽप्यौपशमिक-
सम्यक्त्वं प्राप्नोति, तदन्ते च सास्वादनत्वं नान्यथेति भावः । शेषाण्युपशान्तकषायपर्यवसानानि दशापि गुणस्थानानि परि-
त्यज्य भूयोऽप्यन्तर्मुहूर्त्तेन प्राप्नोति, यत उपशान्तत्वमपि प्राप्य प्रतिपतति मिथ्यादृष्टित्वं यावदवाप्नोति भूयोऽप्यन्तर्मुहूर्त्तेन
तदेवोपशान्तस्थानं यावत्सास्वादनं सम्यग्मिथ्यादृष्टिं च विना क्रमेणारोहति, एवं सर्वेऽपि गुणाः प्रत्येकमन्तर्मुहूर्त्तेन प्राप्यन्त इति
उत्कृष्टतस्तु मिथ्यादृष्टिरन्यगुणस्थानेषु सागरोपमाणां षट्षष्ठिद्वतयं स्थित्वा भूयोऽपि मिथ्यात्वमायाति, यतो विरतादयो
गुणाः सर्वेऽपि सम्यक्त्वोपलक्षिताः, तस्य चोत्कृष्टतः एकजीवे षट्षष्ठिसागरोपमाणि स्थितिः, स च सम्यक्त्वगुणी सम्य-
ग्मिथ्यात्वेऽन्तर्मुहूर्त्तं स्थित्वा भूयोऽपि सम्यक्त्वं गच्छति, ततः षट्षष्ठिसागरोपमाणि स्थित्वावश्य मिथ्यात्वं (क्षपकत्वंवा)
गच्छत्यत एतदन्तरं । शेषाणां सास्वादनाद्यानां उपशान्तान्तानां पुद्गलपरावर्त्तार्द्धं किञ्चिदूनं उत्कृष्टमन्तरं, यत इयता कालेन

विरहकालः । यः संज्ञिनः सागरोपमशतपृथक्त्वमात्रः कायस्थितिकालः सोऽसंज्ञिनो विरहकालः। यो नपुंसकवेदस्यासङ्ख्ये-यपुद्गलपरावर्त्तात्मकः कायस्थितिकालः स स्त्रीपुरुषवेदयोः विरहकालः। यः पुरुषवेदस्य सागरोपमशतपृथक्त्वमात्रः काय-स्थितिकालः स नपुंसकवेदस्य विरहकालः । एवं 'हरितस्य' वनस्पतिकायस्य यो विंशति (असङ्ख्येय) पुद्गलपराव-र्त्तमात्रः कायस्थितिकालः स इतरेषां पृथिव्यादीनां विरहकालः । यः पृथिव्यादीनां असङ्ख्येयलोकाकाशप्रदेशात्मकः काय-स्थितिकालः स हरितजीवस्यान्तरकालः । एवमेवान्यत्रापि उत्कृष्टतो नेतव्यः । चशब्दाधिक्याज्जघन्योऽन्तर्मुहूर्त्तिकोऽन्यत्र जघन्यायुर्भवं स्थित्वा तत्रैवोत्पद्यत इति गाथार्थः ॥ ९२ ॥

आईसाणं अमरस्स, अंतरं हीणयं मुहुत्तंतो । आसहसारे अच्चुयणुत्तर दिण मास वास नव ॥ ९३ ॥

व्याख्या–भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानेभ्यश्च्युतोऽमरोऽन्तर्मुहूर्त्तेन तत्रैवोत्पद्यते, सनत्कुमारमाहेन्द्रब्रह्मलोक-लान्तकशुक्रसहस्रारेभ्यश्च्युतोऽमरः नवभिर्दिनैस्तत्रैवोत्पद्यते । आनतप्राणतारणाच्युतेभ्यः च्युतोऽमरो नवभिर्मासैः तत्रैवोत्प-द्यते । ग्रैवेयकविजयादिभ्यश्च्युतोऽमरो नवभिर्वर्षैः तत्रैवोत्पद्यते । यतो मनःपर्याप्त्या पर्याप्तस्याविरतसम्यग्दृष्टेः तत्प्रभावादेव किञ्चिद्विशुद्धाध्यवसायस्येशानगमनं, नवभिर्दिनैः पुनर्मनसो जरठत्वादतिविशुद्धाध्यवसायस्याविरतस्य सहस्रारगमनम्, नवमासिकस्यास्मादेवाच्युतगमनाद्देशविरतिरिति । पञ्चोत्तरविमानगमनं तु द्रव्यभावचरणप्राप्तौ नववर्षग्रहणादवसीयत इति गाथार्थः ॥ ९३ ॥

थावरकालुक्कोसो, सव्वट्ठे बीयओ न उववाओ । दो अयरा विजयाइसु, नरएसुवि याणुमाणेणं ॥ ९४ ॥

तिरश्चां मनुष्याणां, ( अगर्भजानां ) देवानां नारकाणां च चतुर्णामपि प्रत्येकं द्वादशमुहूर्त्तान्युत्कृष्टतो 'विरहो'ऽन्तरं भवति, सामान्यनिर्देशात् सङ्ख्येयासङ्ख्येयायुषां ग्रहणम, देवानां चतुर्भेदानाम, नारकाणां सप्तभेदानामपि, एतच्चान्तरमनेकजीवाश्रयं चतुर्विधानामपि संज्ञिनां प्रागुत्पन्नेभ्योऽन्ये द्वादशभिर्मुहूर्त्तैरुत्कृष्टत उत्पद्यन्त एव, जघन्यं समयमेकं व्यस्तोच्चारणादेवावगन्तव्यम्। 'चंउवीसमुहुत्ताइं' इत्यादि, यदन्यैरभिहितं तत्प्रत्येकं नरकदेवलोकादिषु, एतत्पुनः सकलगत्याश्रयमिति न दोषः। सम्मूर्च्छजमनुष्याणां चतुर्विंशतिमुहूर्त्तान्, द्वित्रिचतुरिन्द्रियाणामसंज्ञिनां च प्रत्येकमन्तर्मुहूर्त्तं, एकेन्द्रियाणां सदोत्पत्तेरेवान्तरं नास्ति इति गाथार्थः ॥ ९१ ॥ उक्तं जीवस्थानेष्वनेकजीवाश्रयमन्तरं, तेष्वेवैकजीवाश्रयमतिदेशमाह—

तसबायरसाहारण—असन्निअपुमाण जो ठिईकालो। सो इयराणं विरहो, एवं हरियेयराणं च ॥ ९२ ॥

व्याख्या—त्रसत्वे सागरोपमद्विसहस्रमात्रो यः कायस्थितिकालः स स्थावरस्यैकेन्द्रियस्य एकजीवाश्रयो विरहकालः, एकेन्द्रियो द्वीन्द्रियादिष्वियन्तं कालं स्थित्वा भूयोऽप्येकेन्द्रियेष्वागच्छतीत्यर्थः। यस्त्वेकेन्द्रियस्योत्कृष्टो व्यावहारिकस्यासङ्ख्येयपुद्गलपरावर्त्तात्मकः कायस्थितिकालः स द्वीन्द्रियादिकत्रसविहरकालः। यो बादरस्य कायस्थितिकालो मोहस्थितिमात्रः, स सूक्ष्मस्यान्तरकालः। यः सूक्ष्मस्यासङ्ख्येयलोकमात्रः कायस्थितिकालः स बादरस्य विरहकालः। साधारणस्य यः सार्द्धद्विपुद्गलपरावर्त्तमात्रः कायस्थितिकालः स प्रत्येकस्य विरहकालः। यः प्रत्येकस्यासङ्ख्येयलोकाकाशप्रदेशमात्रः कायस्थितिकालः, स साधारणस्य विरहकालः। योऽसंज्ञिनो असङ्ख्येयपुद्गलपरावर्त्तात्मकः कायस्थितिकालः स संज्ञिनो

१ चतुर्विंशतिमुहूर्त्तानि.

सम्यक्त्वं देशविरतिगुणं चावलिकासमयानां असङ्ख्येयभागमात्रसमयान् यावत्प्रतिपद्यन्ते, तदुत्तरकालमवश्यं व्यवच्छेदेन भाव्यम्, सर्वविरतिं सिद्धत्वं चाष्टौ समायन् सातत्येन प्रतिपद्यन्ते अव्यवच्छेदेनेति गाथार्थः ॥ ८८ ॥

**उवसमसेढी उवसंतया य मणुयत्तणुत्तरसुरत्तं । पडिवज्जंते समया संखेया खवगसेढी य ॥ ८९ ॥**

व्याख्या—उपशमश्रेणीं उपशान्ततां च मनुजत्वं पञ्चोत्तरविमानदेवत्वं च जीवाः सङ्ख्येयान् समयान् यावत्प्रतिपद्यन्ते, चशब्दात् स्तोका मनुजाः यतः सर्वेऽपि सङ्ख्येयास्तेभ्यश्चोत्तमयतित्वप्राप्तेभ्यः एतानि स्थानानि इति । द्वितीयचशब्दात् क्षपकश्रेणीं अष्टावेव समयान् इति गाथार्थः ॥ ८९ ॥

**बत्तीसा अडयाला, सट्ठी बावत्तरी य चुलसीई । छन्नउइ दुअट्ठसयं, एगाइ जहुत्तरे समए ॥ ९० ॥**

व्याख्या—एकादयो रूपवृद्ध्या यावद् द्वात्रिंशज्जीवा प्रथम(क्षपक)श्रेण्याद्यसमये क्षपकत्वं प्रतिपद्यन्ते, न तेभ्योऽभ्यधिकाः तदुत्तरसमये एकादयो रूपवृद्ध्या यावदष्टचत्वारिंशन्न तेभ्योऽप्यधिकास्तृतीयसमये एकादयो रूपवृद्ध्या षष्टिं यावदेवं चतुर्थसमये द्विसप्ततिं यावत्, पञ्चमसमये चतुरशीतिं यावत्, षष्ठसमये षण्णवतिं यावत्, सप्तमसमये द्व्यधिकं शतम्, अष्टमसमये एकादयो रूपवृद्ध्या अष्टाभ्यधिकशतपर्यन्ता जीवाः श्रेणीं सिद्धत्वं वा प्रतिपद्यन्ते, तत्परतः प्रतिपत्तिरेव नास्ति, एते चोत्कृष्टतः सर्वेऽपि द्व्यधिकषट्शतप्रमाणा इति गाथार्थः ॥ ९० ॥ उक्तं कालद्वारम् । अन्तरद्वारमाह—

**गब्भयतिरिमणुसुरनारयाण, विरहो मुहुत्तबारसगं । मुच्छिमनराण चउवीस, विगल अमणाण अंतमुहू ॥ ९१ ॥**

व्याख्या—सर्वेऽपि गर्भजाः संज्ञिनो, ये तु संज्ञिनस्ते गर्भजा अगर्भजा वा अस्यार्थस्य सिद्ध्यर्थमेवमुपन्यासः, गर्भजानां

**सासणमीसाओ हवंति, संतया पलियसंखइगकालो । उवसामगउवसंता, समयाओ अंतमुहुत्तं ॥ ८६ ॥**

व्याख्या--सास्वादनाः सम्यग्मिथ्यादृष्टयश्च ‘सन्तता’ अव्यवच्छिन्नाः, पल्योपमासङ्ख्येयभागमात्रं कालमुत्कृष्टतः एकानेकविकल्पोत्पत्त्या विनश्यन्तोऽपि इयत्कालं भवन्ति, स्वगुणस्थानमशून्यं कुर्वन्तीत्यर्थः, जघन्यतः सास्वादनाः समयमेकमितरे अन्तर्मुहूर्त्तमित्ययमेककालः । तुशब्दादुपशामनयोग्या अपूर्वकरणाः, बादरसूक्ष्मकषाया उपशान्तकषायाश्च जघन्यतः समयमेकं स्वगुणस्थानमशून्यं कुर्वन्ति परतो विनश्यन्ति देवत्वेनोत्पद्यन्ते, उत्कृष्टतोऽन्तर्मुहूर्त्तं स्थित्वा गुणान्तरं व्रजन्ति, तत्परतः श्रेणीशून्यतया भाव्यमिति गाथार्थः ॥ ८६ ॥

**खवगा खीणाजोगी, होंति अणिच्चावि अंतरमुहुत्तं । नाणा जीवे तं चिय, सत्तहिं समएहिं अब्भहियं ॥८७॥**

व्याख्या--क्षपका बादरकषायाणां सूक्ष्मकषायविशेषाणां च । अपिशब्दात् क्षपणार्हा अपूर्वकरणाः ‘क्षीणा’इति क्षीणकषायास्तथा अजोगिजिनश्च एते प्रत्येकं एकानेकरूपतया स्वगुणेषु ‘अनित्या अपि’ कादाचित्कभावा अपि, अन्तर्मुहूर्त्तमात्रं कालं सन्तो भवन्ति, नानाजीवसन्ततिमाश्रित्य तदेवान्तर्मुहूर्त्तं प्रथमक्षपकश्रेणीकालं सप्तभिः समयैरभ्यधिकं भवति, प्रथमक्षपकापेक्षया तदभ्यधिकं अष्टमक्षपकापेक्षया तदन्तर्मुहूर्त्तमेव, यतोऽन्तर्मुहूर्त्तात् सप्तसमयाधिकादूर्ध्वतोऽवश्यं श्रेणीशून्यतया भाव्यमिति गाथार्थः ॥ ८७ ॥ प्रतिपत्तिकालमाह—

**एगिंदित्तं सययं, तसत्तणं सम्मदेसचारित्तं । आवलिया संखंसं, अडसमय चरित्तसिद्धत्तं ॥ ८८ ॥**

व्याख्या—‘एकेन्द्रित्वं’ सततमव्यवच्छिन्नं सदा जीवाः प्रतिपद्यन्ते, तद्भावेनोत्पद्यन्त इति, ‘त्रसत्वं’ द्वीन्द्रियादिभावं,

एतेषामसंज्ञिसंज्ञिनां चापर्याप्तनामोदयिनां सूक्ष्मसाधारणनामोदयिनां च पर्याप्तनामोदयविशेषितानामपर्याप्तनामोदयविशेषितानां च प्रत्येकं त्रयाणामप्यन्तर्मुहूर्त्तमात्रा कायस्थितिर्भवतीति गाथार्थः ॥ ८३ ॥

**पत्तेयबायरस्स उ, परमा हरियस्स होइ कायठिई । ओसप्पिणी असंखा, साहारत्तं रिउगइयत्तं ॥ ८४ ॥**

व्याख्या—प्रत्येकबादरस्य 'हरितस्य' वनस्पतिजीवस्य पर्याप्तापर्याप्तकविशेषणाभ्यामप्रधानस्य 'परमा' उत्कृष्टा असङ्ख्येया उत्सर्पिण्यवसर्पिण्यः कायस्थितिर्भवति । इयत्कालमेव साहारकत्वं भवान्तरेषु संसरतः ॠजुगतित्वमपि, तत्कालमेव भवान्तरेषु कुतोऽनुमीयते ? उच्यते अक्षराधिक्यादर्थाधिक्यं परिकल्प्यते प्रत्येकवनस्पतीनां सूक्ष्मत्वाभावात् सिद्धं बादरत्वम् । सिद्धेऽपि यद्ग्रहणं तदस्यार्थस्य ख्यापनार्थमिति गाथार्थः ॥ ८४ ॥

**मोहठिइबायराणं, सुहुमाण असंखया भवे लोगा । साहारणाण दोसड्ढ–पुग्गला निव्विसेसाणं ॥ ८५ ॥**

व्याख्या—मोहनीयकर्मणो यावन्मात्रा स्थितिः सागरोपमाणां सप्ततिकोटाकोट्यः तावन्मात्रा 'बादराणां' सामान्यतः पर्याप्तापर्याप्तरूपाणां पृथिवीजलाग्निवायुकायिकानां पृथक्, वनस्पतेः पृथक् भणनादवसीयते, एवमेव सूक्ष्माणामसङ्ख्येयलोकाकाशप्रदेशतुल्या कायस्थितिः । साधारणानां बादरसूक्ष्मपर्याप्तापर्याप्तविशेषणनिरपेक्षाणां द्वौ सार्धौ पुद्गलपरावर्त्तौ कायस्थितिरिति गाथार्थः ॥ ८५ ॥ कादाचित्कगुणानां सम्भवेन सातत्येनावस्थानकालमाह—

---

१ नोध. २ तयोः ३ तयोः ४ 'ॠजुगतित्वं च वनस्पतेः प्रत्येकत्वस्य साहारकत्वस्य च प्रतिसमयं इयत्कालं स्थितिः प्रतिपादिता ॠजुगतित्वं' इतिक.

अमुमेवार्थं प्रकटयन्नाह—

पुव्वकोडिपुहुत्तं, पल्लतियं तिरिनराण कालेणं। नाणाइगपज्जत्तमणूणपल्लसंखंस अंतमुहू ॥ ८१ ॥

व्याख्या-'पूर्वकोटीनां पृथक्त्वं' सप्तसु भवेषु सप्त पूर्वकोट्य इत्यर्थःअष्टमभवस्यासङ्ख्येयवर्षायुषां पल्योपमत्रिकेणाभ्यधिकाः 'कालतः' कालमधिकृत्य तिर्यग्नराणां कायस्थितिर्भवति : नानाप्रकारा अपर्याप्तकानेकमनुष्यकायस्य तत्सन्ततेरव्यवच्छिन्नाया उत्कृष्टतः पल्योपमासङ्ख्येयभागमात्रा स्थितिः, एकस्य त्वन्तर्मुहूर्त्तं, जघन्यतः उत्कृष्टतश्च सर्वत्रान्तर्मुहूर्त्तमिति गाथार्थः ॥८१॥

पुरिसत्तं सन्नित्तं, सयपुहुत्तं तु होइ अयराणं। थीपलियसयपुहुत्तं, नपुंसगत्तं अणंतद्धा ॥ ८२ ॥

व्याख्या-(पुरुषत्वं) द्रव्यपुरुषवेदोदयत्वं 'संज्ञित्वं' समनस्कत्वं सागरोपमशतपृथक्त्वं यावद् भवति, यद्यपि भवान्तरे पुरुषाकारस्याभावः चित्ताभावश्च, तथापि भाविनि भूतवदुपचारादिति न्यायतः तुशब्दाधिक्याच्च तत्राप्येवमेव प्रतिपत्तव्यम्, द्रव्यस्त्रीवेदोदयः पल्योपमशतपृथक्त्वं यावदुत्कृष्टतो भवति, द्रव्यनपुंसकवेदोदयोऽनन्तं कालं, यतः स सर्वजीवस्थानेषु लभ्यत इति गाथार्थः ॥ ८२ ॥

बायरपज्जेगिंदिय-विगलाण य वाससहस्स संखेज्जा। अपज्जसुहुमसाहा-रणाण पत्तेगमंतमुहू ॥ ८३ ॥

व्याख्या-बादराणां पर्याप्तकनामविशेषितानां सङ्ख्येया वर्षसाहस्र्यः प्रत्येकं पृथिवीजलाग्निवायुवनस्पतिप्रत्येकैकेन्द्रियाणां सङ्ख्येया वर्षसाहस्र्यः कायस्थितिः, विकलानामपि द्वित्रिचतुरिन्द्रियाणां प्रत्येकं सङ्ख्येयवर्षसाहस्र्यः कायस्थितिः

१ प्रत्येकवनस्पत्येकेन्द्रियाणां.

मित्यर्थः। प्रतिपत्तिसमये च यदा कालं कृत्वा अविरतित्वं गच्छन्ति तदा समयमिति, अन्यद्गुणान्तरमन्तर्मुहूर्त्तादूर्ध्वतो नारत इति गाथार्थः ॥ ७८ ॥

**समयाओ अंतमुहू, अपुव्वकरणाउ जाव उवसंतो। खीणाजोगीणंतो, देसस्स व जोगिणो कालो ॥ ७९ ॥**

व्याख्या–जघन्यतः समयमेकं समयद्वयोत्कृष्टतोऽन्तर्मुहूर्त्त–भिन्नद्विघटिकामात्रं कालं यावदिति, अपूर्वकरणबादरकषाय-सूक्ष्मकषायोपशान्ताः स्वस्वगुणस्था भवन्ति। क्षपकश्रेण्यां त्वजघन्योत्कृष्टमन्तर्मुहूर्त्तमेव, तस्यां मरणाभावात्, उपशमश्रेण्यां त्वनियमः। क्षीणकषायायोगिनोस्त्वन्तर्मुहूर्त्तमेवोभयतोऽपि, तयोः प्रतिपाताभावात् क्षीणकषायस्य मरणाभावाच्च, देशविरत-स्यैव सयोगिनो अन्तर्मुहूर्त्तादेशोनपूर्वकोटिं यावत्स्थितिर्भवतीति गाथार्थः ॥ ७९ ॥ कालस्थितिमाह–

**एगिंदियाणऽणंता, दोण्णि सहस्सा तसाण कायठिई। अयराण इग पणिंदिसु, नरतिरियाणं सगट्ठभवा ॥८०॥**

व्याख्या–एकेन्द्रियाणां–सूक्ष्मबादरपर्याप्तापर्याप्तरूपाणां पृथिवीजलाग्निवायुवनस्पतिकायेषु प्रत्येकसाधारणरूपतया एकेन्द्रियत्वममुञ्चतां अनन्ताः सागरोपमसहस्राः कायस्थितिर्भवति। त्रसानां–द्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिनां पर्याप्तापर्याप्तरूपाणां द्वौ सागरोपमसहस्रौ कायस्थितिः। पञ्चेन्द्रियाणां संज्ञ्यसंज्ञिपर्याप्तापर्याप्तरूपाणामेकं सागरोपमसहस्रं कायस्थितिः। नरतिरश्चां पञ्चेन्द्रियाणां संज्ञिनां पर्याप्तनामकर्मोदयिनां सप्ताष्टौ वा भवाः कायस्थितिर्भवति। देवनारकाणां तु भूयस्तत्रानुत्पत्तेः काय-स्थितिरेव नास्ति। आह–अष्टानामन्तर्गतत्वादप्रधानत्वाच्चानर्थकं सप्तकग्रहणं? अत्रोच्यते–सङ्ख्येयवर्षायुषोऽधिकृत्य सप्त भवा उभयानष्टौ, केवलानामसङ्ख्येयवर्षायुषां कायस्थितिरेव नास्ति, अस्यार्थस्य ख्यापनाय सप्तग्रहणमिति गाथार्थः ॥ ८० ॥

उत्कृष्टतश्चान्तर्मुहूर्त्तावधिकः, यद्यप्युपशमसम्यक्त्वगुणस्थो देशविरत्यादिगुणान्तराण्यनुभजति तथापि तस्यान्तर्मुहूर्त्तमेवावस्थानं, क्षायिकसम्यग्दर्शनं अनन्तकालं भवति, यतस्तदुत्तरगुणसम्भवेऽपि न नश्यतीति गाथार्थः ॥ ७६ ॥

वेयगअविरयसम्मो, तेत्तीसयराइं साइरेगाइं। अंतमुहुत्ताओ पुव्वकोडि देसो उ देसूणा ॥ ७७ ॥

व्याख्या-वेद्यत इति वेदकम्, मिथ्यात्वस्य प्रथमस्थितिगतस्य क्षयात् द्वितीयस्थितिगतस्योपशमात् सम्भूतमिति क्षयोपशमजं तद्वेदकं क्षायोपशमिकं वा अविरतिगुणसमन्वितं उत्कृष्टतस्त्रयस्त्रिंशत्सागरोपमाणि भवति, सर्वार्थविमानादिषु मनुष्यभवकतिचिद्वर्षाधिकानि। जघन्यतोऽन्तर्मुहूर्त्तमिति, यतो वेदकसम्यक्त्वमविरतभावेनान्तर्मुहूर्त्तमात्रं कालं स्थित्वा सम्यग्मिथ्यात्वे मिथ्यात्वे वा गच्छति, तत्राप्यविरतत्वे सत्यपि दृष्टिभेदाद् गुणभेद इति, अथवा देशसंयमं सर्वसंयमं वा गच्छति, अत्रापि वेदकसम्यक्त्वे सत्यपि अविरतत्वापगमाद् गुणभेद इति, तुशब्दादेतस्यैव रोचककारकादयो भेदा विचित्रत्वात् क्षयोपशमस्य मन्तव्याः, नेतरयोरेकरूपत्वात्, अन्तर्मुहूर्तशब्द उभयत्र सम्बन्धनीयः, ततश्चायं जघन्यतोऽन्तर्मुहूर्तमुत्कृष्टतो देशोनां पूर्वकोटिं यावद् देशसंयमो भवत्येकस्मिन् जीवे, जघन्येनाप्येतद्गुणमियत्कालं स्पृष्ट्वा सर्वविरतिमविरतित्वं वा गच्छति नारत इति गाथार्थः ॥ ७७ ॥

समयाओ अंतमुहू, पमत्तमपमत्तयं भयंति मुणी। देसूणपुव्वकोडिं, अन्नोन्नं चिट्ठंति भयंता ॥ ७८ ॥

व्याख्या-समयादारभ्य समयवृद्ध्या यावदन्तर्मुहूर्त्तं तावत्प्रमत्ततामप्रमत्ततां वा भजन्ते जीवाः (मुनयः), उभयगुणयोस्तु संसरन्तोभ्रमन्तः देशोनपूर्वकोटिं यावत्तिष्ठन्ति, 'अन्योन्यं' इतरेतरगुणं भजमाना बालभाववर्षहीनं सङ्ख्येयवर्षायुर्मनुष्यभव-

दिनस्येव । उत्सर्प्पिण्यवसर्प्पिणीसमयेषु निकृष्टकालविभागेषु अनन्तरपरम्परप्रकाराभ्यां एको जीवो यावता कालेन मृतो भवति स बादरः कालपुद्गलपरावर्त्तः, यदा तु प्रथमद्वित्रिचतुष्पञ्चमेत्यादिसमयवृद्धिक्रमेण सर्वसमयेष्वेकजीवो मृतो भवति तदा सूक्ष्मः कालपुद्गलपरावर्त्तः । इति गाथार्थः ॥ ७४ ॥

अणुभागट्ठाणेसुं, अणंतरपरंपराविभत्तीहिं । भावंमि बायरो सो, सुहुमो सव्वेसुणुक्कमसो ॥ ७५ ॥

व्याख्या–'अनुभागस्थानेष्वि'ति शुभाशुभकर्मणो हीनमध्यमोत्तमरसस्य निकृष्टविभागानां समुदायो रसस्पर्द्धकं स्पर्द्धकसमुदायोऽनुभागस्थानं, एवंभूतानि रसव्यक्तितोऽसङ्ख्येयान्यनुभागस्थानानि, तेषु बन्धकत्वेन वर्त्तमानो जीवोऽनन्तरपरम्परप्रकाराभ्यां यावता कालेन सर्वेष्वनुभागस्थानेषु मृतो भवति, स बादरः भावपुद्गलपरावर्त्तो भवति, तेष्वेव यथोत्तरस्थानक्रमेणैको जीवो यावता कालेन बन्धकत्वेन वर्त्तमानो मृतो भवति, स सूक्ष्मभावपुद्गलपरावर्त्तः, अनुभागस्थानस्वरूपमुपरि न्यक्षेण वक्ष्यतीति गाथार्थः ॥ ७५ ॥

आवलियाणं छक्कं, समयादारब्भ सासणो होइ । मीसुवसम अंतमुहू खाइयदिट्ठी अणंतद्धा ॥ ७६ ॥

व्याख्या–असङ्ख्येयसमयसमुदायः आवलिका, सहोपशमसम्यक्त्वस्यास्वादनेन वर्त्तत इति सास्वादनः, तत्सास्वादनत्वमुत्कृष्टतः षडावलिकामात्रं कालं एकस्मिन् जीवे भवति, जघन्यतस्त्वेकं समयं, यत उपशमाद्धायां जीवस्वाभाव्यात् कश्चित् षडावलिकाशेषायां सास्वादनत्वं गच्छति, एवं समयहान्या यावदेकसमयशेषायां, तदन्ते मिथ्यात्वोदयान्मिथ्यादृष्टिर्भवति, तद्भवेऽन्यभवगतो वा, यतः सास्वादनगुणे सर्वस्मिन् मरणमस्ति, न सम्यग्मिथ्यात्वगुणे, उपशमसम्यक्त्वगुणश्च जघन्यत

पोग्गलपरियट्टो इह, दवाइ चउविहो मुणेयवो। एक्केक्को पुण दुविहो बायरसुहुमत्तभेएणं ॥ ७१ ॥

व्याख्या—पुद्गलपरावर्त्तोऽस्मिन् प्रवचने द्रव्यक्षेत्रकालभावभेदाच्चतुर्विधो मन्तव्यः, एकैको भूयोऽपि द्विविधो बादरत्व-सूक्ष्मत्वभेदादिति गाथार्थः ॥ ७१ ॥

संसारम्मि अडंतो, जाव य कालेण फुसिय सव्वाणू। इगजीवो मुयइ बायरऽन्नयरतणुट्ठिओ सुहुमो ॥ ७२ ॥

व्याख्या—संसारे 'अटन्' भ्राम्यन् यावता कालेन स्पृष्ट्वा—आत्मभावेन परिणमय्य सर्वानप्यणून्—परमाणून् एको जीवो मुञ्चति, एषोऽद्धाविशेषो बादरो द्रव्यपुद्गलपरावर्त्तः, औदारिकवैक्रियादीनां अन्यतरशरीरस्थः यावता कालेन स्वप्रदेशैः सर्वपरमाणून् स्पृष्ट्वा एको जीवो मुञ्चति स सूक्ष्मो द्रव्यपुद्गलपरावर्त्त इति गाथार्थः ॥ ७२ ॥

लोगस्स पएसेसुं, अणंतरपरंपराहिं मच्चूहिं। खेत्तंमि बायरो सो, सुहुमो उ अणंतरमयस्स ॥ ७४ ॥

व्याख्या—'लोकस्य' चतुर्दशरज्जुप्रमाणाकाशखण्डस्य 'प्रदेशेषु' निर्विभागखण्डेषु, अनन्तरपरम्परप्रकाराभ्यां मृतस्यैकजीवस्य, किमुक्तं भवति—प्रत्येकं सर्वप्रदेशेषु यावता कालेनैको जीवो मृतो भवति स बादरः क्षेत्रपुद्गलपरावर्त्तः, सूक्ष्मस्तु यावता कालेन प्रथमप्रदेशादनुबद्धप्रदेशक्रमेण मृतो भवति, यद्यपि जीवस्यैकप्रदेशेऽवस्थानमेव नास्ति, तथापि जीवावस्थान-प्रदेशानां प्राधान्येनैकं परिकल्प्य तस्माद् गणनाप्रवृत्तिरिति, अमुना प्रकारेण प्रभूतकालख्यापनं सम्भाव्यत इति गाथार्थः ॥७३॥

उस्सप्पिणिसमएसु, अणंतरपरंपराविभत्तीहिं। कालम्मि बायरो सो, सुहुमो उ अणंतरमयस्स । ७४ ॥

व्याख्या—उत्सर्प्पिणोग्रहणादवसर्प्पिण्यपि ग्राह्या, यतः—तस्या अन्यपगमे द्वितीयोत्सर्प्पिण्यभावः, रात्र्यविनाशे

सत्तण्हमपज्जाणं, अंतमुहुत्तं दुहावि सुहुमाणं। सेसाणंपि जहन्ना भवट्ठिई होइ एमेव ॥ ६८ ॥

व्याख्या—सूक्ष्मबादरैकेन्द्रियद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिनां सप्तानामप्यपर्याप्तकानां सूक्ष्मपर्याप्तकानामपि अन्तर्मुहूर्त्तमात्रा भवस्थितिर्भवति, एकभवायुः प्रमाणमिति, 'द्विविधापि' जघन्यत उत्कृष्टतश्च। शेषाणामपि बादरैकेन्द्रियद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिनां पर्याप्तकानां 'एवमेव' अन्तर्मुहूर्त्तमात्रा एव जघन्या भवस्थितिर्भवतीति गाथार्थः ॥ ६८ ॥ शेषाणामुत्कृष्टभवस्थितिमाह—

बावीससहस्साइं, बारस वासाइं अउणपन्नदिणा। छम्मास पुव्वकोडी, तेत्तीसयराइं उक्कोसा ॥ ६९ ॥

व्याख्या—द्वाविंशतिर्वर्षसहस्राणि बादरपर्याप्तकैकेन्द्रियाणामुत्कृष्टा भवस्थितिः, सा च पृथिवीकायिकेष्वेव, यतोऽप्कायिकानां सप्त, तेजःकायिकानां त्रीणि अहोरात्राणि, वायुकायिकानां त्रीणि (वर्षसहस्राणि) वनस्पतिकायिकानां दश वर्षसहस्राणि परमस्थितिरिति। द्वीन्द्रियाणां द्वादश वर्षाणि, त्रीन्द्रियाणां एकोनपञ्चाशद्दिनानि, चतुरिन्द्रियाणां षण्मासा, असंज्ञिनां वर्षाणां पूर्वकोटिः, संज्ञिनां त्रयस्त्रिंशत्सागरोपमाणि, सर्वेषां पर्याप्तकानां भवस्थितिः क्रमेणोत्कृष्टेति गाथार्थः ॥ ६९ ॥ एकस्मिन् जीवे गुणावस्थानकालमाह—

होइ अणाइअणंतो, अणाइसंतो य साइसंतो य। देसूणपोग्गलद्धं, अंतमुहुत्तं चरिम मिच्छो ॥ ७० ॥

व्याख्या—मिथ्यागुणालङ्कृतो जीवः त्रिधा कालभेदाद् भवति, अनाद्यनन्तं कालमेकः, अनादिसान्तं कालं द्वितीयः, सादिसपर्यवसानं कालं तृतीयः, द्वयोराद्योर्मिथ्यादृष्ट्योरजघन्योत्कृष्टः कालः, तृतीयस्य जघन्योऽन्तर्मुहूर्त्तमात्रो गुणावस्थानकालः, तस्य चोत्कृष्टः पुद्गलपरावर्त्तार्द्धं किञ्चिन्न्यूनं यावदिति गाथार्थः ॥ ७० ॥ तमेवाधिकारायातं पुद्गलपरावर्त्तमाह—

देशैः सर्वार्थविमानं गच्छन्ति,ततः सप्तरज्जुस्पर्शिनो भवन्ति,यतः स तेषां गुणो यावदायुः,अतो मनुष्यायुषा ते तत्रायोगिवत् परभवायुर्गत्यानुपूर्व्यनुदयेन च गच्छन्ति, यत आगमः 'इह बोंदि चइत्ताणं तत्थ गंतूण सिज्झति' तस्मिन्नेव समयेऽत्र शरीरं परित्यजति, स्वशरीरत्यागेन तस्मिन्नेव समये सिद्धिस्थाने सिद्धत्वं प्राप्नोति,एवमेतेऽपि येनैव समयेन शरीरं परित्यजन्ति, तेनैव सर्वार्थविमानं प्राप्नुवन्ति,आह परः. उक्तमागमे-'परभवपढमे साडण' इति,परभवायुःप्रथमसमयोदये शरीरशातः शरीरत्यागो जीवस्य भवति, अतो देवायुरुदये शरीरं परित्यजतां कथं स्पर्शना तद्गुणा भवति ? उच्यते—नायं दोषः, ऋजुगतित्वात्, मनुष्यभवान्तसमये ऋजुगतावुत्पत्तिस्थानं शरीरं अपरित्यजन् समारोहति स्म, यथेलिकाजीवः पुच्छस्थानमपरित्यजन् मुखेनापूर्वं क्षेत्रं शरीरवितानात् प्राप्य ततः पुच्छं संहरत्येवं सामयिकगतौ जीवः शरीरस्थ एवोत्पत्तिस्थानमारोहति, उभयक्षेत्रस्थस्यानन्तरसमये परभवायुरुदयमुपगच्छति, तस्मिंश्च समये शरीरशातं कुर्वतां न दोषः, ततः स्पर्शना उभयत्राविरोधेन सम्भवति, यतो वक्रगतावेव परभवादिसमये शरीरशातपूर्वकस्तदायुर्गत्यानुपूर्विकाणामुदयो घटते, न ऋजुगताविति । 'पुरुषा' मानवा देशविरताः द्वादशमे देवलोके गच्छन्ति, ऋजुगतावेव, यतः तिरश्चां न सहस्रारादूर्ध्वतो गमनमस्ति अतः षड्रज्जुस्पर्शना भाविनैव । तुशब्दाद्यद्यप्यकर्मकत्वादस्पर्शनायोगी सिद्धिमुपगच्छति, तथाप्युपचारतोऽसावपि जीवप्रदेशैः सप्तरज्जुप्रमाणं क्षेत्रं स्वस्वशरीरपरित्यागात्सिद्धिक्षेत्रप्राप्तत्वाच्च स्पर्शितवान् उच्यते—यतः सिद्धक्षेत्रस्थाः सिद्धा उच्यन्ते, तथा तत्कालेऽसावपि सप्तरज्जुप्रमाणत्वात् तद्गत एवोच्यते, इति गाथार्थः ॥ ६७ ॥ गतं स्पर्शनाद्वारम् । कालद्वारमधिकृत्योच्यते—

---

१ 'अत्र शरीरं त्यक्त्वा तत्र गत्वा सिद्ध्यति'

गच्छति, द्वादशरज्जुस्पर्शना मतान्तरे सम्भाव्यत एव, निर्देशगाथातुशब्दान्नवरज्जुस्पर्शना भवत्यविरतस्य, यतोऽनुत्तरदेवा मनुष्यभवं गच्छन्तः सप्तरज्जुस्पर्शिनो भवन्ति, केषाञ्चिन्मतेन क्षायिकदृष्टयः तृतीयपृथिव्यां गच्छन्तीति गाथार्थः ॥ ६५ ॥
सास्वादनस्य द्वादश भावयति–

छट्ठीणं नेरइओ, सासणभावेण एइ तिरिमणुए । लोगंतनिक्खुडेसुं, जंतिऽन्ने सासणगुणत्था ॥ ६६ ॥

व्याख्या–षष्ठनरकपृथिव्यां भवान्ते औपशमिकसम्यक्त्वं प्राप्य मिथ्यात्वं गन्तुमनाः सास्वादनत्वं प्राप्तः कालं करोति तेन सास्वादनः तिर्यक्षु मनुष्येषु वा उत्पद्यते ततः पञ्चरज्जुस्पर्शी भवति, तिर्यग्लोकात्तथाविधा अन्ये सास्वादनगुणस्था लोकान्तनिष्कूटेषूत्पद्यन्ते, एवं द्वादश रज्जुस्पर्शना भवति, प्रायोऽधोलोकाभिमुखी सास्वादनगुणापन्नानां सत्त्वानां गतिरेव नास्ति, तेन इयन्मात्रा स्पर्शना प्रतिपादिता, अथोर्ध्वलोकवदधोलोकेऽपि यान्ति ततश्चतुर्दशापि लभ्यन्त इति गाथार्थः ॥६६॥

उवसामग उवसंता, सव्वट्ठे अप्पमत्तविरया य । गच्छंति रिउगईए, पुंदेसजया उ बारसमे ॥ ६७ ॥

व्याख्या–'उपशामका' उपशमश्रेण्यां निवृत्त्यनिवृत्तिबादरसूक्ष्मकषायाः 'उपशान्ता' उपशान्तकषायाः, 'अप्रमत्ताः' संयमोद्यमपरा 'विरता' उपशमार्हाः, चशब्दात् प्रमत्ता अपि अप्रमत्ताभिमुखाः सर्वार्थविमानं गच्छन्ति । गमनं च द्विधा–ऋजुगत्या वक्रगत्या च । सामयिकी ऋजुगतिः, त्रिविधा वक्रगतिर्द्विसामयिकी कोपर(कूर्प्प) वक्रगतिः, त्रिसामायिकी लाङ्गुलवक्रगतिः, चतुःसामयिकी गोमूत्रिकावक्रगतिरिति, ते च भगवन्तो विशुद्धपरिणामा मनुष्याः स्वभवान्तसमये स्वशरीरपरित्यागेन स्वजीवप्र- 

१ 'प्रायेण' क

न्तर्मुहूर्त्तेन निष्पादयन्ति, शेषाः सामयिक्यः, औदारिकस्य तु प्रथमा सामयिकी शेषा आन्तर्मुहूर्त्तिकाः, तैजोलेश्यासमुद्घातोऽवश्यं कषायसमुद्घातपूर्वको, यतः कषायाग्निः प्रथमं जठरे सम्भवति, ततः स बलवान् मुखेन निर्गच्छंस्तेजोलेश्योच्यते, केवलिसमुद्घातस्तु अष्टसामयिकः प्रतीत एव, तस्मिन् सयोगी जगत्स्पर्शी भवति, 'मिथ्यादृष्टयः' तुशब्दात् सूक्ष्माः सर्वे सर्वलोकापन्नाः, एकजीवो वा समुद्घातेनैकेन्द्रियवदिति गाथार्थः ॥ ६३ ॥ शेषगुणस्थानेष्वाह–

**मीसा अजया अड अड, बारस सासायणा छ देसजई । सग सेसा उ फुसंति, रज्जू खीणा असंखंसं ॥६४॥**

व्याख्या–सम्यग्मिथ्यादृष्टयोऽविरताश्च अष्टावष्टौ रज्जूः स्पृशन्ति, द्वादश सास्वादनाः स्पृशन्ति, षट् देशविरताः स्पृशन्ति, उक्तशेषाः प्रमत्ताद्याः सप्त रज्जूः स्पृशन्ति, तुशब्दात् प्रमत्तोऽप्रमत्ताभिमुखः तत्स्थानमप्राप्तो ग्राह्यः, क्षीणकषायस्तु रज्जोरसङ्ख्येयभागं स्पृशन्ति, यतो नासौ म्रियते न च समुद्घातं करोतीति गाथार्थः ॥ ६४ ॥ एतदेव भावयति–

**सहसारंतियदेवा, नारयनेहेण जंति तइयभुवं । निज्जंति अच्चुयं जा, अच्चुयदेवेण इयरसुरा ॥ ६५ ॥**

व्याख्या–सति सम्यग्मिथ्यात्वगुणे न म्रियन्ते, अतो भवस्था एव गृह्यन्ते, सहस्रारदेवलोकान्तवर्तिनः तदवसानाः सम्यग्मिथ्यादृष्टयो देवा नारकानमुना पूर्वभवजननस्नेहेन गच्छन्ति तृतीयपृथिवीं यावत्, एवं हि सप्तरज्जुस्पर्शना भवति, यतस्तिर्यग्लोकात्पञ्च सहस्रारो द्वे तृतीया पृथिवीति, अन्यां त्वेकां रज्जुमच्युतदेवेन स्वालयेऽधस्तनसुराः यतो नीयन्तेऽतः स्पृशन्ति, एवमष्टाविति । यद्यप्यविरतस्य मृत्युरस्ति तथापि अधश्चतुर्थपृथिव्यादिषु सम्यक्त्वो न गच्छति, नाप्यागच्छति उपरि वा सहस्रारं गच्छति, तेन सम्यग्मिथ्यादृष्टिवदविरतोऽपि प्रतिपादितः, यदि पुनः षष्ठ्याः सास्वादनवदा

चोद्दसविहावि तिरिया, समुघाएणं फुसंति सव्वजगं । रिउसेढीइ व केई, एवं मिच्छा सजोगी उ ॥ ६३ ॥

व्याख्या–चतुर्दशप्रकारा अपि तिर्यञ्चः समुद्घातेन सर्वं जगत् स्पृशन्ति ऋजुश्रेण्या वा केचन, एवं समुद्घातेनैव मिथ्यादृष्टयः सयोगिनश्च सर्वं जगत्स्पृशन्ति 'चोद्दसविहावि जीवा' इति वक्तव्ये यत्तिरश्चोऽभिधत्ते तद् ज्ञापयति–तिर्यग्लोकनिवासिनो ये तिर्यञ्चो मनुष्या वा ते मरणसमुद्घातेन सर्वं जगत् स्पृशन्ति, एक ऋजुगत्या ऊर्ध्वलोकान्ते व्रजति, अन्यस्त्वधोलोकान्ते, तथैवोत्पत्तिकालः, एवं सर्वलोकस्पर्शिनो भवन्ति, कुत एतदवसीयते ? उच्यते–' रिउसेढीइ व केई ' इति वचनात् येऽधोलोकान्तादूर्ध्वलोकान्ते स्थावरकायिका ऋजुश्रेण्या उत्पद्यन्ते ते प्रत्येकं सर्वलोकस्पर्शिनो भवन्ति, न च त्रसनिरश्चां ऊर्ध्वलोकेऽधोलोके वा सम्भव इति । देवा नारका वा नैवं स्पर्शनां कुर्वन्ति, यतस्ते तिर्यग्लोकोपपातिनो बाहुल्येन स्वभवान्ते भवन्ति, येऽप्येकेन्द्रियत्वं प्रतिपद्यन्ते, देवास्तेऽपि स्वस्थानादूर्ध्वमुखा व्रजन्ति, तिर्यग्लोकमुखा वा, नाधोलोकमुखा अतस्ते न सर्वलोकस्पर्शिनो भवन्ति । वेदनासमुद्घाते कषायसमुद्घाते वैक्रियशरीरकरणसमुद्घाते तेजोलेश्यानिसर्गसमुद्घाते आहारकशरीरकरणसमुद्घाते जीवस्यात्मप्रदेशाः यथा हुतभुक्तप्तदुग्धाद्यवयवास्तुच्छा अपि स्थालीमापूरयन्ति तन्मुखविवरेण च निर्गच्छन्ति एवं जीवप्रदेशा अपि शरीरात्सर्वांशा आपूरयन्तो निर्गच्छन्त्यन्तर्मुहूर्त्तं कालं यावत्, न च लोकव्यापिनो भवन्ति, सर्वसमुद्घातानां वेदनासमुद्घातोऽन्तर्गतो, यथा रोगाणां ज्वरः । वैक्रियाहारकशरीरकरणार्थं निर्गता जीवप्रदेशास्तद्योगान् पुद्गलान् गृहीत्वा तच्छरीरं निष्पादयन्ति, तस्य च पद् पर्याप्तयो युगपत् प्रारभ्यन्ते, ततः शरीरपर्याप्तिम-

१ 'जला' क.

सर्वेषामुत्पत्तेरेकैकपर्याप्तकनिश्रयाऽसङ्ख्येया अपर्याप्तकाः सम्भवन्ति, अस्यार्थस्य ख्यापनाय एवं व्याख्यायते, अथवाऽन्या सूत्रघटनाऽपर्याप्ता अपिशब्दात् पर्याप्ताश्च सूक्ष्मा द्वावप्येतौ सर्वस्मिञ्जगति भवत इति गाथार्थः ॥ ५९ ॥

**सासायणाइ सव्वे, लोगस्स असंखयम्मि भागम्मि। मिच्छा उ सव्वलोए, होइ सजोगीवि समुग्घाए ॥६०॥**

व्याख्या—सास्वादनादीनि सर्वगुणस्थानानि सास्वादनादयो वा प्रत्येकं सर्वगुणस्थानजीवा लोकस्याऽसंख्येयभागे व्यवस्थिताः। मिथ्यादृष्टयस्तु सर्वलोकापन्नाः, यतः सूक्ष्मनामकर्मोदयिनो मिथ्यादृष्टय एव भवन्ति नाऽन्ये सास्वादनादयः। 'सजोगिनोऽपि' केवलिसमुद्घातावस्थायां कार्मणयोगेन सयोगिनः सर्वजगद्व्यापिनो भवन्ति इति गाथार्थः ॥ ६० ॥

समुद्घातप्रसङ्गेनाऽशेषसमुद्घातसङ्ख्यां प्रतिपादयन्नाह—

**वेयणकसायमारण—वेउव्वियतेउहारकेवलिया। सग पण चउ तिन्नि कमा, मणुसुरनेरइयतिरियाणं ॥ ६१ ॥**

व्याख्या—वेदनासमुद्घातः, कषायसमुद्घातः, मरणसमुद्घातः, उत्तरवैक्रियशरीरकरणसमुद्घातः, तेजोलेश्यासमुद्घातः, (आहारकसमुद्घातः) केवलिसमुद्घातः, एवं सप्त समुद्घाताः। एतेषामेव गतिषु सम्भवमाह—मनुष्यगतौ सर्वेऽपि अविकलाः, देवगतौ पञ्चाद्याः, नरकगतौ चत्वार आद्याः, तिर्यग्गतौ त्रय आद्या इति गाथार्थः ॥ ६१ ॥

**पंचेंदियतिरियाणं, देवाण व पंच होन्ति सन्नीणं। वेउव्वियवाऊणं, पढमा चउरो समुग्घाया ॥ ६२ ॥ द्वारम् ॥**

व्याख्या—पञ्चेन्द्रियतिरश्चां संज्ञिनां देवानामिव पञ्चाद्याः समुद्घाता भवन्तीति, उत्तरवैक्रियशरीराणां वायुकायिकानां चत्वार आद्याः समुद्घाता भवन्तीति, यतस्तेषां वैक्रियशरीरलब्धिरिति गाथार्थः ॥ ६२ ॥ गतं क्षेत्रद्वारम् ॥ स्पर्शना

खवगा खीणाजोगी, एगाई जाव होंति अट्ठसयं । अद्धाएँ सयपुहुत्तं, कोडिपुहुत्तं सजोगीओ ॥५८॥ द्वारम् ।

व्याख्या—क्षपकाः क्षीणा अयोगिनः क्षपणार्हापूर्वकरणबादरसूक्ष्मकषायाः क्षपका इति, क्षीणाः—क्षीणकषायाः, अयोगिनो—योगव्यापाररहिताः, निरुद्धपञ्चदशयोगास्ते त्वेकादयो यावदष्टशतं तावद् भवन्ति १०८ समकमेककालं 'अद्धायां' श्रेणीकाले अन्तर्मुहूर्त्तान्तर्वर्त्तिनः शतपृथक्त्वमात्राः प्रादुर्भवन्ति, पृथक्त्वं तु द्विशतादिनवशतपर्यन्तं, सयोगिनः केवलज्ञानिनः कोटीपृथक्त्वप्रमाणाः । इति गाथार्थः ॥ २९ ॥ उक्तं द्रव्यप्रमाणद्वारम् । क्षेत्रद्वारमाह—

अप्पज्जत्ता दोन्निवि, सुहुमा एगिंदिया जए सव्वे । सेसा असंखभागे, बायरपवणा असंखेसु ॥ ५९॥

व्याख्या—अपर्याप्तौ द्वौ करणापर्याप्तकलब्ध्यपर्याप्तकौ, अथवा प्रत्येकसाधारणापर्याप्तकौ तावेव विशेष्येते—सूक्ष्मावेकेन्द्रियौ, अपिशब्दो भिन्नक्रमः, स च सम्भावने, सूक्ष्मा एकेन्द्रियाः पर्याप्तकाः सर्वेऽपि—सर्वस्मिन् जगति सर्वशब्द उभयत्र सम्बन्धनीयः प्रथमाबहुवचनान्तः सप्तम्येकवचनान्तश्च । ततः सर्वेऽपि सूक्ष्मा एकेन्द्रियाः पृथिव्यादयः प्रत्येकसाधारणपर्याप्तका द्वावेवापर्याप्तकौ तज्जातीयौ पूर्वोक्तौ सर्वस्मिन् जगति प्रत्येकं लोकाकाशव्यापिनौ इत्यर्थः । शेषाः पृथिव्यादयो द्वीन्द्रियादयश्च प्रत्येकाः साधारणाश्च ये बादराः प्रत्येकं पर्याप्तका अपर्याप्तकाश्च ते लोकासङ्ख्येयभागे स्थिताः । ये बादरा वायुकायिकास्ते पर्याप्तका अपर्याप्तकाश्च लोकस्यानेकेष्वसङ्ख्येयभागेषु स्थिताः । आह परः—सूक्ष्माः सप्रभेदाः सर्वे प्रत्येकं सर्वलोकापन्नाः, शेषा बादराः सप्रभेदाः प्रत्येकं लोकास्यासङ्ख्येयभागापन्नाः, एवमञ्जसैवाऽभीष्टेऽर्थे सिद्धे कस्मादेवं व्याख्यायते—सूत्रे चानर्थकं अपर्याप्तद्वयग्रहणं क्रियते ? उच्यते—केषाञ्चिदपर्याप्तकाः सर्वेऽपि प्रभूता इति कृत्वा सर्वलोकापन्नाः, तत्र स्वकायनिश्रया

सासायणाइ चउरो, होंति असंखा अणंतया मिच्छा । कोडिसहस्सपुहुत्तं, पमत्त इयरे उ थोवयरा ॥ ५६ ॥

व्याख्या—सास्वादनसम्यग्मिथ्यादृष्ट्यविरतदेशविरताः प्रत्येकं सङ्ख्यातीता मन्तव्याः, सदा द्वौ नित्यौ अनित्यौ द्वावुत्कृष्टसम्भवे । अनन्ता मिथ्यादृष्टयः, कोटीसहस्रपृथक्त्वतुल्याः प्रमत्तास्तेभ्योऽप्रमत्ताः स्तोकनराः ' मिच्छाणंता चउरो पलियासंखंस ' इत्यस्यास्य च को विशेषो ? विशेषाभावे पुनरुक्तदोष इति ? अत्रोच्यते—क्रमोपन्यासोल्लङ्घनेन यथोत्तरं प्रभूताः ख्यापिताः अत्रायं विशेषः, अविरतेभ्यो न देशविरता बहव इति दोषः ? उच्यते—तुशब्दाधिक्याद् गुणाधिक्याच्च स्तोकाः ख्यापिता एवं न दोषः । इति गाथार्थः ॥ ५६ ॥

एगाई चउप्पण्णा, समगं उवसामगा य उवसंता । अद्धं पडुच्च सेढीए, होंति सव्वेवि संखेज्जा ॥ ५७ ॥

व्याख्या—एकादारभ्य उत्कृष्टतश्चतुःपञ्चाशत्पर्यन्ताः समकं—एककालं उपशामकाः—अपूर्वकरणबादरसूक्ष्मा मोहनीयस्य, उपशान्तमोहाश्च चकारो भिन्नक्रमे, इयन्तो जीवाः प्रादुर्भवन्ति प्रतिसमयं पुनरुत्पद्यमानाः श्रेणीकालं प्रतीत्य—आश्रित्य सर्वेऽपि श्रेण्यन्तर्गताः सङ्ख्येया इति । यद्यपि सङ्ख्येयाः सामान्यतोऽभिहिताः, तथापि शतानि, न सहस्राणि, न लक्षाः । कुत एतदवसीयते ? युक्तितः, प्रमत्ताप्रमत्तयतिकोटिसहस्रपृथक्त्वात्, तत्र येऽत्यन्तविशुद्धपरिणामास्ते क्षपकाः, उत्कृष्टेनापि शतपृथक्त्वपरिणामाः, तेभ्यो ये अन्तर्वर्तिस्वल्पपरिणामास्ते उपशामका अन्तर्मुहूर्त्तान्तर्वर्तिनः परतः सर्वेषामप्यभावादियन्तो भावनीयाः । इति गाथार्थः ॥ ५७ ॥

---

१ द्विचत्वारिंशत्तमगाथोत्तरार्द्धस्य

गुणं यावत्संख्यं तावत्श्रेणीप्रदेशतुल्या सौधर्म्मदेवाः । इति गाथार्थः ॥ ५२ ॥

अंगुलमूलासंखियभागप्पमिया उ होंति सेढीओ। उत्तरविउव्वियाणं, तिरियाण य सन्निपज्जाणं ॥ ५३ ॥

व्याख्या–अङ्गुलसूचिप्रदेशवर्गमूलासङ्ख्येयभागप्रदेशप्रमाणाः श्रेण्यः, किमुक्तं भवति ?–तासु श्रेणीषु यावन्तोऽम्बरप्रदेशास्तावन्त उत्तरवैक्रियशरीरिणो जीवा मन्तव्याः चतुर्गतिगता इति। तिर्यग्गतौ संज्ञिनश्च पर्याप्तका एतावन्त इति गाथार्थः ॥ ५३ ॥

सामण्णा पज्जत्ता, पणतिरि देवेहि संखगुणा ॥ संखेज्जा मणुया तहि मिच्छाइगुणावि सट्ठाणे ॥ ५४ ॥

व्याख्या–'सामान्या' अविशेषिताः संज्ञ्यसंज्ञिपर्याप्तापर्याप्ताश्चतुष्प्रकाराः 'पर्याप्ता' इति संज्ञिनोऽसंज्ञिनश्च पर्याप्ता इति द्विःस्थानगता जीवाः पञ्चेन्द्रियतिर्यञ्चः सर्वदेवेभ्यः यथासङ्ख्यं यथाक्रमं असङ्ख्येयसङ्ख्येयगुणाः। मनुष्यगतौ सङ्ख्येया मनुष्याः पर्याप्ताः, 'तहि'त्ति तत्र मिथ्यादृष्ट्यादिगुणा अपि सङ्ख्येया एव स्वस्थाने स्वस्थानेऽन्विष्यमाणाः सर्वेषामपि सङ्ख्येयत्वादपर्याप्तकानां तु कादाचित्कत्वादिति गाथार्थः ॥ ५४ ॥

उक्कोसपए मणुया, सेढीं रूवाहिया अवहरंति। तईयमूलाहएहिं, अंगुलमूलप्पएसेहिं ॥ ५५ ॥

व्याख्या–उत्कृष्टपदे मनुष्याः श्रेणीं सप्तरज्जुप्रमाणां तत्प्रदेशपङ्क्तिं रूपाधिकाः सन्तः सर्वेऽप्यपहरन्ति, । कथं ? अङ्गुलमूलप्रदेशानां तृतीयमूलगुणैरङ्गुलमूलप्रदेशैरपहरमाणाः, किमुक्तं भवति अङ्गुलमूलं तृतीयमूलाहतं यावत्तावन्मात्रैः खण्डैः खण्डितां श्रेणीं हरन्ति तावन्मात्रा भवन्तीति गाथार्थः ॥ ५५ ॥

व्याख्या—असङ्ख्येयश्रेण्याकाशप्रदेशैस्तुल्याः प्रथमकल्पे सौधर्माख्ये, द्वितीये चेशानाख्ये, एकश्रेण्यसङ्ख्येयभागाकाशप्रदेशतुल्याः, उपरि प्रत्येकं देवस्थानेषु देवा यथोत्तरं च ये ये यथोपरि ते तेऽधःस्थेभ्यः स्वल्पस्वल्पतराश्चशब्दात् समश्रेण्यागता अपि ईशानमाहेन्द्राः प्राणताच्युतदेवाः स्वल्पाः। इति गाथार्थः ॥ ४९ ॥

प्रथमपृथिवीनारकभवनपतिसौधर्म्मदेवानां सर्वेषामसङ्ख्येयत्वे सत्युक्तेऽपि विशेषमाह—

सेढीएक्केकपएस–रइयसूईणमंगुलप्पमियं। घम्माए भवणसोहम्म–याण माणं इमं होइ ॥ ५० ॥

व्याख्या—याः पूर्वं प्रतिपादिताः श्रेण्यः ताभ्यःएकैकमाकाशप्रदेशं गृहित्वा या रचिताः सूचयस्तासामङ्गुलप्रमितम्–अङ्गुलागतम्, नारकभवनपतिसौधर्म्मदेवानां मानम्–सङ्ख्या, एतद् भवति वक्ष्यमाणम्। इति गाथार्थः ॥ ५० ॥

छप्पन्नदोसयंगुल–भूओ भूओ विगिज्झ मूलतिगं। गुणिया जहुत्तरत्था, रासीओ कमेण सूईओ ॥ ५१ ॥

व्याख्या—षट्पञ्चाशदधिकशतद्वयाङ्गुलाद् भूयो भूयो विगृह्य–गृहीत्वा मूलत्रयं षोडशचतुर्द्विसङ्ख्यं राशयो यथोत्तरस्या गुणिताः क्रमेण यथोपन्यासं सूचयो भवन्ति। प्रथमपृथ्वीनारकाणां षण्णवतिचतुःसहस्राङ्गुलप्रमाणाः, भवनपतीनां चतुःषष्ट्यङ्गुलप्रमाणाः, सौधर्मदेवानामष्टाङ्गुलप्रमाणा इयदङ्गुलसूचिप्रदेशप्रमाणश्रेणीप्रदेशतुल्यास्ते। इनि गाथार्थः ॥५१॥

अहवंगुलप्पएसा, समूलगुणिया उ नेरइयसूई। पढमदुइया पयाइं, समूलगुणियाइं इयराण ॥ ५२ ॥

व्याख्या—अथवेयं सङ्ख्या अङ्गुलप्रदेशाः स्वमूलगुणा यावन्तो भवन्ति, तावच्छ्रेणीप्रदेशमिताः प्रथमपृथिवीनारकाः। अङ्गुलप्रदेशप्रथमपदं द्वितीयपदगुणं यावत्सङ्ख्यं तावत्श्रेणीप्रदेशतुल्या भवनपतयः, अङ्गुलप्रदेशद्वितीयवर्गमूलं तृतीयल-मू

सन्नी चउसु गईसु, पढमाए असंखसेढिनेरइया । सेढि असंखेज्जंसो, सेसासु जहुत्तरं तह य ॥ ४६ ॥

व्याख्या–'संज्ञिनश्चतसृषु गतिषु प्रथमायां असङ्ख्येयाः श्रेण्यो नारकाः श्रेण्यसङ्ख्येयांशः शेषासु यथोत्तरं तथा च' पदानि । पदार्थः–संज्ञिनश्चतसृष्वपि गतिषु भवन्ति, नासंज्ञिनः, तत्र प्रथमायां नरकपृथिव्यां असङ्ख्येयश्रेणीप्रदेशतुल्या नारकाः गाथान्ते तथाशब्दाधिक्याद्भवनपतयश्च भवन्ति, श्रेण्यश्च घनीकृतलोकप्रमाणाः, द्वितीयादिषु नरकपृथिवीष्वेकश्रेण्यसङ्ख्येयभागप्रदेशतुल्या भवन्ति, यथोत्तरं चासङ्ख्येयभागमात्रा द्वितीयनरकपृथिवीनारकेभ्यस्तृतीयपृथिवीनारकाः असङ्ख्येयभागमात्राः, एवं यथोत्तरं शेषास्वपि नेतव्या इति गाथार्थः ॥ ४६ ॥

संखेज्जजोयणाणं, सूइपएसेहिं भाइओ पयरो । वंतरसुरेहिं हीरइ, एवं एक्केक्कभेएणं ॥ ४७ ॥

व्याख्या–'संख्येययोजनानां सूचिप्रदेशैर्भाजितः प्रतरः व्यन्तरसुरैः ह्रियते एवमेकैकभेदेन' पदानि, पदार्थः–सङ्ख्येययोजनानां या 'सूचिः' एकप्रदेशिका पङ्क्तिः, सङ्ख्येययोजनप्रमाणा प्रदेशपङ्क्तिरिति भावः, तया भक्तः प्रतरो व्यन्तरसुरैर्ह्रियते–भागलब्धतुल्या व्यन्तरदेवा इति । एवमेव प्रतिनिकायं भावना, सङ्ख्येयस्य वैचित्र्यान्न दोषः इति गाथार्थः ॥ ४७ ॥

छप्पन्नदोसयंगुल–सूइपएसेहि भाइओ पयरो । हीरइ जोइसिएहिं सट्ठाणे त्थीउ संखगुणा ॥ ४८ ॥

व्याख्या–षट्पञ्चाशदधिकशतद्वयाङ्गुलानां प्रदेशसूच्या भाजितः प्रतरः ह्रियते ज्योतिष्कैः, भागलब्धप्रमाणा ज्योतिष इत्यर्थः, स्वस्थानेषु चतुर्ष्वपि देवनिकायेषु स्त्रियो देव्यो देवानां ( देवेभ्यः ) सङ्ख्येयगुणाः । इति गाथार्थः ॥ ४८ ॥

असंखसेढिखपएस–तुल्लया पढमदुइयकप्पेसु । सेढिअसंखंससमा उवरिं तु जहोत्तरं तह य ॥ ४९ ॥

आवलिवग्गो अन्तावलीय गुणिओ हु वायरो तेऊ। वाऊ लोगासंखं सेसतिगमसंखया लोगा॥ ४४ ॥

व्याख्या—'आवलिवर्गोऽन्तरावलिकया गुणितो हु बादरस्तेजः। वायवो लोकासङ्ख्याः शेषत्रिकमसङ्ख्या लोकाः' इति पदानि। पदार्थस्तु—'आवलिका' सङ्ख्यातीतसमयात्मिका, तस्या 'वर्गो' भिन्नावलिकागुणो यावत्सङ्ख्यस्तावत्सङ्ख्या बादरपर्याप्तकतेजःकायिका भवन्ति। वायवो 'लोकासङ्ख्येयभागाकाशप्रदेशप्रमाणासंख्येयप्रतरप्रमाणाः, 'शेषत्रिक' मिति पृथिव्युदकाग्निवायूनां यच्छेषमेकैकस्य त्रिकं बादरापर्याप्तकसूक्ष्मपर्याप्तकापर्याप्तकस्वरूपं तदसङ्ख्येयलोकाकाशप्रदेशप्रमाणं हुशब्दो यथाप्राप्तिख्यापकः (ततः) वनस्पतेः प्रत्येकबादरापर्याप्तकाः तत्प्रमाणाः, नतु सूक्ष्मा, असम्भवत्वादिति गाथार्थः ॥ ४४ ॥

पज्जत्तापज्जत्ता, बितिचउअस्सन्निणो अवहरंति। अंगुलासंखासंख—प्पएसभइयं पुढो पयरं ॥ ४५ ॥

व्याख्या—'पर्याप्तापर्याप्ता द्वित्रिचतुरिन्द्रियासंज्ञिनोऽपहरन्ति। अङ्गुलसङ्ख्येयासङ्ख्येयप्रदेशभक्तं पृथक् प्रतरं' इन्द्रियादिपदलोपात्, पदानि। पदार्थः-अङ्गुलश्रेणीप्रदेशानां सङ्ख्येयभागविभक्ता यावन्तः प्रतरप्रदेशाः तावन्तः पर्याप्तकाः द्वित्रिचतुरिन्द्रियासंज्ञिनः प्रत्येकं सम्भवन्ति, युगपद् भणनेऽपि सङ्ख्येयभागस्य वैचित्र्यान्न दोषः, एवमङ्गुलासङ्ख्येयभागप्रदेशैर्भक्तप्रतरप्रमाणास्त एव पूर्वोक्ता अपर्याप्ता इति। अथवाङ्गुलसङ्ख्येयभागमात्रैः खण्डैः खण्डित प्रतरं पर्याप्तकाः, असङ्ख्येयभागमात्रैरपर्याप्तका द्वीन्द्रियादयोऽपहरन्तीति गाथार्थः ॥ ४५ ॥

---

१ क्वो वनस्पतेः प्रत्येकबादरापर्याप्तका एवातस्त एवैतत्प्रमाणाः' इतिक.

इति पदानि । पदार्थोऽधुना—प्रत्येकग्रहणात् साधारणा अनन्ताः पूर्वोक्ता एव, प्रत्येकाश्च ते पर्याप्तकाश्च प्रत्येकपर्याप्तकाः ते च वनस्पतिकायिकाश्च ते, तुशब्दस्य विशेषणार्थत्वाद् बादराः, सर्वेऽपि एते 'प्रतरम्' उपरितनाधस्तनप्रदेशनिरपेक्षप्रदेशात्मकं घनीकृतलोकस्य । कथमेतत्? तुशब्दस्य विशेषणार्थत्वात् । अथवा यथावस्थितलोकप्रतरस्यानियतत्वात् घनीकृतस्य 'अपहरन्ति' कल्पनयाऽन्यत्र कुर्वन्ति, किंविशिष्टं प्रतरं ?—अङ्गुलासङ्ख्येयभागमात्रखण्डैः खण्डितं, किमुक्तं भवति—प्रतरे यावन्त्यङ्गुलासङ्ख्येयभागमात्राणि खण्डानि तावन्तस्ते वनस्पतिकायिकाः । एवं भूकायिकाश्च, उदककायिकाश्च उदकमेव कायो येषां ते उदककायिकाः,एवमन्येऽपि द्रष्टव्याः,चः समुच्चये,आह—कस्मात्पृथिवी त्यक्त्वै(त्युक्त्यै)वमुपन्यास(सो न) क्रियते इति? उच्यते—बादराः पर्याप्तकाऽपर्याप्तकाः सूक्ष्माः पर्याप्तकापर्याप्तकाः पृथिव्युदककायिका अस्य वनस्पतेः यथोत्तरं तुल्यनिर्देशेऽप्यसङ्ख्येयगुणाः ख्यापिता भवन्ति । आह—यद्येवं ततः कस्मादग्निकायिका न प्रथममुक्ता? अत्रोच्यते—यत्राग्निस्तत्र वायुरस्यार्थस्य ख्यापनार्थं क्रमेणैवोपन्यस्ताः, आह—काऽत्र युक्तिर्वनस्पतिकायिकानां स्तोकत्वे इतराणां त्वधिकत्वे? अत्रोच्यते—तदुत्पत्तिस्थानविशेषाच्छरीरावगाहनातश्च, यतस्तस्य वनस्पते रत्नप्रभोपरितलस्थपृथिवीसरित्समुद्रोपवनादिषु गिरिषु चोपत्तिस्थानं, पृथिवीकायिकानां तु पृथिवीनामनेकत्वाद् बृहत्तरत्वाच्च तत्पिण्डोत्पत्तिस्थानाच्चासङ्ख्येयत्वं घटते, आह—यद्येवमुदककायिकानां स्वल्पत्वमागतं, नैवम्, तेषामप्यसङ्ख्येयसमुद्रप्रभूतघनोदधिसम्भवात् सूक्ष्मशरीरत्वाच्चासङ्ख्येयगुणत्वं घटत एव । वायुकायिकानां सकललोकाकाशसम्भवत्वाद्भावितमेव, तेषामपर्याप्तकानामपि इयमेव युक्तिः, यतः—स्वजातीयपर्याप्ताश्रयत्वात् तेषामुत्पत्तेर्भावनेति गाथार्थः ॥ ४२ ॥

पदवृद्धौ यदृच्छया नेतव्याः, इति गाथार्थः ॥ ४१ ॥ द्वारम् ॥ साम्प्रतं द्रव्यप्रमाणमभिधातुकाम आह–

**साहारणाण चउरो, भेय अणंता असंखया सेसा। मिच्छाणंता चउरो पलियासंखंस सेस संखेज्जा ॥ ४२ ॥**

व्याख्या–' साधारणानां चत्वारो भेदा अनन्ताः, असङ्ख्यकाः शेषाः, मिथ्यादृष्टयोऽनन्ताश्चत्वारः पल्योपमासङ्ख्यांशः शेषाः सङ्ख्येयाः ' इति पदानि। पदार्थस्त्वयम्–' साधारणानां ' साधारणवनस्पतिकायिकानां ये प्रागुक्ताश्चत्वारो भेदास्ते प्रत्येकमनन्ता–अनन्तसङ्ख्या', ' असङ्ख्येयका ' इति सङ्ख्यातीताः ' शेषा ' अष्टाविंशतिभेदाः–पृथ्वीजलाग्निवायूनां सूक्ष्मबादरपर्याप्तकापर्याप्तकाख्याः षोडश प्रत्येकबादरवनस्पतिः पर्याप्तापर्याप्तद्विरूपो द्वित्रिचतुःसंज्ञ्यसंज्ञिपर्याप्तापर्याप्तकाश्च द्वादशैते सर्वेऽप्यसङ्ख्याः, यतः संज्ञ्यपर्याप्तका अपि क्वचिदिष्टकालेऽभिहिताः ' एक्को व दो व तिन्नि व संखमसंखा व एग समएणं ' इति गाथया, मिथ्यादृष्टयोऽनन्ताः, सास्वादनसम्यग्मिथ्यादृष्ट्यविरतसम्यग्दृष्टिदेशविरताख्याः क्षेत्रपल्योपमासङ्ख्येयभागतुल्याः प्रत्येकं भवन्ति, शेषाः–प्रमत्तादिनवगुणस्थानजीवाः प्रत्येकं सङ्ख्येयाः, यतस्ते मनुष्यास्ते चाशेषा अपि सङ्ख्येया इति गाथार्थः ॥ ४२ ॥

अधुना तदेव द्रव्यप्रमाणं विशेषेणाभिधातुकाम आह–

**पत्तेय पज्जवणकाइया उ पयरं हरंति लोगस्स। अंगुलअसंखभागेण भाइयं भूदगतणू य ॥ ४३ ॥**

व्याख्या–' प्रत्येकपर्याप्तकवनस्पतिकायिकास्तु प्रतरं हरन्ति लोकस्य अङ्गुलासङ्ख्येयभागेन भाजितम्, भूदकतनवश्च'

---

१ एक्को वा द्वौ वा त्रयो वा सङ्ख्याता असंख्याता वा एकसमयेन।

भंगका' इति पदाान । पदार्थस्तु गणितानुक्रमेण लाघवार्थमभिधीयते—एकद्वित्र्यादिसंयोगसङ्ख्या—उभयमुहं रासिदुगं हिट्ठिल्लांतरेण भय पढमं ! लद्धहरासिविभत्ते, तस्सुवरि गणित्तु संजोगा ॥ १ ॥ अनेन गाथासूत्रेण कर्त्तव्या, तेषां चाधः स्थापयित्वा एकश्च बहुत्वं च यस्मिन् युगले तद्युगलं एककयोगादारभ्य द्विगुणं २ स्थापयित्वा यद्यप्येकका: प्रत्येकमवस्थिता-स्तथाप्यत्र संयोगस्यैव प्राधान्यादेककयोगा उच्यन्ते, सास्वादनस्थाने एकगुणिनः बहवश्च, मिश्रस्थाने एकगुणिनः बहवश्च, अनेन क्रमेण तावन्नेतव्याः, यावदयोगिगुणस्थानं, तत्स्थापना—
एतेऽधःस्थाङ्काः स्वोपरितनाङ्कगुणाः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
| १ | ८ | २८ | ५६ | ७० | ५६ | २८ | ८ |
| २५६ | १२८ | ६४ | ३२ | १६ | ८ | ४ | २ |
| २५६ | १०२४ | १७९२ | १७९२ | ११२० | ४४८ | ११२ | १६ |

२५६—१०२४—१७९२—१७९२—११२०—४४८—११२—१६. पुनरेकत्र मिश्राः ६५६० एवं भवेयुर्भङ्गाः । भावना-प्रत्येकपदेषु द्वौ द्वौ, एवं षोडश, एकैकद्विकयोगे चत्वारः २, एवं सर्वेषु द्वादशोत्तरं शतं ११२, एकैकत्रिकयोगे अष्टौ २ सर्वेषु चत्वारि शतानि अष्टचत्वारिंशदधिकानि, ते च छन्दोवत्स्थाप्याः, एवमन्येऽपि भावनीया इति गाथार्थः ॥ ४० ॥

अहवा एक्कपईया, दो भंगा इगिबहुत्तसन्ना जे । ते च्चिय पयवुड्ढीए, तिगुणा दुगसंजुया भंगा ॥ ४१ ॥द्वारम्॥

व्याख्या—अथवैकपदिकौ द्वौ भङ्गौ एकबहुत्वसंज्ञौ यौ तावेव पदवृद्धौ त्रिगुणौ षट् द्विकसंयुतौ अष्टौ भवन्तीति, पदद्वये एत एव त्रिगुणाः चतुर्विंशतिर्द्वियुता षड्विंशतिरेते त्रिपदभङ्गाः, भूयस्त्रिगुणाः द्वियुता अशीतिः, एते चतुष्पदभङ्गाः, एवं

मुहूर्त्तमवस्थानं तदेवान्तर्मुहूर्त्तमन्तरं, कस्मात्तेषां स्थानानि शून्यानि न भवन्ति ? अत्रोच्यन्ते—तेषामेव स्थानानामन्तर्मुहूर्त्तस्य बृहत्तरत्वात्, कथमेतदवसीयते ? तेषां नित्यराश्यधिकारे नित्यराशिभिः सह यौगपद्यनिर्दिष्टत्वाज्जीवसमासे प्रज्ञापनायामपि पर्याप्ताकापर्याप्तकोभयराशित्वेन प्रतिपादितत्वात् । संज्ञ्यपर्याप्तकराशेरनभिधानं कादाचित्कत्वात्, यच्च सन्मूर्च्छनमनुष्याणामनित्यानामपि सङ्ख्या प्रतिपादिता, सा चोत्कृष्टपदमाश्रित्य विशेषेणोक्ता, उत्कृष्टप्रतिपादनाच्चासम्भवजघन्यमध्यमोत्कृष्टभेदाः ख्यापिता भवन्ति, एतेषां तु समान्यकालिकप्रतिपादनाच्चानित्यत्वं सिद्धमिति गाथार्थः ॥ ३८ ॥

**मिच्छा अविरयदेसा, पमत्त अपमत्तया सजोगी य । सव्वद्धं इयरगुणा, नाणाजीवेसुवि न होंति ॥ ३९ ॥**

व्याख्या—'मिथ्यादृष्टयोऽविरतदेशविरताः प्रमत्ताप्रमत्तकाः सयोगी च । सर्वाद्धां इतरगुणा नानाजीवेष्वपि न भवन्तीति' पदानि । पदार्थोऽधुना—मिथ्यादृष्टयोऽविरतसम्यग्दृष्टयो देशविरताः प्रमत्ता अप्रमत्तकाः सयोगिनश्च एते षड्गुणस्थानजीवाः सर्वाद्धां—सर्वकालं सन्तो भवन्ति 'इत्तरगुणाः' शेषगुणस्थानजीवा 'नानाप्रकारेष्वपि' सर्वजीवेष्वप्यन्विष्यमाणाः सर्वकालं न भवन्तीति गाथार्थः ॥३९॥ षड् गुणस्थानानि सदैव सन्ति, शेषाणि-सास्वादनसम्यग्मिथ्यादृष्ट्यपूर्वकरणानिवृत्तिबादरसूक्ष्मकषायोपशान्तक्षीणकषायायोगिगुणस्थानानि तु क्वचिद् भवन्ति क्वचिन्नेति, तेषां चैकानेकभेदाद् द्विधोत्पत्तिः, एवं चाष्टानां गुणस्थानकानां षष्ट्यधिकानि पञ्चषष्टिशतानि भङ्कानां भवन्ति, अतस्तेषां प्रतिपादिकां गाथामाह सूत्रकारः—

**इगदुगजोगाईणं, ठवियमहो इगबहुत्तमिइ जुयलं । इगिजोगाउ दुदु गुणा, गुणियविमिस्सा भवे भंगा ॥ ४० ॥**

व्याख्या—' एकद्विकयोगादीनां स्थापयित्वाऽधः एकबहुत्वमिति युगलं, एकयोगात् द्विद्विगुणं गुणितविमिश्रा भवेयुः

पदानि। पदार्थस्त्वयम्—सुरनारकजीवास्त्रिषु त्रिषु तैजसकर्मणवैक्रियाख्येषु शरीरेषु भवन्ति। वायुपञ्चेन्द्रियतिर्यञ्चश्चतुःचतुर्षु पूर्वोक्तेषु त्रिषु सौदारिकेषु भवन्ति, मनुजाः पञ्चसु सम्पूर्णेषु, शेषा—एकद्वित्रिचतुरसंज्ञिपञ्चेन्द्रियास्त्रिषु २ तेजसकार्मणौदारिकेषु भवन्ति, अविग्रहा—विग्रहरहिताः सिद्धा भवन्ति, अत्राह—पूर्वं योगानभिदधता सप्त शरीराणि तैजसप्राधान्येनोक्तानीह तु (स) तैजसान्यपि पञ्चेति, कथं न विरोध इति? अत्रोच्यते, बन्धहेतुत्वमङ्गीकृत्य मिश्रसम्पूर्णान्यप्यविशेषेण प्रधानान्यनुसमयबन्धकत्वाज्जीवस्योक्तानि, अत्र तु पञ्चैव वध्यन्ते न तु मिश्राणि, अस्यार्थस्य प्राधान्यख्यापनार्थं पञ्चानामेव ग्रहणं, तानि च सतैजसान्येव भवन्तीत्यविरोध इति गाथार्थः॥ ३७॥

साम्प्रतं सत्पदप्ररूपणामाह—

**पुढवाई चउ चउहा, साहारणवणंपि संतयं सययं। पत्तेयपज्जपज्जा दुविहा सेसा उ उववन्ना॥ ३८॥**

व्याख्या—'पृथिव्यादयश्चत्वारश्चतुर्द्धा, साधारणवनमपि सान्तकं सततं प्रत्येकपर्याप्तकापर्याप्तका द्विविधाः शेषास्तूपपन्नाः' इति पदानि, पदार्थस्त्वयम्—पृथिवीजलाग्निवायवश्चत्वारः सूक्ष्मबादरपर्याप्तकापर्याप्तकभेदाच्चतुर्द्धा—चतुःप्रकारा भवन्ति, साधारणवनमप्येवमेव चतुर्द्धा, सततमनवरतं द्विधा प्रागुत्पन्नमुत्पद्यमानकं च भवति, प्रत्येकपर्याप्तकापर्याप्तकवनस्पतिकायिकाः तुर्यपदे,तुशब्दस्यानेकार्थत्वाद्बादरा एव, ते चैवमेव भवन्ति, शेषा—द्वित्रिचतुःपञ्चेन्द्रियासंज्ञिपर्याप्तकाः संज्ञिपर्याप्तकाश्च प्रागुत्पन्नाः सन्ति, उत्पद्यमानकास्तु भाज्या इति वाक्यशेषः, तुशब्दस्य विशेषणार्थत्वात् संज्ञिनोऽपर्याप्तकाः प्रागुत्पन्नाः उत्पद्यमानकाश्च भाज्याः, यतस्तेषामन्तर्मुहूर्त्तमवस्थानम्, उत्कृष्टतो द्वादश मुहूर्त्ता अन्तरं, आह—यद्येवं द्वित्रिचतुरसंज्ञ्यपर्याप्तकानामप्यन्त-

स्तेषां नित्यत्वावधारणार्थं एव, अत्राह–किमर्थमौदयिकपारिणामिकक्षायिकान् परित्यज्यौपशमिकभावोपन्यास इत्युच्यते– औदयिकपारिणामिकौ भावावजीवानामपि भवतः, अयन्तु जीवलक्षणमधिकृत्योक्तः, क्षायिकस्य (क्षायोपशमिकस्य) चौपशमिकपूर्वकत्वादयमेव युक्तियुक्त इति गाथार्थः ॥ ३५ ॥

कत्थ ? सरीरे लोए व, हुंति केवचिर ?, सव्वकालं तु । कइ भावजुया जीवा ? दुगतिगचउपंचमीसेहिं ॥३६॥

व्याख्या–'कुत्र ? शरीरे लोके वा भवन्ति कियच्चिरं ? सर्वकालमपि कतिभावयुता जीवा द्विकत्रिकचतुष्पञ्चमिश्रैरिति पदानि । पदार्थस्तु–'कुत्र' कस्मिन् स्थाने जीवा ? इत्येवं पृष्टे, शरीरे औदारिकादिपञ्चप्रकारे प्राग्युक्ता बन्धका भवन्ति । वाशब्दश्चशब्दार्थः, बन्धकाश्च अबन्धकाश्च लोके जीवा भवन्ति, 'कियच्चिर' मित्येवं पृष्टे सर्वकालमपि, कतिभावयुता जीवा ? इति पृष्टे केचिद् द्वाभ्यां क्षायिकपारिणामिकाभ्यां ते च सिद्धाः, केचित् त्रिभिरौदयिकपारिणामिकक्षायोपशमिकैरेकद्वित्रिचतुष्पञ्चेन्द्रिया भवन्ति, केचिच्चतुर्भिरेतैरेव त्रिभिः सौपशमिकैरौपशमिकसम्यग्दृष्टयश्चतुर्गतिकाः पञ्चेन्द्रिया भवन्ति, अथवा क्षायिकसम्यग्दृष्टयः क्षायिकचतुर्थभावयुक्ता भवन्ति, केचित् पञ्चभावयुक्ताः क्षायिकसम्यग्दृष्टय उपशमश्रेण्यन्तर्गता औपशमिकचारित्रवन्तो भवन्ति । शुद्धभावाः पञ्चैवैते, तेषामेव सन्निपातान्मिश्रः षष्ठो भेदो भवतीति गाथार्थः ॥ ३६ ॥

'कत्थ सरीरे' इत्यवयवं प्रत्येकं व्याख्यातुकाम आह सूत्रकारः—

सुरनेरइया तिसु तिसु, वाउपणिंदी तिरिक्ख चउ चउसु । मणुया पंचसु सेसा, तिसु तणुसु अविग्गहा सिद्धा ॥३७॥

व्याख्या–'सुरनारकास्त्रिषु त्रिषु वायुपञ्चेन्द्रियतिर्यञ्चः चतुश्चतुर्षु मनुजाः पञ्चसु शेषास्त्रिषु तनुष्वविग्रहाः सिद्धाः' इति

## अथ द्वितीयं द्वारम् ।

**चोद्दसविहावि जीवा, विबंधगा तेसिमंतिमो भेओ । चोद्दसहा सव्वेवि हु किमाइसंताइपयनेया ॥ ३४ ॥**

व्याख्या–' चतुर्दशविधा अपि जीवा विबन्धकास्तेषामन्तिमो भेदः । चतुर्दशधा जीवाः सर्वेऽपि किमादिसदादिपदज्ञेयाः' इति पदानि । पदार्थस्तु–चतुर्दशविधाः–चतुर्दशभेदा अपि जीवाः जीवस्थानेषु समाश्रिताः, विशेषेण बन्धका विबन्धका अष्टविधस्य कर्मणो ज्ञेया इति क्रिया सर्वत्र सम्बन्धनीया, तेषामन्तिमो भेदः कर्तृत्व(तया)विवक्षितः संज्ञिपर्याप्तकाख्यश्चतुर्दशधा–चतुर्दशप्रकारश्चतुर्दशगुणस्थानभेदो ज्ञेयः, सर्वेऽप्येतेऽनन्तरोक्ताः पूर्वोक्ताश्च किमादिकैः सत्पदादिकैश्च पदैर्ज्ञेया–ज्ञातव्याः । हुरवधारणे, किमवधारयति, अन्तिम एव चतुर्दशधा भवति, अन्ये त्वेकद्वित्रिगुणा एव, तत्रैकगुणाः सर्वे मिथ्यादृष्टयो, द्विगुणा के(च)न करणापर्याप्तकाः, यतः करणापर्याप्तकेषु सूक्ष्मरहितेषु सास्वादनोऽपि लभ्यते, त्रिगुणस्तु संज्ञी करणापर्याप्तको, यतस्तत्राविरतसम्यग्दृष्टिरपि भवतीति गाथार्थः ॥ ३४ ॥

इदानीं किमादिपदैर्निरूपयन्नाह—

**किं जीवा ? उवसममाइएहिं भावेहिं संजुयं दव्वं । कस्स ? सरूवस्स पहू, केणंति ? न केणइ कया उ ॥३५॥**

व्याख्या–'किं जीवाः ? उपशमादिभिर्भावैः संयुतं द्रव्यं, कस्य ?, स्वरूपस्य प्रभवः, केनेति ?, न केनचित्कृतास्तु' पदानि । पदार्थस्तु–किं जीवाः ? इत्येवं पृष्टे उपशमादिभिर्भावैः संयुतं द्रव्यं, जीवा अभिधीयन्ते । कस्येत्येवं पृष्टे स्वरूपस्य–आत्मीयरूपस्य प्रभवः–स्वामिनो भवन्ति । केन कृता इति पृष्टे न केनचित्कृता–न केनचिद्विहिताः, स्वाभाविकस्वरूपावस्थितत्वात् । तुशब्द-

अभव्येषु प्रथमं मिथ्यादृष्टिगुणस्थानं भवति । सर्वाण्यशेषाणीतरेषु-भव्येषुः । द्वे स्थाने असंज्ञिषु मिथ्यादृष्टिसास्वादनाख्ये भवतः । संज्ञिषु द्वादश मिथ्यात्वादिस्थानानि भवन्ति, यतः-केवली योगी अयोगी च न संज्ञी नाप्यसंज्ञीति गाथार्थः॥३१॥

अपमत्तुवसंतअजोगि, जाव सव्वेवि अविरयाईया । वेयगउवसमखाइय-दिट्ठी कमसो मुणेयव्वा ॥ ३२ ॥

व्याख्या-'अप्रमत्तोपशान्तायोगिनो यावत्सर्वेऽप्यविरताद्या वेदकौपशमक्षायिकसम्यग्दृष्टयः क्रमशो मन्तव्याः' इति पदानि । पदार्थस्तु-यथासङ्ख्येनात्र योजना, अविरतादयोऽप्रमत्तान्ता वेदकसम्यग्दृष्टयो भवन्ति । अविरतादय उपशान्तकषायान्ता औपशमिकसम्यग्दृष्टयो भवन्ति । अविरतादयोऽयोग्यन्ताः क्षायिकसम्यग्दृष्टयो भवन्ति । अमुना क्रमेण मन्तव्या इति गाथार्थः॥३२॥

आहारगेसु तेरस, पंच अणाहारगेसु वि भवंति । भणिया जोगुवयोगाण, मग्गणा बंधगे भणिमो ॥ ३३ ॥

व्याख्या-' आहारकेषु त्रयोदश पञ्चानाहारकेष्वपि भवन्ति, भणिता योगोपयोगानां मार्गणा बन्धकान् भणामः ' इति पदानि, पदार्थस्तु-' आहारकेषु ' आहारकजीवेषु त्रयोदश गुणस्थानानि मिथ्यादृष्ट्याद्यानि सयोगिपर्यन्तानि भवन्ति । पञ्चानाहारकेष्वपि मिथ्यादृष्टिसास्वादनाविरतसयोग्ययोगिस्थानानि भवन्ति । अयोगी स्वकालं, सयोगिकेवली समुद्घाते समयत्रयं, सम्यग्दृष्टिस्तु विग्रहे समयमेकं, मिथ्यादृष्टिसास्वादनौ विग्रहे एकं द्वौ त्रयान्वा समयान् । भणिता योगोपयोगानां मार्गणा-अन्वेषणा, साम्प्रतं बन्धकान् भणामः, इति गाथार्थः ॥ ३३ ॥

॥ इति पंचसंगहपढमं दारं सम्मत्तं ॥

॥ समाप्तं योगोपयोगमार्गणाद्वारं प्रथमम् ॥ इति ग्रन्थशतचतुष्कम् ( ४०० ) ॥

द्वितः । तेषामन्तर्गताः केचिच्छद्मस्थानां प्रतीतये(तिदाः)॥५॥यथा पित्तादयो दोषाः,सर्वजन्तुगता अपि।उत्कटत्वविहीनास्तु, न भवेयुर्विबाधकाः ॥ ६ ॥ कषायस्योदये यद्वद्, व्यपदेशो न मन्दके । भाववेदोदयेऽप्येवं, व्यपदेशो न बाधनम् ॥७॥ द्रव्यवेदाच्च निर्देशस्त्रिविधो लिङ्गिनां भवेत् । तत्त्वतो न भवत्येव, सूक्ष्मादीनामसावपि ॥ ८ ॥ सत्यपि हि द्रव्यवेदे, नासौ भावस्य कारणम् । दग्धरज्जुवदाकारमात्रत्वाद् व्यवहारतः ॥ ९ ॥ उच्यते द्रव्यवेदो हि, नासावत्रोररीकृतः । सति वेदोदये तस्माद्विद्यते चरणत्रयम् ॥ १० ॥ इति गाथार्थः ॥ २९ ॥

अपुव्वाइसु सुक्का, नत्थि अजोगिम्मि तिन्नि सेसाणं । मीसो एगो चउरो, असंजया संजया सेसा ॥३०॥

व्याख्या-'अपूर्वादिषु शुक्ला नास्त्ययोगिनि तिस्रः शेषाणां मिश्र एकश्चत्वारोऽसंयताः संयताः शेषाः' इति पदानि । पदार्थस्तु-अपूर्वकरणादिषु गुणस्थानेषु शुक्ललेश्या भवति । अयोगिस्थानं लेश्यावर्जितम् । 'शेषाणा'मिति, शेषेषु देशविरतप्रमत्ताप्रमत्तेषु तिस्रः शुभलेश्या भवन्ति । 'मिश्रो' व्यामिश्रः स च संयमं प्रत्येको-देशविरताख्यश्चत्वारोऽसंयता मिथ्यादृष्ट्याद्याः, संयताः 'शेषाः' प्रमत्तादिनवगुणस्थानकजीवाः, आधाराधेयव्यत्यासकरणादेतद् ज्ञापयति-यदुत शुक्लैव येषु गुणेष्वाधारभूमिषु लेश्या तेषां क्रमेणोभयश्रेण्योरपि गुणवृद्धिर्भवति प्रतिपततां त्वनियमः, शेषगुणानां क्रमोत्क्रमेऽप्यनियमो । योगदर्शनज्ञानद्वाराणि तूक्तान्येव, नाभिधीयन्त इति गाथार्थः ॥ ३० ॥

अभव्विएसु पढमं, सव्वाणियरेसु दो असन्नीसु । सन्नीसु बार केवलि, नो सन्नी नो असण्णीत्ति ॥ ३१ ॥

व्याख्या-'अभव्येषु प्रथमं सर्वाणीतरेषु द्वे असंज्ञिषु संज्ञिषु द्वादश केवली नो संज्ञी नाप्यसंज्ञीति' पदानि। पदार्थस्तु-

गुणस्थानान्याह-सर्वेष्वपि जीवस्थानेषु मिथ्यादृष्टिर्भवति, वायुतेजःसूक्ष्मत्रिकविशिष्टस्थानानि मुमुच्य सास्वादनो भवति। सम्यग्दृष्टिः संज्ञिद्विके शेषस्थानानि संज्ञिनि भवन्तीति गाथार्थः ॥ २८ ॥

जा बायरो ता वेएसु तिसुवि तह सवसंपराएसुं। लोभंमि जाव सुहुमो छल्लेसा जाव सम्मोत्ति ॥२९॥

व्याख्या—'यावद्बादरस्तावद्वेदेषु त्रिष्वपि तथा सर्वसम्परायेषु लोभे यावत्सूक्ष्मः षट्लेश्यासु यावत्सम्यग्दृष्टिरिति' पदानि। पदार्थस्तु—यावदनिवृत्तिबादरस्तावत्सर्वेऽपि मिथ्यादृष्ट्याद्या वेदेषु त्रिष्वपि भवन्ति, तथा सर्वकषायेषु क्रोधमानमायालोभाख्येषु। लोभे यावत्सूक्ष्मसम्परायस्थानं तावद् भवन्ति। 'षड्लेश्यास्विति' सप्तमीबहुवचनलोपादित्थमुपन्यासो लोपश्च 'सुपां सुपो लुक्', 'पूर्वसवर्णाच्छयो नान्याया जाल' (?) इति लक्षणादवसेयः, यावत्सम्यग्दृष्टिस्थानमिति वाक्यशेषः। इतिशब्दाधिक्यात् शुभलेश्यात्रयमेव सम्यक्त्वदेशविरतिसर्वविरतीनां प्रतिपत्तिकाले भवति, तदुत्तरकाले सर्वा अपि परावर्त्तन्ते अपि, यतः—प्रमत्तस्य स्त्यानर्द्धिनिद्रोदये कृष्णलेश्याभाव एवेति मतान्तरं सूचितमिति। त्रिष्वपि वेदेषु बादरकषायं यावद्भवन्तीत्युक्ते आह—ते हि किं द्रव्यवेदेषु उताहो भाववेदेषु?, यदि द्रव्यवेदेषु तदानीं प्रत्यक्षविरोधः, तदुपरितनेष्वपि तद्दर्शनात्, अथ चेद् भाववेदेषु तत्कथं वेदोदये सत्यपि तेषां चरणमिति?, अत्रोच्यते—द्रव्यवेदोदयस्तावदत्र नैवादृतो मया। भाववेदोदये ब्रूमश्चरणमत्र(णं तु)यथा भवेत् ॥१॥ सर्वघातिकषायाणां, क्षयोपशमसम्भवम्। भाववेदोदयो नैतद्, हन्ति यस्मात्स देशहा॥२॥हन्त्येव तद्बलो यद्वत्सवायुरनलस्तृणम्। देशहा केवलस्तस्य, स्वोदयः सम्प्रकीर्त्तितः॥३॥उदयो भाववेदस्य, यतोऽनादिः प्रतिक्षणम्। पर्यायेण तदेकस्मिन्, द्रव्यवेदे हि सत्यपि ॥ ४ ॥ सङ्ख्यातीता हि भेदाः स्युस्तस्य सिद्धान्तसि-

सुरनारएसु चत्तारि, पंच तिरिएसु चोद्दस मणुसे। इगिविगलेसुं जुयलं, सव्वाणि पाणदिसु हवंति॥ २७॥

व्याख्या—' सुरनारकयोश्चत्वारि पञ्च तिर्यक्षु चतुर्दश मनुष्ये एकेन्द्रियविकलेन्द्रियेषु युगलं सर्वाणि पञ्चेन्द्रियेषु भवन्ती'ति पदानि। पदार्थस्तु ' सुरनारकयो'रिति सुरनारकगत्योर्मिथ्यादृष्टिसास्वादनसम्यङ्मिथ्यादृष्टिसम्यग्दृष्टिस्थानानि चत्वारि भवन्ति। पञ्च तिर्यग्गतौ पूर्वोक्तानि चत्वारि देशविरतस्थानं च। मनुष्यगतौ चतुर्दश सम्पूर्णानि गुणस्थानानि भवन्ति। एकद्वित्रिचतुरिन्द्रियेषु ' युगलं ' मिथ्यादृष्टिः सास्वादनश्च । पञ्च तिरिएसु इति बहुवचननिर्देशात् सास्वादनः एतेषु करणापर्याप्तकेषूत्पत्तिकालादुत्कृष्टेनापि देशोनषडावलिकामात्रं कालं भवति, पञ्चेन्द्रियेषु सर्वाणि भवन्तीति गाथार्थः॥ २८॥

सवेसुवि मिच्छो वाउतेउसुहुमतिगं पमोत्तूणं। सासायणो उ सम्मो, सन्निदुगे सेस सन्निम्मि॥ २८॥

व्याख्या—'सर्वेष्वपि मिथ्यादृष्टिः, वायुतेजःसूक्ष्मत्रिकं प्रमुच्य सास्वादनस्तु सम्यग्दृष्टिः संज्ञिद्विके शेषाणि संज्ञिनि ' पदानि। पदार्थस्तु—' सर्वेषु ' त्रसस्थावरकाययोः अपिशब्दात् सप्रभेदयोर्मिथ्यादृष्टिर्भवति। अनन्तरोक्तयोः काययोः सप्रभेदयोर्वाय्वग्निकायसर्वसूक्ष्मलब्ध्यपर्याप्तकसाधारणभेदान् प्रमुच्य सास्वादनो भवति। सम्यग्दृष्टिः संज्ञिपर्याप्तककरणापर्याप्तकयोः त्रसकायान्तर्गतयोर्भवति। शेषाणीति विभक्तिलोपान्निर्देशः, शेषाणि सम्यग्मिथ्यादृष्टिदेशविरत्यादीन्येकादश स्थानानि त्रसकायान्तर्गतसंज्ञिस्थाने भवन्ति। तुशब्दो विशेषणार्थः, किमत्र विशिनष्टि ?, अनेनैव सूत्रेण जीवस्थानेषु

१ संज्ञिपर्याप्तक इत्यर्थः।

वार्थमिति गाथार्थः ॥ २४ ॥

तेऊलेसाइसु दोन्नि, संजमे एक्कमट्ठमणहारे । सण्णी सम्मंमि य दोन्नि सेसयाइ असंनिम्मि ॥ २५ ॥

व्याख्या–तेजोलेश्यादिषु ` संयमे एकमष्टावनाहारे संज्ञिनि सम्यग्दृष्टौ च द्वे शेषकाण्यसंज्ञिनी'ति पदानि । पदार्थस्तु-तैजसीपद्मशुक्ललेश्यासु संज्ञिपर्याप्तकापर्याप्तकस्थाने द्वे भवतः । सम्यग्यमः संयमः तस्मिन्नेकं संज्ञिपर्याप्तकस्थानम् । अनाहारके सप्तापर्याप्तका अन्तरगतौ संज्ञिपर्याप्तकस्तु केवलिसमुद्घाते एवमष्टौ स्थानानि भवन्ति । संज्ञिद्वारे सम्यग्दृष्टिद्वारे च संज्ञिपर्याप्तकापर्याप्तकस्थाने द्वे भवतः । शेषाणि-एतद् द्विकवर्जितानि द्वादश स्थानान्यसंज्ञिनि भवन्ति । चकाराधिक्यात् तेजोलेश्यायामेकेन्द्रियबादरपृथ्वीजलवनस्पतयः करणपर्याप्तका अपि भवन्ति, यतो भवनपतिव्यन्तरज्योतिष्कसौधर्मैशानदेवास्तेषूत्पद्यन्ते, 'जल्लेसे मरइ तल्लेसे उववज्जइ' इति वचनादिति गाथार्थः ॥ २५ ॥

दुसु नाणदंसणाइं, सव्वेवि अणाणिणो य विन्नेया । सान्नमि अयोगि अवेइ एवमाई मुणेयव्वं ॥ २६ ॥

व्याख्या–द्वयोर्ज्ञानदर्शनानि सर्व्वेऽप्यज्ञानिनश्च विज्ञेयाः, संज्ञिन्ययोग्यवेद्येवमादि मन्तव्यमि'ति पदानि। पदार्थस्तु–द्वयोः संज्ञिपर्याप्तकापर्याप्तकयोः ज्ञानदर्शनानि सम्यग्दर्शनप्रधानानि भवन्ति, सर्व्वेऽपि जीवस्थानकजीवा अज्ञानिनोऽपि विज्ञेयाः, संज्ञिन्ययोगित्वमवेदित्वमेवमादिशब्दादलेश्यत्वमकषायत्वमनिन्द्रियत्वं च मन्तव्यमिति गाथार्थः ॥ २६ ॥ तेष्वेव गत्यादिषु गुणस्थानकान्याह–

---

१ यल्लेश्या म्रियते तल्लेश्य उत्पद्यते ॥

पदार्थस्तु-त्रस्यन्तीति त्रसाः तेषां कायस्तस्मिन् द्वित्रिचतुःपञ्चेन्द्रियसंज्ञ्यसंज्ञिपर्याप्तकापर्याप्तकजीवस्थानानि दश भवन्ति। स्थावरकायेषु पृथिवीजलाग्निवायुवनस्पतिरूपेषु पञ्चस्वप्येकेन्द्रियेषु सूक्ष्मबादरपर्याप्तापर्याप्तकसंज्ञानि चत्वारि २ प्रत्येकं स्थानानि भवन्ति। एतान्येवानन्तरोक्तानि काययोगे भवन्ति, वाग्योगे द्वित्रिचतुष्पञ्चेन्द्रियासंज्ञिपर्याप्तकापर्याप्तकस्थानान्यष्टौ भवन्ति, मानसे संज्ञिपर्याप्तकापर्याप्तकस्थाने द्वे भवतः, क्रमात्—क्रमेण यथासङ्ख्येन तच्चोक्तमेव। चकारो योगानां त्रैविध्यस्य प्राधान्य-निर्देशप्रापणार्थः। आह-एवं पूर्वोक्तं यत्तदत्र विरुध्यते, कथमिति चेत्, उच्यते—नवसु स्थानेषु काययोगः केवलः, चतुर्षु का-यवाग्योगावेकस्मिन् कायवाङ्मनोयोगाः, उत्तरसूत्रेऽन्यथा भणनाद्विरोधो, नायं विरोधः, पूर्वसूत्रं लब्ध्यपर्याप्तकविवक्षातो निष्ठाकालप्राधान्याच्चोक्तम, उत्तरसूत्रं तु करणापर्याप्तकानां पर्याप्तकवद्दर्शनात्, क्रियाकालनिष्ठाकालयोश्च कथञ्चिदभेदादित्य-विरोध इति गाथार्थः ॥ २३ ॥

चउ चउ पुमित्थिवेए, सव्वाणि नपुंससंपराएसु। किण्हाइतिगाहारग—भव्वाभव्वे य मिच्छे य ॥ २४ ॥

व्याख्या—'चत्वारि २ पुंस्त्रीवेदे सर्वाणि नपुंसकसम्परायेषु कृष्णादित्रिकाहारकभव्याभव्ये च मिथ्यादृष्टौ चेति पदानि। पदार्थस्तु—पुंस्त्रीवेदयोः संज्ञ्यसंज्ञिपर्याप्तकापर्याप्तकस्थानानि चत्वारि २ प्रत्येकं भवन्ति। नपुंसकवेदश्च कषायाश्च नपुंसककषायाः तेषु सर्वाणि सम्पूर्णानि जीवस्थानानि भवन्ति। कृष्णनीलकापोतलेश्यासु आहारकभव्याभव्येषु मिथ्यादृष्टौ च सर्वाणि भवन्ति। चः समुच्चये, द्वितीयचकारोऽधिकार्थसूचकः, कोऽसावर्थो ?, लब्ध्यपर्याप्तकाः सर्वे नपुंसका एव इतरे भाज्या, असंज्ञिपर्याप्तकापर्याप्तकौ तु यद्यपि नपुंसकौ तथापि स्त्रीपुंलिङ्गाकारमात्रमङ्गीकृत्य निर्दिष्टं; क्रमोल्लघनं सर्वत्र लाघ-

गुणस्थानानि मन्तव्यानि इति वाक्यशेष इति गाथार्थः ॥ २१ ॥ तत्र गत्यादिषु जीवस्थानानि प्रतिपादयन्नाह—

**तिरियगईए चोद्दस, नारयसुरनरगईसु दो ठाणा। एगिंदिएसु चउरो विगलपणिंदीसु छच्चउरो ॥ २२ ॥**

व्याख्या—तिर्यग्गतौ चतुर्दश नारकसुरनरगतिषु द्वे स्थाने एकेन्द्रियेषु चत्वारि विकलपञ्चेन्द्रियेषु षट् चत्वारि' इति पदानि। पदार्थस्तु—तिर्यग्गतौ चतुर्दश जीवस्थानानि भवन्ति अखिलानि। नारकसुरनरगतिषु संज्ञिपर्याप्तकापर्याप्तकस्थाने द्वे भवतः। एकेन्द्रियेषु पृथिव्यादिषु पञ्चप्रकारेष्वपि प्रत्येकं सूक्ष्मबादरपर्याप्तका (पर्याप्तका) ख्यानि चत्वारि जीवस्थानानि भवन्ति। विकलेषु द्वित्रिचतुरिन्द्रियपर्याप्तापर्याप्तकस्थानानि षड् भवन्ति। पञ्चेन्द्रियेषु संज्ञ्यसंज्ञिपर्याप्तकापर्याप्तकस्थानानि चत्वारि भवन्ति। नारकसुरनरगतिषु द्वे स्थाने यदुक्तं तन्नरगतौ न घटते, कुतः इति चेत्? तृतीयस्थानसम्भवात्, न, अभिप्रायापरिज्ञानात्, तत्रायमभिप्रायो-नारकसुरसाहचर्यान्नराणामपि करणापर्याप्तकत्वमङ्गीकृत्य शतकाभिप्रायं च मत्वा स्थानद्वयमुक्तम्। आह-एवमपि सुतरां दोषो लब्ध्यपर्याप्तकाग्रहणात्, नायमपि दोषः, तस्याप्यागमे संज्ञित्वाव्यभिचारात्। कथं?, यतोऽन्यथागमाभिहिता कायस्थितिर्न घटते, यतः—सा संज्ञित्वमात्रस्य, न तु पर्याप्तकापर्याप्तकविशेषितस्य। आह एवमपि सम्मूर्च्छजमनुष्याग्रहणमेव?, न, तेषामपि ग्रहणात्, यतः सूत्रकारेण क्रममुल्लङ्घ्य तृतीयस्थानेऽभिधानात्त्रैविध्यं ख्यापितमिति गाथार्थः ॥ २२ ॥

**दस तसकाए चउ चउ, थावरकाएसु जीवठाणाइं। चत्तारि अट्ठ दोन्नि य कायवईमाणसेसु कमा ॥ २३ ॥**

व्याख्या—'दश त्रसकाये चत्वारि २ स्थावरकायेषु जीवस्थानानि चत्वार्यष्ट द्वे च कायवाग्मानसेषु क्रमा'दिति पदानि।

" आवरणदेसविगमे जातिं विज्जंति मतिसुयातीनि । आवरणसव्वविगमे[1] कह तातिं न होंति जीवस्स ॥ १ ॥ " उच्यते, तेषां क्षायोपशमिकत्वात् तयोश्च ज्ञानदर्शनावरणयोः क्षये क्षायोपशमिकभावाभावादित्येते उपयोगा न भवन्ति, क्षायोपशमिकश्च देशावरणक्षयसम्भव एव, यथा मेघान्तरितार्कस्य कटविवरप्रविष्टः प्रकाशो घटपटादीनुद्योतयति, तथा केवलज्ञानावरणावरितस्य केवलज्ञानस्य यः प्रकाशः मत्याद्यावरणविवरविनिर्गतः स्वाभिधानमुद्वहन् जीवादिपदार्थान् प्रकाशयनि, सर्वावरणव्यपगमे तु क्षयोपशमजनितरन्ध्रापगमोऽपि, यथा कटापगमे रन्ध्रापगमः, केवलावरणक्षयाच्च न मन्दप्रभा, अतिनिर्मलत्वात् केवलज्ञानस्य, अतः ते नोपयोगा भवन्ति, " कडविवरागयकिरणा मेहंतरियस्स जह दिणेसस्स । ते कडमेहावगमे न होंति जह तह इमाइं पि ॥ १ ॥ " स्वस्वभावक्षयादिति गाथार्थः ॥ २० ॥ गत्यादिस्थानोत्कीर्त्तनानाह—

गइ इंदिए य काए, जोगे वेए कसायलेसासु य । संजमदंसणनाणे, भवसन्निसम्मआहारे ॥ २१ ॥

व्याख्या—' गतीन्द्रिये च काये योगे वेदे कषायलेश्यासु च संयमदर्शनज्ञाने भव्यसंज्ञिसम्यगाहारे ' ' सरूपाणामेकशेष एकविभक्तौ ' इत्येकशेषसमासात् द्वन्द्वैकत्वमित्येवंभूतलक्षणात् प्राकृतलक्षणानुसाराच्चोत्तरत्रापि द्रष्टव्यानि पदानि । पदार्थस्तु गतिद्वारं चतुर्विधम्, इन्द्रियद्वारं पञ्चधा, कायद्वारं द्विधा, योगवेदद्वारे प्रत्येकं त्रिधा, कषायद्वारं चतुर्द्धा, लेश्याद्वारं षोढा, संयमद्वारं च पञ्चधैकधा वा, दर्शनद्वारं चतुर्द्धा, ज्ञानद्वारं अष्टधा, भव्यसंज्ञिसम्यग्दृष्ट्याहारकद्वाराणि सविपक्षाणि, तेषु जीव-

---

१ आवरणदेशविगमे, यानि विद्यन्ते मतिश्रुतादीनि । आवरणसर्व्वविगमे, कथं तानि न भवन्ति जीवस्य ? ॥ १ ॥
२ कटविवरागतकिरणा, मेघान्तरितस्य यथा दिनेशस्य । ते कटमेघापगमे, न भवन्ति यथा तथा इमान्यपि ॥ १ ॥

गाथार्थः ॥ १८ ॥ गुणस्थानेषूपयोगानाह—

**अचक्खुचक्खूदंसण-मन्नाणतिगं च मिच्छसासाणे। विरयाविरए सम्मे, नाणातिगं दंसणतिगं च ॥ १९ ॥**

व्याख्या—'अचक्षुश्चक्षुर्दर्शनमज्ञानत्रिकं च मिथ्यादृष्टिसास्वादने विरताविरतौ सम्यग्दृष्टौ ज्ञानत्रिकं दर्शनत्रिकं च' पदानि। पदार्थस्तु—अचक्षुर्दर्शनं चक्षुर्दर्शनं मत्यज्ञानश्रुताज्ञानविभङ्गाख्याः पञ्चोपयोगा मिथ्यादृष्टौ सास्वादने च भवन्ति, चः समुच्चये, मतिश्रुतावधिज्ञानत्रिकमचक्षुश्चक्षुरवधिदर्शनरूपं दर्शनत्रिकं च देशविरतेऽविरतसम्यग्दृष्टौ च भवति, चः समुच्चये इति गाथार्थः ॥ १९ ॥

**मिस्संमि वामिस्सं मणनाणजुयं पमत्तपुव्वाणं। केवलियनाणदंसण-उवओग अजोगिजोगीसु ॥ २० ॥**

व्याख्या—'सम्यग्मिथ्यादृष्टौ व्यामिश्रं मनःपर्यायज्ञानयुक्तं प्रमत्तपूर्वाणां कैवलिकज्ञानदर्शनोपयोगावयोगियोगिनोरिति पदानि। पदार्थस्तु—तदेव ज्ञानत्रिकं दर्शनत्रिकं चानन्तरोक्तं सम्यग्मिथ्यादृष्टेर्व्यामिश्रं भवति। मिथ्यात्वाधिकस्याज्ञानबाहुल्यं सम्यक्त्वाधिकस्य सम्यग्ज्ञानबाहुल्यं, बाहुल्यसम्भवस्तु तस्योभयपक्षपतनसम्भवात्। तदेवं ज्ञानत्रिकं दर्शनत्रिकं च पूर्वोक्तं मनःपर्यायज्ञानयुक्तमेवमेते सप्तोपयोगाः 'प्रमत्तपूर्वाणां' प्रमत्तः पूर्वो-धुर्यो येषां ते प्रमत्तपूर्वास्तेषां प्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायोपशान्तकषायक्षीणकषायाणां भवन्ति। कैवलिकज्ञानदर्शने एतौ द्वावुपयोगौ सयोग्ययोगिकेवलिनोः भवतः इत्यभिहिते कश्चिदाह—यदि स्वावरणस्य देशक्षयोपशमेऽपि ज्ञानावरणदर्शनावरणयोरुदयेऽपि जीवानां मतिश्रुतावधिमनःपर्यायज्ञानोपयोगाश्चक्षुरचक्षुरवधिदर्शनोपयोगाश्च सन्ति, ततः स्वावरणसर्वक्षये केवलज्ञानदर्शनवत्कथं न भवेयुः?, आह च—

स्तेषु पञ्चस्वपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तक्षीणकषायेषु नव योगा भवन्ति, औदारिकशरीरं मनांसि भाषाश्च अविशेषितत्वात् । चकारः समुच्चय इति गाथार्थः ॥ १६ ॥

वेउव्विणा जुया ते, मीसे साहारगेण अपमत्ते । देसे दुविउव्विजुया, आहारदुगेण य पमत्ते ॥ १७ ॥

व्याख्या—'वैक्रियेण युक्तास्ते सम्यग्मिथ्यादृष्टौ साहारकेणाप्रमत्ते देशविरते द्विवैक्रियेयुक्ता आहारकद्विकेन च प्रमत्ते' इति पदानि । पदार्थस्तु त एवानन्तरोदिता औदारिकशरीरचतुर्विधमनश्चतुर्विधवाक्संयोगेन नव भेदा वैक्रियशरीरयुक्ता दश योगाः सम्यग्मिथ्यादृष्टौ भवन्ति । त एव नवानन्तरोक्ता वैक्रियेण सहाहारकेण युक्ता अप्रमत्ते एकादश योगा भवन्ति । त एव पूर्वोक्ता नव वैक्रियमिश्रवैक्रियाहारकमिश्राहारकयुक्ताः प्रमत्ते त्रयोदश योगा भवन्ति । चः समुच्चय इति गाथार्थः ॥ १७ ॥

अज्जोगो अज्जोगी, सत्त सजोगंमि होंति जोगा उ । दो दो मणवइजोगा, ओरालदुगं सकम्मइगं ॥ १८ ॥

व्याख्या—'अयोगो अयोगी सप्त सयोगिनि भवन्ति, योगास्तु द्वौ द्वौ मनोवाग्योगावौदारिकद्विकं सकार्मण'मिति पदानि । पदार्थस्तु—अयोगकेवल्ययोगो योगवर्जितो मनोवाक्कायानां योग इति व्यापारस्तेन वर्जितो निष्प्रकम्पमनोवाक्काय इति भावः । सयोगिकेवलिनि सप्त योगाः, सत्यमनोऽसत्यामृषामनो वाक् चैते औदारिकमिश्रौदारिकशरीरं सकार्मणमेते सप्त योगा भवन्ति । तुशब्दो विशेषणार्थः, किमत्र विशिनष्टि ?, शतके देशविरतप्रमत्तानां वैक्रियद्विकमप्रमत्तस्याहारकं च प्रतिषिद्धं दर्शितम्, यतः 'तिसु तेर (स एगे दस नव जोगा हुन्ति सत्तसु गुणेसु । एक्कारस य पमत्ते सत्त सजोगे अजोगेक्का) गाहा । तेरस चउसु (दसेगे पञ्चसु नव दोसु हुन्ति इक्कारा । इक्कम्मि सत्त जोगा अजोगिठाणं हवइ एक्कं ) गाहा इति विशेषितत्वादिति

व्याख्या—'योगे वेदे संज्ञिन्याहारकभव्यशुक्ललेश्यासु द्वादश संयमसम्यग्दृष्टौ नव दश लेश्याकषायेष्वि'ति पदानि। पदार्थस्त्वयम्—योगे इति जातिनिर्देशात् मनोवाक्कायरूपे त्रिभेदे, एवं वेदे स्त्रीपुंनपुंसकसंज्ञे द्रव्यरूपे, संज्ञिद्वारे संज्ञिनि, आहारकद्वारे आहारके, भव्यद्वारे भव्ये, लेश्याद्वारे शुक्ललेश्यायां, एतेषु स्थानेषु द्वादशोपयोगा भवन्ति। संयमद्वारे यथाख्याते क्षायिकसम्यग्दृष्टौ च नवोपयोगा भवन्ति, यतस्तयोरज्ञानत्रयं न भवति। लेश्याद्वारे कृष्णनीलकापोततैजसीपद्मासु, कषायद्वारे चतुर्ष्वपि कषायेषु दशोपयोगा भवन्ति, यतोऽकषायाः केवलिनोऽलेश्याः शुक्ललेश्या वेति गाथार्थः॥ १४॥

**सम्मत्तकारणेहिं, मिच्छनिमित्ता न होंति उवओगा। केवलदुगेण सेसा, संतेव अचक्खुचक्खूसु॥ १५॥**

व्याख्या—'सम्यक्त्वकारणैर्मिथ्यात्वनिमित्ता न भवन्त्युपयोगाः केवलद्विकेन शेषाः सन्त्येवाचक्षुश्चक्षुषो'रिति पदानि। पदार्थस्तु सम्यक्त्वं कारणं-हेतुर्येषां ते सम्यक्त्वकारणा मतिश्रुतावधिमनःपर्यायज्ञानावधिदर्शनसंज्ञाः तैः सह मिथ्यात्वहेतवो मत्यज्ञानश्रुताज्ञानविभङ्गाख्या न भवन्ति, केवलज्ञानदर्शनाभ्यां सह शेषा दशोपयोगा न भवन्ति, भवन्त्येव चक्षुरचक्षुर्दर्शनाभ्यां सह सम्यक्त्वनिमित्ता मिथ्यात्वनिमित्ताश्चेति गाथार्थः॥ १५॥ गुणस्थानेषु योगानभिधातुकाम आह—

**जोगाहारदुगूणा, मिच्छे सासायणे अविरए य। अपुव्वाइसु पंचसु नव ओरालो मणवई य॥ १६॥**

व्याख्या—'योगाहारद्विकोना, मिथ्यादृष्टौ सास्वादने अविरते च "करणशब्दलोपात्" अपूर्वादिषु पञ्चसु नवौदारिकं मनोवाक् च, पदानि। पदार्थस्तु योगाः संपूर्णाः पञ्चदश त एवाहारकमिश्राहारकवर्जिता मिथ्यादृष्टौ सास्वादनेऽविरते च भवन्ति। क्रियत इति करणं अपूर्वं च तत्करणं चापूर्वकरणं तद्विद्यते यस्यासावपूर्वकरणः स आदिर्येषां तेऽपूर्वकरणादय-

त्ममत्या ‘ पश्येत् ’ निभालयेदित्युपदेशः, तत्र मपञ्चितज्ञशिष्यहितार्थमेतदेव विभाव्यते, तत्र गतिद्वारे मनुजगतावेव, इन्द्रियद्वारे पञ्चेन्द्रियेषु, कायद्वारे त्रसेषु, वेदद्वारे पुंनपुंसकयोः, कषायद्वारे चतुर्ष्वपि कषायेषु, लेश्याद्वारे शुभलेश्यात्रये, संयमद्वारे सामायिकच्छेदोपस्थापनीययोः,दर्शनद्वारे अचक्षुश्चक्षुरवधिषु,ज्ञानद्वारे मतिश्रुतावधिमनःपर्यायज्ञानेषु, भव्यसंज्ञिसम्यग्दृष्ट्याहारकेष्वाहारकमिश्रमाहारकं च भवतीति गाथार्थः ॥ १२ ॥ तेष्वेव गत्यादिस्थानेषु उपयोगानाह–

मणुयगईए बारस, मणकेवलवज्जिया नवन्नासु । इगिथावरेसु तिन्नि उ, चउ विगले बार तस सगले॥१३॥

व्याख्या–‘ मनुजगतौ द्वादश मनोज्ञानकेवलद्वयवर्ज्जिता नवान्यासु एकेन्द्रियस्थावरेषु त्रीणि तु चत्वारो विकले द्वादश त्रससकले ’ केषाञ्चित्पदानां लोपात्, पदानि । पदार्थोऽधुना-मनुजगतौ द्वादश सम्पूर्णा उपयोगा भवन्ति, मनोज्ञानकेवलज्ञानकेवलदर्शनवर्ज्जितास्त एव ‘ शेषासु ’ नारकतिर्यगमरगतिषु नवोपयोगा भवन्ति । इन्द्रियद्वारमधिकृत्यैकेन्द्रियेषु कायद्वारमधिकृत्य स्थावरेषु त्रय उपयोगाः-मत्यज्ञानश्रुताज्ञानाचक्षुर्दर्शनाख्या भवन्ति । ‘ चत्वारो विकल ’ इति, चतुरिन्द्रियेषु चक्षुर्दर्शनसहितास्त एव पूर्वोक्ताः, द्वादश कायमधिकृत्य त्रसेषु इन्द्रियद्वारे ‘ सकलेषु ’ पञ्चेन्द्रियेष्वित्यर्थः । तुशब्दो विशेषणार्थः, किमत्र विशिनष्टि ?, अभव्यमिथ्यादृष्टि (सास्वादने)षु पञ्चोपयोगाश्चक्षुरचक्षुर्दर्शनमज्ञानत्रयं च । असंज्ञिनो विभङ्गरहितास्त एव पूर्वोक्ताश्चत्वारो भवन्ति, अनाहारकस्य मिथ्यादृष्टेश्चत्वारस्त्रयः प्राग्वत्, विभङ्गं कालसौकर्यस्येत्र, सम्यग्दृष्टेर्ज्ञानचतुष्कं चक्षुरचक्षुरवधिदर्शनं सप्तोपयोगा भवन्तीति गाथार्थः ॥ १३ ॥

जोए वेए सन्नी, आहारगभव्वसुक्कलेसासुं । बारस संजमसम्मे, नव दस लेसाकसाएसुं ॥ १४ ॥

रौदारिकमौदारिकमिश्रमपि शरीर न सम्भवति, पश्चानुपूर्व्युपन्यासाच्चक्षुर्दर्शनानाहारकयोर्मिश्रशरीरत्रयमपि न भवति, यतोऽनाहारको वक्रगणो(तौ) भवति, चक्षुर्दर्शनं तु तृतीयपर्याप्तौ, सा च शरीरपर्याप्तेरुत्तरकाले भवति। शेषद्वारेषु शेषद्वारावयवेषु चोत्पत्तिकाले तिर्यङ्मनुष्ययोः केवलज्ञानकेवलदर्शनयथाख्यातेषु (च) केवलिसमुद्घाते औदारिकमिश्रं तदुत्तरकालं त्वौदारिकं शरीरं भवतीति भावनीयमिति, 'केवले' त्ति केवलज्ञानकेवलदर्शनयथाख्यातेषु वैक्रियमिश्रं वैक्रियं (च) शरीरं न सम्भवति, यतः—सयोगिकेवलिनः सप्तैव योगाः, केवलं च स्थावरकायश्च विकलेन्द्रियाश्च द्वन्द्वैकत्वं तस्मिन्निति, स्थावरकाये द्वित्रिचतुरिन्द्रियेषु च वैक्रियमिश्रं वैक्रियं च शरीरं न सम्भवति, पश्चानुपूर्व्युपन्यासात् संज्ञिविपक्षे च न भवति। शेषद्वारेषु शेषद्वारावयवेषु च भवति, कथं?, देवनारकयोः प्रसिद्धमेव, पञ्चेन्द्रियत्रसस्त्रीपुंनपुंसकभव्याभव्यसंज्ञिमिथ्यादृष्टयस्त एव कषायलेश्यात्रिज्ञानाज्ञानवन्तश्च तथा प्रमत्तसंयतास्तु दर्शनत्रयज्ञानचतुष्कसामायिकच्छेदोपस्थापनीयसम्यक्त्ववन्तो भव्याश्च तेषां च त्रयोदश योगाः, एकेन्द्रियबादरपर्याप्तकवायुकायिके वैक्रियमिश्रं वैक्रियशरीरं च भवत्येव तद्भावितमेवेति गाथार्थः॥ ११॥

आहारदुगं जायइ, चोद्दसपुव्विस्स इइ विसेसणओ। मणुगइपंचेदिय–माइएसु समइण जोएज्जा (पासेज्जा)॥१२॥

व्याख्या—'आहारद्विकं जायते चतुर्दशपूर्विण इति विशेषणतः मनुजगतिपञ्चेन्द्रियादिकेषु स्वमत्या पश्येदिति' पदानि, पदार्थस्तु 'आहारकद्विकम्' इत्याहारकमाहारकमिश्रं च शरीरं 'जायते' उत्पद्यते भवतीतियावत्, चतुर्दशपूर्विणःचतुर्दशपूर्वाणि विद्यन्ते यस्य तस्येत्येवं 'विशेषणतो' विशेषणसकाशान्मनुजगतिपञ्चेन्द्रियादिकेषु स्थानेषु 'स्वमत्या' आ-

१ 'वक्रे भवति' क.

चारित्रे च कार्मणं शरीरं भवति तत्सद्भावादिति, 'अन्यत्र तद्विवक्षया' इति, अन्यत्र—अन्येषु द्वारेषु तत्कार्मणं शरीरं विवक्षया भवति, वक्तुमिच्छा विवक्षा—वक्तुरभिप्रायः सम्भवासम्भवरूपः, तच्च येषु द्वारेषु द्वारावयवेषु च न भवति भवति चेत्येतद् भाव्यते—चक्षुर्दर्शनमनःपर्यायज्ञानविभङ्गाहारकद्वारेषु न भवति, कथं ?, विग्रहगतौ कार्मणशरीरसद्भावात् तत्र चक्षुर्दर्शनाभावात्, यद्यपि लब्धिमङ्गीकृत्य तद्विद्यते तथापि न तदाद्रियते, यतो लब्ध्यपर्याप्तकानामुपयोगत्रयमेवोक्तम्, मनःपर्यायज्ञानं तु सुसाधुषु भवति, तत्र तस्यासद्भाव एव, विभङ्गस्य तु तद्भविकत्वात्, आहारककार्मणयोर्विरोधात् कार्मणशरीरं न भवति, कषायलेश्याऽचक्षुर्दर्शनावधिदर्शनमतिश्रुतावधिज्ञानमत्यज्ञानश्रुताज्ञानभव्याभव्यसम्यग्दृष्टिमिथ्यादृष्टिषु तु भवति, तच्च लाघवार्थं यथासम्भवं भाव्यते, यतस्तीर्थंकृतां भव्यत्वसम्यग्दृष्टित्वमतिश्रुतावधिज्ञानित्वाचक्षुर्दर्शनित्वावधिदर्शनित्वशुभत्रिलेश्यत्वकषायत्वानि विद्यन्ते, तीर्थंकृतश्चान्तरालगतिर्विद्यते, यतोऽपराजितविमानादरिष्टनेमिनः शौरिकपुरे उत्पादस्तत्र च वक्रसम्भवो, यदि एकसमयेन तिर्यग्लोकमवतरति, द्वितीयेन समयेन समश्रेण्यां तिष्ठति, तृतीयेनोत्पादः, एवमन्तरालगतिसम्भवस्तीर्थकृतामिति, तथाऽभव्यो मिथ्यादृष्टिर्मत्यज्ञानी श्रुताज्ञान्यशुभत्रिलेश्यश्च भाव्यत एवेति गाथार्थः ॥ ९ ॥ १० ॥

मणनाणविभंगेसुं, मीसं उरलंपि नारयसुरेसुं । केवलथावरविगले, वेउव्विदुगं न संभवइ ॥ ११ ॥

व्याख्या—'मनोज्ञानविभङ्गयोः मिश्रमौरालिकमपि नारकसुरेषु केवलस्थावरविकले वैक्रियद्विकं न सम्भवति' इति पदानि। पदार्थस्तु मनोज्ञानं च विभङ्गश्च तयोरौदारिकमिश्रशरीरं न सम्भवति, उत्पत्तिकाले तयोरभावात्। देवनारकयो-

१ 'सम्यग्दृष्टेश्चा' क. २ 'देवनारकयोरौदारिकमिश्रमौदारिकमपि' क.

सटीक

इन्द्रियद्वारे पञ्चेन्द्रियेषु कायद्वारे त्रसेषु, योगद्वार तथैव मृग्यते, वेदद्वारे स्त्रीपुंनपुंसकेषु, कषायद्वारे क्रोधमानमायालोभेषु, लेश्याद्वारे कृष्णनीलकापोततैजसीपद्मशुक्लासु, संयमद्वारे सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्पराययथाख्यातेषु, दर्शनद्वारे चक्षुरचक्षुरवधिषु, ज्ञानद्वारे मतिश्रुतावधिषु सविपक्षेषु मनःपर्याये च, भव्यद्वारे भव्याभव्येषु, संज्ञिद्वारे संज्ञिषु, सम्यक्त्वद्वारे सम्यङ्मिश्रमिथ्यादृष्टिषु, आहारकद्वारे आहारकेषु चतुर्विधमपि मनो वाक् च भवति, सुगमत्वाद् भावना न क्रियते। जीवस्थानगुणस्थानकयोः प्रपञ्चेनाभिहितत्वात् ( अभिधास्यमानत्वाच्च ), अपान्तरालगतौ वर्त्तमानस्य कार्म्मणशरीरं भवति, इत्युक्ते कश्चिदाह–कस्मिन् द्वारे अस्या अवतार इति चेद् उच्यते–नैतत्साक्षाद् द्वारं, न च द्वारावयवः, किन्तु ग्रन्थकारेण लाघवार्थं गनोन्द्रियकायवेदाः संज्ञी च सविपक्षोऽपान्तरालगतौ स्वनामव्यपदेशं लभन्ते इति काक्वा साभिहिता, कथमेतदवसीयते यथा तस्यां स्वनामव्यपदेशं लभन्ते ?, उच्यते, स्वायुरुदयात्, तथाऽऽगमे कायस्थितावुक्तम्– " एगिंदियाणणंता, दोण्णि सहस्सा तसाण कायठिती। अयराण इग पणिंदिसु नरतिरियाणं सगट्ठ भवा ॥ १ ॥ पुरिसत्तं सण्णित्तं, सयपुहत्तं तु होइ अयराणं। थी पलियसयपुहुत्तं नपुंसगत्तं अणंतद्धा २॥" यद्यन्तरालगतौ तद्व्यपदेशं न लभेरन् तदानीमेतावन्मात्रा कायस्थितिर्न्न घटते, तदभावे महान् दोषः सम्पनीपद्यतेऽनिन्द्रियादिव्यपदेशात्, तस्मादित्थमेष्टव्यमित्यतः पञ्चस्वपि द्वारेषु सप्रभेदेषु कार्मणं शरीरं भवतीति अन्तरगतिकैवलिकेष्विति तत्रान्तरगत्यवयवो व्याख्यातः,कैवलिकेष्वित्यत्र तु दर्शनज्ञानयोर्यथाख्यात-

१ एकेन्द्रियाणामनन्ताः द्वे सहस्रे त्रसानां कायस्थितिः अतराणां, एकं पंचेन्द्रियेषु नरतिरश्चां सप्ताष्ट भवाः ॥ १ ॥ पुरुषत्वं संज्ञित्वं शतपृथक्त्वं तु भवत्यतराणां स्त्री पल्यशतपृथक्त्वं, नपुंसकत्वमनन्ताद्धां ॥ २ ॥

संज्ञिपञ्चेन्द्रियेषु द्वादशोपयोगा भवन्ति, अपिशब्दाद्विद्यमानतया न तूपयोगेन, उपयोगस्त्वेकस्यैक एव भवति, यत उक्तमागमे— " 'सव्वस्स केवलिस्स जुगवं दो नत्थि उवओगा " इति वचनादिति गाथार्थः ॥ ८ ॥ इदानीं मार्गणास्थानेषु योगान् प्रतिषेधद्वारेण[3] ( विधिद्वारेण ) च व्याख्यानयन्नाह—

इगिविगलथावरेसुं न मणो दो भेय केवलिदुगम्मि। इगि थावरे न वाया, विगलेसु असच्चमोसेव ॥९॥
सच्चा असच्चमोसा, दो दोसुवि केवलेसु भासाओ। अंतरगइ केवलिएसु कम्मयं नत्थ तं विवक्खाए ॥१०॥

व्याख्या—' एकेन्द्रियविकलेन्द्रियस्थावरकायेषु न मनो, द्वौ भेदौ केवलिद्विके, एकेन्द्रियस्थावरकाये न वाक्, विकलेन्द्रियेष्वसत्यामृषैव, प्रथमगाथापदानि, प्राकृते तु केषाञ्चिल्लोपादेवमेव द्रष्टव्यानि। द्वितीयगाथापदानि तु ' सत्या असत्यामृषा द्वे द्वयोः केवलयोः भाषे अन्तरालगतिकैवलिकेषु कार्मणम्, अन्यत्र तद्विवक्षया ' इति। अत्र प्रथमगाथापदार्थस्तु—इन्द्रियद्वारमधिकृत्यैकद्वित्रिचतुरिन्द्रियेषु न मनो भवति, कायद्वारमधिकृत्य स्थावरकाये ( च ), ज्ञानदर्शनद्वारद्वयमधिकृत्य केवलज्ञानदर्शनयोः द्वे मनसी मृषोभयरूपे न भवतः, गाथान्ते एवशब्दाधिकत्वात् संज्ञ्याहारकविपक्षद्वारयोश्चतुर्विधमपि मनो न भवति। तथेन्द्रियद्वारमधिकृत्य एकेन्द्रियेषु कायमधिकृत्य स्थावरकाये तथाऽऽहारकविपक्षे च चतुर्विधापि भाषा न भवति। इन्द्रियद्वारे विकलेन्द्रियेषु संज्ञिद्वारविपक्षे चासत्यामृषैव भाषा भवति। तथा ज्ञानदर्शनद्वारद्वयमधिकृत्य केवलज्ञानदर्शनयोः सत्यान्त्यभाषे भवतः, शेषद्वारेषु निषिद्धद्वारावशेषेषु च चतुर्विधमपि मनो वाक् च भवति, गतिद्वारे चतुर्विधायामपि गतौ

१ 'सर्वस्य केवलिनः युगपद् द्वौ न स्तः उपयोगौ'। २ 'स्थावरकेषु वा'। ३ 'एकेण' क. ४. 'अन्तरालगति' क. ५ 'शब्दाधिक्यात्' क.

व्याख्या—' लब्ध्या करणेन च औदारिकमिश्रकोऽपर्याप्ते ' तत्र लब्ध्या करणेन चापर्याप्तक इति यद्विशेषणद्वयं क्रियते तत्तिर्यङ्मनुष्यानधिकृत्य मन्तव्यम् । नारकदेवास्तु करणापर्याप्तका एव यस्मात्तस्मात्तिर्यङ्मनुष्ययोरौदारिकमिश्रकाययोगो भवति, ' पज्जत्ते ओरालो ' तयोरेव पर्याप्तकयोरौदारिककाययोगो भवति, वैक्रियो वा काययोगो बादरपर्याप्तकवायुकायिकस्य भवति, कुत एतदवसीयते यदुत– वायुकायिकस्यैव भवति ?, उत्तरसूत्रात्, उत्तरसूत्रं च ' [1]वेउव्विय वाऊणं, पढमा चउरो समुग्घाया ' मिश्रपूर्वकत्वात् वैक्रियस्य मिश्रो वैक्रियो वा इति वक्तव्ये किमर्थं क्रमोल्लङ्घनमिति चेत् ? उच्यते–संज्ञ्यपर्याप्तकयोर्देवनारकयोरुत्पत्तिकाले वैक्रियमिश्रकाययोगो भवति, तेषां प्रत्यासन्नत्वात् अपर्याप्तकसंज्ञा विशिष्यते, अन्यथा अन्या अपि संज्ञा भवन्तीति गाथार्थः ॥ ७ ॥ तेष्वेवोपयोगानाह–

मइसुयअन्नाणअचक्खुदंसणेक्कारसेसु ठाणेसु । पजचउपणिंदिसु सचक्खुऽसन्नी सन्नीसु बारसवि ॥८॥

व्याख्या–' मतिश्रुताज्ञानाचक्षुर्दर्शनमेकादशसु स्थानेषु ' इति, अत्रार्थघटना त्वेवं द्रष्टव्या–एकेन्द्रियसूक्ष्मबादरद्वीन्द्रियत्रीन्द्रियपर्याप्तापर्याप्तकैः सह ( चतुरिन्द्रियसंज्ञ्यसंज्ञ्य ) पर्याप्तकेष्वेवमेकादशसु जीवस्थानेषु मत्यज्ञानश्रुताज्ञानाचक्षुर्दर्शनाख्यास्त्रयः प्रत्येकं भवन्ति, एते च लब्ध्यपर्याप्तकाः, यतः–करणापर्याप्तकेष्विन्द्रियपर्याप्तौ सत्यां तेषां चक्षुर्दर्शनं भवति, निर्देशस्तु द्वन्द्वैकवद्भावादनुस्वारलोपाच्च द्रष्टव्यः, तथा ' पर्याप्तकचतुःपञ्चेन्द्रियासंज्ञिषु सचक्षुषः संज्ञिषु द्वादशापीति ' अत्र तु पर्याप्तकचतुष्पञ्चेन्द्रियासंज्ञिषु ' सचक्षुषः ' पूर्वोक्तास्त्रयः चक्षुर्दर्शनेन सहैव चत्वार उपयोगा भवन्ति,

---

१ द्वितीयद्वारस्य गा २९.

इति, अत्रोच्यते–अज्ञानानि पूर्वं भवन्ति पश्चाद् ज्ञानानीत्यनेककारणेन पूर्वमज्ञानानामुपन्यासः, पश्चात् ज्ञानानां, तथा प्रधानत्वात् ग्रन्थकारेण साकारोपयोगः प्रथममुक्तः, तदनन्तरमनाकारोपयोगोऽप्रधानत्वादित्यलमतिप्रसङ्गेन, प्रकृतं प्रस्तुमः इति गाथार्थः ॥ ५ ॥ इदानीं जीवस्थानकेषु योगानाह–

विगलासन्नीपज्जत्तएसु लब्भंति कायवइयोगा । सव्वेवि सन्निपज्जत्तएसु सेसेसु काओगो ॥ ६ ॥

व्याख्या–' विगलासंज्ञिपर्याप्तकेषु ' विकलानि–असम्पूर्णानीन्द्रियाणि येषां ते विकलेन्द्रियाः, इन्द्रियशब्दलोपादित्थमुपन्यासः, संज्ञा विद्यते येषां ते सञ्ज्ञिनो न संज्ञिनोऽसंज्ञिनस्ते च ते पर्याप्तकाश्चेति विग्रहस्तेषु लभ्येते कायवाग्योगौ, तत्र च अन्त्यवाग्योगो द्रष्टव्यः, अस्यामेव गाथायामपिशब्दात्, तथाऽग्रे वक्ष्यति च–' विगलेसु असच्चमोसेव ' तथा ' सर्वेऽपि संज्ञिपर्याप्तकेषु ' संज्ञिनश्च ते पर्याप्तकाश्च ते संज्ञिपर्याप्तकाः तेषु सर्वेऽपि योगाः सम्भवन्ति मनोवाक्कायलक्षणाः सोत्तरभेदाः, औदारिकमिश्रकार्मणौ केवलिसमुद्घाते, आहारकमिश्राहारकावाहारककर्तुर्भवतो, वैक्रियमिश्रवैक्रियौ उत्तरवैक्रियकारिणो, बहुवचनकरणमनेकजीवाश्रयख्यापनार्थमेकैकस्य भिन्नकार्यार्थमिति वा, ' शेषेषु ' सूक्ष्मबादरपर्याप्तकापर्याप्तकैकेन्द्रियेषु तथा द्वित्रिचतुःपञ्चेन्द्रियासंज्ञिसंज्ञ्यपर्याप्तकेषु नवसु स्थानेषु काययोगो भवतीति गाथार्थः ॥ ६ ॥ तमेव काययोगं स्पष्टयन्नाह–

लद्धीए करणेण य, ओरालियमीसगोऽपजत्ते य । पज्जत्ते ओरालो, वेउव्विय मीसगो वावि ॥ ७ ॥

---

१ ' भवन्ति ' क.

असत्यामृषमनोयोगस्येति । एवमेव वाग्योगविषयेऽपि द्रष्टव्यम्, यत्तु काययोगोपन्यासे प्रथमं वैक्रियस्य स चतुर्गतिजीवसम्भवव्यापकत्वात्, तदनन्तरमाहारकस्य प्राधान्यात्, पुनरप्रधानस्यौदारिकस्य, मिश्राणि त्वेतान्येव, तत्पूर्वकाणि च शुद्धानि, कार्मणं तु विग्रहगतौ केवलिसमुद्घाते वा स्यात् कस्यचिज्जीवस्यातो अन्ते निर्देशः । अथवा संसारान्ते तदन्तत्वादन्ते कृतो निर्देशः, अलं प्रसङ्गेन गमनिकामात्रत्वात् प्रयासस्येति गाथार्थः ॥ ४ ॥ इदानीमुपयोगान् प्रतिपादयन्नाह ग्रन्थकारः—

अन्नाणतिगं नाणाणि, पंच इइ अट्ठहा उ सागारो । अचक्खुदंसणाई चउहुवओगो अणागारो ॥ ५ ॥

व्याख्या—'अज्ञानत्रिक'मिति, ज्ञायन्ते जीवादयः पदार्था यैस्तानि ज्ञानानि न ज्ञानान्यज्ञानानि तेषां त्रिकमिति समासः, तानि च मत्यज्ञानश्रुताज्ञानविभङ्गाख्यानि, तत्र मननं मतिः, मतिरेवाज्ञानं मत्यज्ञानं, श्रूयते इति श्रुतं, श्रुतमेवाज्ञानं श्रुताज्ञानं, विविधो भङ्गः परिच्छेदात्मकः सम्यग्ज्ञानवैसदृश्येन यस्य स विभङ्गः, तथा 'ज्ञानानि पञ्चे'ति, ज्ञायन्ते जीवादयः पदार्था यैस्तानि ज्ञानानि मतिश्रुतावधिमनःपर्यायकेवलाख्यानि, मतिश्रुतयोः पूर्ववत् व्युत्पत्तिः, अवधीयते अधोऽधो विस्तृतं ज्ञायत इति अवधिः अवधिरेव ज्ञानं अवधिज्ञानं, मनसः पर्याया—भेदाः मनःपर्यायास्तेषु ज्ञानं मनःपर्यायज्ञानमिति, केवलमसहायमद्वितीयं ज्ञानं केवलज्ञानमित्येवं 'अष्टधा तु' अष्टधैव 'साकारः' सहाकारेण वर्त्तत इति साकारः—वस्तुस्वरूपावधारणरूपो विशेषज्ञानमितियावत् । तथा अचक्षुर्दर्शनादिश्चतुर्द्धा उपयोगोऽनाकारः,तत्र चक्षुषा दर्शनं चक्षुर्दर्शनं न चक्षुर्दर्शनमचक्षुर्दर्शनं तदादिर्यस्य स तथोक्तः,चतुर्द्धा उपयोगः,चतुर्भेदभिन्नः चक्षुरचक्षुरवधिकेवलदर्शनरूपस्त्वनाकारः—आकारवर्जितः सामान्यावबोधरूपः, भेदप्रतिभेदव्याख्या त्वावश्यके न्यक्षेण प्रतिपादितेतिकृत्वा नेह प्रतन्यते । अथ कोऽयमित्थमुपन्यासक्रम

सच्चमसच्चं उभयं, असच्चमोसं मणो वई अट्ठ। वेउव्वाहारोराल मिस्स सुद्धाणि कम्मयगं ॥ ४ ॥

व्याख्या–सद्भ्यो हितं सत्यं, सन्तः प्राणिनोऽभिधीयन्ते, तेभ्यो हितं सत्यम्, तद्विपरीतमसत्यम्, तथा 'उभयम्' इति सत्यासत्यं द्विस्वभावं, पुनश्चतुर्थमसत्यामृषमेतच्चतुर्विधं मनोऽभिधीयते। वागपि चतुर्विधा एवमेव वागभिलापेन मन्तव्या, एवमष्टौ भवन्ति। तथा विविधा क्रिया विक्रिया, विक्रियायां भवं वैक्रियं तच्च शरीरं, तथा कार्यार्थिभिश्चतुर्दशपूर्वधरैराह्रियत इत्याहारकम्, तथा उरालैः पुद्गलैर्निर्वृत्तमौरालिकम्, उदारैर्निर्वृत्तमौदारिकं चेति, तथा मिश्रीभवन्मिश्रं, तथा शुद्धं–केवलमसहायमसम्पृक्तमिति, वैक्रियं चाहारकं च औदारिकं च वैक्रियाहारकौदारिकाणि वैक्रियाहारकौरालिकानि च तानि मिश्रशुद्धानि चेति विग्रहः। योजना त्वेवं–वैक्रियमिश्रमाहारकमिश्रमौदारिकमिश्रम्, शुद्धानि चैतान्येव त्रीणि, एवं षड् भवन्ति, कार्मणं सप्तममिति, कर्मणा निर्वृत्तं कार्मणं, कर्मणि भवं वा कार्मणं, कर्मात्मकं वा कार्मणमिति, तदेवं चत्वारो मनोयोगाश्चत्वारो वाग्योगाः सप्त काययोगाः, एवमेते पञ्चदश योगा भवन्ति। अत्र कश्चिदाह–तैजसं षोडशं किमिति न भवति ?, तस्यापि शरीरत्वादिति, अत्रोच्यते–कार्मणग्रहणेनैव तद्ग्रहणात्, नहि कार्म्मणभिन्नं तद्विद्यते, प्रसिद्धमेतदागमे, तदन्तर्गतस्य चाप्रधानत्वात्तेन पञ्चदशैव योगा भवन्ति, न षोडशेति। पुनरप्याह–कोऽयमित्थमुपन्यासक्रमो येनैवं योगोपन्यासः क्रियते ?, अल्पवक्तव्यत्वादागमे चैवमेव प्रसिद्धत्वात्, पश्चानुपूर्व्युपन्यासान्निरोधकाले चैवमेव निरोधादयमेव क्रमो युज्यते। यत्तु प्रथमं सत्यमनोयोगस्योपन्यासः स प्रधानत्वेन, तद्विपरीतत्वादितरस्य, पुनरुभयाश्रयस्य, पुनरागमेऽन्त्यभाक्त्वेन प्रसिद्धत्वात्

१ 'भवनात्'

एत्थ य जोगुवयोगाणं मग्गणा बंधगा य वत्तव्वा । तह बंधियव्वयं बंधहेयवो बंधविहिणो य ॥ ३ ॥

व्याख्या–अत्र च प्रकरणे योगोपयोगानां मार्गणा बन्धकाश्च वक्तव्याः,तथा बद्धव्यं बन्धहेतवो बन्धविधयश्चेति समुदायार्थः,अवयवार्थस्तूच्यते चालनापूर्वकमिति । अत्र कश्चिदाह–कोऽयं द्वारोपन्यासे क्रमः, यतः कर्त्तुरधीनत्वात् सर्वासां क्रियाणामादावेव बन्धकास्तावद्वक्तव्याः, तदनन्तरं योगापयोगाः, पुनर्बद्धव्यं, ततो बन्धहेतवो बन्धविधयश्चेति, एवमेव युक्तियुक्तत्वादिति, अत्रोच्यते–नाभिप्रायापरिज्ञानात्, अयमभिप्रायो–योगोपयोगा जीवस्यासाधारणगुणा अविनाभावित्वेन तैरेव च सुखानुमेयोऽतीन्द्रियोऽप्यात्मा अतः सूत्रकार आदावेव योगोपयोगाना(चख्ये), छद्मस्थैश्च प्रायो गुणैर्गुणी लक्ष्यते न साक्षादित्यस्यार्थस्य ख्यापनार्थमित्थमुपन्यासः कृत इति, तथाऽल्पवक्तव्यत्वाद्, अन्यथाऽप्यनेकनयमताऽभिज्ञेन स्वमत्या क्रमप्रयोजनं वाच्यमिति । युज्यन्त इति योगाः योजनानि वा जीवव्यापाररूपाणि योगा अभिधीयन्ते उपयुज्यन्त इति उपयोगाः–जीवविज्ञानरूपाः, योगाश्चोपयोगाश्च योगोपयोगाः तेषां मार्गणा, चशब्दसंसूचितेषु जीवस्थानेष्वशेषजीवसङ्ग्राहकेषु वक्तव्येति सम्बन्धः, मध्यवर्तिचशब्दाधिक्यात् मध्यवर्त्तिगत्यादिस्थानकेषु जीवगुणस्थानमार्गणा च वक्तव्या, सर्वत्र क्रिया योज्या । बध्नन्त्यष्टप्रकारं कर्म्म स्वप्रदेशैरिति बन्धकाः । 'बद्धव्यम्' इति बन्धनीयं जीवैरात्मप्रदेशैः, तथाशब्दस्तु तस्यैव मूलोत्तरानेकभेदप्रख्यापकः । बन्धस्य हेतवः कारणानीत्यर्थः । बन्धस्य विधयो बन्धविधयो–बन्धप्रकारा वक्ष्यमाणलक्षणाः, तृतीयचकारस्तु समुच्चायकः, इति गाथार्थः ॥ ३ ॥ तत्र प्रथमं योगोपयोगद्वारमधिकृत्य 'यथोद्देशस्तथा निर्देश' इति न्यायमङ्गीकृत्य योगानभिधातुकाम आह–

# श्री जैन विविध साहित्य शास्त्रमाला में छपी हुई पुस्तकों की सूची।

( १ ) सुरसुन्दरी-चरिअं—( कर्त्ता धनेश्वरसूरि ) यह ४००० गाथा प्रमाण प्राकृतभाषा का बडा ही मनोहर सुंदर महाकाव्य है। बड़ी विस्तृत प्रस्तावना सरल संस्कृत मे दी गई है, जिससे ग्रन्थकार तथा और २ आचार्य संबन्धी अनेक ज्ञातव्य इतिवृत्तका ज्ञान होगा। मूल्य साधारण संस्करण रु. २-८-०, राजसंस्करण रु. ३-०-०

( २ ) हरिभद्रसूरि-चरित्रम्—यह १४४४ ग्रंथके प्रणेता सुप्रसिद्ध विद्वान् जैनाचार्य हरिभद्रसूरिजीका सुललित गद्य में लिखा हुआ संपूर्ण जीवन चरित्र है। जो कि अनेक ग्रंन्थोका अवलोकन कर बड़े ही परिश्रम से लिखा गया है। मूल्य रु. ०-४-० मात्र।

( ३ ) सप्तसंधान—महाकाव्यम्—(कर्त्ता महोपाध्याय श्रीमेघविजयजी गणि ) इसमें ऋषभनाथ, शान्तिनाथ, नेमिनाथ, पार्श्व-नाथ, महावीरस्वामी, श्रीकृष्ण और रामचन्द्र ये सातो महापुरुषोके जीवन चरित्र वर्णित है। आश्चर्य की बात तो यह है कि इसके प्रत्येक श्लोकसे सातोका जीवन चरित्र का वृत्तान्त निकलता है। वड़ाही आश्चर्योत्पादक ग्रन्थ है। ऐसा एक भी दूसरा काव्य संस्कृत साहित्यमें नहीं है। कठिन स्थलोमे टिप्पण भी दिया गया है। मूल्य मात्र रु. ०-८-०।

( ४ ) सुपासनाह-चरिअं—प्रथम भाग। (कर्त्ता श्रीलक्ष्मणगणि) प्राकृत भाषा का यह एक मनोहर व बोधप्रद महाकाव्य है। स्थल स्थल में अनेक मनोरञ्जक कथाओसे भरपूर है। पाठ करने में सुगम हो, इस लिये प्रत्येक श्लोक की छाया भी साथ में दी गई है। ऐसा मनोरम व सुबृहत् प्राकृत काव्य अभी तक अन्यत्र कहीं नही छपा। पत्राकारका मूल्य रु. २-८-०, पुस्तकाकार का २-०-०।

(५) First Principlos of Jaina Philosophy (second Edition) A succint Summary of Jaina metaphysics and Logic, Price 10 As.

( ६ ) सुपासनाह-चरिअं—दूसरा भाग । पुस्तकाकार का मूल्य २-०-०, पत्राकारका मूल्य २-८-०

( ७ ) शान्तिनाथ-चरित्रम्—( कर्ता महोपाध्याय श्रीमेघविजयजी गणि ) संस्कृत साहित्य में "नैषधीय चरित्र" एक बड़ा ही सुरम्य रोचक महाकाव्य है। जिसकी कीर्ति सर्वत्र फैली हुई है। यह काव्य उसी काव्य की पादपूर्त्तिरूप से लिखा गया है। शान्तिनाथ भगवान् का चरित्र वर्णित है। बडा ही मनोहर काव्य है। मूल्य १-०-० ।

( ८ ) जैन लेख संग्रह—( प्रथम भाग ) संग्राहक बाबू पूरणचन्दजी नाहर एम ए., बी. एल., वकील, हाई कोर्ट, कलकत्ता। इस में प्राचीन जैन मूर्त्तियो तथा शिलाओ पर लिखे हुए १००० लेखो का संग्रह है। इस से इतिहास सम्बन्धी बहुत सी बातें जानी जा सकती है। बड़े परिश्रम से तय्यार किया गया है। मूल्य ५-०-०

( ९ ) विवेकमञ्जरी—( प्रथम भाग ) मूल प्राकृत, कर्त्ता आसड कवि। संस्कृत टीकाकार श्री बालचन्द्र सूरि। मूल्य रु २-०-० ।

( १० ) रयणसेहर-कहा—कर्त्ता श्री जिनहर्ष गणि। संस्कृत छाया से युक्त। मूल्य रु ०-८-०। ( डाक खर्च सबका अलग )

## छप रहे हैं।

( १ ) सुपासनाह चरिअं—( तृतीय भाग )

( २ ) प्राकृतसूक्तरत्नमाला—इस ग्रन्थ मे भिन्न भिन्न विषय के अनेक प्राचीन प्राकृत सुभाषितो का संग्रह किया गया है। संस्कृत छाया दी गई है। और साथ ही में अंग्रेजी भाषान्तर भी दिया गया है।

( ३ ) विवेकमञ्जरी—( द्वितीय भाग )

पत्र व्यवहार इस पते से करना चाहिए—

जैन विविध साहित्य शास्त्रमाला कार्यालय, बनारस सिटी।

दक्षिणा । सोऽपि दध्याविदं भावि ध्रुवं न श्रुतमन्यथा ॥ ३ ॥ तां विलासवतीं हित्वा नान्यां कन्यामहं भजे । स्वप्नोऽपि पूर्वक्लृप्तेयं स्रागिति स्पष्ट एव मे ॥ ४ ॥ तापसी सापि सितांशुमुखीमनुकरोति ताम् । दैवतः सैव वा सा यत् ते तापस्याः क्व विभ्रमाः ? ॥ ५ ॥ इति चिन्तयतस्तस्य मूर्तं पुण्यमिवोद्ययौ । रविस्तमांसि भिन्दानो विघ्नानिव घनानपि ॥ ६ ॥ ततः कामज्वरार्त्तस्तामोषधीमिव तापसीम् । वीक्षमाणः कुमारोऽयं बभ्राम प्रतिकाननम् ॥ ७ ॥ माधवीश्लिष्टचूतद्रुतलेऽन्येद्युरसौ स्थितः । तामेव चिन्तयन् मुग्धामश्रृणोद् मर्मरध्वनिम् ॥ ८ ॥ ततो विवलितग्रीवः समायान्तीमलोकत । जरतीं तापसीमेकां तपःकृशतमामयम् ॥ ९ ॥ अथोत्थाय विनीतात्मा ननामायमियं पुनः । राजपुत्र ! चिरं जीवेत्याशशास सबाष्पदृक् ॥ १० ॥ कुमारोऽचिन्तयदियं कथं मामुपलक्षते ? । अथवा ज्ञानवानेव भवेद् मुनिजनोऽखिलः ॥ ११ ॥ उपविश्य कुमारेण मार्जितावनिमण्डले । तस्मै पुरो निषण्णायेत्यादिशद् वृद्धतापसी ॥ १२ ॥

कुमार ! श्रूयतामस्ति वैताढ्य इति पर्वतः । तत्र गन्धसमृद्धाख्ये पुरे विद्याधरेश्वरः ॥ १३ ॥ सहस्रबल इत्यासीत् तत्प्रिया तु शुभाभिधा । तयोरेकाहमभवं सुता मदनमञ्जरी ॥ १४ ॥ विलासपुरनाथेन पर्यणायिषि यौवने । अहं पवनगत्याख्यविद्याधरमहीभृता ॥ १५ ॥ अन्यदाऽऽवामगच्छाव दम्पती नन्दनं वनम् । नानाविधाभिः क्रीडाभिश्चिरं चाक्रीडतामिह ॥ १६ ॥ अत्रान्तरे मम भोगान्तराये समुपस्थिते । क्षीणे तदायुषि व्यध्यात् प्रदीप इव मे पतिः ॥ १७ ॥ ततोऽहं तमसाक्रान्ता सारसीव समन्ततः । क्रन्दन्ती च भ्रमन्ती च भूतले सहसाऽपतम् ॥ १८ ॥ उत्पतन्तीव मूर्च्छान्ते चेतिता पुनरस्मरम् । आकाशगामिनीं विद्यां तथाप्युदपतं नहि ॥ १९ ॥ अपराधमात्मीयं च स्मरन्ती यावदस्म्यहम् । द्वितीयं हृदयं तावद् देवानन्दः समाययौ ॥ २० ॥ विद्याधरोऽयं वैराग्याद् विलसत्तापसव्रतः । मामाह किमिदं वत्से ! मयोचे दैवचेष्टितम् ॥ २१ ॥ तेनोक्तं किं मयाऽप्युक्तमार्यपुत्रो व्यपद्यत । आकाशगामिनी विद्या सापि मेऽद्याप मोघताम् ॥ २२ ॥ स बाष्प-

पादयोरेनां नखरत्नापदेशतः । चन्द्रार्थमर्थयन्तीव तारिकादौत्यकारिकाः ॥८३॥ इयं निसर्गमधुरा वल्कलैरपि राजते । सुवर्णकेतकीपुष्पकलिकेव बहिर्दलैः ॥८४॥ तदियं नूनमन्यूनरूपा भूपालनन्दनी । सा विलासवती यद्वा क्वासौ क्व च वनस्थितिः ? ॥ ८५ ॥ इति चिन्तयतस्तस्य सा कृत्वा कुसुमोच्चयम् । यावद् बाला चचालात्मतपोविपिनसंमुखी ॥ ८६ ॥ तावदेष स्मरोन्मादं गोपयित्वाऽभिसृत्य च । नमस्कृत्य च तामूचे तपस्ते वर्धतां शुभे ! ॥ ८७ ॥ श्वेतवीवास्यहं तामलिप्त्या यान् प्रति सिंहलम् । अन्तराभग्नयानत्वादेकाकीह समागमम् ॥ ८८ ॥ तद् मे भगवती शंसत्विदं किं जलधेस्तटम् ? । द्वीपो वा कः प्रदेशश्च कुत्राश्रमपदं तव ? ॥ ८९ ॥ ततो विलोक्य तं सापि विकुञ्चितविलोचना । दिग्मुखानीव पश्यन्ती क्षणं तस्थौ ससाध्वसा ॥ ९० ॥ अदत्तप्रतिवागेषा ययावभि तपोवनम् । कुमारस्तु स्थितस्तत्र चिन्तयामासिवानिति ॥ ९१ ॥ युवतिस्तापसी चैषैकाकिनी तत्किमेतया ? । अन्यं प्रत्याम्यहं कश्चिदिति ध्यात्वाऽविशद् वनम् ॥ ९२ ॥ पृच्छाम्येताभिति पुनर्व्यावृत्तोऽयमसावपि । विशेषमन्थरं गत्वा स्तोकं भूभागमास्थित ॥ ९३ ॥ मुक्त्वा करण्डके वल्क विस्रस्तमिव पर्यधात् । जृम्भमाणा बभञ्जाङ्गमबध्नात् कबरीं पुनः ॥९४॥ तद्विकारमय दृष्ट्वाऽचिन्तयत् किमिदं पुनः । विरुद्धवस्तुविषयालोकेन किमु वाऽमुना ? ॥९५॥ इति व्याघुट्य गतवानयं गिरिनदीं ततः । प्राणवृत्तिं व्यधात्पाकपेशलैर्भूरुहां फलैः ॥९६॥ अत्रान्तरे नभोवृक्षात्फलं तरणिमण्डलम् । निरन्नेन किलादाय कालेन कवलीकृतम् ॥ ९७ ॥ सान्ध्यकृत्य विधायाथ पूर्वेण विधिना ततः । अशेत शेषयामिन्यामसौ स्वप्नमलोकत ॥ ९८ ॥ जानामि काञ्चनतरोरासन्नस्थस्य मे ददौ । स्रजं सर्वेन्द्रियमनोहरा कापि वराङ्गना ॥ ९९ ॥ ऊचे च पूर्वकल्पतेयं स्रग् मया ते समर्प्यते । कुमार ! गृह्यतामित्थमादां कण्ठे च तामधाम् ॥ २०० ॥ अत्रान्तरे विभातेशागमडिण्डिमचण्डिमा । सारसक्रौञ्चनिनदस्तस्य निद्रामनीनशत् ॥ १ ॥ प्रबुद्धोऽचिन्तयदयं मम स्वप्नोऽयमीदृशः । कन्यालाभाय यद्वेदमरण्यं कुत एव सः ? ॥ २ ॥ अत्रान्तरे च पुस्फोर भुजा दक्षिश्च

यामवाप्यापि दशां यज्जीव्यते मया ॥ ६३ ॥ विश्वभूतिं विना तेन जीवितेनापि किं मम ? । यद्वा कृतं विषादेन विचित्रा कर्मणां गतिः ॥ ॥ ६४ ॥ यथाऽहमुद्धृतो जीवंस्तथा सोऽपि क्वचिद् भवेत् । तच्चन्द्रार्काविव क्वापि जीवन्तौ संघटावहे ॥ ६५ ॥ विचिन्त्येत्यचलत् तृष्णा-क्षुधार्त्तोऽयमुदङ्मुखः । अपश्यच्च नदीमेकां वनराजिविराजिताम् ॥ ६६ ॥ कृत्वा फलजलाहारं तत्र तिष्ठन्नलोकत । एकं निजस्त्रिया युक्तं सारसं भ्रमसंभ्रमम् ॥ ६७ ॥ स विलासवतीं स्मृत्वा चिन्तयामासिवानिति । पक्षिणोऽमी वरं येषामभीष्टविरहो नहि ॥ ६८ ॥

अत्रान्तरे निशानाथो भङ्गाद् मग्नान्यतारकम् । भास्वानपि नभोऽम्भोधिं तीर्त्वा तत्प्रान्तमीयिवान् ॥ ६९ ॥ सान्ध्यकृत्यं विधायाथ स्मृत्वा देवगुरूनयम् । शिलाशय्यामवष्टभ्याशेत वन्य इव द्विपः ॥ ७० ॥ निशान्ते वन्दिभिरिव ध्वनद्भिः श्रुतिपेशलम् । वाजिभिरत्याजितो निद्रां विचचार वने वने ॥ ७१ ॥ यावद् गिरिसरित्तीरमेकं वीरो जगाम सः । नूतनां तावदद्राक्षीद् मृगाक्षीपदपद्धतिम् ॥ ७२ ॥ ततस्तद-नुसारेण कौतुकोत्तानमानसः । किञ्चिदग्रे गतोऽपश्यदेकां तापसकन्यकाम् ॥ ७३ ॥ वल्कसंवर्मितां धर्मनृपतेः सुभटीमिव । शस्त्रागारमि वोद्यानं लुण्टन्तीं पुष्पधन्वनः ॥ ७४ ॥ नागकन्यामिवोद्वृत्तामुत्तीर्णाममरीमिव । लतान्तरितदेहस्तां पश्यन्नयमचिन्तयत् ॥ ७५ ॥ युग्मम् ॥ अस्या जितो मुखेनोग्रजटावनसरित्तटे । पादान्तकृतभाजात्तकुक्कुजस्तप्यते विधुः ॥ ७६ ॥ मुखाङ्कखलकेऽमुष्याः खेलतोः लोचनाङ्कयोः । नासावंशनिभाद् वेधा व्यधाद् दण्डमिवान्तरे ॥ ७७ ॥ लावण्यामृतकुल्यायाः स्तनावस्या मृगीदृशः । दोर्नालकरपाथोजविशकन्दाविवो-ज्ज्वलौ ॥ ७८ ॥ रोमलेखामिषादस्याः पीत्वा नाभिसरोरुहम् । वक्त्रराजीवपानाय भृङ्गराजीव गच्छति ॥ ७९ ॥ योषिदेतत्समानाऽऽसीद् नास्ति नैव भविष्यति । इति रेखात्रयं धातुरेषा धत्ते वलित्रयम् ॥ ८० ॥ यौवनस्य स्मरारोहवाजिनो वेल्लनोचिता । अस्या विभाति जघनस्थली पुलिनपुष्कली ॥ ८१ ॥ स्वर्भुवःसुभ्रुवां रूपजयस्तम्भसविभ्रमौ । ऊरू सुवर्णकदलीगर्भगौरौ विभर्त्यसौ ॥ ८२ ॥ निपत्य

मे मातुलो राजा तं द्रष्टुमहमुत्सुकः । तत्त्वं मे सिंहलद्वीपगामि यानं निवेदयेः ॥ ४४ ॥ ततः कतिपयैरेव वासरैः स न्यवेदयत् ।
यानमेकं कुमाराय प्रस्थास्नु प्रति सिंहलम् ॥ ४५ ॥ गच्छतेऽस्मै वणिक्पुत्रः पटमेकमढौकयत् । आश्चर्यकारी देवायं गृह्यतामिति
रोचयन् ॥ ४६ ॥ किमाश्चर्यं करोत्येष कुमारेणेति भाषिते । स प्राह पुरुषं कुर्यादृश्यमवगुण्ठितः ॥ ४७ ॥ कुमारः प्राह लाभो-
ऽस्य कुतस्ते सोऽब्रवीदिति । अस्त्यासन्नमिहानन्दपुरं तत्रास्ति मे सुहृत् ॥ ४८ ॥ सिद्धसेनाभिधः सिद्धविद्यस्तेनैकदा मम ।
आनीय मण्डले यक्षकन्याऽभ्यर्चीकृता पुरा ॥ ४९ ॥ तयाऽभितुष्टया दृष्टिममोघीकर्तुमात्मनः । कुमार ! मम दत्तोऽयं पटो नयनमो-
हनः ॥ ५० ॥ ततः प्रीतः कुमारस्तमादायानुमतोऽमुना । सविश्वभूतिरगमद् वेलाकूलं पयोनिधेः ॥ ५१ ॥ प्राह सांयात्रिकं तत्रेश्वरदत्तं
मनोरथः । कुमारोऽयं मम स्वामी सर्वस्वं वा किमुच्यते ? ॥ ५२ ॥ द्रष्टव्यस्तत् त्वयात्मेवेत्युक्ते सोऽभिदधे ततः । मित्र ! किं बहुना यादृक्
तव तादृग् ममाप्यसौ ॥ ५३ ॥ भालयित्वेति भूपालभवं नत्वा च सोऽगमत् । कुमारोऽथ समारोहद् यानमेतदपूर्यत ॥ ५४ ॥ अथेदं सिंह-
लद्वीपाभियानं यानमन्यदा । कालमेघमयः कालः कुधोत्ताळोऽकटाक्षयत् ॥ ५५ ॥ तदा वर्षानिलोल्लोलकल्लोलकिलिकिञ्चितैः । यानं
त्रस्तैवावहद् व्योम्न्यारुह्यारुह्यापतद् मुहुः ॥ ५६ ॥ कातरा व्यजपन् धीरा यानत्राणोपमं व्यधुः । धार्मिकाश्च तदा स्वस्वकुलदैवतमस्मरन्
॥ ५७ ॥ आरुह्य कुत्रचिद् वार्धिनगमूर्ध्नि निरङ्कुशम् । तदा दुर्दैवसंरम्भाद् यानमेतदभज्यत ॥ ५८ ॥ धीरचेताः कुमारस्तु प्राप्यैकं फलकं
ततः । स्वदोर्भ्यां तरंस्तोयं गतोऽयं तीरमम्बुधेः ॥ ५९ ॥ ततोऽसौ पुलिने गत्वा वासांसि निरपीडयत् । तदवस्थामिवालोक्य मुञ्चन्ती-
वाश्रुनिर्भरम् ॥ ६० ॥ दृग्मोहनपटः स्वानुभावात् तीमित एव न । यद्वा कुमारदुःखान्तश्चिक्लीडितं किमेतु सः ? ॥ ६१ ॥ कुमारस्तदभेदेन
विस्मितास्तैकया दिशा । गत्वा किञ्चिद् विशश्राम श्रान्तो जम्बूतलावनौ ॥ ६२ ॥ अचिन्तयच्च तत्रायमहो ! विधिविजृम्भितम् । प्रश्नद्धे-

कुमारः प्राह किं वच्मि प्रमाणं सैव मेऽम्बिका । तेनोचे सैव दुष्टेति गत्वा शंसामि भूपतिम् ॥ २४ ॥ इत्युदित्वोत्थितो रुद्धः कुमारेणेति जल्पता । संरम्भेणालमेतस्यां गुरुष्यः को नु मत्सरः ? ॥२५॥ तेनोचे त्वं यशोवर्मसुतोऽसि कियदुच्यते । कोपस्तत्रैष ते तस्यां तत् प्रसीद विमुञ्च माम् ॥ २६ ॥ कुमारः प्राह संरम्भं त्यज, स त्वाह मा वद । कुमारः प्राह चेन्न स्वं घातयिष्यामि तद् व्रज ॥ २७ ॥ निशम्येति तलारक्षो रुदन् प्रोवाच धिङ् नृपम् । कुमारः प्राह को दोषस्तस्य, मे कर्मवैशसम् ॥२८॥ तलारक्षस्ततोऽवादीत् तदादिश करोमि किम् ? । कुमारोऽभिदधे तूर्णं विधेहि नृपशासनम् ॥ २९ ॥ तेनोचे कः प्रलापोऽयमसंबद्धः पुनः पुनः । कुमार ! जगदाधार ! सुतारगुणगौरव ! ॥ ३० ॥ यदि रक्षसि तां रक्ष देव ! किन्तु ममादिश । उपायं येन ते न स्यामपराधी कथञ्चन ॥ ३१ ॥ कुमारोऽचिन्तयच्चित्ते मार्योऽयं मय्यमारिते । मारयन्नपराधी मे तद् वरं विषयान्तरम् ॥ ३२ ॥ ध्याख्यदेतत् कुमारोऽस्मै सोऽपि हृष्टो जगाविति । स्वर्णभूमिं प्रति ततो यानमद्यैव यास्यति ॥ ३३ ॥ सविश्वभूतिविनयंधरः सद्गुणबन्धुरः । ययौ छन्नं कुमारोऽथ वेलाकूल पयोनिधेः ॥३४॥ ततः समुद्रदत्तस्यार्पयत् प्रवहणेशितुः । विश्वभूतिद्वितीयं तं कुमारं विनयंधरः ॥ ३५ ॥ कुमार ! खेदितोऽसि त्व क्षन्तव्यमिति साश्रदृक् । संभाष्यैनं प्रणम्याथ तलारक्षो न्यवर्तत ॥ ३६ ॥ उदितेऽथ विधौ वार्धिवेलापयसि धलगति । सविश्वभूतिरारोहद् यानमुर्वीशनन्दनः ॥ ३७ ॥ नावर्गलान् समुत्क्षिप्य गृहीत्वांशुकमञ्जसा । कर्णाधारे समुद्युक्ते नौरपूर्यत नाविकैः ॥ ३८ ॥ यानेन जाङ्घिकेनाथ पाथःपथमतीत्य तौ । दिनैः कतिपयैरेव स्वर्णभूमिं समीयतुः ॥ ३९ ॥ समुद्रदत्तमापृच्छ्योत्तीर्य प्रवहणात् ततः । सविश्वभूतिराविशत् कुमारः श्रीपुरं पुरम् ॥ ४० ॥ श्वेतवीतः समायातं सिद्धदत्तवणिक्सुतम् । समनोरथदत्ताख्यं बालमित्रमिहैक्षत ॥ ४१ ॥ असंभाव्यागमः सोऽपि वीक्षितोऽनेन संभ्रमात् । विहसंश्च प्रणम्यात्मावासेऽनीयत भक्तितः ॥ ४२ ॥ भुक्तोत्तरं ततः पृष्टः समागमनकारणम् । कुमारः प्राह यानस्मि तातरोषेण सिंहलम् ॥ ४३ ॥ तत्र

ब्रुवन्तस्ते वीरसेनेन भाषिताः । कथयन्तु स्थिरीभूय किमनेन विनाशितम् ? ॥ ४ ॥ ऊचुस्ते ननु चौरोऽय वध्यः, कस्त्वमितो भव । सो-
ऽप्याहाऽस्य शरण्योऽहमेन रक्षामि सर्वथा ॥ ५ ॥ तदेव ज्ञापितस्याथ नृपस्यादेशतस्त्वमी । यावत् प्रधनसंरम्भमारभन्तामुना समम् ॥ ६ ॥
वाह्यालीमागतस्तावद् यशोवर्मा पिता तव । तज्ज्ञात्वाऽऽह शरण्यं कः शृणाति मयि जीवति ? ॥ ७ ॥ युग्मम् ॥ प्रतिषिद्धमथो युद्धं राज्ञा
विजयवर्मणा । त्वत्पित्रा वीरसेनोऽपि सत्कृतोऽगाज्जयस्थलम् ॥८॥ सुता च गृहिणी तस्य जातः पुत्रः स चास्म्यहम् । कुमार ! तेन ते तातो
मत्तातस्योपकारकः ॥ ९ ॥ ममापि च मदम्बाया अपि चेति श्रुत मया । पितृभ्यां, तेन तेऽस्माक जीवलोकोऽपि किं बहु. ? ॥१०॥ किञ्चाद्य
नृपतिः प्रापानङ्गवत्या निकेतनम् । दृष्टा च रुदती तेन सा नखोल्लिखिता हृदि ॥ ११ ॥ राज्ञा पृष्टा बलात्कारकारिणं त्वां शशंस सा । ततः
क्रुद्धः समादिक्षदिति मामधनं नृपः ॥ १२ ॥ सनत्कुमारकं पापं तमरे ! कुलपांसनम् । निगृहाण तथा शीघ्रं यथा कोऽपि न विन्दति ॥ १३ ॥
इत्यादिष्टो नृपेणाहं निःसृतोऽतीव दुर्मनाः । हा किमेतदिति ध्यायस्तोरणेऽशृणव क्षुतम् ॥ १४ ॥ विलम्बमान तत् श्रुत्वा प्राह नैमित्तिको-
ऽथ माम् । क्षुतं सोमाख्यमेतत्ते विनयन्धर ! शोभनम् ॥ १५ ॥ ततो गतो गृहं मात्रा पृष्टः कालुष्यकारणम् । तत् तथाऽकथयं तस्या रुदती
साप्यदोऽवदत् ॥ १६ ॥ हा वत्स ! मा वधीरेनमुपकारिसुतो ह्ययम् । इत्यागतोऽहमत्रातः परं यत् कृत्यमादिश ॥ १७ ॥ ततः सनत्कुमारोऽपि
चिन्तयामास चेतसि । अहो मायाविता स्त्रीणामहो विलसितं विधेः ॥ १८ ॥ स्वभावः कथ्यते राज्ञश्चेत् तदा सा निहन्यते । चेन्न तत् कुल-
मालिन्यं वरं तद् मा परव्यथा ॥१९॥ तलारक्षोऽवदद् देव ! शाधि मां करवाणि किम् ? । कुमार' प्राह मां हिन्धि जनिकृद्वंशपांसनम् ॥२०॥
अत्रान्तरे क्षुतं मार्गे व्रजद्भिः कैश्चिदीर्यत । किं बहूक्तेन निर्दोषः सैष गङ्गाजल यथा ॥ २१ ॥ इत्याकर्ण्य तलारक्षः प्राह निर्दूषणो भवान् ।
यत्क्षुतोपश्रुती व्यक्तमेव त्वां शुद्धमाहतुः ॥ २२ ॥ खलूक्त्वाऽन्यप्रलापेन तत्कुमार ! निवेदय । कीदृगेतदभूद् येन भूपं विज्ञपयाम्यहम् ॥२३॥

८०। द्वयोर्विरुद्धमेतद्धि लोकयोः कुलयोरपि ॥ ८४ ॥ इत्युक्ते सा सवैलक्ष्यकैतवोचे तवोत्तम ! । मया परीक्षितं सत्त्वं साधु साधु विवेक्यसि ॥ ८५ ॥ इत्युदीर्य तदा क्षीयमाणयेवान्तरा क्रुधा । विसृष्टस्तां प्रणम्याशु निजं धाम जगाम सः ॥ ८६ ॥

५। इतश्च सायमायाता ताम्बूलस्रग्विलेपनम् । कुमारायाऽऽर्पयत् तं च बभाषेऽनङ्गसुन्दरी ॥ ८७ ॥ स्वामिनी मन्मुखेन त्वां देव ! विज्ञपयत्यदः । यद् माल्यमार्यपुत्रेदं त्वत्कृते गुम्फितं मया ॥ ८८ ॥ कुमारस्तद् निशम्यैतत्करादादाय सादरम् । माल्यं मूर्ध्नि दधौ प्रीतः प्रियाज्ञामिव देहिनीम् ॥ ८९ ॥ प्रियायामिव मूर्त्तेनानुरागेण निजं वपुः । विलिलेपाङ्गरागेणात्युद्गतेनैष रोमभिः ॥ ९० ॥ प्रियानीतमिवोद्दामं रागपुष्टिकरं मुखे । सनत्कुमारस्ताम्बूलमनुकूलस्मरोऽकरोत् ॥ ९१ ॥ अनङ्गसुन्दरीमूचे विश्वभूतिर्जनान्तिकात् । कुमारविनयं पश्य साह किं न्यूनमस्ति वः ॥ ९२ ॥ अथ स्मित्वा कुमारोऽपि बभाषेऽनङ्गसुन्दरि ! । यत्कृत्यादेशकृद्भ्यो निखिलोऽय जनो ननु ॥ ९३ ॥ इहैतव्यं त्वया शश्वद् विश्वभूतिमयोऽपि यत् । मा शङ्किष्ठास्तवैवायमावासोऽनङ्गसुन्दरि ! ॥ ९४ ॥ भवती घटयन्त्यन्यत् कण्ठाभरणमस्ति नः । तदग्रेतनमादत्स्व नेशा वोढुं द्वयं वयम् ॥९५॥ सहास्यमिति संभाष्य दत्त्वास्यै कण्ठभूषणम् । ततो विसर्जयामास कुमारोऽनङ्गसुन्दरीम् ॥९६॥

अत्रान्तरे समागत्य विनयन्धरसंज्ञितः । तलारक्षः कुमारस्य नत्वोपाविशदग्रतः ॥ ९७ ॥ कारयित्वैष विजनं कुमारमिदमभ्यधात् । अस्ति स्वस्तिमती नाम ग्रामस्त्वत्पितृमण्डले ॥ ९८ ॥ वीरसेनाभिधस्तत्र राजपुत्रशिरोमणिः । शरण्यः सकृपस्त्यागी भोगीश्वरश्च मान्यभूत् ॥ ९९ ॥ आपन्नसत्त्वामादायान्यदा स त्वात्मगेहिनीम् । तस्याः पितुर्गृहस्थाने पुरे गच्छन्नयस्थले ॥ १०० ॥ आवासानग्रहीद् यावद् निकषा श्वेतवतीं पुरीम् । शरणं कश्चिदभ्यागात् तावत् तं सत्वरः पुरः ॥ १ ॥ युग्मम् ॥ तस्यानुपदमेवोच्चैराकृष्टतरवारयः । यमदूता इवागच्छन् पत्तयः पृथिवीपतेः ॥ २ ॥ रे रे क्व यासि फेरुण्ड इव वित्रस्य गोपतेः । मण्डवत् खण्डयिष्यामः कृष्ट्वा त्वामवटादपि ॥ ३ ॥ इत्युच्चतं

त्थैतन्मेलः कुत्र करिष्यते ? ॥ ६४ ॥ सोचेऽहं मन्दिरोद्याने नयिष्ये स्वामिनीं निजाम् । आनयेथाः पुनस्तत्र त्वमपि स्वामिनं निजम् ॥ ६५ ॥ इत्युक्त्वाऽऽत्मसखीकामलेखं मम समर्प्य च । सा ययावहमप्यागामिह लेखस्त्वयं विभो ! ॥ ६६ ॥ कुमारोऽपि समादाय तस्यास्ताडङ्क-योर्युगम् । निधाय हृदि रोमाञ्चलिपेस्तन्मयतामयात् ॥ ६७ ॥ कुमार्यनङ्गसुन्दर्यै ददौ काञ्चीमहं पुनः । वसुभूते ! ददे तुभ्यं कल्याणकटका-र्पणम् ॥ ६८ ॥ हसन्निति कुमारोऽस्मै प्रदाय कटकद्वयम् । ययौ तेन सहोद्यानं वसन्तेनेव मन्मथः ॥ ६९ ॥ युग्मम् ॥ सर्वर्तुमयमुद्यानमयमा-लोकयन् क्रमात् । लवलीमण्डपान्तःस्थां ससखीं तामलोकत ॥ ७० ॥ तद्दर्शनवशोत्पन्नप्रमोदरसमज्जनात् । रोमाञ्चवेपथू भेजे कुमारः किमिहाद्भुतम् ? ॥ ७१ ॥ वलितस्खलितस्निग्धमुग्धमन्थरतारकैः । तयापि सैष सद्भावरोचनैरैक्षि लोचनैः ॥ ७२ ॥ अथाभ्युदस्थादेनं सा स त्वेनां समभाषत । मतभ्रु ! संभ्रमेणालं जनेऽस्मिन् दुःखदायिनि ॥७३॥ कुमारोऽनङ्गसुन्दर्या दर्शिते कनकासने । निषसाद कुमारी चानुमता तेन सादरम् ॥७४॥ उप्तो दृष्ट्यनुरागेण तयोः सत्प्रेमपादपः । तदा स्वेदाम्बुभिः सिक्तोऽङ्कुरितः कण्टकाङ्कुरैः ॥७५॥ ताम्बूलैः पत्रितोऽन्यो-न्यालापैर्मुकुलितस्ततः । स्मितैः कुसुमितो यावत्फलवत्स्मर्योऽस्य वीक्ष्यते ॥ ७६ ॥ तावद् दुर्वातवत् प्राप मित्रभूतिमहल्लकः । उपवीणयितुं तेनोदस्थाप्यत नृपाङ्गजा ॥ ७७ ॥ विशेषकम् ॥ मनः प्रतीक्षमाणेव स्थायं स्थायमियं ययौ । इष्टालोके वलद्ग्रीवारङ्ककाय वितन्वती ॥ ७८ ॥ हस्तविस्रस्तसर्वस्व इव शून्यमनास्ततः । तस्यां गतायामाभाषि कुमारो विश्वभूतिना ॥ ७९ ॥ आवामपि न किं यावस्तां विनाऽत्र स्थितेन किम् ? । देव ! देवकुले देवशून्ये क इव जागरः ? ॥ ८० ॥ इति मित्रगिरोत्थाय कुमारः स्वगृहं व्रजन् । दृष्टो नृपनितम्बिन्या-ऽनङ्गवत्याऽतिसस्पृहम् ॥ ८१ ॥ चेटीमुखात् तयाहूतो वामाक्षिस्पन्दभागपि । गत्वा दाक्षिण्यतः पुण्यविनयः प्रणनाम ताम् ॥ ८२ ॥ मोट्टा-यितवपुर्जृम्भायितास्या स्खलितोदिता । अयाचत कुमारं सा रतं सारङ्गलोचना ॥ ८३ ॥ कुमारस्त्वाह तां त्वं मे माता मा मैवमादिश ।

म्रियते साह मयोचे कथमाह सा ॥ ४४ ॥ मम रूपे सपत्नो यस्तत्कण्ठे केसरस्रजम् । न्यधादियमिति क्रोधादिव कामो निहन्ति ताम् ॥४५॥ वातायनाच्च पल्यङ्कं पल्यङ्कादपि कानने । काननाद् भवनेऽभ्यैति बिभ्यती सा स्मरादिव ॥ ४६ ॥ मनुते हारमङ्गारं नालं व्यालं विधुं घधम् । जलार्द्रां हुतभुग्मुद्रां स्मरतापग्रहेण सा ॥ ४७ ॥ अवादिषं ततोऽहं तां किं ते स्वामिनि ! बाधते ? । सोचे तस्य यशोवर्मसुतस्यादर्शनं सखि ! ॥ ४८ ॥ ततो मया तदाधारकृतेऽलीकमपीरितम् । यद् देवि ! भव धीरा ते मेलयिष्यामि तं द्रुतम् ॥ ४९ ॥ इति मद्वचसा जीवातुनेवोन्मीलितेक्षणा । ददौ मे रसनादाम तुष्टिदानेऽब्रवीच्च सा ॥ ५० ॥ इदमङ्गीकृतं साधु त्वया त्वय्युपपद्यते । सुहृदां हि सुहृत्स्वस्य कपो विषमकर्मणि ॥ ५१ ॥ लेखः सखि ! शिखण्डी स्यादन्तरङ्गे नियोगिनि । तथापि मदवस्थाया लेखं तस्मै समर्पयेः ॥ ५२ ॥ इत्युक्त्वा स्मरलेखाय यावत्कथयते सखी । वृद्धया तावदुत्थाय न्यषेधि कुललज्जया ॥ ५३ ॥ अथोत्पन्नमतिः सैषा समुत्तार्य ममार्पयत् । लाञ्छना-थाम्बुजम्वाललिपि ताडङ्कयोर्युगम् ॥ ५४ ॥ अत्रान्तरे समायाता माता शृङ्गारमञ्जरी । उवाच वल्लकीं वत्से ! विलासवति ! सज्जय ॥ ५५ ॥ यतो वीणाविनोदार्थं त्वामादिशति ते पिता । वीणाकार्यपि साकार्यं समानीतेव संप्रति ॥ ५६ ॥ इत्याकर्ण्य वचो मातुस्त्रपया संवृतेङ्गिता । पित्रोः प्रमाणमादेश इत्याह स्वामिनी ततः ॥ ५७ ॥ इतिकर्तव्यतामूढाऽहं तु भूपभुवा तया । अविसृष्टापि निर्गत्य निजमन्दिरमागमम् ॥५८॥ अधृष्यं तं कथं यामि कुमारं किमु वा पुनः । देवीं विज्ञपयिष्यामीत्यतश्चिन्तापरास्मि तत् ॥५९॥ श्रुत्वेत्यनङ्गसुन्दर्या गदितं मुदितोऽवदम् । अतः परं शुभे ! चिन्तां कर्तुं नार्हसि कामपि ॥ ६० ॥ प्रभुं तमात्मनो मित्त्रं गुणज्ञं गुणशालिनम् । तथा विज्ञपयिष्यामि यथा ते सिध्यति प्रियम् ॥ ६१ ॥ श्रुत्वेति सा पुनः प्राह स ते वज्रमयः प्रभुः । दृष्ट्वापि स्वामिनीभावं यस्तथा हा निरुद्यमः ॥ ६२ ॥ मयोचे नैष वज्रात्मा नैव देवो निरुद्यमः । निरवद्यं प्रियाप्राप्त्यै किन्तूपायं विमार्गति ॥ ६३ ॥ साह साहसिकानां किं सावद्यमिति विद्यते ? । मयोचे युक्तमा-

स स्रजम ॥ २५ ॥ जातु मा यातु निस्सृत्य प्रियोऽय मे हृदोऽन्तरात् । स्वाङ्गे धृतिमितीवाधात् कुमारी स्फुटकण्टकैः ॥२६॥ कुमारस्त्वाक्षिकः सार्धं कुमार्या सारितस्रजा । हारयन् स्वं सुहृच्छिवभूतिना प्रेरितोऽग्रतः ॥ २७ ॥ ततः स्वं हारितमपि मतिमानप्रकाशयन् । अनङ्गनन्दनोद्यानं सवयोभिः समं ययौ ॥ २८ ॥ उप्फूवल्लज्जया धृत्वा धैर्यं गत्वरमप्यसौ । तत्र चिक्रीड स ध्यायन् सनीडमिव तन्मुखम् ॥ २९ ॥ अत्रान्तरेऽनुरक्तात्मा प्रतीचीं मोक्तुमक्षमः । दिनेन प्रेरितो भानुरपि द्वीपान्तरं ययौ ॥ ३० ॥ आजगाम निजं धाम स्मरेणाग्नेयसायकैः । भिद्यमानः कुमारोऽपि समारोपितधन्वना ॥ ३१ ॥ विसृज्य सुहृदस्तेन साध्यकृत्यं विधाय च । शयनीयमलंचक्रे चक्रेणेवाथ सैकतम् ॥३२॥ पल्यङ्कचन्द्रिकावापीष्वेहिरेयाहिराकृतः । तस्य कामाभितप्तस्य सा निशा कथमप्यगात् ॥ ३३ ॥ विभातायां विभावर्यां प्रातःकृत्यं विधाय सः । उन्मना भवनारामे सहारंस्त सुहृज्जनैः ॥ ३४ ॥ माधवीमण्डपे नीत्वा ततोऽसौ वसुभूतिना । पृष्टः किं बाधते तेऽद्य मित्र ! येनासि दुर्मनाः ॥ ३५ ॥ न किञ्चिदिति तेनोक्ते होरामाजोप्य कैतवात् । वसुभूतिर्जगौ ज्ञातं ज्ञानात्ते दुःखकारणम् ॥ ३६ ॥ पुष्पस्रक्पाशमाधाय कण्ठे यस्ते मनस्तया । हृतं नृपतिनन्दन्या तद्दु दुनोति मनोऽस्यहम् ॥ ३७ ॥ मा विषीद परं धीद ! करिष्यामि तथा यथा । झटित्येव घटत्येषा चित्तचौरी करे तव ॥ ३८ ॥ इतश्च राजदुहितुः कृते सानङ्गसुन्दरी । कुमारस्य कृते सोऽववसुभूतिरुभाविमौ ॥ ३९ ॥ तास्यन्तावक्ताराय मिथः संघटितौ द्रुतम् । द्वयोर्हि तप्तयोरेव संधिः स्यादयसोरिव ॥ ४० ॥ स्वस्य कामपरौ छेधा निकाम तावुभावपि । विजज्ञौ न व्ययुज्येतां स्वामिभक्तौ दिवानिशम् ॥ ४१ ॥

इतः सनत्कुमारोऽस्ति यावद् मृत्यौ कृतोद्यमः । पत्य स्मेरमुखस्तावद् वसुभूतिरदोऽवदत् ॥ ४२ ॥ वर्ध्यसे देव ! सिद्धं ते सतां हितसमीहितम् । यद्व विलासवतीधात्रीसुताऽऽस्तेऽनङ्गसुन्दरी ॥ ४३ ॥ रुदती मिलिता साऽद्य मयोचे किमु रोदिषि ? । स्वामिनी

सप्ताहं प्रावृषि च्छत्रं धृत्वा ध्यानधने मुनौ । दत्त्वा च पायसं तस्मै धन्यो धर्ममुपार्जयत् ॥ ७१ ॥ दम्पती हिमवच्छैले भूत्वा तौ युग्मधर्मिणौ । अभूतां क्षीरडिण्डीराभिधानौ त्रिदशावथ ॥ ७२ ॥ ततश्च्युत्वा क्षीरडिण्डीरजीवोऽभूद् नैषधिर्भवान् । प्रिया ते क्षीरडिण्डीरादेवीजीवश्च भीमजा ॥ ७३ ॥ यद् द्वादश घटीर्दध्रे मम्मणेन त्वया मुनिः । तत् प्रियाविरहो राज्यभ्रंशश्च द्वादशाब्दिकः ॥ ७४ ॥ यच्छत्रधारणं क्षीरपारणं च मुनेः कृतम् । त्वया धनेन धन्येन तेन राज्यस्य संपदः ॥ ७५ ॥ भैमी त्वद्वल्लभा वीरमतीजन्मनि यद् ददौ । तिलकान्यर्हतां भाले तेनाऽस्यास्तिलकोऽद्भुतः ॥ ७६ ॥

श्रुत्वेत्थं नृपदम्पती स्वचरितं तौ जातजातिस्मृती कृत्वा पुष्कलपुत्रसाद् वसुमतीं तप्त्वा ततोऽन्वेतयोः ।
जज्ञे यक्षपतिर्नलः कनकवत्याख्या दशारानुजस्त्री भूत्वाऽप्यगृहस्थकेवलिकलां भैमी तु भेजे शिवम् ॥७७॥

॥ इति दवदन्तीललितनामनि महाकाव्ये चतुर्थः सर्गः ॥

॥ इति दवदन्ती कथा समाप्ता ॥

आर्या चन्दनबाला तु मृगावतीकथायामुपदेक्ष्यते; मनोरमा च श्रेष्ठिसुदर्शनकथायां तत्प्रियात्वेन पूर्वकथितैव । अथ विलासवतीकथा,—

अस्तीह ताम्रलिप्तीति पुरी दक्षीकृता श्रिया । हसन्तीवाऽमरपुरीं या चैत्यविशदध्वजैः ॥१॥ तस्यामीशानचन्द्रः क्ष्मामण्डलाखण्डलः किल । आसीन्नासीरवीरासिजलप्लावितशात्रवः ॥२॥ शृङ्गारमञ्जरीवास्य प्रिया शृङ्गारमञ्जरी । भृङ्गश्रेणीव यन्मूर्ध्नि वेणीदण्डो व्यराजत ॥ ३ ॥ अस्यामीशानचन्द्रस्य राज्ञश्चन्द्रसमानना । श्रीविलासवती तस्यासीद् विलासवती सुता ॥४॥ यथाकालमथामुष्या पुरि शृङ्गारजीवि-

जितस्त्वया । विमाने केशरेऽभूवं सौधर्मे केशरः सुरः ॥ ५१ ॥ इत्युक्त्वा सप्त कल्याणकोटीर्वर्षन् पुरः सुरः । विद्युद्दण्ड इवोद्दण्डो झगित्यथ तिरोदधे ॥ ५२ ॥ नलादेशेन देशेभ्यः स्वेभ्यः स्वेभ्यस्ततो नृपाः । ऋतुपर्णादयः स्वं स्वं सैन्यमानाययञ्जवात् ॥ ५३ ॥ नलस्तत्रैव देवशदत्तेऽह्नि प्रतिकोशलम् । प्रयाणं कारयामास वासवोपमवैभवः ॥ ५४ ॥ कम्पयन् सैन्यचारेण स्थावरानपि भूभृतः । कैश्चित् प्रयाणैः स प्राप कोशलोपवनावनीम् ॥ ५५ ॥ पुनर्लक्ष्मीं पणीकृत्य द्यूतार्थे दूतभापया । नलः कूबरमाकार्य दीव्यञ्जित्वाऽग्रहीद् महीम् ॥ ५६ ॥ अथानन्दी नलो मन्दीकृतक्रोधो निजानुजम् । अपि क्रूरं व्यधाद् यौवराज्ये प्राज्यमहोत्सवात् ॥ ५७ ॥ अथ संप्रेष्य निःशेषं राजकं राजकुञ्जरः । दवदन्त्याऽन्वितो राज्यं चक्रे लक्ष्म्येव केशवः ॥ ५८ ॥

जिनसेनाभिधं सूरिं विज्ञातागममेकदा । ययौ नलो नमस्कर्तुं तया दयितया सह ॥ ५९ ॥ प्रणम्य नैपधिः सूरिं निविष्टः क्षितिविष्टरे । पप्रच्छ स्वस्य देव्याश्च कारणं सुखदुःखयोः ॥६०॥ निरस्तमन्मथो वाचमथोवाच मुनीश्वरः । राजन्नष्टापदोपान्तेऽस्ति सङ्गरपुरं पुरम्॥६१॥ तत्रासीद् मम्मणो राजा तस्य वीरमती प्रिया । अन्यदा खेटके गच्छन् भूपोऽपश्यत् पुरो मुनिम् ॥ ६२ ॥ मन्वन्नशकुनं सोऽथ धारयामास तं क्रुधा तं द्वादशघटीप्रान्ते कृपयाऽमूमुचत् पुनः ॥६३॥ तदहिंसामयो धर्मः साधुनास्मै निवेदितः । राज्ञाप्यङ्गीकृतो वीरमत्या दयितया समम्॥६४॥ ताभ्यां राजसभावेन तद् व्रती प्रतिलाभितः । अपराधं क्षमस्वैतमुक्त्वा जगाम सः ॥६५॥ सेवाप्रसाधिता वीरमतीं शासनदेवता । धर्मस्थैर्यकृते निन्येऽन्येद्युरष्टापदोपरि ॥ ६६ ॥ अकृत प्रतितीर्थेशं विंशतिं विंशतिं ततः । आचाम्लानि तथैकैकमम्लानरुचि पुण्ड्रकम् ॥ ६७ ॥ तदुद्यापनकं कृत्वा प्रीता कान्ता महीपतेः । मुनीनानन्द्य दानेन चारणान् पारणं व्यधात् ॥ ६८ ॥ तत्तीर्थेशपदान् नत्वा राजधानीमियाय सा । चक्रे पत्या समं चार्हद्धर्मं निर्मलमानसा ॥ ६९ ॥ ततः पूर्णायुषावेतौ देवीभूय बभूवतुः । आभीरदम्पती धन्यधूसर्याख्यौ सुधार्मिकौ ॥७०॥

क्षमवैदग्ध्यैर्मिथः पश्यद्भिराननम् ॥ ३१ ॥ आनाय्य तां परीक्षार्थमथैतां भीमनन्दनी । स्वादयित्वा रसवतीं कुब्जं निरचिनोद् नलम् ॥ ३२॥ तद् वैदर्भी विदर्भेशं प्रत्याह प्रीतिपूरिता । आस्तां कुब्जोऽपि खञ्जोऽपि निश्चितः सैष नैषधिः ॥ ३३ ॥ अभिज्ञानान्तरं तात ! पुनरेक समस्ति मे । नलस्पर्शेन विपुलपुलकं यद् भवेद् वपुः ॥ ३४ ॥ तद् मदङ्गमयं कुब्जः स्तोकं स्पृशतु पाणिना । इत्युक्ते भीमवचसा ताम-ङ्गुल्या नलोऽस्पृशत् ॥ ३५ ॥ वपुः सपुलकं तस्यास्तन्नलस्पर्शतः क्षणात् । आनन्देन्दुबहिःक्षिप्ततमःपुञ्जमिवाभवत् ॥ ३६ ॥ अन्तर्भैमी नलं निन्ये तद्बलादबलाप्यसौ । अतूतुषत् तथा चाटुप्रेमामृतकिरा गिरा ॥ ३७ ॥ नाथ ! निह्नुतरूपोऽपि मया त्वमनुभाव्यसे । घनच्छन्नोऽपि माद्यन्त्या कमलिन्येव भास्करः ॥ ३८ ॥ कियद्यापि दुःखार्त्तां दैवतो मामुपेक्षसे । अवग्रहादिवाम्भोदो भीष्मग्रीष्मद्रुतां लताम् ? ॥ ३९ ॥ नाथ ! प्रसीद सीदन्तमात्मैकशरणं जनम् । संजीवय यथावस्थस्वदर्शनसुधारसैः ॥ ४० ॥ इति भैम्युपरोधेन नलश्छन्न इवानलः । जज्ञे बिल्वकरण्डाभ्यामाविष्कृतनिजाकृतिः ॥ ४१ ॥ धृतस्वरूपं तद्रूपं वीक्ष्य कं कं रसं न सा । भेजे भीमसुता धाष्टर्यत्रपासपातकातरा ? ॥ ४२ ॥ अभितो वीज्यमानाङ्गी नलेनेवाञ्चलैश्चलैः । सद्यः स्वेदोदकस्नाता सा चकम्पे चकोरदृक् ॥ ४३ ॥ अदर्शि दर्शनीयश्रीरथायातो बहिर्जनैः । नैषधिस्त्यक्तकुब्जत्वो राहुमुक्त इवार्यमा ॥४४॥ अपराद्धं यदज्ञानाद् मया नाथ ! क्षमस्व तत् । दधिपर्णो वदन्नेवमपतद् नलपादयोः ॥४५॥ स्वयं वेत्रीभवन् भीमो भद्रपीठे निवेश्य तम् । अभ्यषिञ्चद् नलं नाथस्त्वमस्माकमिति ब्रुवन् ॥ ४६ ॥ ऋतुपर्णः प्रियायुक्त. स वसन्तश्च सार्थभृत् । सुखदुःखसदायादावाहूतौ नलकान्तया ॥ ४७ ॥ वसन्तदधिपर्णर्तुपर्णभीमैः समं नलः । चिक्रीड लोकपालैः स चतुर्भिरिव पञ्चमः ॥ ४८ ॥ धनदेवोऽपि सार्थेशः कुतोऽपि प्राप कुण्डिनम् । तस्य प्रत्युपकारं सा कारयामास भीमजा ॥ ४९ ॥

कश्चिद्देत्य दिवोऽन्येद्युर्देवः पश्यत्सु राजसु । भैमीं नत्वाऽवदद् देवि ! त्वत्प्रसादोऽयमीदृशः ॥ ५० ॥ संबोध्य तापसेन्द्रोऽह पुरा प्रमा-

तेन करिष्यति। भूयः स्वयंवरो भैमी प्रभुणा प्रेषितोऽस्मि तत् ॥ १२ ॥ किन्तु मार्गविलम्बोऽभूद् देहस्यापाटवाद् मम। प्रत्यासन्नतरं जातं तल्लग्नं श्वस्तने दिने ॥ १३ ॥ तूर्णं देव! तदेतन्यमित्युक्त्वास्मिन् गते चरे। अचिन्तयद् नलश्चित्ते किमेतदिति विस्मयात् ॥ १४ ॥ वर्षिष्यति विषं चन्द्रः पूषा ध्वान्तं वमिष्यति। किमन्यमपि भर्तारं दवदन्ती करिष्यति? ॥ १५ ॥ विवोढुं प्रौढिमा कस्य मत्पत्नीं मयि जीवति? । फणामणिं समादित्सेत् को हि जाग्रति पन्नगे? ॥ १६ ॥ इति ध्यात्वा चिरं चित्ते दधिपर्णं जगाद सः। आसन्नलग्नदूरोर्वीगति-चिन्तापरायणम् ॥ १७ ॥ समर्पय हयाञ्जात्यान् रथं गाढं च कञ्चन। यथाहमश्वहृद्वेदी नये झटिति कुण्डिने ॥ १८ ॥ इति प्रीतमथाकर्ण्य दधिपर्णेन भूभुजा। उक्तोऽग्रहीच्चतुर्वाहीं रथं चाहीनमोजसा ॥ १९ ॥ अथ चामरभृद्युग्मच्छत्रभृद्भूपभासुरम्। नियुक्तवाजिनं कुब्जो रथं तूर्णमवाहयत् ॥ २० ॥ नुन्नैरथ रथे वाहैर्जवनैः पवनैरिव। अपतद् भूभृतः स्कन्धात् पटी शृङ्गादिवापगा ॥ २१ ॥ राजा तदव-दत् कुब्जं स्थिरीकुरु हयानिमान्। पतदादीयते यावद् वासो वसुमतीगतम् ॥ २२ ॥ जगाद कुब्जको राजन्! न्यपतत् पत्र तंऽशुकम्। पञ्चविंशतियोजन्याः साऽमुच्यत वसुन्धरा ॥ २३ ॥ अक्षवृत्तमथो वीक्ष्य कलां दर्शयितुं निजाम्। कियन्त्यत्र फलानीति राजा कुब्जकम-ब्रवीत् ॥ २४ ॥ अजानति ततः कुब्जे फलसंख्यां धराधवः। आख्यदस्मै परिस्पष्टमष्टादशसहस्रिकाम् ॥ २५ ॥ मुष्टिघातेन दन्तीन्द्र-घातघोरेण तन्नलः। अपातयदशेषाणि फलानि कलपादपात् ॥ २६ ॥ यावद् गण्यते तावत् तावन्त्येवाभवंस्ततः। अश्वहृद्विद्यया संख्याविद्यां कुब्जः समाददे ॥ २७ ॥ कुब्जेन कुण्डिनोपान्ते रथोऽनायि निमेषतः। भीमश्चाभ्येत्य तत् तूर्णं दधिपर्णं गृहेऽनयत् ॥ २८ ॥ ऊचे मिथःकथागोष्ठ्यां दधिपर्णं विदर्भराट्। कुब्जाद् रसवतीं सूर्यपाकां कारय मन्मुदे ॥ २९ ॥ तदुक्तो दधिपर्णेन कुब्जो रसवतीं व्यधात्। इन्दुपुष्टिकरार्कांशुसंपर्कसुरभीकृता ॥ ३० ॥ लोकैः साकं रसवतीं बुभुजे भूभुजाऽथ सा। विचारा-

पित्रोः स्वकथामचीकथद् मया श्रुतेयं च तवोदिता पुरः ॥ ८१ ॥ दूतस्त्विदानीं तव कोऽपि कुण्डिनेश्वरं जगौ यद् दधिपर्णसन्निधौ समस्ति कुब्जो नलसूपकृद् गुणी स सूर्यतः पाचयते यथा नलः ॥ ८२ ॥

श्रुत्वेदं दवदन्त्युवाच मुदिता यत्तात ! जामातृतो नान्यः कोऽपि च सूर्यपाकरसवत्याम्नायवेदी खलु ।
तद्धावेति नृपोऽपि वीक्षितुममुं तत्सन्निधौ प्रैषयद् मामाः कुब्जक एष कुत्र स नलः कन्दर्परूपः क्व च ? ॥ ८३ ॥

॥ इति दवदन्तीललितनाम्नि महाकाव्ये तृतीयः सर्गः ।

शुश्राव दधिपर्णोऽयमिति विस्तरतः कथाम् । श्रुतां कुब्जेन साश्रेण यथोक्तरसनादिना ॥ १ ॥ शरीराभरणस्तोमदानेनानन्द समदी । प्रैषीत् त ब्राह्मणं राजा कुब्जस्तु जगृहे गृहे ॥ २ ॥ अभोजयत् स कुब्जेन रसवत्याऽर्कपाकया । स्वर्णादिकं नृपाल्लब्ध दत्त्वा प्रीतिं च लम्भितः ॥ ३ ॥ अथाय कुब्जमापृच्छ्य गतः कुण्डिनपत्तनम् । तदीयदानभोज्यादि सर्वमुर्वीभुजेऽभ्यधात् ॥ ४ ॥ तद् निशम्या-वदद् भैमी मुदिता मेदिनीपतिम् । नल एव स कुब्जत्वं ययौ केनापि हेतुना ॥ ५ ॥ तद् दानं सा मतिः सूर्यपाका रसवती च सा । सन्ति नान्यत्र कुत्रापि युष्मज्जामातरं विना ॥ ६ ॥ तामालोच्य ततस्तात ! समुन्मेषय शेमुषीम् । नलो यया स्यादेव प्रकटीभवति स्वयम् ॥ ७ ॥ सोत्साहमाह भूपस्तां चरं संप्रेष्य कञ्चन । आकार्यो दधिपर्णोऽयं त्वत्स्वयंवरणच्छलात् ॥ ८ ॥ गत्वा दूतो यथादिष्टं कथयिष्यति तं प्रति । श्वस्तने यद् दिने भावी दवदन्त्याः स्वयंवरः ॥ ९ ॥ तत्पार्श्वे यदि कुब्जोऽयं नलः स्यादवनीधवः । तदश्वहृदयाभिज्ञस्तमानेष्यति स द्रुतम् ॥ १० ॥ इति निश्चित्य भीमेन भूभुजा प्रेषितश्चरः । सुसुमारपुरं गत्वा दधिपर्णमदोऽवदत् ॥ ११ ॥ न प्रापि नलवार्त्तापि क्वापि

अथाययौ कुण्डिनतोऽद्य सश्रुतस्तत्र द्विजन्मा हरिमित्रसंज्ञितः । स वीक्ष्य वेगादृतुपर्णपार्थिवं विनिद्रवाक् चन्द्रयशोऽन्तिकं गतः ॥ ६८॥ पप्रच्छ तं चन्द्रयशा भृशायितप्रमोदभाक् क्षेममसावचीकथत् । ऊचे च जानीथ विदर्भजानलप्रवृत्तिमस्य समुपागतोऽस्मि यत् ॥६९॥ श्रुत्वेति तस्माद् नजभीमजावनप्रवासवार्तामियमार्तमानसा । रुरोद सर्वानुचरीवृता तथा यथा किलारोदि गृहाण्डजैरपि ॥७०॥ तथाकुले राजकुले ऽथ स द्विजः क्षुधातुरः सत्रमियाय जेमितुम् । दृष्ट्वाऽथ भैमीं मुदितः प्रणम्य तामागत्य राज्ञ्यै त्वरितं न्यवेदयत् ॥७१॥ कर्णामृतं सापि निशम्य तत्तथा तस्मै प्रदायाभरणानि भूरिशः । क्व सा क्व सेति प्रवदन्त्युपाययौ पद्भ्यां प्रमोदाद् निजसत्रसद्मनि ॥७२॥ गृह्णामि दुःखं तव पुत्रि ! वञ्चिताऽस्म्यहं त्वया किं निजनामगोपनात् ? । मातृष्वसा मातुरपि प्रशस्यते जने त्वयैतद् वितथं व्यधायि च ॥ ७३ ॥ इति ब्रुवाणा परिरभ्य संभ्रमादाघ्राय मौलौ शिविकां निवेश्य च । निनाय तां चन्द्रयशा गृहे मुदा विभूष्य च क्षोणिपतेरदीदृशत् ॥ ७४ ॥ प्रणम्य तं तातमिवोपविष्टया तत्पृष्टयाऽऽख्यायि कथा तयात्मनः । तदा स्ववंशस्य नलस्य धिक्कृतिं श्रुत्वेव चार्कः प्रययौ रसातलम् ॥ ७५ ॥ द्विधापि तस्मिंस्तमसि प्रसर्पति स्वमातृजामेर्वचसा विदर्भजा । प्रमृज्य भालं तिलकं तमोऽन्तकं व्यकाशयत् तेन नृपो विसिष्मिये ॥७६॥ इहान्तरे कोऽपि सुरः समेत्य तां प्रणम्य बद्धाञ्जलिरेवमूचिवान् । यस्तस्करोऽग्राह्यत संयमं त्वया स हंसगामिन्यहमस्मि पिङ्गलः ॥ ७७ ॥ उक्त्वेति कोटीः कनकस्य सप्त स प्रवृष्य देवस्त्रिदिवाय यातवान् । नृपोऽपि राज्ञ्या स तया समं तदा दृष्ट्वेति दृष्टान्तमजायतार्हतः ॥७८॥ अथो नृपः सैन्यभरेण भीमजामघाय भेत्ता प्रजिघाय कुण्डिनम् । वर्धापितौ तत्कथया द्विजन्मना प्रमोदतोऽस्याः पितरावभीयतुः ॥ ७९ ॥ विलोक्य साग्रे पितरौ स्ववाहनादुत्तीर्य सास्रौ रुदतो नमोऽकरोत् । समस्तलोकेन नतां च तामिमौ प्रवेशयामासतुरुत्सवात् पुरे ॥८०॥ सपूत्कृताम्भःसममश्रुवर्षणं ज्वलद्वियोगानलतो वितन्वती । भैमीति

मिश्रयेषोदयतो विवस्वतः ॥ ५४ ॥ ततः कुतश्चिद् वनदेवसंश्रितः कुत्रापि यान् सार्थपतिः पितेव ताम्। नीत्वा मुमोचाचलपत्तने तृषातुरा तु सा कामपि वापिकां ययौ । ५५ ॥ दिवापि तामिन्दुमुखीं चकोरीकालेलिह्यमानास्यदिशामिहागता. । विलोक्य याता ऋतुपर्णभूपतेर्महेलिकायै न्यगदन् महल्लिकाः ॥ ५६ ॥ सा पुष्पदन्ती भगिनी कनीयसी समाख्यया चन्द्रयशारतदेव ताम् । ताभिः समानाय्य जगाद मद्भुवस्त्वं चन्द्रमत्याः सदृशासि कासि तत् ? ॥ ५७ ॥ तां मातृजामिं दमयन्त्यपि स्वकामविन्दती प्राह कुलादिगोपनात् । वणिक्सुताऽहं गलितास्मि सार्थतः पत्या वियुक्ता च निशीव कोकिका ॥५८॥ अथाह तां चन्द्रयशा विषीद मा तिष्ठात्र नन्दन्त्यपरेव मेऽङ्गि यत्। इतीरिता साऽस्थित सुस्थिता नलप्रवृत्तयेऽस्याः किल सत्रमन्दिरे ॥ ५९ ॥ तत्रैकदा तां शरणं प्रपन्नवान् मां रक्ष देवीति वदन् मलिम्लुच । तन्मुक्तये चेयमुवाच रक्षकांस्ते चामुचंस्तं न भयाद् महीपतेः ॥ ६० ॥ अथ त्रिरम्भश्चुलुकाभिषेकतो बिभेद बन्धानिह मृण्मयानिव । ततः प्रभावाच्च जनो विसिष्मिये नृपोऽपि तामेत्य जगाद संमदी ॥ ६१ ॥ पुत्रि ! त्वयाचन्द्रयशोविभूषणास्तेयापराधी किमसाधमुच्यत ? । साप्याह चौरोऽपि मृ(?)येत नो पितर्दृष्टो विशिष्टार्हतया(?) मया खलु ॥ ६२ ॥ तस्याः स्वपुत्र्या इव तादृशाग्रहाद् मुमोच भूमानपि तं मलिम्लुचम् । देव्या च सेवानिरतोऽयमन्वहं पृष्टोऽन्यदेति स्वकथामचीकथत् ॥ ६३ ॥ दासोऽस्म्यहं तापसपत्तनप्रभोर्वसन्तनाम्नः किल पिङ्गलाभिधः । तद्द्रव्यमादाय निशि प्रणश्यन् विलुण्टितोऽन्यैरिह भूपमागमम् ॥ ६४ ॥ इहापि चौर्यव्यसनप्रभावतो बद्धस्त्वयाऽमोचयिषि स्वलीलया । अन्यच्च मातस्तव निर्गमे तदा स सार्थवाहस्त्यजति स्म भोजनम् ॥ ६५ ॥ असौ यशोभद्रगुरुप्रबोधितः कथञ्चनाऽश्नादथ सप्तमेऽहनि । सोपायनः कूबरपार्थिवं गतः कृतश्च राट् तापसपत्तनेऽमुना ॥ ६६ ॥ श्रुत्वेति साऽस्याऽदित पारितोषिके महाव्रतेच्छां जिनधर्मदेशनात् । व्रतं तदादेशवशादसावपि प्रपद्य तेपे गुरुसंनिधौ तपः ॥ ६७ ॥

पि सुदुर्लभाऽङ्गिनाम् ॥ ४० ॥ श्रुताधिदेव्यामिव धर्ममार्हतं ततो दिशन्त्यामिह तस्य बोधये। उपेत्य साश्चर्यमुपान्तवासिनस्तपस्विनोऽ
पि न्यषदन् मृगा इव ॥ ४१ ॥ इमां गुरूकृत्य तपस्विभिः समं सुश्रावकोऽभूदथ सार्थपार्थिवः। समाख्यया तत्र च तापसादियुक्पुरं
तदाख्यास्थितये चकार सः ॥ ४२ ॥ तदन्तरं तेन च भीमनन्दिनीनिदेशतः शान्तिजिनेन्द्रमन्दिरम्। अकारि यत्केतुमिषादलम्बयत् प्रमा-
णपत्रं कुलपर्वतेष्वपि ॥ ४३ ॥ दृष्ट्वा सुरानापततोऽन्यदा नगे समं समस्तैर्नलकान्तया तया। अयायि तत्रैत्ति च सिंहकेशरी तदात्वमु-
न्मीलितकेवलो मुनिः ॥ ४४ ॥ प्रणम्य तं केवलिनं सुरार्चितं पुरोऽस्य देवी निषसाद सादरम्। तदाप्युपेतो मुनिरप्युपाविशत् कश्चित्
परीवारयुतः परीय तम् ॥ ४५ ॥ केवल्यथो निर्मितधर्मदेशनोऽभ्यधाद् व्रतीयन्तमिमं तपस्विनम्। भोः! कूवरोऽस्याः सुदृशोऽस्ति
देवरस्तस्याङ्गजोऽहं किल सिंहकेशरी ॥ ४६ ॥ सङ्गापुरीन्द्रस्य विवाह्य नन्दनीं मया निवृत्तेन निजायुरध्वनि। पृष्टो यशोभद्रगुरुर्न्यवेद-
यद् दिनानि पञ्चैव तवायुरित्ययम् ॥ ४७ ॥ ततो निशम्येति विरागवानहं व्रत गृहीत्वाऽकरवं तपस्तथा। यथोद्ययौ केवलमद्य मे शिवं
व्रतं तु ते सूरिरयं प्रदास्यति ॥ ४८ ॥ इदं गदित्वा शिवमाप केवली शिवोत्सवं चास्य सुरा वितेनिरे। तपस्विमुख्यः सपरिच्छदश्च स-
व्रतं यशोभद्रगुरोरुपाददे ॥ ४९ ॥ देवी तु सार्थेशपुरस्कृता पुरे प्रान्तर्यशोभद्रगुरून् व्यजीहरत्। मातिष्ठपत्ताञ्जिनराजमन्दिरं स्वयं च स
म्यक्त्वमुपाददे ततः ॥ ५० ॥ तत्र स्थितायाः इति सप्तवत्सरीं नलप्रियायाः पुर एत्य कश्चन। आचष्ट तुभ्य पथि तिष्ठते नलो यास्यामि सा-
र्थो यदयं प्रयाति मे ॥ ५१ । अथाशु निःसृत्य च साऽन्वधावत प्रियो मम क्वेति रवं वितन्वती। पपात चैषा गहने पिशाचिकामेकां पुर-
स्ताद् विकृतां ददर्श च ॥ ५२ ॥ इयं च तामाह कपालमेकतः करे दधानां परतश्च कर्त्तरीम्। मयाऽसिक्षुधाऽशितुमद्य जीवितेश्वरान्तिकं
वां गमयामि मा व्रज ॥ ५३ ॥ अनाकुला देव्यथ विघ्नशान्तये सस्मार शान्तेः परमेशितुः क्रमान्। ततः पिशाच्याऽपसृत हताशया त-

ससार्थलोकोऽथ वसन्तसार्थभृद् ननाम देवीं कुलदेवतामिव। तुष्टाव कोशीकृतहस्तपङ्कजोऽपृच्छच्च काऽसि त्वममोघदर्शने ! ॥ २८ ॥ अथास्य सर्वं निजदुःखसंविदा विदारयन्ती हृदयं शशंस सा। अनीयतानेन च भक्तितो निजं गुरुं दरं सद्गुरुवच्च पूजिता ॥ २९ ॥ सुखं स्थितायामिह तत्र पर्वतावलीनिचोलीभवदम्बुदावलिः। घनागमोऽजायत वारिवृष्टिभिर्नितान्तमोजायितवल्लरीवनः ॥ ३० ॥ नलप्रिया पङ्किलतः किलामुतो निःसृत्य सार्थादथ शुद्धभूमये। पथि प्रयाती पललादमग्रतो ददर्श पाथोदमिव च्युतं दिवः ॥ ३१ ॥ तामाह गर्जन्नयमस्थिभूषणावलीबलाको रसनातडिल्लतः। स्थिरीभव त्वं मृदुलाङ्गि ! मेऽशनं जातासि राहोरिव वैधवी कला ॥ ३२ ॥ उवाच भैमी भयवर्जिताथ तं विरूपमस्मिन् विषये किमस्ति भोः !। विनाशिनाऽमेध्यमयेन साध्यते परोपकारो यदि वर्ष्मणाऽमुना ? ॥ ३३ ॥ ततः स तामाह तवामुना शुभे ! तुष्टोऽस्मि सत्त्वेन वृणीष्व तद् वरम् । तुष्टोऽसि चेत् तद् वद मे नलः कदा मिलिष्यतीत्येनमपीयमब्रवीत् ॥ ३४ ॥ दिनादितो द्वादश एव वत्सरे तवोपनेता मिलिता पितुर्गृहे। तस्यै निवेद्यावधिनेति तद्गिरा तिरोदधेऽकारणकोपः सुरः ॥ ३५ ॥

अथाददे भीमसुतेत्यभिग्रहान् न मेऽत्र यावद् भवितेष्टसंगमः। तावद् न भोक्ष्ये विकृतीर्न धारणं वासो न ताम्बूलमहं कदाचन ॥ ३६ ॥ ततोऽभिगृह्येति नगस्य कस्यचिद् गुहागृहे सिंहवधूरिवास्थित। अर्चामियं शान्तजिनस्य मृण्मयीं कृत्वार्चयन्ती गलितैः स्वयं सुमैः ॥ ३७ ॥ इयं चतुर्थादितपांसि तन्वती सतीवरेण्या विततान पारणाम् । शुकादिनिष्कोषितबीजसंपुटैर्वनस्पतीनां पतितैः स्वयं फलैः । ३८ ॥ इतश्च तां सार्थपतिः समन्ततोऽन्विष्यन् वसन्तोऽनुपदं समागतः। दृष्ट्वाऽर्चयन्तीं जिनमानमद् मुदाऽपृच्छच्च हे अम्ब ! क एष देवता ? ॥ ३९ ॥ विदर्भजाऽस्मै निजगाद षोडशः श्रीशान्तिनामैष जिनोऽर्च्यते मया। समस्तदुःखार्णवपारगामिनी यदर्चनेच्छा-

श्वशुरस्य मन्दिरे ममाग्रहं मानधनोऽवधार्य सः। मुमोच मां प्राणसमामपि त्यजन्त्यसून् न मानं हि मनस्विनः क्वचित् ॥ १५ ॥ हहा महासत्त्व ! महामते ! महायशोनिधे ! कान्त ! महात्तमाम्बुधे !। त्वदासिकायाः कथमेक एव नाजन्मापराधोऽयमसह्यत त्वया ? ॥ १६ ॥ कदाप्यभूवं हृदयेश ! दूरतः सितासितादेशगिरामहं तव। यदुज्झिता भाद्रपदस्य गोमयं यथा निषिद्धा न कदाग्रहात् ततः ? ॥ १७ ॥ मयाऽथवा ज्ञातमिदं भवान् व्यधाद् ममान्यथा न क्वचनापि भाषितम्। ततोऽहमस्मि त्वयकोज्झितेह याऽवमाननातो न कृता विमानिता ॥ १८ ॥ ममेदृशी दैव ! कथं कदाग्रहे कृता नलस्येव दुरोदरे मतिः ?। विलापिनीति प्रसभं पपात सा वियुक्तवृत्ता लतिकेव मूर्च्छिता ॥ १९ ॥ अथोज्झिता शङ्कितयेव मूर्च्छया प्रयाहि मा नायक नायकेतिवाक्। वियोगवैक्लव्यवती रुरोद साऽनुरोदयन्ती वनदेवता अपि ॥ २० ॥ नलप्रियाया अनलस्य मित्त्रमप्युदस्य वासः कृपयेव मारुतः। अदीदृशत् तां सुदृशोऽक्षरावलीं विलोक्य सापि प्रियवद् दधे हृदि ॥ २१ ॥ अचिन्तयच्च प्रमदादसावहो ! विधेऽहमद्यापि नलस्य चेतसि। यदादिशद् मे पितृवेश्मवर्तनीमिमैर्निजासृग्लिखितैरिहाक्षरैः ॥ २२ ॥ सह प्रियेणापि यियासितं पितुर्गृहं प्रयास्यामि विशेषतोऽधुना। कुलाङ्गनानां हि शिवाय पालितं भवेदिहामुत्र च भर्तृशासनम् ॥ २३ ॥ इयं विचिन्त्येति वटाध्वनाऽचलद् निजांह्रिवीङ्खाध्वनितेऽपि विभ्यती। भुवः सपत्न्या अपि सूनुषु स्थितिं वितन्वती स्निग्धतरेषु शाखिषु ॥ २४ ॥ मृगद्विपोऽस्याः सुजलामदीधितेर्धगद्वाग्नेरिव दूरतोऽभवन्। उपाद्रवंश्चापि वनेचरा न तां पराभवन् क्वापि न कौणपा अपि ॥ २५ ॥

अथैक्षतासौ पुरतो निवासितं सुसार्थमेकं शकटालिमालितम्। अनेन साकं गहनस्य गंस्यते मयाऽन्तमित्यन्तरधत्त नोद्भयम् ॥ २६ ॥ जगाम तं यावदियं महासती मलिम्लुचैस्तावदसावरुध्यत। स्वशीलसत्यापनयाऽनया पुनर्निराकृतास्ते त्रिभिराशु हुङ्कृतैः ॥ २७ ॥

अथागतः संसदि सुंसुमारभूपं द्विजन्मेति जगाद कश्चन । उपेतभैमीवचसा ससर्ज मां विदर्भराजो नलशुद्धये त्वयि ॥ १ ॥ विदर्भजा जीवति यत्किलोत्तमा नलोऽपि तज्जीवति विश्वजीवितम् । इति प्रमोदाद् दधिपर्णपार्थिवस्तमाह विप्रं स्मितबन्धुराधरः ॥ २ ॥ ममैव राज्ये नलसूपकृद् गुणी 'किलास्ति कुब्जोऽस्य गिरा मया श्रुतम् । कनीयसा हारितवैभवो नलः प्रियान्वितो यद् विपिने व्यपद्यत ॥ ३ ॥ तवैतया तु श्रवसोः सुधाकिरा गिरा द्विजाते ! मुदितोऽस्मि तद् वद । कथं वियोगोऽभवदेतयोः पितुर्गृहे कथं वा दवदन्त्युपाययौ ? ॥ ४ ॥ अथाह विप्रः शृणु देव ! नैषधिर्वनं प्रपेदे सह कान्तया तया । निशि प्रसुप्तां च विमुच्य तामयं कुतोऽपि दैवोपहतः प्रयातवान् ॥ ५ ॥ 'निशाविरामेऽथ कृशोदरी तु सा क्षतश्रमा स्वप्नमिमं निरैक्षत । रसालमारोहमखादिष फलान्यतोऽपतं व्यालविलोडिताच्च यत् ॥ ६ ॥ प्रगे प्रबुद्धाथ मृगेक्षणा क्षणादवीक्ष्य कान्तं विधुरेत्यचिन्तयत् । हृतः प्रियो देवतया कयापि मे विभातकृत्याय गतः स्वयं स वा ॥ ७ ॥ स्थितोऽथवा नर्मकृते कुतोऽप्यमुं गवेषयामीति ययौ यतो यतः । ततस्ततोऽप्यप्रसमीक्ष्य सा नलं विलक्षभावेन भृशं व्यदूयत ॥ ८ ॥ इयं चरन्ती विटपांश्च पांसुलारवोत्थितान् वीक्ष्य मृगान् मृगेक्षणा । पतिभ्रमेणाम्रमुजानिगामिनी मुमोद तन्निश्चयतो रुरोद च ॥ ९ ॥ उदस्य बाहुं दवदन्त्यथावदत् प्रिय' प्रियैह्येहि नु देहि दर्शनम् । न शर्म नर्माप्यतिनिर्मितं करोत्यतिर्हि सर्वत्र जनेन गर्ह्यते ॥ १० ॥ इति प्रतिध्वानमिय नलप्रिया निजोदितस्यैव निशम्य हर्षिता । प्रियो नु मामाह्वयतीति सत्वरक्रमा जगामाद्रिगुहाद्रुगह्वरम् ॥ ११ ॥ तत्राप्यनालोक्य पतिं निशात्यये विलोकितं स्वप्नमियं व्यचारयत् । नले रसाले फलमृद्धिमाप्नवं ततोऽस्मि दैवेभविलोडिता च्युता ॥ १२ ॥ तदर्थतः स्वप्ननिवेदितादतः सुदुर्लभो वल्लभसंगमो मम । इति प्रधार्य प्ररुदत्यगानपि व्यरोदयद् वज्रहृदोऽप्यदारयत् ॥ १३ ॥ धिगद्य मामाश्रितवत्सलोऽपि यां मुमोच तादृग् दयितो दयानिधिः । मनस्विनं नेतुममुं पितुर्गृहे कदाग्रहं ह्यो मम तं च धिग् हहा ! ॥ १४ ॥ अगन्तुकामः

दाम रत्नमयं न्यधात् ॥६६॥ अथोपनीय शालायां गजमाकलयन्नलः । लीलाविलोलशुण्डाग्रग्राहिताहारपिण्डकम् ॥ ६७ ॥ प्रीतः प्रदाय रत्नानि वसनाभरणानि च । अथ मित्रगिरोर्वीशः पुरः कुब्जं न्यवीविशत् ॥ ६८ ॥ कुतस्तव कलाभ्यासः कस्त्वं वससि कुत्र च । पृष्टो राज्ञेति कुब्जेन नलभूपतिरभ्यधात् ॥ ६९ ॥ सूपकारो नलस्याहं प्रियो हुण्डिकसंज्ञकः । [शिक्षितास्तत्समीपे च कलाः कतिपया मया ॥ ७० ॥ नलो भ्रात्रा कूबरेण जितो द्यूतेऽखिलां महीम् । दवदन्तीमुपादाय प्रपेदेऽरण्यवासिताम् ॥ ७१ ॥ सभार्यः स मृतस्तत्र ततोऽहं त्वामुपागमम् । मायाविनमपात्रं च श्रितोऽस्मि न तु कूबरम् ॥७२॥ ?] इति श्रुत्वा नलस्यापवार्तामार्त्तास्योऽभवत् । दधिपर्णोऽशुकच्छन्न-वदनः सपरिच्छदः ॥ ७३ ॥ कृत्वा नलस्य पर्यन्तकृत्यानि कृतिनां वरः । अधारयच्चिरं चित्ते दधिपर्णनृपः शुचम् ॥ ७४ ॥ रसा-वत्या नलः सूर्यपाकया नृपमन्यदा । अप्रीणयद् यथायुक्तरसप्रसरपुण्यया ॥ ७५ ॥ अथ वासांसि रत्नानि तस्मै भूयांसि भूपतिः । ग्रामपञ्च शतीं टङ्कलक्षं च नृपतिर्ददौ ॥ ७६ ॥ राज्यं ययौ नलस्यापि ग्रामैर्नाम करोमि किम् ? । तं कुब्जमिति जल्पन्तं प्रीतः प्राह पुनर्नृपः ॥७७॥ प्रीतोऽस्मि तव सत्त्वेन सत्त्वाधिकशिरोमणे ! । याच्यतां यदुचितं किञ्चिदित्युक्तेऽभिदधे नलः ॥ ७८ ॥ मृगव्यमदिरादूतव्यसनानि तव सीमनि । यावज्जीवं निषेध्यानि, श्रुत्वेदं तद् व्यधाद् नृपः ॥ ७९ ॥

दधिपर्णमहीभुजा नलः कृतसौहार्दसुशीतलो बहिः । चिरमस्थित भीमनन्दिनीविरहार्त्तिज्वलितोऽन्तरा पुनः ॥ ८० ॥

॥ इति दमयन्तीजलितनामनि महाकाव्ये द्वितीयः सर्गः ॥

प्तमहादण्डमिव दण्डधरं क्रुधा ॥ ४७ ॥ धर्मपुत्रानिवाब्दस्य स्वशब्दस्पर्धिनोऽध्वनि । भिन्दन्तं दन्तघातेन पादपांश्च पदे पदे ॥ ४८ ॥ मूर्धातिधूननैर्गण्डप्रोड्डीनालिकुलच्छलात् । क्षिपन्तं खण्डशः कृत्वा व्योमाङ्गणमपि क्षणात् ॥ ४९ ॥ क्वचित् कुञ्चितभूखण्डमुद्दण्डगतिडम्बरैः । व्यालं विलोकयामास नलः प्रबलविक्रमम् ॥ ५० ॥ पञ्चभिः कुलकम् ॥ ऊर्ध्वीकृत्य भुजामुर्वीभुजा बाहुयुजा ततः । व्याहृतं दधिपर्णेन क्षणव्याकुलचेतसा ॥ ५१ ॥ यः कोऽपि कोपिनममुं करिणं कुरुते वशे । लक्ष्मीं तनोमि तद्गेहोत्सङ्गरङ्गकनर्त्तकीम् ॥ ५२ ॥ अथाकर्ण्येति कुतुकात् सत्वर प्राचलद् नलः । कालप्रायमपि व्यालं मन्यमानः शृगालवत् ॥ ५३ ॥ भो कुब्ज कुब्ज ! कीनाशमुखे मा विश मा विश । इत्युक्तोऽपि जनैर्धीरः केशरीव ययौ गजम् ॥५४॥ रे रे शुण्डाल ! मा बालविप्रधेनुवधूर्वधीः । एह्येहि मददुर्दान्त ! दान्ततां दर्शयामि ते ॥ ५५ ॥ चलन्तमिति वाचालं कोपादनुचचाल तम् । करी कराग्रविक्षेपप्राप्ता (प्रा ?) प्तशिरोरुहम् ॥ ५६ ॥ पतन्नुद्यन् मिलन् नश्यन् निघ्नन् घातं च वञ्चयन् । अङ्गुष्ठाङ्गुलिसंमर्दैरर्दयन् पुष्करं छलात् ॥ ५७ ॥ भ्रान्त्वा दक्षिणपक्षेण चक्रवद् भ्रामयन् मुहुः । चतुर्णामपि पादानां प्रविश्याधो विनिःसरन् ॥५८॥ निमेषार्धात् पुरः पश्चात् पक्षयोश्च स्फुरन् नलः । खेदयामासिवानेकोऽप्यनेकवदनेकपम् ॥५९॥ विशेषकम् ॥ सोऽथ खिन्नमपि क्रोधाद् धावन्तं द्विपमुन्मदम् । वशीकर्तुं पटीं मूर्त्तामिव प्रज्ञां पुरेऽक्षिपत् ॥६०॥ रूपबुद्ध्याऽथ तां हन्तुं विलसन्तं मतङ्गजम् । दन्तन्यस्तपदः शैले केशरीवारुरोह सः ॥ ६१ ॥ कलापकान्तरन्यस्तपदस्तदनु दन्तिनम् । सृणिमादाय रोमाञ्चकवची तमवीवलत् ॥ ६२ ॥ पुरस्य कृपया कोऽपि किमसावाययौ सुरः । स्वयम्भूरथवा पौरपुण्यपूरैरसावभूत् ॥ ६३ ॥ अभ्रमूवल्लभस्पर्धिवर्धितद्विपराक्रमः । ययौ भुवनभीमोऽपि गजोऽयं यस्य वश्यताम् ॥६४॥ इत्थं परस्परं पौरैः प्रीतिगौरैः पदे पदे । कुब्जोऽपि स्तूयमानश्च वीक्ष्यमाणश्च रेजिवान् ॥ ६५ ॥ विशेषकम् ॥ प्रजातमा स्वयमारुह्य गोपुरं पुरनायकः । तस्याधो गच्छतः कण्ठे

क०। अथो हृदयसंतापं स्फुटीभूतमिवात्मनः। नलो व्यलोकयद् दावानलं ज्वलितमग्रतः ॥ २८ ॥ सूर्यवंशनरोत्तंस ! निषधक्ष्मापनन्दन !।
महाबल ! नल ! प्राणद ! सरक्ष मां दवात् ॥ २९ ॥ इत्याकर्ण्य गिरं दावानलमध्ये स्थितां नलः। अचिन्तयदिदं वेत्ति कोऽत्र मां निर्जने
३६। घने ? ॥ ३० ॥ अथोवाच नृपः कस्त्वं मां परिज्ञाय भाषसे ?। इत्युक्ते पुनरुद्भूता भारती दावपावकात् ॥ ३१ ॥ भुजगोऽहमदग्धायां वल्लौ संकुचितः स्थितः। निर्गन्तुं भूमितापेन न शक्नोमि दवानलात् ॥ ३२ ॥ उपकारं करिष्यामि महान्तं ते महीपते !। मूर्त्तादिव यमक्रोधा-दग्नेस्तत् कर्ष कर्ष माम् ॥ ३३ ॥ इत्याकर्ण्य विलोक्याथ पटप्रान्तं नृपोऽक्षिपत् । सर्पे तदग्रमारूढे तथैव पुनराकृषत् ॥ ३४ ॥ अथ निःसृत एवास्य भुजाग्रं भुजगोऽदशत् । तदात्वमेव कुब्जत्वमाससाद ततो नलः ॥ ३५ ॥ दृष्ट्वाऽथ भूपः स्वं रूपं दध्यौ दृष्टं मया स्यात्। धिग् देवीत्यागपापद्रुफलोत्पत्तिप्रसूनकम् ॥ ३६ ॥ अधुना वनमायान्त्या देव्या यादृक् कृतो मया। उपकारोऽमुना तादृग् दवाकृष्टेन मे कृतः ॥ ३७ ॥ सवैलक्ष्यं इत्याह सरीसृपमथो नृपः। उपकारस्त्वयाऽकारि स्वस्ति ते गम्यतामिति ॥ ३८ ॥ अथ कोऽप्यग्रतो भूत्वा प्रीतः प्राह नरो नृपम् । वत्स ! जानीहि मां देवीभूतं पितरमात्मनः ॥ ३९ ॥ भास्वन्तं दुर्दिनेऽपि त्वां तेजसा मा स्म शत्रवः। जानन्तु हन्त तेन त्वं मया नीतोऽसि कुब्जताम् ॥ ४० ॥ करण्डकं च बिल्वं चादत्स्वैतत् प्रयतोऽंशुके । कुण्डले परिधाय त्वं निजं रूपमिवाप्स्यसि ॥ ४१ ॥ इत्थं समर्पयन्नेव देवः प्राह पुनः सुतम् । क्व भवन्तं विमुञ्चामि पादचारो हि दुःखदः ॥ ४२ ॥ सुंसुमारपुरे मुञ्च नलेनेत्थम-थोदिते। देवः क्वचिद् ययौ स्वं च तत्रापश्यदसौ नृपः ॥ ४३ ॥ अकस्माद् विस्मयस्मेरस्ततः पश्यन् पुरतः पुरम् । यावच्चलति सोऽश्रौ-षीत् तावत् कलकलं पुरः ॥ ४४ ॥ ततः किमेतदित्यन्तश्चिन्तयत्याकुले नले। नश्यतां नश्यतामित्थमूचुरुच्चैस्तुरङ्गिणः ॥ ४५ ॥ स्पर्धयेव प्रधावन्तीं घ्नन्तं छायामपि स्वकाम् । मुहुः कृताकृतस्पर्शं वायुनापि भयादिव ॥ ४६ ॥ उदस्तशुण्डमुड्डीनानपि खण्डयितुं खगान् । तयोत्क्षि-

पर्यङ्कीकृतस्य ग्रहणेच्छया । आचकर्ष ततः शस्त्रीं निस्त्रिंशत्वेन सत्रपः ॥ ८ ॥ बाष्पोर्मिरुद्धदृग्वर्त्मा शुचा गलितचेतनः । वसनाय करं व्योम्नि न्ययुङ्क्त व्याकुलो नलः ॥ ९ ॥ तस्य ध्यात्वा क्षणेनाक्ष्णी परिमार्ज्यैकपाणिना । चेलं चिकर्त्तिषोः कम्पाद् निपपात क्षुरी करात् ॥ १० ॥ पुनः कृपाणिकां पाणौ गृहीत्वा दुर्मनायितः । मन्दस्वरं जगौ दुःखोत्सेधरुद्धगलो नलः ॥ ११ ॥ दमयन्त्या वनत्यागे स्वपत्न्या मत्करग्रहात् । अपि निस्त्रिंशपुत्रीयं पपात भुवि धिग् नलम् ॥ १२ ॥ धाराधिरूढविज्ञाने ! सद्वंशे ! स्निग्धतानिधे ! । निष्कृपस्य कुकार्येऽपि कृपाणि ! कुरु मे कृपाम् ॥ १३ ॥ इत्युक्त्वा क्षणमुद्धृत्य धैर्यं वैक्लव्यतो नलः । चकर्त्त चीवरं प्रेमबन्धनेन समं तदा ॥ १४ ॥ अथ देव्या मुखाम्भोजमालोकयितुमुन्मनाः । ममार्ज पाणिना भालमुन्मीलत्तिलकप्रभम् ॥ १५ ॥ अथाध्यायद् नलो मुग्धामुखस्याहो महो महान् । येन जागर्त्ति शेते वा नेति निश्चिनुते मतिः ॥ १६ ॥ उवाच देवि ! त्वद्वक्त्रालोके भाग्यं न मे दृशोः । नच त्वत्परिचर्यायां योग्यतापि हतात्मनः ॥ १७ ॥ प्रियाननोपरिन्यस्तदृष्टिरेवं वदन् नलः । दधौ हस्तेन बाष्पाम्भस्तत्प्रबोधभयाद् मुहुः ॥ १८ ॥ अरूपः सरूपे ! गोत्रकलङ्कः कुलदीपिके ! । दुराचारः सदाचारे ! कुर्वे नतिमपश्चिमाम् ॥ १९ ॥ देवि ! त्वच्चरितेनेन्दुरकलङ्कः किलाभवत् । अन्ववायगुरुः किन्तु मद्वृत्तेन कलङ्कितः ॥ २० ॥ अहो ! अभीरुर्बलवान् यद् भीरुमबलां नलः । मुक्त्वा वनान्तरे याति स्वयं वसति पत्तने ॥ २१ ॥ ब्रुवन्निति क्षतस्वाङ्गक्षरत्क्षतजरेखया । अक्षराण्यलिखद् दीनो देव्याश्चेलाञ्चले नलः ॥ २२ ॥ विदर्भेषु वटेनाध्वा वामे ! वामेन गच्छति । दक्षिणे ! दक्षिणैरेतैः कोशलायां तु किंशुकैः ॥ २३ ॥ यत्र ते प्रतिभात्येव तत्र देवि ! स्वयं व्रजेः । आत्मानं दर्शयिष्येऽहमुत्तमे ! न तवाधमः ॥ २४ ॥ लिखित्वेति नलो मन्दपदपातमथाचलत् । पिबन् मुखाम्बुजं देव्या दृग्भ्यां वलितकन्धरः ॥ २५ ॥ रक्षामि शयितां यावद् यामिनीं स्वामिनीमिति । नलः पश्यन् प्रियां वल्लीमण्डलान्तरितः स्थितः ॥ २६ ॥ विभातायां विभावर्यां देव्या जागरणक्षणे । मृदुद्रुतपदापातमचलद् नलभूपतिः ॥ २७ ॥

भैमीति साश्रुः पथिकाङ्गनाभिः सा शिक्षिता वर्त्मनि वीक्षिता च ॥ ६८ ॥ अशिश्वयत् पन्नमपीप्यदम्भो व्यशिश्रमत् प्रीतिकलो नलोऽपि ।
क०। दत्त्वा च वाहां वत मन्दमन्दमचीचलच्चञ्चललोचनां ताम् ॥६९॥ उपेयतुस्तावटवीमथैकामेकान्तभीमां तरुमालिकाभिः । आगोत्रजन्माविदि-
३५। तेन्दुसूर्यः पातालवासीव जनो यदीयः ॥ ७० ॥ विनीतवाक् तत्र विदर्भपुत्री नलं निपत्य क्रमयोरवादीत् । प्रसीद संपादय नाथ ! पादन्यासेन
मत्तातपुरं पवित्रम् ॥ ७१ ॥ नलोऽथ तामाह यदात्थ देवि ! करिष्यते श्वस्तनवासरे तत् । सापि प्रियेण प्रतिपन्नमेतद् निशम्य सम्यग् हृदि पिप्रिये
च ॥७२॥ इहान्तरे न्यस्तसमस्तवैभवो नवोदिते राजनि सज्जलाञ्छने । नलो यथा भीमभुवा दिनश्रिया श्रितोऽभि देशान्तरमंशुमानगात् ॥७३॥

तमो नीलीनीलं यदशितमनेनाङ्कमिषतस्तदन्तःस्थं काचात्मक इव करीरः प्रकटयन् ।
ततोंऽशुप्रस्तारैर्नलसहचरीशीलविशदैर्दिशश्चक्रे चन्द्रः समदकुमुदामोदमुदिताः ॥ ७४ ॥

॥ इति दवदन्तीललितनामनि महाकाव्ये प्रथमः सर्गः ॥

अथोत्तरीयमाधाय पल्यङ्कं पार्थिवाग्रणीः । भुजोपधानमेवाप स्वापमङ्गनया सह ॥१॥ निशीथे पृथिवीनाथो निद्रास्पृशि मृगीदृशि ।
अचिन्तयच्चिरं चित्ते नियत्या निहतोद्यमः ॥२॥ आकारयिष्यति प्रातः प्रिया निजपितुर्गृहे । श्रयन्ते श्वशुरं नीचास्तत् क्व यामि करोमि किम् ?
॥ ३ ॥ श्वः करिष्यामि यद् देवि ! यदतासीति प्रतिश्रुतम् । वाक्यं दाक्षिण्यसंभूतं तद् मनोऽतिदुनोति मे ॥ ४ ॥ यदि सुप्तां त्यजाम्येतां
तद्दिशाऽपैति दुर्यशः । अन्यथा मामियं प्रातः प्रापयत्येव कुण्डिनम् ॥ ५ ॥ स्वशीलरक्षितामेतां वरं मुञ्चामि भामिनीम् । न कुण्डिनीगतो
दैन्यमन्दो मन्दाक्षमुद्वहे ॥ ६ ॥ निश्चित्येति नलः कान्ताकपोलतलतः करम् । मन्दं चकर्ष निर्यातुमवाञ्छन्तमिव प्रियाम् ॥ ७ ॥ उत्तरीयस्य

प्रतिमास्थमग्रे । वनेभघर्माहितदानलेपलीलैः सहस्राक्षमिव द्विरेफैः ॥ ५३ ॥ भक्त्या सभार्योऽपि नलोऽवतीर्य रथादथामुं मुनिमाननाम । ध्यानाद् निरस्तैरिव कर्मवीरैर्व्याख्यायमानं भ्रमरै रणद्भिः ॥ ५४ ॥ ततः पुनस्तद्गुणकीर्तनेन निकृत्तपापः सपरिग्रहोऽपि । रथं समारुह्य महारथोऽसावरीणसैन्यः स्वपुरीमियाय ॥ ५५ ॥ विवेश तस्यामथ कोशलायां पुरस्कृतोऽसौ निषधेन पित्रा । भैम्या समं स्वं पुरभामिनीभ्यो व्याख्यापयन् पूर्णिमयेव चन्द्रः ॥ ५६ ॥ नलं तथा कूवरमात्मपुत्रं निवेश्य राज्येऽपि च यौवराज्ये । निषिद्धकल्को निषधः क्रमेण शमैकसाम्राज्यमुरीचकार ॥ ५७ ॥ ततोऽष्टदिग्गोपुरशालमानविशालवेलावनशैलशालाम् । पयोधिलेखापरिखां सुखेन नलः शशासैकपुरीमिवोर्वीम् ॥ ५८ ॥ येनाजिभूमौ नृपकुञ्जरेण धनुर्लतायाः करकम्पितायाः । शिलीमुखैराशुगतिप्रयातैर्यशा व्यकीर्यन्त महीधराणाम् ॥ ५९ ॥ तं कूवरः क्रूरमनाश्छलज्ञः सुवत्सलं द्यूतपथे निनाय । भैम्या निषिद्धोऽपि हि नैषधिस्तन्नैष व्यरंसीदिह शीर्णबुद्धिः ॥ ६० ॥ मोहाकुलः स्वैष नलः क्रमेण प्रक्रीडमानः सह कूवरेण । अहारयत् प्राज्यमपीह राज्यमहो ! विधातुर्विषमं चरित्रम् ॥ ६१ ॥ कालेन सातादिव कूवरेण वसूनि सर्वाण्यपनीय मुक्तः । नलोऽथ शीतांशुरिवैक एव क्रन्दत्सु पत्तिष्विव नागरेषु ॥ ६२ ॥ देशान्तरं याति नलेऽथ भैमी छायामिवास्यानुपदं प्रयान्ती । नलानुजः प्राह मृगाक्षि ! मा गा नलेन यस्मादसि हारिता त्वम् ॥ ६३ ॥ वदन्निदं सोऽभिदधे प्रधानैः किं कूवर ! क्रूरमते ! करोषि । यद् भ्रातृजाया जननीव मान्याऽस्याः शापतो वा भवितासि भस्म ॥ ६४ ॥ तैरेवमुक्तः स जवेन भैमीं रथे निवेश्यानुनलं न्ययुङ्क्त । नलोऽप्यथ त्यक्तरथः सभार्यश्चचाल पादैः पृथिवीं पुनानः ॥ ६५ ॥ हा हा हताः स्मो हतवेधसेति विलापिनीनां परितः प्रजानाम् । बाष्पाम्बुभिस्तन्निगमस्तदानीमाजानुजम्बालसमाकुलोऽभूत् ॥ ६६ ॥ पुरोपकण्ठेऽथ नलानुयातानमात्यपौरप्रभृतीन् निवर्त्य । कृती पुरस्कृत्य च सत्यमेव भैम्याऽनुयातोऽभि वनं प्रतस्थे ॥ ६७ ॥ मार्गः सदर्भो मसृणं प्रयाहि घर्मः कठोरश्च शिरः पिधेहि ।

हरिचक्रिणोर्वा । वुवूर्षसे यं वरवर्णिनि ! त्वं तत्कण्ठपीठे वरदाम धेहि ॥ ३९ ॥ नलस्य भैमी गलकन्दलेऽथ न्यास्थत् प्रमोदाद् वरदाम सद्यः । अग्रे गुरूणां त्रपया स्ववाहुगाढोपगूहप्रतिहस्तकोहम् ॥ ४० ॥ तदा व्यजृम्भन्त च साधु साधु वृतं विदर्भाङ्गभुवेति वाचः । वद्धक्रुधोऽपि क्षितिपा नलेऽन्येऽशाम्यंश्च तस्याः सुकृतप्रभावात् ॥ ४१ ॥ अथाशु भीमेन महीभुजस्ते सम्मान्य सम्मान्य महोपदाभिः । निजार्थसंसिद्धिमता विसृष्टाः स्वमण्डलाद् मन्त्रविदेव चेटाः ॥४२॥ ततः शुभेऽह्नि स्मरमीशदग्धमुज्जीवयन्तीषु वधूषु गीत्या । कृततातिदक्षोत्सवतः स्वपुत्रीमुद्वाहयामास नलेन भीमः ॥ ४३ ॥ नलाय तेजोविजितानलाय भीमः स्वपुत्रीकरमोचनेऽथ । ददौ सदौचित्यविदेष हस्तिहयादिहेमादिकमात्मशक्त्या ॥ ४४ ॥ तौ कङ्कणोद्भासिकरौ कुलार्यागीतौ गृहे चैत्यमवन्दिषाताम् । ततश्च भीमो निषधश्च भूपौ तत्कङ्कणोच्छोटनमाचरेताम् ॥ ४५ ॥ अथ प्रयान्तं निषधं सपुत्रमपि स्वदेशाय विदर्भराजः । अनुप्रयातो विधिवद् निवृत्स्यन् कृतप्रणामामशिषत् स्वपुत्रीम् ॥ ४६ ॥ वत्सेऽनुशास्तिस्त्वयि पुष्णि दीपस्तथापि मोहात् कियदादिशामि । त्याक्षीर्नलं मा व्यसनेऽपि यस्मात् कुलाङ्गनानां पतिरेव देवः ॥ ४७ ॥

भीमेऽनुशास्येति सुतां निवृत्तेऽधिरोप्य तामात्मरथं नलोऽपि । चचाल सेनाश्वखुरक्षतक्ष्मारजोभिराशास्तिरयन् दशापि ॥ ४८ ॥ ततः स्वपुर्यां निषधाधिपस्य यातोऽन्तराऽस्तं तरणिः प्रपेदे । ब्रह्माण्डभाण्डं परितोऽप्यपूरि नीलीरसेनेव च तामसेन ॥ ४९ ॥ तथापि नासौ गमनाद् व्यरंसीद् वलीयसी हि स्वभुवो दिदृक्षा । निजाङ्कपल्यङ्कतले शयाना नलेन भैमीति ततो वभाषे ॥ ५० ॥ देवि ! प्रवुध्यस्व वलं न यातुमीष्टे वतान्धंकरणैस्तमोभिः । प्रकाशय स्वं तिलकं तदुच्चैः सहस्रभानोर्युवराजकल्पम् ॥ ५१ ॥ देव्या ललाटं परिमृज्य कृप्ते तमःप्रतीपे तिलकप्रदीपे । ततोऽचलत् तस्य चमूस्तमिस्रामध्येऽपि सा चक्रिवरूथिनीव ॥ ५२ ॥ नलो महात्मा तमलोकनाथ मुनीन्द्रमेक

पाणिपुटस्थनालमुद्भ्रामयंश्चक्रमिवारविन्दम् । क्षरन्मरन्दच्छलतः श्रियोऽङ्घ्रिभुवोऽभितः श्रोत्रजलं निरास्थत् ॥ २४ ॥ कश्चित् कराङ्गुष्ठनखेन रेखास्तदाऽकरोत् केतकपत्रिकायाम् । भीमात्मजावीक्षणशर्मणोऽर्वाक्संख्यानिव स्वोच्छ्‌वसितान्तरायान् ॥ २५ ॥ अत्रान्तरेऽधिष्ठितयाप्ययाना लक्ष्मीर्यथा मन्दरकन्दरस्था । उद्गीज्यमानावसरैरुदारैर्वृता सखीभिर्विधृतातपत्रा ॥ २६ ॥ चीनैर्नवीनैरनणीयसीभिः प्रणीतवेषा परितो मणीभिः । भैमी दधाना वरदाम पाणौ स्वयंवरामण्डपमाजगाम ॥ २७ ॥ युग्मम् ॥ ततोऽखिलानां समकालमेव तस्यां दृशः पेतुरिलापतीनाम् । पुष्पद्रुमाणां परितोऽपि भृङ्गा नवोदितायामिव हेमजात्याम् ॥ २८ ॥ प्रत्येकनामग्रहपूर्वमूर्वीभुजो भुजोत्सङ्गितवेत्रयष्टिः । भीमाज्ञया वेत्रधराथ तस्यै प्रगल्भवाक्येति भृशं शशंस ॥ २९ ॥ देवि ! प्रसादं कुरु दृष्टिदानादितोऽरिसिंहो जितशत्रुसूनुः । रूपेण मारः किल सुंसुमारपुरेश्वरोऽयं दधिपर्णनामा ॥ ३० ॥ असावपीक्ष्वाकुकुलावतंसश्चन्द्राङ्गजन्मा ननु चन्द्रराजः । चम्पेश्वरोऽयं च सुबाहुनामा भोगान्ववायी धरणेन्द्रसूनुः ॥ ३१ ॥ अयं च रोहीतकदेशनाथश्चन्द्रानने ! चन्द्रकिरीटनामा । निर्लाञ्छनोऽसौ शशलाञ्छनाख्योऽरिकेसरिक्षोणिपतेस्तनूजः ॥ ३२ ॥ स्वच्छाशयेऽसौ भृगुकच्छनाथो नृदेवरत्नं ननु यज्ञदेवः । सौराष्ट्रभूमीपतिरप्युदारः क्षोणितटेऽसौ मुकुटेश्वराख्यः ॥ ३३ ॥ अमीषु यस्मिन् मनसो रसस्ते पतिंवरे ! तं पतिमाद्रियस्व । इति ब्रुवाणां प्रतिहाररक्षीं भ्रूसंज्ञया प्रेरयति स्म भैमी ॥ ३४ ॥ तत्कौमुदीवेन्दुमुखी प्रयान्ती यं यं व्यतीयाय पतीयती सा । स स क्षमाभृत् तिमिरैर्निमीलदृक्कैरवो गुण्ठितमाततान ॥ ३५ ॥ गत्वाथ मञ्चान्तरसंचितभ्रूयुगां जगौ तामिति वेत्रधारी । अदभ्रधीपात्रि ! विदर्भपुत्रि ! दृष्टिप्रसादादवधारयेस्त्वम् ॥ ३६ ॥ युगादिनाथान्वयभूर्नयासत्सुकौशलः कोशलभूमिपालः । श्रेयस्तवायं तपनीयवर्णे ! क्षितौ निषेधो निषधाभिधानः ॥ ३७ ॥ जानूपवर्ती प्रबलो नलोऽयं श्रीदक्षिणो बाहुरिवास्य सूनुः । अय च वामो द्विषतां द्वितीयोऽप्यक्रूरधीः कूबरनामधेयः ॥ ३८ ॥ तदेतयोः कामवतंसयोर्वा चन्द्रार्कयोर्वा

दन्त्यभिज्ञा कलासु सर्वास्वपि शारदेव ॥ ८ ॥ प्राग्भाग्यसर्वावसरासनं तद्भालेऽतिभास्वांस्तिलकश्चकाशे । भ्रूचीनचारूणि जगन्ति जेतुमाविष्कृतं चक्रमिव स्मरेण ॥ ९ ॥ प्राक्पुण्यतः शासनदेवताऽऽविर्भूयैकदा तामिदमब्रवीच्च । श्रीशान्तिनाथस्य भविष्यतीर्थकृतस्त्वमेतां प्रतिमां यजेथाः ॥१०॥ इतीरयित्वा करपद्मकोशे तस्या जिनार्चामपि तां निवेश्य । तिरोदधे शासनदेवता सा भेजे च भैमी शिरसा तदाज्ञाम् ॥ ११ ॥ सा पूजयन्ती जिनमार्यिकाभ्यो जैनं च धर्मोत्तरमाददाना । द्वेधापि बाल्यं परिहृत्य भेजे वयो मनश्चापि समं प्रवुद्धम् ॥ १२ ॥ तदीयरूपर्द्धिकलानुरूपं विदर्भनाथे वरमीक्षमाणे । बभूव साष्टादशवर्षदेश्या विज्ञानलेश्यानिकषो विधातुः ॥ १३ ॥ वरं विदग्धा नृवरेषु वीक्ष्य भृङ्गीव पद्मेषु नवारविन्दम् । गृह्णात्वसावित्यथ पार्थिवेन्द्रः स्वयंवरामण्डपमाततान ॥ १४ ॥ विदर्भराजार्थितया दिगन्तभूपाललोकः सकलोऽपि तत्र । संप्रापदेतां परिणेतुकामः श्रियं यथा स्वर्गिगणः पयोधौ ॥ १५ ॥ एकैकशस्तानभियानपूर्वं सम्मान्य सर्वान् नृपतीनुपेतान् । निवासयामास नृवासवोऽयं स्वपत्तनोपान्तवनावनीषु ॥ १६ ॥ गर्जन्तमूर्जस्वलतूर्यनादैर्नृत्यन्तमुच्चैर्ध्वजधोरणीभिः । उद्धूपधूमैः पुलकं दधानं हसन्तमुल्लोचमणिप्रभाभिः ॥ १७ ॥ वायूल्लसच्चन्दनमालिकाभिर्भ्रूक्षेपनर्माणि विपञ्चयन्तम् । तं मूर्त्तमानन्दमिवाथ भूपाः स्वयंवरामण्डपमभ्युपेयुः ॥ १८ ॥ युग्मम् ॥ तस्मिन्नमी दत्तमहासनेषु मञ्चेषु पञ्चेषुरसोत्तरङ्गाः । शृङ्गारभाजो विविधेङ्गितेन वैदग्ध्यभङ्गीमवतारयन्तः ॥ १९ ॥ कश्चित् तदा स्वप्रतिबिम्बलक्ष्मीं तिर्यग्मणिस्तम्भगतां दिदृक्षुः । त्रिकं विवर्त्यैकभुजाभिषङ्गी सुहृज्जनालापमिषं सिषेवे ॥ २० ॥ कश्चित्तु रत्नाञ्चितमुष्टिरम्यां छुरीं परेषामभिदर्शयिष्यन् । दृष्ट्या च मुष्ट्यावधृतां तदानीमनीनृतद् व्योमनिबद्धलक्षः ॥ २१ ॥ कश्चित् तदा गुम्फितपुष्पगुच्छमुच्चालयामास मुहुः करेण । भैमीकरग्राहकदाग्रहेण दिवः कलानाथमिवापतन्तम् ॥ २२ ॥ कश्चिच्च सिंहासनसंनिविष्टस्तटस्थमात्मीयकरङ्कवाहम् । तत्कन्धरान्यस्तभुजस्तदानीं स्मरप्रहारार्त्त इवाललम्बे ॥ २३ ॥ कश्चित् तदा

मुक्तिपद मम । तद् नान्तरेण सर्वज्ञमपरो दातुमीश्वरः ॥ ६० ॥ तथापि मिथिलापुर्यां नय मां त्रिदशोत्तम ! । तत्र पुत्रमुखं दृष्ट्वा यतिष्ये यतिकर्मणि ॥ ६१ ॥ ततोऽसौ तत्क्षणादेव देवेन मिथिलापुरीम् । नीता नत्वात्र चैत्यानि ययौ साध्वीप्रतिश्रये ॥ ६२ ॥ तत्र प्रवर्त्तिनीपादानसौ नत्वोपविश्य च । शुश्राव देशनां मोहतमःकदनकौमुदीम् ॥ ६३ ॥ ततः पुत्रमुखं द्रष्टुं देवेन भणितांहसा । किं मोहहेतुनाऽनेनेत्युक्तः सोऽपि दिवं ययौ ॥ ६४ ॥ आदाय मदनरेखा व्रतमथ तत्र प्रवर्त्तिनीपार्श्वे । तपसा कर्मविनाशादासादयति स्म मुक्तिं सा ॥ ६५ ॥

॥ इति मदनरेखाकथा ॥

अथ दवदन्तीकथा,—

आस्ते पुरं कुण्डनमित्यपाचीदिगङ्गनाभालविभूषणाभम् । यत्रोरमुक्तापरिवेषचेपं प्राकारसानूनि समाश्रयन्ति ॥ १ ॥ विहाय रम्यं पुरमेतदज्ञाः किमत्र यूयं वसथेति यस्य । चैत्यानि लेगुर्दिवि दण्डवाहुमुदस्य संदेष्टुमिवामरेभ्य ॥ २ ॥ अभ्रंलिहमानाः स्वगृहाङ्गणेषु कुमारिकास्तारकतारभांसि । रत्नान्यहो ! खेलनकर्करत्वं कर्केतनादीनि नयन्ति यत्र ॥ ३ ॥ सुतस्वकीभावकलाकलावस्तनावनम्रान्तरमुष्टिकत्राम् (?) । गुणप्रवीणां रचयन्ति वीणां प्रियां च पौरा नहि यत्र दूरात् ॥ ४ ॥ त्रिवर्गसारेऽत्र विदर्भदेशे विश्वस्वगर्भोरुहकर्णिकाभे । राजाऽभवद् भीम इति प्रसिद्धः सिद्धाङ्गनागीतगुणप्रशक्तिः ॥ ५ ॥ यस्य क्षिपत्तत्रकुलापकीर्तिभृङ्गीभृतो दिग्वनितावतंसान् । यश प्रसूनोपचितानकार्षीत् करालवाले करवालवल्ली ॥ ६ ॥ गङ्गेव सिन्धो रुग्मिवाब्जबन्धोः शचीव जिष्णोः कमलेव विष्णोः । तस्य प्रशस्या किल पुष्पदन्ती दन्तीश्वरस्याप्रभुवत् प्रियाऽऽसीत् ॥ ७ ॥ तस्यां च तस्याङ्गभवा दवार्त्तदन्त्यागमस्वप्ननिवेदितर्द्धिः । बभूव नाम्ना दव-

भागिनी ॥ ७० ॥ विभूतयोऽपि मा भूवञ्शीलम्लानिपचेलिमाः । गेहदाहसमुद्भूतमुद्द्योतं कः समीहते ? ॥ ७१ ॥ ऋते पतिं सुशीलानां दारिद्र्यमपि मण्डनम् । न्याय्य एव सरोजिन्याः संकोचस्तपनं विना ॥ ७२ ॥ तत् किमत्र विधेयं मे हुं कालहरणं किल । मिथ्यापि सत्यसन्धाया यत् तथ्याद् नातिरिच्यते ॥ ७३ ॥ निर्धार्येति जगादैनं युगबाहुपतिव्रता । 'नय नन्दीश्वरं मां तत् प्रियं तेऽपि विधास्यते ॥ ७४ ॥ ततः श्रुत्वेति विद्याभृद्ग्रामणीः स मणीमये । विमाने तां समारोप्यानन्दी नन्दीश्वरं ययौ ॥ ७५ ॥ तत्र प्रीता द्विपञ्चाशच्चैत्यानां शाश्वतार्हतः । ननामानर्च तुष्टाव सा भावरसिताशया ॥ ७६ ॥ मणिप्रभेण सार्कं सा मणिचूडमुनीश्वरम् । गत्वा नत्वा पुरोऽमुष्य निषसाद यथाविधि ॥ ७७ ॥ ततो मदनरेखाया मत्वा व्यतिकरं मुनिः । ज्ञानालोकाच्चतुर्ज्ञानी मणिप्रभमबोधयत ॥ ७८ ॥ अथो मणिप्रभेणैषा प्रबुद्धेन महात्मना । क्षामिता यामितां नीता प्रोक्ता किं तेऽधुना प्रियम् ? ॥ ७९ ॥ सोचे नातः परं किञ्चित् प्रियं बान्धव ! यत् त्वया । इद नन्दीश्वरं तीर्थं समानेपि सुदुर्लभम् ॥ ८० ॥ विमानमेकमायासीदसमानमिहान्तरे । तन्मणीकिङ्किणी-क्वाणडामरं चलचामरम् ॥ ८१ ॥ तस्माद् विनिर्ययावेकः प्रभया भासुरः सुरः । हारकेयूरकोटीरकुण्डलादिविभूषणः ॥ ८२ ॥ तां सतीं त्रिः परीयासौ पुरो नत्वातिभक्तितः । ततोऽनमद् मुनिं तस्य पुरतो निषसाद च ॥ ८३ ॥ अथ विद्याधरेणैव विस्मितेनेति भाषितः । देव ! कोऽयं त्वया चक्रे विनयातिक्रमः क्रमः ? ॥ ८४ ॥ अथ देवोऽब्रवीदेवं युगबाहुरहं पुरा । भ्रात्रा मणिरथेनोर्वीभृताऽसिलतया हतः ॥ ८५ ॥ ततः कण्ठगतप्राणोऽनया मदनरेखया । प्रियया प्रीणितो जैनधर्माख्यामृतधारया ॥ ८६ ॥ ततः समाधियोगेन मुक्तमर्त्यकलेवरः । ब्रह्मलोकेऽभवं सोऽहमिन्द्रसामानिकः सुरः ॥ ८७ ॥ धर्माचार्या ममेयं यत् तेनादौ प्रणता मया । श्रुत्वेति खेचरो धर्ममहिमानममोदत ॥ ८८ ॥ मुदा मदनरेखां च युगबाहुसुरो जगौ । साधर्मिके ! प्रियं किं ते क्रियतामद्य शाधि माम् ? ॥ ८९ ॥ सापि तं निजगादेति प्रियं

ष्ठा शयनमातनात् ॥ ५१ ॥ अस्तं गते विभाकान्ते निशाध्वान्तेऽथ मावति । सिंहशार्दूलबूत्कारैर्निद्राऽस्या द्रागपासरत् ॥ ५२ ॥ ततो भिया नमस्काराञ्जपन्ती सा निशान्तरे । असूत मूर्त्तिमत्पुण्यमिव लोकस्तुत सुतम् ॥ ५३ ॥ प्रातः कम्बलरत्नेन वेष्टयित्वा तमर्भकम् । कण्ठेऽस्य मुद्रिकां यौगवाहवीमवलम्ब्य च ॥ ५४ ॥ सरो मदनरेखाऽगात् क्षालयित्वात्र वाससी । स्नातुं विवेश तोयान्तस्तोयदेवीव सा तदा ॥ ५५ ॥ युग्मम् ॥ ततो जलगजेनासौ लीलयोत्क्षिप्य शुण्डया । क्षिप्त्वा नभस्यरुन्धत्या द्वैराज्य विदधे क्षणम् ॥ ५६ ॥ याता नन्दीश्वरं विद्याभृता केनापि सा दिवः । पतन्ती चातकेनेव तोयधारा प्रतीपिता ॥ ५७ ॥ क्रन्दन्ती करुणं तेन नीता वैताढ्यपर्वते । सोपरोधममुं दीना सा जगाद सगद्गदम् ॥ ५८ ॥ अद्याहं भो महासत्त्व ! प्रसूता निशि कानने । सुत लतागृहे मुक्त्वा हताशाऽगां सरोवरे ॥ ५९ ॥ ततो जलगजेनाहमक्षेप्सि नभसि क्षणात् । निपतन्ती ततो दैवादासादयिषि च त्वया ॥ ६० ॥ तदेको बालकः सोऽयं हंस्यते श्वापदेन हा ! । आहाररहितो मृत्यु लप्स्यते स्वयमेव वा ॥ ६१ ॥ तदक्षेपाद् महासत्त्व ! पुत्रभिक्षां प्रयच्छ मे । तत्र मां नय तं वाऽत्र कृपापात्रं समानय ॥६२॥ विद्याधरोऽब्रवीत् कान्तं यदि मां प्रतिपद्यसे । कर्ता तदा त्वदादेशमस्मि सारङ्गलोचने ! ॥६३॥ अन्यच्च सुभ्रु ! गान्धारदेशे रत्नावहे पुरे । खगेन्दुर्मणिचूडोऽभूत् प्रियास्य कमलावती ॥ ६४ ॥ तयोर्मणिप्रभाख्योऽहमस्मि सूनुः शुचिस्मिते ! । तद् मां श्रेणिद्वयाधीशं कृत्वा तातोऽग्रहीद् व्रतम् ॥ ६५ ॥ क्रमेण विहरन् सैष ध्रुवमत्रागतोऽभवत् । सांप्रतं तु गतो नन्दीश्वरं चैत्यानि वन्दितुम् ॥ ६६ ॥ मयापि गच्छता तत्र नभस्याऽऽसादि सुन्दरि ! । तद् मां पतिमुरीकृत्य भव विद्याधरेश्वरी ॥ ६७ ॥ अन्यच्च ते सुतं प्राप्य विपिनाद् मिथिलानृपः । प्रीत्याऽऽर्पयद् महादेव्यै पाल्यमानोऽस्ति शोभने ! ॥ ६८ ॥ प्रज्ञप्त्येदं मयाऽज्ञायि विद्यया तत् प्रसीद मे । भुङ्क्ष्व भोगान् मया साकं पौलोमीव मरुत्वता ॥ ६९ ॥ श्रुत्वेत्यचिन्तयदसावहो ! मे कर्मणां दशा । यद् भवामि इहान्यान्यतरव्यसन-

क० । ते चन्द्रयशसोऽप्याख्यन् युगबाहोस्तथाकथाम् । सोऽपि वैद्यानुपादायोद्यानं तूर्णमुपाययौ ॥ ३३ ॥ व्रणकर्माणि वैद्येषु वितन्वत्सु
प्रयत्नतः । युगबाहोस्तदा तारायनभद्रोऽभवत् पुनः ॥ ३४ ॥ ततो मदनरेखाऽस्मै परलोकाध्वयायिने । धृत्वा विवेकिनी धैर्यं
२१ । विदधे धर्मशम्बलम् ॥ ३५ ॥ महासत्त्व ! न ते कश्चित् त्वं च कस्यापि न ध्रुवम् । कुटुम्बे देहिनां योगः पक्षिणामिव शाखिनि
॥ ३६ ॥ सर्वः स्वकर्मणां पूर्वकृतानामश्नुते फलम् । परो निमित्तमात्रं स्यात् तद्दोषेषु गुणेषु च ॥ ३७ ॥ तद् दधीथा मनः साम्ये
सुगतेर्मुख्यकारणम् । शरणं च तव चत्वारोऽर्हन्मुख्यास्ते च मङ्गलम् ॥ ३८ ॥ अज्ञानाच्च कुसङ्गाच्च यत् त्वयाऽकारि कर्हिचित् ।
पुण्यार्ह ! दुष्कृतं गर्ह तद् मङ्गलनिबर्हणम् ॥ ३९ ॥ सुगृहीतां च कुर्वीथाः सुगतिद्वारकुञ्चिकाम् । अप्रपञ्चमते ! पञ्चपरमे-
ष्ठिनमस्क्रियाम् ॥ ४० ॥ इत्येतया शुभध्यानसोपानमधिरोपितः । युगबाहुर्ययावुच्चैःपदं प्राणविनाकृतः ॥ ४१ ॥ ततः पितृशुचा चन्द्रयशाः
सहपरिच्छदः । रुदन्नमन्दं प्रधानै रोदसीमप्यरोदयत् ॥ ४२ ॥ दध्यौ मदनरेखा तु धिग् धिग् मे रूपसंपदम् । ययास्मि गमिता
हन्त हताशानर्थमीदृशम् ॥ ४३ ॥ असौ च शीलविध्वंसमशौचो मे करिष्यति । निहंस्यति च मे पुत्रमपि कान्तो यथा हतः ॥
॥ ४४ ॥ सांप्रतं सांप्रतं तद् मे स्थातुमत्र लवोऽपि न । गत्वा विदेशमाधारये परलोकहितं व्रतम् ॥ ४५ ॥ चिन्तयित्वेति सा
पुत्रमप्यनापृच्छ्य सत्वरा । निःसृत्योद्यानतस्तस्मात् प्रचचाल दिशैकया ॥ ४६ ॥ पादयोः कण्टकैर्बाढं हृदये शोकशङ्कुना । पीड्यमाना
ययौ मार्गे निशीथेऽहीव सा जवात् ॥ ४७ ॥ क्रमात् प्रापाटवीमेकां सानेकतरुगह्वराम् । तत्र मार्गमिवादेष्टुमुदियाय च भास्करः ॥ ४८ ॥
प्राचीमुखी प्रयान्ती सा गङ्गेवाङ्गवती सती । मध्याह्ने क्षीरनीरेशमिवैकं प्राप्य पल्वलम् ॥ ४९ ॥ प्रक्षाल्य मुखहस्तांह्रीं तत्र स्मृत्वा
जिनक्रमान् । व्यधाद् वनफलैः प्राणवृत्तिं स्वापतितैः स्वयम् ॥ ५० ॥ प्रत्याख्यायाथ सागारं लतागारगता क्वचित् । एषा मदनरेखाऽप्यखिल-

हन्मि तत् किमनेन मे ? ॥ १३ ॥ इति दुष्टमतेरस्य युगबाहुं निशुम्भितुम् । छलं मृगयमाणस्य ययौ कालः कियानपि ॥ १४ ॥ इतो मदनरेखा तु चन्द्रस्वप्नेन सूचितम् । गर्भं कादम्बिनीवाधाद् युगबाहो रवेरिव ॥ १५ ॥ जिनार्चासङ्घसम्मानरूपान् भूपानुजो बहून् । तस्याश्च पूरयामास तृतीये मासि दोहदान् ॥ १६ ॥ युगबाहुर्यमाहूत इव चैत्रोत्सवेऽन्यदा । जगाम रन्तुमुद्याने समं मदनरेखया ॥ १७ ॥ क्रीडतः कान्तया साकं तया साकम्पया स्मरात् । दिनान्तेऽस्तमगात् तस्य प्राच्यपुण्यमिवांशुमान् ॥ १८ ॥ क्षणं स्थित्वा च सन्ध्या-ऽस्यलक्ष्मीरिव तिरोदधे । रुरोध च तमस्तस्य दशा इव दिशो दश ॥ १९ ॥ युगबाहुरसौ तस्मिन्नेवोवास निशां वने । येन संजायते पुंसां बुद्धिः कर्मानुसारिणी ॥ २० ॥ उद्दामयुद्धान् विमुच्यैष यामिकान् परितो वनम् । रम्भाकेलिगृहेऽशेत समं मदनरेखया ॥ २१ ॥ अथो मणिरथो दध्यावसाववसरो वरः । सुप्रसन्नाद् विधेः प्राप्तः सुचिरं वाञ्छता मया ॥ २२ ॥ एकं तावत्प्रसङ्गेन युगबाहुर्बहिर्वने । द्वितीयमेष कतिचित्पादातपरिवारितः ॥ २३ ॥ तृतीयं सांप्रतं रात्रिश्चतुर्थं वनमस्ति तत् । हन्मि गत्वा प्रियासङ्गविघ्नं मूर्त्तमिवाशुभम् ॥ २४ ॥ चिन्तयित्वेत्यसौ दुष्टो मुष्टिना कलयन्नसिम् । गतो बहिर्वनेऽपृच्छद् यामिकानित्यनामिकः ॥ २५ ॥ भो भोः ! शंसत मे बन्धुर्युगबाहुः क्व वर्तते ? । श्रुत्वेति तद्वचस्तेऽपि शशंसुः कदलीगृहे ॥ २६ ॥ मैनं कश्चिच्छलान्वेषी द्वेषी हन्यादिहस्थितम् । इत्यागामित्यसौ जल्पन्नथ केलिगृहेऽविशत् ॥ २७ ॥ ससंभ्रममथोत्थाय युगबाहुस्तमानमत् । अलमत्रोषितेनेहि पुरमित्यनुमोदितः ॥ २८ ॥ तद्वादेशादसौ गन्तुं पुराय प्रगुणीभवन् । हतो हतात्मना तेन कन्धरायां शितासिना ॥ २९ ॥ युगबाहुस्ततो मूर्च्छामीलिताक्षोऽपतद् भुवि । तारं तारं च पूत्कृत् शुचा मदनरेखया ॥ ३० ॥ किमेतदिति संभ्रान्ताः पत्तयः परितोऽमिलन् । ऊचे राज्ञा च्युतः पाणेर्दैवादसिरसौ मम ॥ ३१ ॥ नूनमेतद् नृपस्यैव चेष्टितं पापचेष्टितम् । विमृश्येति बलादेनं त्तपयः पत्तनेऽनयन् ॥ ३२ ॥

नेमिं विजेतुमसृजद् मदनो महास्त्रं राजीमतीमयमनेन तु नायकेन ।
तेनैव सैप रथनेमिरथाधिरूढो जिग्येतरां विहितमोक्षगुणोदयेन ॥ १०१ ॥

॥ इति राजीमतीकथा ॥

---

अथ मदनरेखा यथा ;—

अस्त्यवन्तिषु विख्यातं सुदर्शनपुरं पुरम् । यत्र देव्या न भारत्या कमला कलहायते ॥ १ ॥ अपनीतद्विषच्चूडामणिर्मणिरथो नृपः । तत्रासीद् यदसिव्योम्नि विललास यशःशशी ॥ २ ॥ बभूव युवराजोऽस्य तापबाहुबलोत्कटः । युगबाहुरिति ख्यातः क्षात्त्रतेज इवाङ्गयुक् ॥ ३ ॥ तस्यासीज्जिनधर्मैकरतानेकगुणान्विता । प्रिया मदनरेखेति रूपरेखावती सती ॥ ४ ॥ मम देवेन पत्यापि स्वरूपेण जितः स्मरः । इतीव सापि तत्कान्तामजैषीद् वीरवासिता ॥ ५ ॥ तयोश्चन्द्रयशाः कीर्त्या तारकेशविजित्वरः । सुतोऽभूच्छक्ति-दुर्वारः कुमारः शिवयोरिव ॥ ६ ॥ कदाचिदेतां श्वेतांशुमुखीं वातायनस्थिताम् । दृष्ट्वा मणिरथश्चक्रे कामकेलिमनोरथम् ॥ ७ ॥ ततोऽस्यै गन्धमाल्यादि प्रेषयामास भूपतिः । निर्विकारा तु सा सर्वमग्रहीज्ज्येष्ठभक्तितः ॥ ८ ॥ ततो मानितमात्मानं मन्यमानः स दुर्मतिः । दूतीमुखेन तां रन्तुमर्थयामास पार्थिवः ॥ ९ ॥ सापि दूतीमुखेनैवं पार्थिवाय व्यजिज्ञपत् । युज्यते नेदृशं वक्तुमपि देव ! भवादृशाम् ॥ १० ॥ कुललज्जा न चेल्लोकलज्जा च तव भूपते ! । वदन्नेवं कथं नैव स्वबन्धोरपि लज्जसे ? ॥ ११ ॥ श्रुत्वेति भूपतिश्चित्ते चिन्तयामासिवानिति । इयं मय्यनुरक्तैव ध्वनितार्थं वदत्यदः ॥ १२ ॥ यावत् ते बन्धुरस्त्येष तावद् नोचितमीदृशम् । एनं केनाप्युपायेन

॥ ८२ ॥ दिष्ट्या तत्याज मां राज्यश्रियं चोच्छिष्टवत् प्रभुः । असौ त्वशौचः श्वेवैतदद्वयं काङ्क्षति धिग् विधिम् ॥ ८३ ॥ तदेनं स्नेहलं स्नेहोपायेनैव प्रबोधये । निमित्तीकृत्य मां मज्जत्वसौ मा भवसागरे ॥ ८४ ॥ ध्यात्वेति सा पयः पीत्वा वामयित्वौपधाद्य तत् । ददौ प्रातरुपेताय स्थालस्थं रथनेमये ॥ ८५ ॥ सोऽब्रवीद् किमिदं मुग्धे ! वान्तं पाययसेऽद्य माम् । वस्तुना रुचिरेणापि किमुच्छिष्टेन धीमताम् ? ॥ ८६ ॥ सोचे यद्यपि वेत्सीदं त्वममुग्ध ! महामते ! । वान्तां श्रीनेमिना तद् मां परिणेतुं किमिच्छसि ? ॥ ८७ ॥ रथनेमिः पतित्वाथ तत्पदोरिदमभ्यधात् । त्वयाहं बोधितो मुग्धन् साधु साधु महासति ! ॥ ८८ ॥ अथैतौ शुद्धसंवेगौ जाते केवलिनि प्रभौ । आददातेऽस्य पादान्ते दान्तेन मनसा व्रतम् ॥ ८९ ॥ रथनेमिरथान्येद्युरध्यास्ताध्यात्मलालसः । गुहां काञ्चिदिहागाद्य वृष्टिदूनोग्रसेनजा ॥ ९० ॥ रथनेमिमजानन्ती तमस्तोमतिरोहितम् । उद्वापयितुमत्रासौ वस्त्राण्यूर्ध्वाण्यमुञ्चत ॥ ९१ ॥ कामस्येव विकोशासिलतामालोक्य तां मुनिः । गतधैर्य' पुरोभूय स्खलद्वागिदमभ्यधात् ॥ ९२ ॥ पुरापि प्रार्थितासि त्वमद्य मे कुरु वाञ्छितम् । सर्वेषामर्थिनामर्थं पूरयेत्कल्पवल्ल्यपि ॥ ९३ ॥ रथनेमिमथो मत्वा लज्जित्वा भोजनन्दनी । संघृताङ्गी जवाद् बोधभङ्गीभिस्तमबोधयत् ॥ ९४ ॥ स्वदशा दूषितः पूर्वं धूर्तो योऽर्थस्त्वयोदरे । अद्यापि तदजीर्णस्य क्षारोद्गाराः स्फुरन्त्यमी ॥ ९५ ॥ स्कन्देयुर्ज्वलितं ज्योतिर्धूमकेतुदुरासदम् । नेच्छन्ति वान्तमापातुं कुले जाता अगन्धने ॥ ९६ ॥ धिगस्तु ते यशःकाम्या यस्त्वं जीवितकारणात् । वान्तमिच्छस्यहो ! पातुं भविताऽन्तेऽपि ते मृतिः ॥ ९७ ॥ अहं च भोजराजस्य त्वं चास्यन्धकवृष्णिजः । मा कुले गन्धने भूत्वाऽसयमं निभृतश्चर ॥ ९८ ॥ यदि त्वं कुरुषे भावं या या द्रक्ष्यसि नायिकाः । वात्याधूतो हठ इवानियतात्मा भविष्यसि ॥ ९९ ॥ तस्याः स वचन श्रुत्वा संयत्याश्च सुभाषितम् । अङ्कुशेन यथा नागो धर्मं संप्रतिपन्नवान् ॥ १०० ॥

इतश्च दर्शनं दत्त्वाऽन्यत्रास्मिन् गोपतौ गते। तदा राजीमती मूर्च्छां भेजे राजीविनीव सा ॥ ६५ ॥ चन्द्रपादैरिवाशाभिरालीभिश्चन्दनद्रवैः। सिक्ता कुमुद्वतीवात्तबोधेति व्यलपीच्च सा ॥ ६६ ॥ रे दैव ! यदि भाले मे न नेमिर्लिखितः पतिः। ततः किमियतीं भूमिं त्वयाऽहमधिरोपिता ? ॥ ६७ ॥ यदि नेमिर्न मे भावी भर्त्ता किं ढौकितस्ततः ?। तद् नालब्धनिधेर्दुःखं दृष्टनष्टनिधेर्हि यत् ॥ ६८ ॥ क्वाहं क्व नेमिरित्यासीत् त्वत्पत्तित्वे मनोऽपि न। त्वद्गिरैव विवाहार्थे स्वामिन्नस्मि प्रतारिता ॥ ६९ ॥ त्वयारोपि ममोद्वाहमनोरथतरुः स्वयम्। उन्मूलयन्नमुं स्वामिन्नात्मनोऽपि न लज्जसे ॥ ७० ॥ स्वामिन् ! मामपहायैवमात्मैकशरणामपि। सर्वसाधारणां सिद्धिं लिप्सोस्ते कीदृशी मतिः ? ॥ ७१ ॥ विलपन्तीति धारिण्या धृत्वोत्सङ्गेऽथ सा स्वयम्। बभाषे वसनान्तेन मार्जयन्त्यश्रु तद्दृशोः ॥ ७२ ॥ प्रिये वत्से ! स्म मा रोदीर्लभ्यः क्व क्वेदृशः पतिः। किं करे किङ्करेन्द्रस्य तिष्ठेच्चिन्तामणिः क्वचित् ? ॥ ७३ ॥ निजमानमतिक्रम्य चलतां सिद्धिरस्ति न। राहोराहारितोऽपीन्दुर्गलादपि पलायते ॥ ७४ ॥ तद् वत्से ! त्वत्समं राजकुमारं कञ्चन त्वया। अह्वायोद्वाहयिष्यामि मनो वालय नेमितः ॥ ७५ ॥ अथ राजीमती प्राह त्वं मातर्मेदमभ्यधाः। पतिर्मे नेमिरेवात्र पङ्कजिन्या इवार्यमा ॥ ७६ ॥ ज्ञाता दाता च पाता च ततो नान्योऽस्ति कश्चन। यादृशस्तादृशो वास्तु स एव शरणं मम ॥ ७७ ॥ इति चेतो दृढीकृत्य ध्यायन्ती प्रभुपादुकाम्। तस्थौ राजीमती भावयतीभूय पितुर्गृहे ॥ ७८ ॥

रथनेमिरथ भ्राता कनीयाञ्जगदीशितुः। राजीमतीमियायैतत्पाणिग्रहमनाः सना ॥ ७९ ॥ अहो प्रजावतीमोहाद् मामुपासितुमेत्यसौ। इति राजीमती मत्वा तमायान्तमुपाचरत् ॥ ८० ॥ स पुनः संभ्रमाद् मत्वा तामात्मन्यनुरागिणीम्। भाणयामास दासीभिरात्मोद्वाहाय दुर्मतिः ॥ ८१ ॥ राजीमत्यपि तद् बुद्ध्वाऽचिन्तयद् धुन्वती शिरः। प्रभोरस्य च सोदर्येऽप्यहो ! सत्त्वान्तरं कियत् ?

विवोढुमप्युपायान्त सा तं वीक्ष्य व्यचिन्तयत् । एतत्पाणिग्रहे योग्य भाग्यं किं मे भवेदिति ॥ ४७ ॥

इतश्चाकर्णयन् नानाजीवानां करुणं स्वरम् । जानन्नपि जिनोऽपृच्छत्क्रमेनदिति सारथिम् ॥ ४८ ॥ अथ सारथिनाऽभाषि देवाति-थ्यकृते तव । उग्रसेनोऽग्रहीज्जीवाञ्जलस्थलनभश्चरान् ॥ ४९ ॥ तत्सर्वेऽपि कृपाकान्त ! वाटकान्तः स्थिता अमी । तन्वते तुमुलं प्राणभयं येन महाभयम् ॥ ५० ॥ अथोवाच यदुस्वामी यत्रामी सन्ति जन्तवः । स्यन्दनं नय तत्रैतं तदकार्षीच्च सारथिः ॥ ५१ ॥ अथ व्यलोकि दीनास्यैः प्राणिभिः स्वस्वभाषया । रक्ष रक्षेति जल्पद्भिः पितेव तनुजे. प्रभुः ॥ ५२ ॥ करुणाकदलीमूलकन्देन विभुना ततः । अमी सर्वेऽप्यमोच्यन्त जवादादिश्य सारथिम् ॥ ५३ ॥ मुक्तेषु तेषु जीवेषु शमेनेव वपुष्मता । स्यन्दनो जगतां पत्या प्रत्यावासमवाल्यत ॥ ५४ ॥ शिवासमुद्रविजयकृष्णरामादयोऽप्यथ । स्वं स्वं यानं समुत्सृज्य वेगाद् नेमिनमन्वगुः ॥ ५५ ॥ तं चाथ नाथमूचाते पितरौ साश्रुलोचनौ । त्वया जात ! किमारब्धमिद नः प्रातिलोमिकम् ? ॥ ५६ ॥ प्रभुः प्राह मयारब्धमेतद् विश्वानुकूलिकम् । पशुवद् मोचयिष्यामि यद् युष्मान् एवं च बन्धनात् ॥ ५७ ॥ तदाकर्ण्याथ मूर्च्छालौ पितरौ पेततुः क्षितौ । चन्दनादिभिराश्वास्य कृष्णस्तौ, प्रभुमभ्यधात् ॥ ५८ ॥ धिक् ते विवेकितामेतान् पशूनप्यनुकम्पसे । दोदूयसे पुनर्मातृपितृभ्रातृसुहृज्जनान् ॥ ५९ ॥ ततोऽभ्यधात् प्रभुः कृष्ण ! नोक्तं युक्तमिद त्वया । विचारय चिर बन्धो ! निर्बन्धस्यायतिं मम ॥ ६० ॥ संसारसुखमापातमधुर स्यादपथ्यवत् । सुखा-प्रीतिः प्रियाकारी शमस्तु कटजायुवत् ॥ ६१ ॥ सर्वेषां तत् प्रियाकर्तुं प्रशमोऽयं श्रितो मया । हित यत् परिणामे हि हितं तत् पारमार्थिकम् ॥ ६२ ॥ इत्युक्त्वा स्वजनेष्वश्रुगद्गदेषु वदत्स्वपि । श्रीनेमिरायययावात्मगेहमुद्ग्राहनिःस्पृह ॥ ६३ ॥ तीर्थं प्रवर्त्तयेत्युक्तस्तदा लोकान्तिकामरैः । दत्त्वैव वार्षिकं दानं रैवते प्राव्रजत् ततः ॥ ६४ ॥

कदाचिदपि लप्स्येऽहमिहार्थे संधिदूषणम् । स्यात्तेऽस्मोमिति प्रोच्य श्रीनेमिस्तानमोदयत् ॥ २७ ॥ युग्मम् ॥ शिवासमुद्रविजयौ तत्कथाकथके नरे । दातुं नापश्यतां वस्तु राज्येऽप्यानन्दमानतः ॥ २८ ॥ स्वबन्धोरुचितां कन्यामन्विष्यन्नथ केशवः । अभापि भामयाऽऽस्ते यद् मम राजीमती श्वसा ॥२९॥ हरिः स्मृत्वाथ तां स्मित्वा ययौ यदुभिरन्वितः। निवासमुग्रसेनस्य ग्रहाधीशो ग्रहैरिव ॥३०॥ अभ्युत्थायोग्रसेनोऽपि विश्वसेनं ससंभ्रमः । भद्रपीठे निवेश्याग्रे तस्थावादेशजालसः ॥३१॥ याचितो नेमये राजीमतीमेतेन स स्वयम् । तथेति प्रतिपद्याथ सध्यक्षे चक्रिणं मुदा ॥ ३२ ॥ ततः कृष्णेन विज्ञप्तः समुद्रविजयो नृपः । विवाहलग्नमासन्नं पृष्टवान् क्रोष्टुकिं तदा ॥ ३३ ॥ दत्तेऽथ श्रावणश्वेतषष्ठ्यां क्रोष्टुकिना दिने । उग्रसेनसमुद्रोर्वीनाथौ तूर्णमसज्जताम् ॥ ३४ ॥ अथ पाणिग्रहासन्नदिने नेमिं यदुस्त्रियः । प्राङ्मुखं स्थापयामासुर्भासुरारब्धगीतयः ॥ ३५ ॥ तमस्नपयतां प्रीत्या रामदामोदरौ स्वयम् । बद्धप्रतिसरं नेमिनाथं नाराचधारिणम् ॥ ३६ ॥ आगादथोग्रसेनस्य निकेतं तार्क्ष्यकेतनः । स्वयं तद्विधिना राजीमतीमप्यध्यवासयत् ॥३७॥ शर्वरीं सर्वरीतिज्ञो निर्वाह्यैतां गृहागतः । हरिः संवाहयामास विवाहाय विभुं मुदा ॥ ३८ ॥ अथ श्वेतांशुवत्कान्तश्वेतच्छत्रविराजितः । श्रीनेमिः श्वेतशृङ्गारः श्वेताश्वं रथमास्थितः ॥ ३९ ॥ तूर्यनिर्घोषसंहूत्या पुराहूतवधूजनः । वन्दिवृन्दमुखोन्मुक्तैः सूक्तैर्मुखरिताम्बरः ॥ ४० ॥ गीयमाणगुणग्रामो हृष्टैर्बन्धुवधूजनैः । कार्मयामिसमूहेन क्रियमाणावतारणः ॥ ४१ ॥ परीतो यदुभिः सर्वैः पार्वणेन्दुरिवोडुभिः । उग्रसेनगृहासन्नो जगाम जगदीश्वरः ॥ ४२ ॥ कलापकम् ॥ वयस्याभिरभिप्रायविद्भिः सा प्रेरिता ततः । उत्थाय संभ्रमाद् मातृगृहादुज्जृम्भितस्पृहा ॥ ४३ ॥ हारकेयूरकोटीरकर्णपूराद्यलङ्कृता । वासोभिः शोभितानल्पैः कल्पवल्लीव जङ्गमा ॥ ४४ ॥ हर्षपीयूषवर्षेणोद्भिन्नरोमाङ्कुरोत्करा । आरुरोह वरारोहा गवाक्षे वीक्षितुं विभुम् ॥ ४५ ॥ विशेषकम् ॥ तस्यातिशायि लावण्यं पिबन्ती सा दृशा भृशम् । अनिमेषतया पूर्णं सा देवीभूयमन्वभूत् ॥ ४६ ॥

स्त्रीभिरावृतौ। सरो विविशतुः स्नातुं विरच्य कुसुमोच्चयम् ॥ ७ ॥ स्त्रीणां नितम्बसंबन्धवृद्धेऽम्बुनि तदाम्बुजैः। अमज्जि लज्जयेवासां मुखलक्ष्मीविलोकनात् ॥ ८ ॥ जले गर्जति पर्जन्य इवासां करताडने । नृत्ता ग्रीष्ममपि प्रावृट्कालयन्ति स्म केकिनः ॥ ९ ॥ गौरीषु तासु खेलन्तौ कृष्णौ तौ विष्णुनेमिनौ। चारुचम्पकमालासु रोलम्बाविव रेजतुः ॥ १० ॥ मनोमुदे वरं सिक्त्वा देवरं प्रति नेमिनम्। तास्ततश्चक्रिरे नीरप्रपञ्च नर्मकर्मठाः ॥ ११ ॥ समन्तत समं ताभिः करिणीभिरिव द्विपः। चिक्रीड नेमिनाथोऽपि पाथोभिः करलालितः ॥ ॥ १२ ॥ इति खेलन्तमालोक्य तदानीं नेमिन मुदा। कृतार्थीकृतदृक् तस्थौ चिरं पयसि केशवः ॥ १३ ॥ निर्गत्य सरसस्तीरे तस्थुस्ता जिष्णुयोषितः। तासु प्रभुरभात् पुण्ड्रमुक्तास्विव हरिन्मणिः ॥ १४ ॥ तदा पूर्वैर्जलस्रुत्याऽरोदीव प्रभुणोज्झितैः। अङ्गीकृतैरपूर्वैश्चाहासीव महसांशुकैः ॥ १५ ॥ अथ तत्रोत्सुकस्त्रैणान्यस्ते हेमासने हरिः। निवेश्य नेमिनं प्राह सुमाहात्म्यकिरा गिरा ॥ १६ ॥ वाच्यं देव! त्वदग्रे यत् तद् वार्धौ वृष्टिसंनिभम्। नापराध्यामि तज्जल्पन् मान्यश्चास्मि त्वया कियत् ॥ १७ ॥ पित्रोर्मनोरथौ स्यातां दुष्पूरावादिमस्तयोः। जातस्यास्येक्षणं सूनोः परिणीतस्य चापरः ॥ १८ ॥ ततः समुद्रविजयशिवादेव्योः स्वपूज्ययोः। जाते त्वयि जगद्दीपे पूर्वं पूर्णो मनोरथः ॥ १९ ॥ राजकन्यां तदुद्वाह्य धन्यां काञ्चन संप्रति। पित्रोर्मनोरथं देव! द्वितीयमपि पूरय ॥ २० ॥ श्रीनाभेयादयस्तीर्थंकराः के न मुमुक्षवः। परिणीय समुत्पन्नसूनवो दधिरे व्रतम् ? ॥ २१ ॥ त्वमप्यतो विवाहेन पितृभ्रातृसुहृज्जनम्। आनन्दय दयासार! दयास्थानमिदं महत् ॥ २२ ॥ इत्थं कृष्णः सतृष्णोऽस्य पाणिग्रहमहं प्रति। कुर्वन्नभ्यर्थनां नेमेः पाणौ दीन इवालगत् ॥ २३ ॥ रुक्मिणीसत्यभामाद्याः सर्वा अपि हरिप्रियाः। तदेवाभ्यर्थयन्त्योऽस्य पादयोः पेतुरातुराः ॥ २४ ॥ अन्येऽपि यदवः सर्वे विवाहे विहितादराः। बभूवुर्नेमिनाथस्य पुरः पटुचटूक्तयः ॥ २५ ॥ अमी मूढाः स्त्रियश्चैतास्तदेतदसदाग्रहे। कालनिर्गमनं कर्तुं युक्तं वचनमाननम् ॥ २६ ॥

थयिष्यामि तदुच्छेदनिबन्धनम् ॥ २०९ ॥

इत्युक्त्वाऽथ क्षमाङ्कं किल जनकभुवः प्रव्रजन्त्याः स केशानाधत्तैषापि तप्त्वा चिरममरपतिः प्रान्तकल्पे बभूव ।
तस्मात्कूलेन केनाप्यसमतमशमध्याननिर्धौतकर्मा शर्माद्वैतं प्रपेदे कृतविषयविपल्लाघवो राघवोऽपि ॥ २१० ॥

॥ इति सीताचरितनामनि महाकाव्ये चतुर्थः सर्गः ॥

॥ इति सीताकथा ॥



सुलसा तु महासती श्रीमहावीरपरमश्राविका क्षायिकसम्यक्त्वधारिणी नागरथकारगेहिनी राजगृहराजश्रेणिकमित्रद्वात्रिंशत्पुत्रमाताऽभयकुमारकथायामुपदिष्टैव । संप्रति तु राजीमतीकथा,—

रैवताधो गिरिपुरं नामास्ति पुरमद्भुतम् । यत्रासिरेव निस्त्रिंशो बाण एव च मार्गणः ॥ १ ॥ भोजवृष्णिकुलाम्भोजनभोमणिनिभो नृपः । उग्रसेनोऽभवत् तस्मिन्नुग्रतेजोऽरिभूभुजाम् ॥ २ ॥ राजीमतीति राजीववदना तस्य नन्दना । बभूव धारिणीकुक्षिसरसी कलहंसिका ॥ ३ ॥ यदङ्गे युगरूपं यत् तद् मिथः प्रथितोपमम् । एकरूपं तु यत् तस्योपमानं मुकुरे यदि ॥ ४ ॥ अनुरूपो वरोऽमुष्याः कः स्यादित्युग्रचिन्तया । उग्रसेनोऽभवद् व्यग्रमानसोऽनिशमेव सः ॥ ५ ॥

इतश्च द्वारकानाथो नेमिनाथान्वितस्तदा । ग्रीष्मे सान्तःपुरो रन्तुं रैवतोद्यानमागमत् ॥ ६ ॥ चन्द्रार्काविव ताराभिस्तत्र तौ

प्रत्ययाय ततः सीता विशतु ज्वलितेऽनले ॥१९१॥ इत्युक्त्वाऽखानयद् रामो गर्तं हस्तशतत्रयम् । पुरुषद्वयदघ्नं चापूरयच्चन्दनेन्धनैः ॥ १९२ ॥ तं दीप्रदहनं भृत्यैः कारयित्वैष भीषणम् । दध्यौ मनसि हा ! कष्टं किं ममेदमुपस्थितम् ? ॥ १९३ ॥ इयं महासती नूनं निःशङ्काग्नौ प्रवेक्ष्यति । दैवस्येव हि दिव्यस्य प्रायेण विषमा गतिः ॥ १९४ ॥ मया सहास्या निर्वासो हरणं रावणेन च । वने त्यागो मया भूयो भूयोऽप्येतच्च मत्कृतम् ॥ १९५ ॥ एवं सोऽचिन्तयद् यावत् तावत् सीतोपपावकम् । स्थित्वा स्मृत्वा च सर्वज्ञं चक्रे सत्यापनामिति ॥ १९६ ॥ हे लोकपाला लोकाश्च सर्वे शृणुत यद्यहम् । अन्यमभ्यलष रामात् तदाग्निर्मा दहत्वयम् ॥ १९७ ॥ अन्यथा तु सुखस्पर्शो वारीवास्त्विघतिवादिनी । झम्पां स्मृतनमस्कारा ददौ तस्मिन् हुताशने ॥ १९८ ॥ सा यावत् प्राविशत् तावद् विध्यातोऽग्निः स च क्षणात् । गर्तः स्वच्छपयःपूर्णः क्रीडावापीत्वमाययौ ॥ १९९ ॥ सीता त्वधिजलं पद्मोपरिसिंहासनस्थिता । तस्थौ पद्मेव सद्भावपुष्टशीलानुभावतः ॥ २०० ॥ ननृतुर्नारदाद्याः खे सीताशीलप्रशंसिनः । सीतोपरिष्टात् तुष्टाश्च पुष्पवृष्टिं व्यधुः सुराः ॥ २०१ ॥ अहो शीलमहो शीलं रामपत्न्या यशस्करम् । इति लोकप्रघोषोऽभूद् रोदःकुक्षिम्भरिः क्षणात् ॥ २०२ ॥ मातुः प्रभावं तं दृष्ट्वा मुदितौ लवणाङ्कुशौ । हंसाविव तरन्तौ तौ गत्वा सीतां प्रणेमतुः ॥ २०३ ॥ गत्वा सौमित्रिशत्रुघ्नभामण्डलविभीषणाः । सुग्रीवाद्याश्च वैदेहीं नमश्चक्रुः सभक्तयः ॥ २०४ ॥ सीतां समेत्य रामोऽपि गीतां त्रिभुवनैरपि । पश्चात्तापत्रपापूर्ण इत्यूचे रचिताञ्जलिः ॥ २०५ ॥ त्यक्तोग्रश्वापदेऽरण्येऽजीवस्त्वं स्वप्रभावतः । एकं दिव्यं तदप्यासीद् नाज्ञासिषमहं पुनः ॥ २०६ ॥ क्षान्त्वा सर्वं ममेदानीमिदमध्यास्स्व पुष्पकम् । चल स्ववेश्मने प्राग्वत् कुरु राज्यं मया सह ॥२०७॥ सीताप्यूचे न ते दोषो न च लोकस्य कश्चन । न चान्यस्यापि कस्यापि किन्तु मत्पूर्वकर्मणाम् ॥ २०८ ॥ निर्विण्णा कर्मणामीदृग्दुःखावर्तप्रदायिनाम् । उत्तमार्थं

कारयन् । विशालान् मण्डपानुच्चैस्तदन्तर्मञ्चधोरणीः ॥ १७४ ॥ तेषु चोपाविशन् भूपाः पौरामात्यादयोऽपि च । ते विभीषणसुग्रीव-प्रमुखाः खेचरा अपि ॥ १७५ ॥ ततो रामाज्ञयोत्थाय पुण्डरीकपुरे रयात् । गत्वा नत्वा च वैदेहीमित्युवाच कपीश्वरः ॥ १७६ ॥ त्वत्कृते प्रैषि रामेण विमानं देवि ! पुष्पकम् । इदानीमिदमध्यास्स्व रामोपान्तमुपेहि च ॥ १७७ ॥ साप्यूचेऽद्यापि मेऽरण्यत्यागदुःखं न शाम्यति । तत् कथं राममायामि भूयो दुःखान्तरप्रदम् ? ॥ १७८ ॥ नत्वा भूयोऽपि स प्राह मा कुपस्तव शुद्धये । समं पौरैर्नृपैः सर्वैर्मञ्चारूढोऽस्ति राघवः ॥ १७९ ॥ तेनेत्युक्ते पुराप्येषा जानकी शुद्धिकाङ्क्षिणी । आरुरोह विमानं तदयोध्यामाजगाम च ॥ १८० ॥ महेन्द्रोदयमुद्यानं समुपेत्योत्ततार सा । दत्तार्घा लक्ष्मणेनैत्य नमश्चक्रे नृपैरपि ॥ १८१ ॥ अग्रे निषद्य सौमित्रिर्नृपैः सममदोऽवदत् । निजां पुरीं निजं वेश्म प्रवेशाद् देवि ! पावय ॥ १८२ ॥ सीताप्यूचे प्राप्तशुद्धिः प्रवेक्ष्यामि पुरीमिमाम् । गृहं च नान्यथा वत्स ! निर्वादो यदि शाम्यति ॥ ॥ १८३ ॥ श्रुत्वेति राघवोऽभ्येत्य मैथिलीमथ शुद्धये । अन्वशाद् नन्वसावेनं स्मितपूर्वमदोऽवदत् ॥ १८४ ॥ दण्डमादौ विधायाद्य कुरुषे मत्परीक्षणम् । विचक्षणोऽसि काकुत्स्थ ! सज्जा तत्रापि नन्वहम् ॥ १८५ ॥ ऊचे विलक्षो रामोऽपि जाने दोषस्तवास्ति न । जनोत्पादितदोषस्योत्तारणायैवमुच्यते ॥ १८६ ॥ जगाद जानकी दिव्यपञ्चकं स्वीकृतं मया । विशामि वह्नौ ज्वलिते भक्षयाम्यथ तन्दुलान् ॥ १८७ ॥ तुलां समधिरोहामि तप्तं कोशं पिबामि च । गृह्णामि जिह्वया फालं किं तुभ्यं रोचते वद ? ॥ १८८ ॥ युग्मम् ॥ अत्रान्तरेऽभ्यधुः पौरा दूरादभ्येत्य राघवम् । इयं महासती सीता देव ! किं दिव्यकर्मणा ? ॥ १८९ ॥ रामोऽप्युवाच हे लोकाः ! मर्यादा कापि नास्ति वः । संकल्प्य दोषं युष्माभिरेवेयं दूषिता पुरा ॥ १९० ॥ भूयोऽपि गृह्णतां दोषमर्गला कापि नास्ति वः

---

१ अत्र 'जातु' इति हेमचन्द्रकृतरामायणोक्तः पाठः सुयुक्तः प्रतिभाति ।

वंशोद्द्योतनाय न कस्य हि ? ॥ १५५ ॥ सीताकुक्षिभवौ पुत्रौ तवेमौ लवणाङ्कुशौ । त्वां द्रष्टुमागतावत्र युद्धव्याजाद् द्विपौ तु न ॥ १५६ ॥ अभिज्ञानमिदं तेऽत्र यच्चक्रं प्रबभूव न । मुधाऽभूद् भारत चक्रं पुरा बाहुबलावपि ॥ १५७ ॥ त्यागात् प्रभृति सीताया वृत्तान्तं नारदोऽखिलम् । पुत्रयुद्धान्तमाचख्यौ विश्वविस्मयदायकम् ॥ १५८ ॥ रामोऽथ विस्मयव्रीडाखेदहर्षसमाकुलः । मुमूर्च्छ चन्दनाम्भोभिः सिक्तः संज्ञामवाप च ॥ १५९ ॥ लक्ष्मणेन सहोदश्रुः पुत्रवात्सल्यपूरितः । जगाम रामो लवणाङ्कुशयोः संनिधौ जवात् ॥ १६० ॥ स्यन्दनादवतीर्याशु विनीतौ लवणाङ्कुशौ । रामलक्ष्मणपादेषु मुक्तास्त्रौ पेततुः क्रमात् ॥ १६१ ॥ तावालिङ्ग्य निजोत्सङ्गे निवेश्य च रघूद्वहः । मूर्ध्नि चुम्बन् रुरोदोच्चैः शोकस्नेहवशंवदः ॥ १६२ ॥ रामोत्सङ्गाद् निजोत्सङ्गं तावारोप्याथ लक्ष्मणः । चुम्बन् शिरसि बाहुभ्यां परिरेभेऽश्रुपूर्णदृक् ॥ १६३ ॥ अपरेऽपि हि भूपालाः सैन्ययोरुभयोरपि । प्रमोदन्ते स्म संभूय विवाहमिलिता इव ॥ १६४ ॥ भामण्डलनृपाख्यातो वज्रजङ्घनृपोऽपि हि । ननाम रामसौमित्री विनीतश्चिरपत्तिवत् ॥ १६५ ॥ रामस्तमालपैवं त्वं भामण्डलसंनिभः । पुत्रौ यो वर्धयंस्त्वं मेऽनैषीः काष्ठामिमां च यः ॥ १६६ ॥ इत्युक्त्वा पुष्पकारूढः पद्मनाभः सलक्ष्मणः । अर्धासनोपविष्टाभ्यां पुत्राभ्यां प्राविशत् पुरीम् ॥ १६७ ॥ पौरैरालोक्यमानश्च स्तूयमानश्च साङ्गजः । जगाम रामः स्वं धाम पुष्पकादुत्ततार च ॥ १६८ ॥

अथ रामं सुमित्राभूः कपीश्वरविभीषणौ । हनुमानङ्गदश्चान्ये संभूयैवं व्यजिज्ञपन् ॥ १६९ ॥ परदेशे स्थिता देवी त्वयैव रहिताऽधुना । विनामूभ्यां कुमाराभ्यामतिकष्टेन तिष्ठति ॥ १७० ॥ यद्यादिशसि तद् भर्तरानयामोऽद्य तामिह । विपत्स्यतेऽन्यथा सा तु पतिपुत्रोज्झिता सती ॥ १७१ ॥ रामः किञ्चिद् विचिन्त्योचे सीतेहानीयते कथम् ? । लोकापवादोऽलीकोऽपि बलवानन्तरायकृत् ॥१७२॥ प्रत्ययं सर्वलोकानां दिव्यं देवी करोतु सा । शुद्धया च तया सार्धं गृहवासोऽस्तु मे पुनः ॥ १७३ ॥ एवमस्त्वित्युदित्वा ते पुर्या बहिर्-

मेने यानमयोध्यायामिदानीमनुतिष्ठ तत् ॥ १३६ ॥ प्रयाणभम्भा वाद्यन्तां छाद्यन्तां च दिशो बलैः । त्यक्ता येनावयोर्माता वीक्ष्यस्तस्याद्य
६०। विक्रमः ॥ १३७ ॥ सीतापि सद्यो रुदती जगादेदं सगद्गदम् । वत्सौ ! केयमनर्थेच्छा युवयोः कर्मणाऽमुना ? ॥ १३८ ॥ वीरौ पितृपितृव्यौ
५। वां दुर्जयौ द्युसदामपि । यकाभ्यां निहतो रक्षःपतिस्त्रैलोक्यकण्टकः ॥ १३९ ॥ उत्कण्ठा पितरं द्रष्टुं युवयोर्यदि बालकौ ! । विनीती-
भूय तद् यातं पूज्ये हि विनयोऽर्हति ॥ १४० ॥ ततस्तावेवमूचाते विनयः क्रियते कथम् ? । तस्मिन् वैरिपदं प्राप्ते त्वत्त्याजिनि पित-
र्यपि ? ॥ १४१ ॥ पुत्रौ तवावामायाताविति तस्य पुरः कथम् । गत्वा स्वयं वदिष्यावस्तस्याप्येतत् त्रपाकरम् ॥ १४२ ॥ आनन्दजनकं
तस्य जनकस्यापि दोष्मतः । युद्धाह्वानं तु युज्येत कुलद्वययशस्करम् ॥ १४३ ॥ अभिधायेति सीतायां रुदत्यामपि चेलतुः । महोत्साहौ
महासैन्यौ तौ रामनगरी प्रति ॥ १४४ ॥ क्रमेण गत्वा सेनाभी रुन्धानौ सर्वतो दिशः । तावूषतुरुपायोध्यं योद्धुकामौ महाभुजौ ॥ १४५ ॥
श्रुत्वाऽकस्मात् पुरोपान्ते तत्पारक्यमुपागतम् । संगरायोदतिष्ठेतां ससैन्यौ रामलक्ष्मणौ ॥ १४६ ॥ इतश्च तौ क्षणेनापि दोष्मन्तौ लव-
णाङ्कुशौ । रामसैन्यमगाहेतामिन्द्रोपेन्द्राविवार्णवम् ॥ १४७ ॥ पेततुर्यत्र यत्रैतौ वने मत्ताविव द्विपौ । रथी सादी निषादी वा न तत्रा-
स्थाद् धृतायुधः ॥ १४८ ॥ हतविद्रुतमेवं च रामसैन्यं विधाय तौ । राममस्खलितौ गत्वाऽयोधिषातां सलक्ष्मणम् ॥ १४९ ॥ भ्राम्यदर्क-
भ्रमकरं भ्रमयित्वाऽथ लक्ष्मणः । मुमोच कुपितश्चक्रमङ्कुशाय जयेच्छया ॥ १५० ॥ आपतत् ताडयामासानेकशोऽस्त्रैस्तदङ्कुशः । लवणो-
ऽपि तथैवोच्चैर्न तु तत् प्रत्यहन्यत ॥ १५१ ॥ वेगेनापत्य तच्चक्रमङ्कुशस्य प्रदक्षिणाम् । कृत्वा लक्ष्मणहस्तेऽगात् पुनर्विद्युदिवाम्बुदे ॥ १५२ ॥
चिन्तयामासतुश्चैवं विषण्णौ रामलक्ष्मणौ । किं सीरिशार्ङ्गिणावेतौ न त्वावामिह भूतले ? ॥ १५३ ॥ नारदोऽत्रान्तरे तत्राभ्येत्य भाम-
ण्डलान्वितः । विहस्य निजगादेति खिन्नं रामं सलक्ष्मणम् ॥ १५४ ॥ हर्षस्थाने विषादोऽयं युवयोः किं रघूद्वहौ ? । पुत्रात् पराजयो

पृथुर्यावद् नरेश्वरः । ऊचतुस्तावदेवं तौ विस्मेरौ रामनन्दनौ ॥ ११७ ॥ अपरिज्ञातवंशाभ्यामप्यावाभ्यामिहाहवे । विज्ञातवंशजा यूयं पलायध्वे कथं नु भोः ? ॥ ११८ ॥ इति तद्वचनं श्रुत्वा वलित्वा पृथुरब्रवीत् । व्यज्ञायि वंशो युष्माकं विक्रमेणामुना मया ॥ ११९ ॥ संधानं वज्रजङ्घेन समक्षं भूभुजां ततः । चक्रे पृथुनृपः पुत्र्याः स्पृहयन्नङ्कुश वरम् ॥ १२० ॥ शिबिरं न्यस्य तत्रास्थाद् वज्रजङ्घनरेश्वरः । आगाच्च नारदमुनिः सच्चक्रे तेन चोच्चकैः ॥ १२१ ॥ वज्रजङ्घो निषण्णेषु राजसूवाच नारदम् । अङ्कुशाय पृथुर्दास्यत्यसौ कन्यां निजां मुने ! ॥ १२२ ॥ लवणाङ्कुशयोर्वंशमस्मत्संबन्धिनोऽस्य तत् । आख्याहि ज्ञातजामातृवंशो येनैष तुष्यति ॥ १२३ ॥ अथोचे नारदः स्मित्वा वंशं को वेत्ति नानयोः ? । यस्योत्पत्त्यादिकन्दः स भगवान् वृषभध्वजः ॥ १२४ ॥ पौलस्त्यवधनाट्यैकसूत्रधारौ धरातले । को वेत्ति नानयोस्तातौ दक्षिणौ रामलक्ष्मणौ ? ॥ १२५ ॥ गर्भस्थयोरप्यनयोरयोध्यालोकजन्मनः । निर्वादाच्चकितेनोच्चैस्त्यक्ता रामेण जानकी ॥ १२६ ॥ अथाङ्कुशो हसित्वोचे ब्रह्मन् ! न खलु साधु तत् । चक्रे रामेण वैदेहीं त्यजता दारुणे वने ॥ १२७ ॥ भूयांसि ह्यपवादस्य कारणानि निराकृतौ । भवन्ति तत्र किन्त्वेतद् विद्वानपि चकार सः ॥ १२८ ॥ पप्रच्छ लवणोऽथैवं दूरे कियति सा पुरी । यस्यां वसति मे तातः सानुज सपरिच्छदः ? ॥ १२९ ॥ मुनिरूचे तव पिता यस्यां विश्वैकनिर्मलः । साऽयोध्या पूरितः षष्टिर्युग्योजनशतं खलु ॥ १३० ॥ वज्रजङ्घमथोवाच लवणः प्रश्रयं श्रयन् । इच्छावस्तत्र गत्वावां प्रेक्षितुं रामलक्ष्मणौ ॥ १३१ ॥ प्रतिपद्य स तद्वाचमङ्कुशं पर्यणाययत् । महोत्सवात् पृथो राज्ञः पुत्र्या कनकमालया ॥ १३२ ॥ वज्रजङ्घपृथुभ्यां तावन्वितौ लवणाङ्कुशौ । साधयन्तौ बहून् देशान् पुण्डरीकपुरं गतौ ॥ १३३ ॥ जग्मतुः स्वगृहं वीरौ भूपवीरैर्वृताविमौ । प्रणेमतुश्च जानक्याश्चरणौ विश्वपावनौ ॥ १३४ ॥ चुचुम्ब मूर्ध्नि तौ सीता स्नपयन्ती मुदश्रुभिः । रामलक्ष्मणयोस्तुल्यौ भूयास्तमिति चावदत् ॥ १३५ ॥ ऊचतुर्वज्रजङ्घं तौ मातुल ! प्राक् त्वयाऽऽवयोः ।

इतश्च रामः सेनान्यस्तत् तथाकर्ण्य मूर्च्छितः । संभ्रमाल्लक्ष्मणेनैत्य सिषिचे चन्दनाम्भसा ॥९८॥ उत्थाय विललापैवं क्व सा सीता महासती ? । सदा खलानां लोकानां वचसा हा ! मयोज्झिता ॥ ९९ ॥ अथोचे लक्ष्मणः स्वामिंस्तस्मिन्नद्यापि सा वने । सती निजप्रभावेण त्राता नूनं भविष्यति ॥१००॥ गत्वा गवेषयित्वा च स्वयमानीयतां प्रभो ! । सीतादेवी वियोगार्ता नैव यावद् विपद्यते ॥१०१॥ श्रुत्वैवं सह तेनैव सेनान्याऽन्यैश्च खेचरैः । रामोऽगाद् व्योमयानेन तत्रारण्येऽतिदारुणे ॥ १०२ ॥ प्रतिस्थलं प्रतिजलं प्रतिशैलं प्रतिद्रुमम् । रामो गवेषयामास ददर्श न तु जानकीम् ॥ १३० ॥ सीताप्राप्तौ विमुक्ताशो निवृत्य स्वपुरीं ययौ । प्रेतकार्यं च सीताया रामोऽकार्षीदुदश्रुदृक् ॥ १०४ ॥ सैका हृदि दृशोरग्रे तस्थौ रामस्य वाचि च । क्वापि तिष्ठति सीतेति तथापि न विवेद सः ॥ १०५ ॥

इतश्च तत्र वैदेही सुषुवे युग्मिनौ सुतौ । नामतोऽनङ्गलवणं मदनाङ्कुशमप्यथ ॥ १०६ ॥ वज्रजङ्घस्तयोश्चक्रे जन्मनाममहोत्सवौ । स्वपुत्रलाभादधिकं मोदमानो महामनाः ॥ १०७ ॥ तावुल्लापनसंज्ञाभ्यां ख्यातौ कुशलवाविति । सीतासुतावजायेतामेकयोक्त्या कुशीलवौ ॥ १०८ ॥ धात्रीभिः पञ्चभिः पाल्यमानौ बाल्यवयोऽतिगौ । कलाग्रहणयोग्यौ तावजायेतां महाभुजौ ॥ १०९ ॥ तावधीताखिलकलौ प्रपेदाते च यौवनम् । नूतनाविव चन्द्रार्काविन्द्रोपेन्द्राविवाथवा ॥ ११० ॥ वज्रजङ्घः शक्तिचूलां पुत्रीं लक्ष्मीवतीभवाम् । कन्या द्वात्रिंशतं चान्या लवणेनोदवाहयत् ॥१११॥ सोऽङ्कुशाय ययाचे तु पृथ्वीपुरपतेः पृथोः । जाताममृतवत्याथो कन्यां कनकमालिकाम् ॥११२॥ वंशो न ज्ञायते यस्य तस्मै स्वदुहिता कथम् ? । दीयतामित्यभाषिष्ट पृथुः पृथुपराक्रमः ॥ ११३ ॥ वज्रजङ्घस्तदाकर्ण्य तं क्रोधादभ्यषेणयत् । परैरतिबलैर्वज्रजङ्घसैन्यं त्वभज्यत ॥ ११४ ॥ संक्रुद्धौ मातुलचमूभङ्गेन लवणाङ्कुशौ । निरङ्कुशाविव गजौ प्रणिघ्नन्तावधावताम् ॥ ११५ ॥ तयोरोजस्विनो रंहो मनागपि न सेहिरे । प्रतिकूला भुजभृतो द्रुमा सिन्ध्वोघयोरिव ॥ ११६ ॥ अभज्यत ससैन्योऽपि

क्षिति सेनानीर्नत्वेनां ववले बलात् ॥ ७९ ॥

अथ सीता भयोद्भ्रान्ता बभ्रामेतस्ततो वने । आत्मानमेव निन्दन्ती पूर्वदुष्कर्मदूषितम् ॥ ८० ॥ भूयो भूयश्च रुदती स्खलन्ती च पदे पदे । गच्छन्ती पुरतोऽपश्यद् महासैन्यं समापतत् ॥ ८१ ॥ मृत्युजीवितयोस्तुल्याशया वीक्ष्यापि तद्बलम् । सीता तस्थावभीतेव नमस्कारपरायणा ॥ ८२ ॥ तां दृष्ट्वा विभयांचक्रुः सैनिकाः प्रत्युतापि ते । का नाम दिव्यरूपेयं भूस्थितेत्यभिभाषिणः ॥ ८३ ॥ सीताया रुदितं श्रुत्वा स्वरवित् तद्यसूनृपः । इयं महासती कापि गुर्विणी चेत्यवोचत ॥ ८४ ॥ कृपालुः स महीपालः सीतोपान्तं जगाम च । सीताप्याशङ्किता तस्य स्वं नेपथ्यमढौकयत् ॥ ८५ ॥ राजाप्येवमभाषिष्ट मा भैषीरत्वं मनागपि । तवैव भूषणान्येतान्यङ्गे तिष्ठन्तु हे स्वसः ! ॥८६॥ का त्वं कस्त्वामिहात्याक्षीद् निर्घृणेभ्योऽपि निर्घृणः । आख्याहि मा स्म शङ्किष्ठास्त्वत्कष्टेनास्मि कष्टितः ॥ ८७ ॥ तन्मन्त्री सुमतिर्नाम सीतामेत्याब्रवीदिति । गजवाहनराजस्य बन्धुदेव्याश्च नन्दनः ॥ ८८ ॥ नृपतिर्वज्रजङ्घोऽय पुण्डरीकपुरेश्वरः । महार्हतो महासत्त्व. परनारीसहोदरः ॥ ८९ ॥ गजान् ग्रहीतुमत्रैत्य कृतार्थीभूय च व्रजन् । त्वद्दुःखदुःखितोऽत्रागाद् दुःखमाख्याहि तद् निजम् ॥ ९० ॥ सीतापि स्वस्य वृत्तान्तं विश्वस्याभिदधेऽखिलम । रुदती रोदयन्ती तौ कृपालू राजमन्त्रिणौ ॥ ९१ ॥ निर्व्याजो व्याजहारैवं राजा धर्मस्वसासि मे । एकधर्मे प्रपन्नाः स्युर्मिथो बान्धव एव यत् ॥ ९२ ॥ मम भामण्डलस्येव भ्रातुरेहि तदौकसि । स्त्रीणां पतिगृहादन्यत् पद भ्रातृनिकेतनम् ॥ ९३ ॥ रामोऽपि लोकवादेन त्वामत्याक्षीद् न तु स्वयम् । पश्चात्तापेन सोऽप्यद्य मन्ये त्वमिव कष्टभाक् ॥ ९४ ॥ गवेषयिष्यत्यचिरात् त्वां सोऽपि विरहातुरः । चक्रवाक इवैकाकी ताम्यन् दशरथात्मजः ॥ ९५ ॥ इत्युक्त्वा निर्विकारेण तेनामेत्यभिधायिनी । सीतारुरोह शिबिकां सद्यस्तदुपनायिताम् ॥ ९६ ॥ पुण्डरीकपुरं चागाद् मिथिलामपरामिव । अस्थाच्च सततं धर्मशीला तद्दत्तवेश्मनि ॥ ९७ ॥

कृत्वा सम्मेतयात्रायाश्छद्म तस्याः स दोहदः ॥ ६० ॥ गङ्गापरतटे रामस्त्वामस्ति प्रतिपालयन् । इति वाच्यं पुरस्तस्या यथैतीयं त्वया सह ॥ ६१ ॥ सेनानीरपि सम्मेतयात्रादि स्वामिशासनम् । आख्याय सीतामारोप्य रथे रथ्यानतत्वरत् ॥ ६२ ॥ गङ्गासागरमुत्तीर्यारण्ये सिंहनिनादके । गत्वा कृतान्तवदनस्तस्थौ किञ्चिद् विचिन्तयन् ॥ ६३ ॥ सास्रं म्लानमुखं तं च वीक्ष्य सीताऽब्रवीदिति । कथमित्थं स्थितोऽसि त्वं सशोक इव दुर्मनाः ॥ ६४ ॥ कृतान्तः कथमप्यूचे दुर्वचं वच्म्यहं कथम् ? । दुष्करं कृतवांश्चैतत् प्रेष्यभावेन दूषितः ॥ ६५ ॥ राक्षसावाससंवासनिर्वादाल्लोकजन्मनः । भीतेन देवि ! देवेन वनेऽस्मिंस्त्याजितासि हा ! ॥ ६६ ॥ जनापवादमाकर्ण्य रामं त्वत्त्याजनोद्यतम् । न्यषेधील्लक्ष्मणो देवि ! निपत्य पदयोश्चिरम् ॥ ६७ ॥ सिद्धाज्ञया निषिद्धश्च रामेण स रुदन्नगात् । अहं तु हन्त ! कार्येऽस्मिन् हतकः प्रेषितोऽस्मि हा ! ॥ ६८ ॥ वनेऽस्मिन् श्वापदाकीर्णे मृत्योरेकनिकेतने । जीविष्यसि मया त्यक्ता स्वप्रभावेण केवलम् ॥ ६९ ॥ श्रुत्वेति रथत' सीता मूर्च्छिता न्यपतद् भुवि । मृतेति बुद्ध्या सेनानीः पापमन्यो रुरोद सः ॥ ७० ॥ सीतापि वनवातेन कथञ्चित् प्राप चेतनाम् । भूयो भूयोऽप्यमूर्च्छच्च चेतनामाससाद च ॥ ७१ ॥ महत्यामथ वेलायां सुस्थीभूयेत्युवाच सा । इतोऽयोध्या कियद्दूरे रामस्तिष्ठति कुत्र वा ? ॥ ७२ ॥ सेनानीरवदद् दूरेऽयोध्या किं पृष्टया तया ? । उग्राज्ञस्य च रामस्य पर्याप्तं देवि ! वार्त्तया ॥ ७३ ॥ इति श्रुत्वापि सा रामभक्ता भूयोऽप्यभाषत । भद्र ! मद्वाचिकमिदं शंसे रामस्य सर्वथा ॥ ७४ ॥ यदि निर्वादभीतस्त्वं परीक्षां नाकृथाः कथम् ? । शङ्कास्थाने हि सर्वोऽपि दिव्यादि लभते जनः ॥ ७५ ॥ अनुभोक्ष्ये स्वकर्माणि मन्दभाग्या वनेऽप्यहम् । नानुरूपं त्वकार्षीस्त्वं विवेकस्य कुलस्य च ॥ ७६ ॥ इत्युक्त्वा मूर्च्छिता भूमौ पतितोत्थाय चाब्रवीत् । मया विना कथं रामो जीविष्यति हतास्मि हा ? ॥ ७७ ॥ रामाय स्वस्त्यथाशंसेराशिष लक्ष्मणाय च । शिवास्ते सन्तु पन्थानो वत्स ! गच्छोपराघवम् ॥ ७८ ॥ इयमेव सतीधुर्या भक्ता येदृश्यपि प्रभौ । चिन्तय-

त्येवं प्रवदामो वयं तथा । युक्तियुक्तं प्रवादं तद् मा सहस्व रघूद्वह ! ॥ ४१ ॥ आजन्मोपार्जितां कीर्त्तिं निजं कुलमिवामलम् । प्रवादसहनेन त्वं मा देव ! मलिनीकृथाः ॥ ४२ ॥ कलङ्कस्यातिथीभूतां सीतां निश्चित्य राघवः । सद्योऽभूद् दुःखतूष्णीकः प्रायः प्रेमातिदुस्त्यजम् ॥ ४३ ॥ धैर्यमालम्ब्य काकुत्स्थस्तानुवाच महत्तरान् । साधु व्यधापि युष्माभिर्न भक्ताः क्वाप्युपेक्षकाः ॥ ४४ ॥ न स्त्रीमात्रकृते जातु सहिष्येऽहमिहायशः । इति रामः प्रतिज्ञाय विससर्ज महत्तरान् ॥ ४५ ॥ निशायामथ काकुत्स्थः प्रच्छन्नोऽसिलतासखः । जनापवादं जानक्याः स्वयं श्रोतुं पुरेऽभ्रमत् ॥ ४६ ॥ यावच्चर्मकृतः शालासमीपे कस्यचिद् ययौ । तावदस्याङ्गना प्राप चिरेण प्रतिवेश्मनः ॥ ४७ ॥ युग्मम् ॥ पादयोर्व्यङ्गकेनैतां हत्वा चर्मकृदूचिवान् । अरे ! त्वं कियतीं वेलामस्था रण्डे ! निवेदय ॥ ४८ ॥ सोचे कीदृग् वराकस्त्वं रामेण रमणी निजा । पराम्स्या रावणगृहादानीयान्तःपुरी कृता ॥ ४९ ॥ मुहूर्त्तमात्रमपि न क्षमते तु भवान् मम । सोऽप्यूचे क्षमतां रामः स्त्रीजितोऽहं तु नेदृशः ॥ ५० ॥ श्रुत्वेति जानकीजानिः संतापी हृद्यचिन्तयत् । स्त्रीकृते धिक्कृत नीचेभ्योऽपि रामः शृणोति हा ॥ ५१ ॥ जाने महासती सीता स्त्रीलोलः स च रावणः । कुलं च निष्कलङ्कं मे हा रामः किं करोत्वसौ ? ॥ ५२ ॥ ध्यात्वेति गृहमागत्य सीतां त्यक्तुमना बलः । मन्त्रयामास सौमित्रिं तत्तथाख्यानपूर्वकम् ॥ ५३ ॥ ऊचे च लक्ष्मणो लोकगिरा सीतां स्म मा त्यज । यथा तथापवदिता यदबद्धमुखो जनः ॥ ५४ ॥ लोकः सौराज्यस्वस्थोऽपि राजदोषपरो भवेत् । शिक्षणीयो न चेत् तन्नोपेक्षणीयः स भूभुजाम् ? ॥ ५५ ॥ रामोऽप्यूचे सत्यमेतदीदृग्लोकः सदापि हि । सर्वलोकविरुद्धं तु त्याज्यमेव यशस्विना ॥ ५६ ॥ इत्युक्त्वोवाच सेनान्यं कृतान्तवदनं बलः । अरण्ये त्यज्यतां क्वापि सीतेयं गर्भवत्यपि ॥ ५७ ॥ पतित्वा रामपादेषु बभाषे लक्ष्मणो रुदन् । सीतादेव्या महासत्यास्त्यागोऽयमुचितो नहि ॥ ५८ ॥ नातः परं त्वया वाच्यमिति रामेण भाषिते । लक्ष्मणोऽगाद् निजावासं वासश्छन्नमुखो रुदन् ॥ ५९ ॥ रामोऽन्वशाच्च सेनान्यमरे सीतां वने नय ।

सीतैकदा ऋतुस्नाता स्वप्ने दृष्टवती निशि । च्युतौ विमानाच्छरभौ प्रविशन्तौ निजानने ॥ २३ ॥ रामोऽप्याख्यत् तयाऽऽख्याते वीरौ ते भाविनौ सुतौ । च्युतौ विमानाच्छरभौ यत्तु तद् न मुदे मम ॥ २४ ॥ धर्मस्य ते च माहात्म्यात् सर्वं भावि शुभं प्रभो। । इत्यूचे जानकी देवी तदा गर्भं बभार च ॥ २५ ॥ सम्मेतशैलयात्रायै जातं दोहदमात्मनः । रामाय सा तदाचख्यौ सोऽपि तत्पूर्त्तिमिष्टवान् ॥ २६ ॥

अत्रान्तरे च सीताया दक्षिणं चक्षुरस्फुरत् । आचचक्षे च सद्योऽपि साशङ्का राघवाय सा ॥ २७ ॥ नेदं साध्विति रामेणाख्याते सीताऽब्रवीदिति । किं रक्षोद्वीपवासाद् मे संतुष्टोऽद्यापि नो विधिः ? ॥२८॥ त्वद्वियोगभवाद् दुःखाद् दुःखमद्यापि मेऽधिकम् । किमसौ दास्यति विधिर्निमित्तं नैतदन्यथा ॥ २९ ॥ रामोऽपि तामुवाचैवं देवि ! मा खेदमुद्वह । अवश्यमेव भोक्तव्ये कर्माधीने सुखासुखे ॥ ३० ॥ तद् गच्छ मन्दिरे स्वस्मिन् देवानामर्चनां कुरु । प्रयच्छ दानं पात्रेभ्यो धर्मः शरणमापदि ॥ ३१ ॥ सीतापि सदने गत्वा संयमेन महीयसा । अर्हतोऽपूजयद् दानमवदातवती ददौ ॥ ३२ ॥ रघुनाथमथाजग्मू राजधानीमहत्तराः । यथाभूतपुरीवृत्तकीर्त्तनैकाधिकारिणः ॥ ३३ ॥ नत्वा रामाय ते तस्थुः कम्पमानाङ्गयष्टयः । न तद् विज्ञपयामासू राजतेजो हि दुस्सहम् ॥ ३४ ॥ तानूचे रामभद्रोऽपि भो भोः पुरमहत्तराः ! । अभयं वो ब्रुवाणानामेकान्तहितवादिनाम् ॥ ३५ ॥ तेष्वाद्यः सर्वसंवित्त्या विजयाख्यो महत्तरः । इति विज्ञपयामास सावष्टम्भः प्रभोर्गिरा ॥ ३६ ॥ स्वामिन्नवश्यविज्ञप्यं यदि विज्ञप्यते नहि । वञ्चितः स्यात् तदा स्वामी विज्ञप्तं चातिदुःश्रवम् ॥३७॥ देव ! देव्यां प्रवादोऽस्ति घटते दुर्घटोऽपि हि । युक्त्यापि यद् घटामेति श्रद्धेयं तद् मनीषिणा ॥ ३८ ॥ तथा हि जानकी हृत्वा रावणेन रिरंसुना । एकैव निन्ये तद्वेश्म न्यवात्सीच्च चिरं प्रभो ! ॥३९॥ सीता रक्ता विरक्ता वा संवित्त्या वा प्रसह्य वा । स्त्रीलोलेन दशास्येन नूनं स्याद् भोगदूषिता ॥४०॥ लोकोऽपि प्रवद-

शट्टितोऽपतत् ॥ ३ ॥ इयं महासती सीता जयत्विति नभोऽङ्गणे । तदानीं सिद्धगन्धर्वाः स्फुरत्तोषमघोषयन् ॥ ४ ॥ लक्ष्मणोऽश्रुजलैः प्रीतमानसः क्षालयन्निव । सीतादेव्या नमश्चक्रे क्रमाम्भोजद्वयीं तदा ॥ ५ ॥ चिरं जय चिरं जीव चिरं नन्द मदाशिषा । इति ब्रुवाणा वैदेही जघ्रौ शिरसि लक्ष्मणम् ॥ ६ ॥ भामण्डलो नमश्चक्रे सीतां सापि तमञ्जसा । आशिषा नन्दयामास महासाध्वीशिरोमणिः ॥ ७ ॥ स्वनामाख्यानपूर्वं च लङ्केश्वरकपीश्वरौ । हनुमानङ्गदोऽन्येऽपि नेमुर्जनकनन्दिनीम् ॥ ८ ॥ पार्वणेन शशाङ्केन चिरात् कुमुदिनीव सा । रामेण जानकी रेजे विकस्वरमुखी तदा ॥ ९ ॥ धर्मार्थाविव सत्कीर्त्या सीतयाऽथ समन्वितौ । आरुह्य पुष्पकं प्रीतौ प्रतस्थाते रघूद्वहौ ॥ १० ॥ समदोद्ग्रीवसुग्रीवभामण्डलविभीषणैः । अन्वीयमानौ नगरीमयोध्यामीयतुश्च तौ ॥ ११ ॥ अभ्येत्य भरतः प्रीतः सानुजोऽप्यतिरंहसा । ननाम राममुद्दामभक्त्या स न्यस्तमस्तकः ॥ १२ ॥ पादयोः पतितं रामो भरतं साश्रुलोचनम् । परिरेभे समुत्थाय मूर्ध्नि चुम्बन् मुहुर्मुहुः ॥ १३ ॥ शत्रुघ्नमपि पादान्ते लुठन्तं रघुपुङ्गवः । उत्थाप्य परिमृज्य स्वांशुकेन परिषस्वजे ॥ १४ ॥ ततो भरतशत्रुघ्नौ नमन्तौ लक्ष्मणोऽपि हि । प्रसारितभुजो गाढमालिलिङ्ग ससंभ्रमम् ॥ १५ ॥ अथो भरतशत्रुघ्नौ साम्रौ सीतां प्रणेमतुः । सापि तौ प्रीणयामास सर्वसंपज्जुषाशिषा ॥ १६ ॥ तूर्येषु व्योम्नि भूमौ च वाद्यमानेषु भूरिशः । अयोध्यां रामसौमित्री प्रीतौ प्राविशतामथ ॥ १७ ॥ सोत्कण्ठमुन्मुखैः पौरैर्मयूरैर्मुदिराविव । वीक्ष्यमाणावनिमिषैः स्तूयमानौ च साश्रुभिः ॥ १८ ॥ पौरीभिर्दीयमानार्घौ क्रियमाणनिरुञ्छनौ । स्व प्रासादं प्रसन्नास्यौ जग्मतू रामलक्ष्मणौ ॥ १९ ॥ रामोऽपराजितां देवीं मातृवर्गमथापरम् । नमश्चक्रे ससौमित्रिस्ताभिराशीर्भिरैध्यत ॥ २० ॥ अथ सीता नता श्वश्रूजनायाश्रूणि मुञ्चते । तेनाभिनन्दिता वत्से ! भूया वीरप्रसूरिति ॥ २१ ॥ सौमित्रेरर्धचक्रित्वाभिषेकेऽथ कृते हली । रामो व्यसृजदात्मातमदेशेभ्यः सुहृदो नृपान् ॥ २२ ॥

नत्वा निषिध्य युद्धश्रद्धालुः स्वयमथोत्तस्थे ॥ १४४ ॥ शक्तिविगमादपीद्धं सौमित्रेः समितिशौर्यमालोक्य । सस्मार विजयरूपां बहुरूपां रावणो विद्याम् ॥ १४५ ॥ स्मृतमात्रायां तस्यामुपस्थितायां निजानि रूपाणि । बहुधा विचकारायुधवन्ति दशास्योऽतिभीमानि ॥ १४६ ॥ भूमौ नभसि पुरस्तात् पृष्ठे पार्श्वद्वयेऽपि सौमित्रिः । अद्राक्षीत् पौलस्त्यानेवायुधवर्षिणो निबिडम् ॥ १४७ ॥ एकोऽप्यनेक इव तांस्तार्क्ष्यस्थो लक्ष्मणः शरैर्निशितैः । लघुसंधानी दूरापातीव निपातयामास ॥ १४८ ॥ सौमित्रिणा विधुरीकृतोऽथ दशकन्धरोऽर्धचक्री सः । सस्मार चक्रमस्त्रं तच्चागात् तत्करे सपदि ॥ १४९ ॥ भ्रमयित्वा शिरसि रुषाऽरुणेक्षणः पश्चिमाद्रिरिव भानुम् । पौलस्त्यस्तद् मुमुचे लक्ष्मणमभि पूर्वशलमिव ॥ १५० ॥ चक्रं परीय लक्ष्मणमस्य करे दक्षिणे समारोहत् । नारायणोऽयमष्टमहरिरिति घुष्टं च दिवि देवैः ॥ १५१ ॥

निहन्यतेऽसौ जगतां समक्षमक्षत्रकारी युधि जल्पतेति ।
तेनैव मूर्धा दशकन्धरस्य सौमित्रिणाऽलूयत लीलयैव ॥ १५२ ॥
हृष्यद्भिस्त्रिदशगणैः प्रसूनवृष्टिः सौमित्रेः शिरसि तदा व्यधीयतोच्चैः ।
साऽऽयान्ती गगनतलादलिप्रणादैस्तद्दोष्णोरिव गुणगीतमाततान ॥ १५३ ॥

॥ इति सीताचरितनाम्नि महाकाव्ये रामसीताविप्रलम्भरावणवधवर्णनो नाम तृतीयः सर्गः ॥

---

अतो दाशरथी लङ्काराज्ये न्यस्य बिभीषणम् । आत्मदर्शनसुप्रीतां कर्तुं सीतामगच्छताम् ॥ १ ॥ सा देवरमणोद्याने रामं वीक्ष्य सलक्ष्मणम् । जुगोप लज्जितात्मानं तन्वी वेण्यातिरूक्षया ॥ २ ॥ प्रीतिफुल्लतनोरस्या भिन्नकङ्कणकैतवात् । स्पर्धमानस्तदास्येन तदेन्दुः

भ्याम् । नक्तं नक्तंचरपतिराक्रान्तमनाः समजनिष्ट ॥ १२६ ॥ शक्त्याहते सुमित्रापुत्रे रामोऽप्यनाहतोऽमूर्च्छत् । सुग्रीवाद्युपचरितो मूर्च्छान्ते लक्ष्मणं च जगौ ॥१२७॥ तूष्णीं स्थितोऽसि किं त्वं प्रसीद वद वत्स ! बाधते किं ते ?। आख्याहि संशयाभिप्रायाय निजमग्रजं देव ! ॥१२८॥ एते त्वन्मुखवीक्षां सुग्रीवाद्या वितन्वते वत्स ! । तदमूननुगान् वचसा दृशापि किं नानुगृह्णासि ? ॥ १२९ ॥ प्रतिपन्नमस्ति भवता लङ्काराज्यं बिभीषणायास्मै । हा वत्स ! वद किमेवं तत् त्वं निश्चिन्त इव शेषे ? ॥ १३० ॥ हा वत्स ! गच्छ मा मामनुपालय तावदञ्जसा यावत् । हत्वा दशास्यमस्मै लङ्काराज्यं प्रयच्छामि ॥ १३१ ॥ इत्युक्त्वाऽऽस्फाल्य धनुर्यावद् रामोऽभि रावणं चलितः । तावद् बिभीषणेन प्रोचे नत्वा सबाष्पेन ॥ १३२ ॥ संरम्भं त्यज नायक ! मा भज सौमित्रिशक्तिहतिखेदम् । शक्त्याहतोपि जीवति यावद् भानूदयं पुरुषः ॥१३३॥ तद् मन्त्रतन्त्रविधिना प्रतिकाराय प्रयत्यतां नाथ ! । यावद् विभावरीयं विगलत्याशेव नास्माकम् ॥ १३४ ॥ रामेणामेत्युक्ते सुग्रीवाद्यास्तु राघवोपरितः । संनद्धाः सप्त चमूवप्रांस्तेनुश्चतुर्द्वारान् ॥१३५॥ अत्रान्तरे समेत्य प्रतिचन्द्रः खेचरः समाचख्यौ । स्वयमनुभूतं निर्गममुच्चैः शक्तेर्विशल्यातः ॥ १३६ ॥ श्रुत्वेत्थं रामगिरा भामण्डलहनुमदङ्गदाः सपदि । गत्वाऽऽनिन्युर्द्रोणद्रोणीधरतो विशल्यां ताम् ॥ १३७ ॥ तस्याः स्नानजलौघैरुत्तणतस्तत्क्षणाज्ज्वलन्त्युच्चैः । शक्तिर्निरगाल्लक्ष्मणहृदयादुदगाच्च मार्तण्डः ॥ १३८ ॥ मङ्गलतूर्यनिनादप्रमदः द्वेडाकरम्बितः प्रातः । समजायत कपिसैन्ये रावणवधनाट्यनान्दीव ॥ १३९ ॥ इत्थं राघवकटके पौलस्त्यः प्रमदकलकलं श्रुत्वा । क्रुद्धो योद्धुमचालीदपशकुनैर्वार्यमाणोऽपि ॥ १४० ॥ भूयोऽपि रामरावणबलयोरजनिष्ट समरसंरम्भः । उद्भटसुभटभुजाहतिरवचाकितदिगन्तदन्तीन्द्रः ॥ १४१ ॥ कुर्वन्तो जयकेलिं कपिवीराः समरकानने तस्मिन् । रक्षःशीर्षाण्युच्चैरपातयंस्तूलफलानीव ॥१४२॥ कृतोड्डीना ज्वालावती रजस्तमसि वैरिवदनाली । दीपालयपालिरिवाराजत रामं जयश्रियो द्रष्टुम् ॥ १४३ ॥ उत्तिष्ठमानमग्रजमुग्रजवेनाह्वाय सौमित्रिः ।

॥ ९० ॥ सेवापतितावेतौ रामः पुनरेव तत्र विनिवश्य । गत्वा सुवेलमजयद् नृपं सुवेलाद्रिशिरसि गतम् ॥ ९१ ॥ उपलब्धमनङ्गौजा हंसद्वीपेऽथ हंसरथनृपतिम् । जित्वा तत्रैवास्थाद् दाशरथिर्मोचितावासः ॥ ९२ ॥ रामोद्दीपिततेजःकाष्ठाकीर्णत्रिकूटचुल्लीस्था । लङ्कास्थाली कलकलमचकलदथ जातुधानाद्याः ॥ ९३ ॥ समनीनहंस्तथोच्चैः सामन्ता रावणस्य रणकरणे । हस्तप्रहस्तसारणमारीचमयादयो गणशः ॥९४॥ अत्रान्तरे दशास्यं नत्वा प्रोचे विभीषणः सदसि । देव ! प्रसीद विमृश क्षणमिति वचनं शुभोदर्कम् ॥ ९५ ॥ लोकद्वितयविरुद्धं परदारापहरणं यदविमृश्य । चक्रे पूर्वं भवता कुलमखिलं लज्जितं तेन ॥९६॥ आदातुमात्मदयितामुपलङ्कमुपस्थितोऽथ काकुत्स्थः । तत्कान्ताप्रत्यर्पणमातिथ्यं विधेहि तदमुष्मै ॥ ९७ ॥ नूनं ग्रहीष्यति निजां गृहिणीं त्वत्तोऽन्यथापि काकुत्स्थः । निग्रहीष्यति च कुलं ते सकलं सकलङ्क ! सह भवता ॥ ९८ ॥ दूरे स्तां दाशरथी त्रिशिरःखरदूषणान्तकावेतौ । देवेन किं न हनुमान् दृष्टस्तत्पत्तिरेकोऽपि ? ॥ ९९ ॥ क्रुद्धो हितोपदेशाद् दशाननोऽधावताथ तं हन्तुम् । सोऽप्युत्तस्थौ योद्धुं सदसः स्तम्भं समुत्पाट्य ॥ १०० ॥ कुम्भकर्णेन्द्रजिद्भ्यां भूत्वा द्रुतमन्तरा तदानीं तौ । युद्धाद् निषिध्य नीतौ करिणाविव निजनिजं स्थानम् ॥ १०१ ॥ मत्पुर्या निर्याहि स्वाश्रयवातिन्नरे कुलाङ्गार ! । इत्थं दशास्यगदितो भेजेऽथ विभीषणो रामम् ॥ १०२ ॥ रिपुबन्धवेऽपि तस्मै रामोऽनुरक्ताय विश्रुतविवेकः । लङ्काराज्यममन्यत सन्तो नतवत्सला यस्मात् ॥ १०३ ॥ हंसद्वीपादुदचलदथ बलसंदोहपूरितदिगन्तः । रामोऽकलङ्कजयनिधिरधिलङ्कमियाय चास्खलितः ॥ १०४ ॥ दशकन्धरसेनान्यः शुकसारणसंश्रितास्तदा सर्वे । लङ्काया निःसृत्यायुध्यन्त मदोद्धुराः कपिभिः ॥१०५॥ कपिभिः क्ष्वेडापूरितककुब्भिरभितोऽपि युध्यमानैस्तैः । मृगयूथमिव मृगेन्द्रै रक्षोबलमखिलमत्तोभि ॥१०६॥ भग्नेऽरिभिः स्वसैन्ये सामर्षौ दशमुखस्य सेनान्यौ । हस्तप्रहस्तसंज्ञौ नलनीलाभ्यामयुध्येताम् ॥१०७॥ कुन्ताकुन्ति गदागदि विधाय चिरममरवीक्षितं समरम् । हस्तो नलेन निहतो नीलेन पुनः प्रहस्तोऽथ ॥१०८॥

क० षदसि ॥ ७२ ॥ आदिष्टः प्रभुणाहं रामेण तव प्रवृत्तिमधिगन्तुम् । तत्र गते मयि देवः समेष्यतीह च्छिदे द्विषतः ॥ ७३ ॥ रोमाञ्चिता सया-
९। ष्पा सीता निजगाद वत्स ! कोऽसि त्वम् ? । पारावारमपारं लङ्घितवानसि च कथय कथम् ? ॥७४॥ कच्चित् प्राणहितो मे प्राणिति वत्सेन
लक्ष्मणेन सह । दृष्टस्त्वया च कुत्र स्थाने कालं च नयति कथम् ? ॥ ७५ ॥ हनुमानथाह पवनाञ्जनयोरहमस्मि नन्दनो देवि ! । कपिखे-
चरविद्योऽम्बुधिमलङ्घयं गगनयानेन ॥ ७६ ॥ सुग्रीवं तदरिवधात् पक्षीकृत्यात्मनोऽधिकिष्किन्धम् । तव विरहधाम रामः सलक्ष्मणोऽस्त्येव
कुशलेन ॥ ७७ ॥ विद्याधरैर्महेन्द्रप्रमुखैः सममेत्य तावको भ्राता । भामण्डलोऽपि तद्वद् दुःखी तमुपासमानोऽस्ति ॥ ७८ ॥ रामेण प्रहितो-
ऽहं कपिपतिसुग्रीवदर्शितो देवि ! । त्वत्प्रत्ययाय मुद्रां समर्प्य शुद्धिं तवानेतुम् ॥ ७९ ॥ त्वत्तश्चूडारत्नं त्वानायितमस्ति देवि ! देवेन ।
मामत्र समायात प्रत्येष्यति तेन येनायम् ॥ ८० ॥ सकरुणवात्सल्यं सा जगाद चूडामणिं ममादाय । व्रज वत्स ! तूर्णमत्र स्थितस्य कश्चित्
तवानर्थः ॥ ८१ ॥ मा शङ्किष्ठा मातस्त्वं मयि वात्सल्यकातराऽनर्थम् । अस्येह रामलक्ष्मणपत्तित्वं दर्शयिष्यामि ॥ ८२ ॥ इत्युक्त्वा नत्वापि
च हनुमान् भङ्क्त्वा वनं च तदशेषम् । रक्षांस्यक्षादीनि प्रहृत्य लङ्कागृहाणि विनिपात्य ॥ ८३ ॥ निर्धूय चात्मबन्धान् दशवदनकिरीट-
कुट्टनं कृत्वा । रामं समेत्य सीताचूडामणिमार्पयत् तस्मै ॥ ८४ ॥ विशेषकम् ॥ सीताचूडारत्नं सीतामिव तत्त्वतः समायातम् । रामो
न्यधत्त वक्षसि भूयो भूयस्तदस्प्राक्षीत् ॥ ८५ ॥ आलिङ्ग्य दाशरथिना पृष्टः सीताप्रवृत्तिमथ हनुमान् । तस्मै शशंस निखिलां दशवदन-
विमाननां चापि ॥ ८६ ॥ प्रीतोऽथ रामभद्रः सुग्रीवाद्यैरनुद्रुतः सपदि । लङ्कामभि निःशङ्काशयोऽचलद् व्योमयानेन ॥ ८७ ॥ भामण्डल-
नीलाङ्गदपवनविराधजाम्बवन्मुख्याः । विद्याधराः स्वसैन्यैः समन्विता राममनुचेरुः ॥८८॥ नानायानविमानैर्यात्रातूर्यस्वनैस्तदद्वैतम् । रचय-
न्ती रामचमूर्नभसाऽगाद् वारिधेरुपरि ॥ ८९ ॥ अधिजलधि वेलन्धरवेलन्धरनगरनायकौ तत्र । नाम्ना समुद्रसेतू नलनीलाभ्यां समितिबद्धौ

स्यै ॥ ५४ ॥ तच्चूडारत्नमभिज्ञानं प्रत्यानयेः पुनश्चात्र । मद्वाचिकमपि चैतज्जनकभुवे संदिशेस्तस्यै ॥ ५५ ॥ देवि ! त्वया वियुक्तो ध्यायंस्त्वामेव वर्तते रामः । सुभगां त्वदधिष्ठानादुत्पश्यन् नैर्ऋतीं च दिशम् ॥५६॥ मद्विरहकातरा त्वं प्राणान् । प्राणेशि मा ! परित्याक्षीः । सौमित्रिनिहतं त्वं द्रक्ष्यसि रक्षःपतिं सपदि ॥ ५७ ॥ हनुमानपीदमूचे स्वामिन्नाज्ञां विधाय ते यावत् । एमि त्रिकूटपुर्यास्तिष्ठेस्तावत् त्वमत्रैव ॥ ५८ ॥ इत्युक्त्वा नत्वापि च रामं सद्यो विमानमधिरुह्य । लङ्कां गतो हनूमान् प्रविवेश विभीषणावासे ॥ ५९ ॥ सत्कृत्यागमकारणमपृच्छ्यताभीर्विभीषणेनायम् । हनुमानिति च बभाषे स्मितपुष्पाभ्यर्चितां वाचाम् ॥ ६० ॥ दशवदनस्य यदि त्व भ्रातेच्छसि चास्य यदि शुभोदर्कम् । तत् पत्नीं दाशरथेरेतस्माद् मोचयापहृताम् ॥ ६१ ॥ त्वद्भ्रातुर्बलिनोऽपि हि नूनं काराधृतान्तकस्यापि । रघुपुत्रपत्नीहरणं मरणं दशमस्तकस्यापि ॥ ६२ ॥ दशवदनबन्धुरूचे हनुमन् ! ननु साधु भाषितं भवता । सीतां मोचयितुं स्वाग्रजोऽयमग्रे मयाभिहितः ॥६३॥ भूयोऽपि सनिर्बन्धं निजबन्धुं नियतमर्पयिष्यामि । सीतां मुञ्चति यदि पुनरधुनापि गतं न नः किमपि ॥६४॥ श्रुत्वेति पावनञ्जयिरुत्पत्य जगाम देवरमणवने । तत्राशोकानोकहस्तले स सीतामलोकत च ॥६५॥ रुदतीं वामकरस्थं लम्बालकपिहितमाननं दधतीम् । निःश्वासान् मुञ्चन्तीं विरहकृशां मलिनतरवसनाम् ॥ ६६ ॥ निरपेक्षां देहेऽपि ध्यायन्तीमपि च राम-रामेति । निष्कम्पां परमलयं पश्यन्तीं योगिनीमिव ताम् ॥ ६७ ॥ विशेषकम् ॥ दध्यौ चैवं हनुमानये ! पुरस्ताद् महासती सीता । अस्या दर्शनमात्रात् पावित्र्यं कस्य नो भवति ? ॥ ६८ ॥ अस्या वियोगविधुरः स्थानेऽन्वहमेव खिद्यते रामः । ईदृक् कस्य कलत्रं सुरूपमनुरूपशीलगुणम् ? ॥ ६९ ॥ लङ्केश्वरो वराकः स्फुटमिह निपतिष्यते द्विधाप्येषः । रामप्रतापमहसा स्वपापलीलायितेनापि ॥ ७० ॥ विद्यातिरोहितवपुः सीतोत्सङ्गेऽथ मुद्रिकां हनुमान् । मुमुचे तां दृष्ट्वा साऽस्नपयत् प्रमदाश्रुतोयेन ॥ ७१ ॥ अपि तां जगाद ननु सखि ! मुद्रे ! कुशली सलक्ष्मणो रामः ? । आविर्भूय हनूमानूचे मातस्तदस्ति यद्

दूरे कियतीतः सा कथयत रक्षःपुरी लङ्का ? ॥ ३७ ॥ तेऽप्यूचुः किं नु तया पुर्या दूरस्थया निकटयापि । सर्वे तृणवद् यद्वयमिह विश्वजितो दशमुखस्य ॥ ३८ ॥ रामोऽभ्यधत्त कृतमिह जेयाजेयत्वचिन्तया तस्य । दर्शयत केवलं तं सौमित्रेर्नङ्क्ष्यते पश्चात् ॥ ३९ ॥ सौमित्रिराह कः किल स रावणः पौरुषं क्वचन तस्य । कान्दविकशुनक इव यश्छलेन पापी चकारैवम् ॥ ४० ॥ क्षत्राचारेणाहं तस्य शिरः समिति पातयिष्यामि । सभ्यीभूय भवद्भी रणनाटकमीक्षणीयं तु ॥ ४१ ॥ अथ जाम्बवानवोचद् भवत्सु हन्तोपयुज्यते सर्वम् । किन्तु दशवदनकदनः स यः करे करोति कोटिशिलाम् ॥ ४२ ॥ अस्त्वेवमिति वदन्तं निन्युः कपयोऽथ लक्ष्मणं तत्र । यत्रास्ते कोटिशिलोदपाटि चानेन सा तरसा ॥ ४३ ॥ आशासन्तो देवाः सौमित्रिं विचिकिरुस्तदा कुसुमैः । कपयः पुनरानिन्युः संजातप्रत्ययाः स्वपुरीम् ॥ ४४ ॥ कपिवृद्धा जगदुरिदं युष्मत्तो रावणस्य खलु मरणम् । दूतः प्रेष्यस्त्वादौ क्षिपत्सु महतामियं नीतिः ॥ ४५ ॥ संदेशहारकैरपि सिध्यति यदि कार्यमहितमभि विहितैः । उद्योगेन तदानीमुद्वेगो भूभुजां क इव ? ॥ ४६ ॥ तद् दूतोऽद्भुतवचनः प्रस्थाप्यस्तत्र कश्चन समर्थः । सा दुष्प्रवेशविगमा लङ्का हि श्रूयते विहिता ॥ ४७ ॥ दूतेन कार्यसिद्ध्यै गत्वा वाच्यो विभीषणस्तत्र । कोणपकुले किलास्मिन् निखिलेऽपि स नीतिमानेकः ॥ ४८ ॥ लघु मोचयितुं सीतां बोधयिता रहसि रावणं सोऽपि । तेनावज्ञातोऽयं देव ! त्वां नियतमभिसर्ता ॥ ४९ ॥ रामेणानुमतेऽस्मिंस्तेषां मन्त्रेऽथ कपिमहीनाथः । प्रेष्यादित्यपुरे श्रीभूतिं हनुमन्तमाह्वास्त ॥ ५० ॥ रामं लक्ष्मणकपिपतिभामण्डलमुख्यपरिवृतं सदसि । हनुमानुपेत्य भानुप्रतिमरुचिः प्रणमति स्माथ ॥ ५१ ॥ देवायमाञ्जनेयः पवनञ्जयसूनुरतुलबलकलितः । विधुरे परमो बन्धुर्विनयी मम जीवितं राज्ये ॥५२॥ अपरोऽस्य नास्ति तुल्यस्तदमुं सीताप्रवृत्तिलाभार्थम् । प्रहिणु स्वामिन्निति च प्रोवाच कपीश्वरो रामम् ॥ ५३ ॥ युग्मम् ॥ रामोऽभ्यधत्त हनुमन् ! संप्रत्यप्रतिम ! याहि लङ्कायाम् । सीतां गवेषयेरिह मदूर्मिकामर्पयेस्त-

वाष्पः समालिङ्गत् ॥ १९ ॥ सौमित्रिरपि सवाष्पं जगाद कस्यापि मायिनो नियतम् । ननु सिंहनादकारणमिह सीताहरणमिदमजनि ॥ २० ॥ तस्य प्राणैः सममहमिहाहरिष्यामि जानकीमधुना । तत्प्रवृत्त्युपलम्भारम्भाय यतावहे तावत् ॥ २१ ॥ एष विराधः प्रणमत्यार्यपदान् राज्यमवटलङ्कायाम् । पैत्र्यममुष्य निवेश्यस्तत्र मयाऽङ्गीकृतं यस्मात् ॥ २२ ॥ सौमित्रिणेति रामो विज्ञप्तस्तूर्णमवटलङ्कायाम् । गत्वा विराधमेनं न्यवेशयत् पैतृके राज्ये ॥ २३ ॥ सुन्दः खरस्य सूनुश्चन्द्रणखा चाप्यवटलङ्कायाः । नंष्ट्वा रामभयेनागमत् तदा रावणं शरणम् ॥ २४ ॥ किष्किन्धायां दुर्धरशक्त्यभिरामः परेद्युरथ रामः । विटसुग्रीवं हत्वा सुग्रीवं स्थापयामास ॥ २५ ॥ अष्टादशाथ कन्या धन्या रूपेण दातुमात्मीयाः । सुग्रीवः कपिनाथो दाशरथिं प्रार्थयामास ॥ २६ ॥ स्मित्वा जगाद राम. सखे ! तवेच्छामि सत्कृतिं नान्याम् । सीताप्रवृत्तिमेकामानेतुं संप्रति यतस्व ॥ २७ ॥ इति रामेण कपीन्द्रः स्वयमादिष्टः स्वसैन्यकपिवीरान् । सीताप्रवृत्तिहेतोर्दिशि दिशि गणशः प्रवर्तयामास ॥ २८ ॥ दाशरथेरिव मूर्ता मनोरथाः सर्वतोऽपि ते कपयः । नगनगरविपिनवार्धिषु पश्यन्तो जानकीं चेरुः ॥ २९ ॥ सुग्रीवः स्वयमगमत् कम्बुद्वीपं दिशैकया गच्छन् । रत्नजटी विद्याभृद् भूपतिना तेन दृष्टोऽत्र ॥ ३० ॥ सुग्रीवस्तमपृच्छद् विद्याभृत् त्वमसि रत्नजटिनामा । तद् व्योमयानविषयेऽलस इव किमु दृश्यसे कथय ? ॥ ३१ ॥ सोऽभाषिष्ट समस्ता विद्या मे संहृता दशास्येन । समुदस्थायिषि यदहं सीतां हरतोऽस्य युद्धाय ॥ ३२ ॥ कपिकेतुनाऽथ नीतो रत्नजटी रामभद्रपादाग्ने । विज्ञापित इति चैष व्यजिज्ञप-ज्जानकीशुद्धिम् ॥ ३३ ॥ हा राम ! राम ! लक्ष्मण ! भामण्डल ! जनक ! तात ! हा मातः ! । इति विलपन्तीं देवीमहरद् दशकन्धरः स्वामिन् ! ॥ ३४ ॥ सीतोदन्तमिमं तं दाशरथिः समधिगम्य मुदितोऽस्मात् । तं रत्नजटिनमुच्चैर्भूयो भूयः समालिङ्गत् ॥ ३५ ॥ भूयो भूयः सीतोदन्तं पप्रच्छ राघवो जटिनम् । सोऽपि तत्प्रीतिहेतोर्भूयो भूयस्तमाचख्यौ ॥ ३६ ॥ सौत्सुक्यं दाशरथिः सुग्रीवादीनथेति पप्रच्छ ।

क्ष्वेडामिहाहमायातः। सौमित्रिराह न मम क्ष्वेडा, केनापि वञ्चितोऽसि त्वम् ॥ २ ॥ आर्यामपहर्तुमार्यामुपायतस्त्वमसि नूनमपनीतः। सिंहध्वनितविधाने शङ्के स्तोकं न कारणं किमपि ॥ ३ ॥ तद् व्यावृत्त्य जवेन त्रायस्वार्यां व्रजार्य ! निजमुटजम्। अहमपि निहत्य रिपुकुलमायातः पृष्ठतो भवतः ॥ ४ ॥ सौमित्रिणेति गदितो रामः स्वस्थानमागतः सपदि। तत्रादृष्ट्वा सीतां क्षितिपीठे मूर्च्छितः पतितः ॥ ५ ॥ पवनेन लब्धसंज्ञः पश्यंश्चेतस्ततः प्रियां मोहात्। दृष्ट्वा जटायुमसिहतमिति रामश्चिन्तयामास ॥ ६ ॥ केनापि कपटपटुना जह्रे जानामि जानकी सा मे। तेनैवैष महात्मा निषूदितस्तदपहृतिकुपितः ॥ ७ ॥ परमार्हतोऽस्य रामः प्रत्युपकृतये ददौ नमस्कारम्। मृत्वा जटायुरपि स त्रिदशो माहेन्द्रकल्पेऽभूत् ॥ ८ ॥ रामस्तु दण्डकाया गिरितरुतटिनीनिकुञ्जपुञ्जेषु। दर्शं दर्शमपश्यन् सीतां निपपात मूर्च्छितो भूयः ॥ ९ ॥ अत्रान्तरे सुमित्रासूनुः संहृत्य रिपुबलं सकलम्। गममवाप विराधेनानुगतः पौरुषेणेव ॥ १० ॥ दृष्ट्वा मूर्च्छितमग्रे रामं सौमित्रिराकुलीभूतः। सिञ्चन्नश्रुजलैस्तलनीलदलैर्वीजयामास ॥ ११ ॥ मूर्च्छान्तेऽथ सुमित्रातनयमपश्यन् पुरःस्थमपि रामः। सीतावियोगखेदग्रहिलोऽवददन्तरिक्षेऽदः ॥ १२ ॥ भ्रान्तं वनमिदमखिलं तथापि दृष्टा न जानकी मयका। सा दृष्टा युष्माभिः किमिति नहि ब्रूथ वनदेव्यः ! ? ॥ १३ ॥ विपिने श्वापदरक्षोयक्षोरगभूतभीषणेऽमुष्मिन्। एकाकिनीं विहाय प्रियामहं लक्ष्मणायाऽगाम् ॥ १४ ॥ रक्षःसहस्रघोरे संयत्येकं च लक्ष्मणं मुक्त्वा। भूयोऽप्यहमत्रागां धिग् धिक् कुधियो धियं तद् मे ॥ १५ ॥ हा ! वैदेहि ! मयाऽस्मिन् कान्ते ! कथमुज्झिताऽसि कान्तारे ?। हा वत्स ! लक्ष्मण ! कथं मुक्तोऽसि च संकटे द्विषताम् ? ॥ १६ ॥ एवं विलपन् रामो न्यपतत् पुनरपि मूर्च्छितो भूमौ। क्रन्दद्भिः करुणातरं पक्षिभिरपि वीक्ष्यमाणोऽयम् ॥ १७ ॥ सौमित्रिरपि गद्गदमवोचदार्यार्य ! कथय ननु किमिदम् ?। भ्रातास्मि लक्ष्मणस्ते जित्वाऽरीनागतः पुरतः ॥ १८ ॥ सुधयेव तेन वचसा सिक्तः संजातचेतनो रामः। दृष्ट्वाऽग्रे निजमनुजं सहर्ष-

श्चचाल पूर्णाशा इवाम्बरेण ॥ ८७ ॥ श्येनेन चिल्लीव दशाननेन सा नीयमाना विललाप सीता । भामण्डलं भ्रातरहं क्व नीये हा राम ! हा देवर ! तात ! मातः ! ॥ ८८ ॥ श्रुत्वेति सीतारुदितं द्युमार्गे भामण्डलस्याथ पदातिरेकः । उपागतो योद्धुमखेचरत्वं नीतो दशास्येन पपात भूमौ ॥ ८९ ॥ गच्छन् समुद्रोपरिवर्त्मनाऽथ दशाननः सान्त्वयति स्म सीताम् । विश्वैकभर्तुर्महिषीपदं मे प्राप्तासि किं रोदिषि देवि ! सीते ! ? ॥९०॥ त्वां योजयन् देवि ! वनेचरेण चक्रे विधाता खलु नानुरूपम् । तन्न्यूनमुन्मूलितमद्य तस्य मया तु दासीभवता भवत्याः॥९१॥ मन्यस्व तद् मां दयितं मृगाक्षि ! कुरुष्व दासं निजसंनिभं च । इत्थं कृतेऽन्ये पतयस्त्रिलोक्या दासानुदासास्तव वासवाद्याः ॥ ९२ ॥ चटु ब्रुवाणो पटुरावणोऽदः सीता स्थिता द्वैधमवाङ्मुखी सा । श्रीराम ! रामेति हृदि स्मरन्ती पञ्चाक्षरीमन्त्रमरीणशीला ॥९३॥ चाटूनि तन्वन् मदनातुरोऽस्या मुहुर्दशास्यः क्रमयोः पपात । सा तु स्वपादौ परतश्चकार सीताऽन्यपुंस्पर्शभयेन भूम्ना ॥ ९४ ॥ अत्यर्थमभ्यर्थनयाऽस्य दूना सीता शशापेति पुलस्त्यपुत्रम् । निर्लज्ज ! मृत्युं लघु लप्स्यसे त्वं फलं परस्त्रीजनकामनायाः ॥९५॥ असावमात्यैरथ सारणाद्यैरनेकशो राक्षसराजलोकैः । अभ्यागतैः सार्धमतीव हृष्टः पुरीमकीर्तिं च परां प्रविष्टः ॥ ९६ ॥ श्रीरामचन्द्रस्य सलक्ष्मणस्य लप्स्ये न यावत्कुशल-प्रवृत्तिम् । तावद् न भोक्ष्ये शुचिशीलगीता सीताऽग्रहीदेवमभिग्रहं सा ॥ ९७ ॥

लङ्कानगर्युपवने दशकन्धरोऽथाह्वानेन देवरमणे रमणीयभासि ।
गुप्तां सदा त्रिजटयाऽपि च यामिकैस्तां सीतामशोकतरुखण्डतले मुमोच ॥ ९८ ॥

॥ इति सीताचरितनाम्नि महाकाव्ये रामप्रवास-सीतापहारवर्णनो नाम द्वितीयः सर्गः ॥

दृष्ट्वेतश्च सुमित्रापुत्रो रामं जगाद संभ्रान्तः । आर्य ! किमार्यामेकाकिनीं विहाय त्वमप्यागाः ? ॥ १ ॥ रामोऽभ्यधत्त भवतः श्रुत्वा

भ्रमानशक्तितः स विमानराजः सीतोपकण्ठं गत एव दृष्टः ॥ ७२ ॥ दृष्ट्वापि सीताममरीमिवाग्रेऽशकद् न हर्तुं दशकन्धरोऽपि । तस्थौ च दूरे रघुवंशकेतोर्बिभ्यद् हुताशादिव चित्रकायः ॥ ७३ ॥ सीतां स्वयं हर्तुमथाबलोऽनुसस्मार विद्यामवलोकिनीं सः । तत्कालमेवोपगता दशास्यं सोचे प्रभो ! मां दिश किं करोमि ? ॥७४॥ अथादिशत् तां मुदितो दशास्यः सदाप्यमोघाऽस्यवलोकिनि ! त्वम् । हरिष्यतो दाशरथेः कलत्रं ममाद्य साहाय्यमुरीकुरुष्व ॥ ७५ ॥ सा संकुचन्ती प्रभुशङ्कयाऽऽह स्वामिन् ! महाहेरपि मौलिरत्नम् । तवाज्ञयाऽऽहृत्य समानयामि सीतां तु नो रामसमीपतोऽहम् ॥ ७६ ॥ किन्त्वस्त्युपायो ननु येन यायादयं सुमित्रातनयं प्रवीरः । तस्यैव सिंहध्वनिना तयोः श्रीनिकेत-सङ्केतवचो यदेतत् ॥७७॥ एवं विधेहीति दशाननस्य निदेशतः साऽकृत सिंहनादम् । श्रुत्वा च तं दाशरथिः सशङ्कमनङ्कदोःशक्तिरदो व्यमृक्षत् ॥ ७८ ॥ ममानुजोऽयं जगदेकवीरः प्राप्येत केनापि पराभवं न । आकर्ण्यते किन्तु पराभवातिसंकेतसिंहध्वनिराः किमेतत् ? ॥७९॥ इत्थं वितर्कान् विततान रामो यावज्जवात् तावदवाप्तकम्पा । अतुल्यवात्सल्यवती सुमित्रापुत्रे तदा तं निजगाद सीता ॥८०॥ विलम्बसे ब्रूहि किमार्यपुत्र ! धत्से महासंकटमभ्युपेते ? । प्रयाहि विश्वोपकृतिप्रवीण ! त्रायस्व मे लक्ष्मणमद्य सद्यः ॥ ८१ ॥ इत्यादिसीतावचनेन सिंहनादेन चापि त्वरितं प्रणुन्नः । अमन्यमानोऽशकुनानपि ज्यामारोपयन् धन्वनि राघवोऽगात् ॥ ८२ ॥ अथादथोत्तीर्यदशाननोऽपि व्यग्रा-शयां लक्ष्मणसंकटार्त्या । विमानमारोपयितुं रटन्तीं सीतामतीवारभतोपगृह्य ॥ ८३ ॥ अत्रान्तरेऽस्या रुदितोपहूतः साटोपमभ्येत्य पुरो जटायुः । प्रोवाच सीतामहमागतोऽस्मि पतिव्रते ! मा स्म भयं दधीथाः ॥ ८४ ॥ साक्षेपमूचे च दशाननं स रे रे क्व दारान् रघुनन्दनस्य । हरस्यहं ते पुरतो जटायुरायुर्विकर्षामि नखाङ्कुटीभिः ॥ ८५ ॥ इत्थं वदन्नुन्मदपक्षघातैरमुं चपेटाभिरिवाजघान । वक्षोऽस्य चञ्चूनखरै-र्व्यलेखीत् क्षेत्रं हलाग्रैरिव पक्षिवीरः ॥ ८६ ॥ क्रुद्धोऽथ लङ्काधिपतिस्तमुग्रकृपाणघाताद् भुवि पातयित्वा । सीतामथारोप्य विमानमुच्चै-

स्वसा च लङ्काधिपतेरियाय द्रष्टुं स्वपुत्रं किल दण्डकायाम् ॥ ५७ ॥ सा छिन्नवंशेषु शिरः स्वसूनोर्लुठद् विलोक्यातिशुचा व्यलापीत् । हा वत्स ! मातुः कथय स्वकायाः सम्बूक सम्बूक ! हतोऽसि केन ? ॥५८॥ दृष्ट्वा ततः पादलिपिं सुमित्रासुनोरनूनोत्तमलक्षणां सा । ययौ पथा तेन ददर्श चाग्रे सीतान्वितौ दाशरथी मनोज्ञौ ॥ ५९ ॥ विलोक्य रामं त्रिदशाभिराम सा विस्मृतस्वाङ्गजमृत्युशोका । समेत्य कन्याकृति-रात्मपाणिग्रहं ययाचे ग्रहिला स्मरेण ॥ ६० ॥ रामेण साऽवादि ममास्ति भार्या निर्भार्यमङ्गीकुरु मे कनिष्ठम् । सौमित्रिरप्येतदवोचदेना-मार्याश्रयाद् मे भवसि त्वमार्या ॥ ६१ ॥ ततोऽर्थनाखण्डनतः स्वपुत्रवधाच्च जातद्विगुणप्रकोपा । ताभ्यां कृतं सा तरसा व्रजित्वा खराय सम्बूकवधं शशंस ॥ ६२ ॥ ततः सहस्राणि चतुर्दशैष रक्षोभटानुत्कटबाहुवीर्यान् । आदाय हन्तुं रघुनन्दनौ तौ क्रुधा खरः प्राप खरस्तदेव ॥ ६३ ॥ किं योत्स्यते सत्यपि मय्यमीभिरार्यः प्रबन्धोऽपि मया कृतोऽयम् । इति प्रणम्यार्थयति स्म रामं सौमित्रिरेतान् कुतुकेन हन्तुम् ॥ ६४ ॥ रामोऽभ्यधाद् वत्स ! रणाय गच्छ यदा तु ते संकटमेति किञ्चित् । तदा त्वमक्षेपकृतेन सिंहनादेन मां ज्ञापयितुं यतेथाः ॥६५॥ आदाय साक्षादिति रामशिक्षां गत्वा च सौमित्रिरमूनमित्रान् । प्रावर्ततांहीनिव हन्तुमेकोऽप्येतान् गरुत्मानिव चापचञ्चुः ॥ ६६ ॥ प्रवर्त-माने च रणे तमेत्य तथा प्रवृत्तं त्वरया त्रिकूटे । गत्वा स्वयं चन्द्रणखा दशास्यं विश्वत्रयीकन्दकमित्युवाच ॥६७॥ देवागतौ संप्रति दण्डकायां वीरावुभौ दाशरथी मदोग्रौ । सखित्वहेतोरिव तावकीनं यमाय यामेयमिमावदत्ताम् ॥६८॥ श्रुत्वेति कोपात् तव यामिभर्ता सौमित्रिणाऽऽस्ते सह युध्यमानः । स्वभ्रातृवीर्याद् निजवीर्यतश्च रामस्तु खेलन् सह सीतयाऽस्ति ॥ ६९ ॥ भ्रातर्जितं किं भवताऽत्र विश्वदासीकरौ दाशरथी यदि स्तः । राज्येन किं ते वद यत्र सीता स्त्रीरत्नमास्ते भुवनाभिरामम् ? ॥ ७० ॥ श्रुत्वेति लङ्काधिपतिर्विशङ्को वेगाद् निजं पुष्पकमादिदेश । विमानराजं त्वरितं प्रयाहि तत्राद्य यत्रास्ति विदेहपुत्री ॥७१॥ इत्युक्तमात्रोऽप्यतिमात्रवेगाद् दशास्यचेतः समसीर्षयेव ।

वशादरोगो सुवर्णपक्षश्च सुचारुचञ्चुः। रत्नाङ्कुरच्छायजटाभिरासीत् ततः प्रसिद्धः स जटायुनाम्ना ॥ ४२ ॥ रामोऽब्रवीत् तौ यतिनौ प्रतीदं क्रव्यादयं दुष्टमतिश्च पक्षी। पूज्यौ! भवत्पादसमीपवर्ती स्थित्वा कथं शान्त इवाजनिष्ट? ॥ ४३ ॥ तौ शंसतः स्माजनि कुम्भकारकृता ह्वयमस्मिन् नगरं गरीयः। तत्राभवद् दण्डकनामधेयो राजा द्विषद्दण्डनचण्डशक्तिः ॥ ४४ ॥ तन्मन्त्रिणा पालकसंज्ञितेन मिथ्यादृशैतन्मतमाप्य दम्भात्। निपीलित' स्कन्दकसूरिरासीद् निदानतो वह्निकुमारदेवः ॥४५॥ तेन क्रुधाऽदह्यत सर्वमेतत् पुरं सराष्ट्रं सह दण्डकेन। वनं ततो दण्डकभूमिपालनाम्नाऽभवद् दण्डकसंज्ञमेतत् ॥४६॥ भ्रान्त्वा भवं दण्डकभूपतिस्तु वनेऽत्र पक्षी समभूदय सः। कुष्ठी परं पूर्वविकर्मणाऽस्मानालोक्य जातिस्मरणादिहागात् ॥४७॥ अस्मत्पदस्पर्शवशादभूच्च संप्रत्ययं रोगविमुक्तदेहः। श्रुत्वेति पक्ष्यप्यजनिष्ट सोऽर्हद्धर्मैकतानः करुणाप्रधानः ॥ ४८ ॥ प्रशंसतां चाथ तयोर्महर्षी साधर्मिकोऽय युवयोः पतत्त्री। तं राघवौ बन्धुपदेऽनयेतां यथागतं चापि गतौ मुनी तौ ॥४९॥ सीतान्वितौ दाशरथी जटायुनिषेवितौ पञ्चवटीं प्रयान्तौ। कृताश्रयौ तत्र लतागृहेषु स्थितौ मृगेन्द्राविव दुष्प्रधर्षौ ॥५०॥

अथैकदा दाशरथिः कनिष्ठः क्रीडंस्तटे क्रौञ्चरवात् तटिन्याः। ययौ ददर्शात्र च वंशजालीमालीनमस्यां च कृपाणमेकम् ॥५१॥ साश्चर्यमादाय तमाशु कोशादाकृष्य वेणीमिव कालरात्रिम्। विधूय चानेन स वंशजालीं मृणालमालामिव तं लुलाव ॥ ५२ ॥ ददर्श तस्यामथ धूपकुण्डं मुण्डं च तत्र स्फुरदोष्ठमेकम्। तदा कवन्धं स्रवदस्रमेष वंशान्तरे वल्गुलिकासनस्थम् ॥ ५३ ॥ अचिन्तयच्चैष विषण्णचेता मया हतो हा हतकेन कश्चित्। पुमानशस्त्रोऽयमयुध्यमानः संसाधयन् किञ्चिदवाग् मुधापि ॥ ५४ ॥ स्वं शोचयित्वेति चिराय गत्वा रामाय सर्वं तदशंसताऽयम्। संदर्शयामास च मण्डलाग्रं निर्वर्ण्य तं चेदमुवाच रामः ॥ ५५ ॥ वत्सैष भासा कृतसूर्यहासः खड्गोऽभिधानेन च सूर्यहासः। त्वया हतो यः स तु साधकोऽस्य संभाव्यते वोत्तरसाधकोऽपि ॥५६॥ अत्रान्तरे चन्द्रणखेति कान्ता पातालकाधिपतेः खरस्य।

वनाय वत्से! याता नृसिंहोऽस्य न दुष्करं तत् ॥ २७ ॥ त्वं बालजातीकलिकेव वत्से! म्लानिं कठोराद् मरुतोऽपि यासि। पद्भ्यां समं यातुमपारयन्ती स्वभर्तुरप्यातनुषे च खेदम् ॥ २८ ॥ वत्से! निजस्यानुगमेन भर्तुरनिष्टकष्टागमनेन वापि। तव प्रयान्त्याः प्रतिषेधमद्य विधिं च कर्तुं न हि पारयामि ॥ २९ ॥ अथाह सीता त्वपराजितां तां नितान्तसंफुल्लमुखी प्रणम्य। त्वद्भक्तिरेवास्तु शुभंकरा मे पथि स्वभर्तारमनुप्रयास्ये ॥ ३० ॥ सन्माननं तत् किल काननं मे स्वर्गाभिरामा ननु ते च मार्गाः। ते सानुमन्तोऽनुमताश्च यत्र त्वत्पुत्रपादा निवसन्ति मातः! ॥ ३१ ॥ उक्त्वेति नत्वा च निजप्रियाम्बां सीता ततो राममनुप्रयाता। सतीशिरोरत्नमुदश्रुपौरनारीभिरध्यन्यवलोक्यमाना ॥ ३२ ॥ निर्यान्तमाकर्ण्य वनाय रामं सौमित्रिरुत्तम्भितकोपकम्पः। विश्रान्तदृष्टिः किल चापदण्डे दध्यौ सचैलक्ष्यमिदं हृदन्तः ॥ ३३ ॥ प्राय. पुमांसः सरलस्वभावा रण्डास्तु कौटिल्यकलाकरण्डाः। तातात् ययाचे कथमन्यथाऽस्मिन् काले वरं केकयसंभवेयम्? ॥ ३४ ॥ ततो ददौ यद्भरताय राज्यमेतावताऽसावनृणीबभूव। अहं त्विदं मातृमुखादमुष्मादाच्छिद्य सद्यो रचयामि रामे ॥ ३५ ॥ आर्योऽथवा यत् तृणवद् विमुच्य नादास्यते राज्यमिदं सुसत्त्वः। तातस्य दुःखं भविता तु तस्मात् पदातिवद् राममनुव्रजामि ॥ ३६ ॥ ध्यात्वेति धीमान् प्रणिपत्य तातमम्बां सुमित्रामपराजितां च। सौमित्रिरप्यात्तधनुर्निषङ्ग सीतान्वितं राममथान्वियाय ॥ ३७ ॥ अथोऽपि ते फुल्लमुखारविन्दा विनिर्ययुः कोशलराज्यपुर्याः। प्राकारसौधाग्रतलप्रतिष्ठैः पौरैरपाराश्रुभिरीक्ष्यमाणाः ॥ ३८ ॥ सौमित्रिसीतानुमतोऽथ रामः क्रामन् धरित्रीवलयं क्रमेण। वनीमपाच्यां दिशि दण्डकाख्यां गत्वा गृहे या गिरिगह्वरेऽस्थात् ॥ ३९ ॥ तत्र द्विमासानशितौ परेद्युरुपागतौ द्वौ नभसा महर्षी। रघूद्वहाभ्यां नतयोरदत्त सीता तयोः प्रासुकवस्तुभिक्षाम् ॥ ४० ॥ गन्धाम्बुवर्षं विदधुस्तदानीं तस्मिन् सुरा दुन्दुभिनादपूर्वम्। तद्गन्धतोऽभ्येत्य मुनी ननाम रोगी खगो गृध्र इति प्रसन्नः ॥ ४१ ॥ तयोः पदस्पर्श-

यावदादित्तदिक्ष्वाकुपतिर्नियुक्तान् । तावद् बभाषे भरतोऽस्तु राज्यं तातानुयास्यामि तपोवनं त्वाम् ॥ १३ ॥ उवाच राजा मम च प्रतिज्ञां स्वमातुराज्ञां च मनुष्व वत्स ! । असौ वरं दत्तवरं मयाद्य त्वद्राज्यदानेन यतो ययाचे ॥ १४ ॥ अथाह रामो भरतं विभिन्नं सद्वृत्तिशोभस्तव चेन्न लोभः । सुसत्त्व ! सत्यापयितुं तथापि तातं गृहाणेदमनिन्द्यराज्यम् ॥ १५ ॥ अथो सबाष्पं भरतः प्रणम्य सगद्गदं राममिदं जगाद । तातार्ययोर्युक्तमिह प्रदातुं साम्राज्यमादातुमिदं तु मे न ॥ १६ ॥ तातस्य सूनु' किमहं न हन्त ! किमार्य ! ते नावरजोऽस्मि शंस । सत्येन तन्मातृमुखोऽस्मि सिद्धः समृद्धिमर्थं यदि चिन्तयामि ॥ १७ ॥ अथाह रामो नृपति मयीह सत्येष राज्यं न ग्रहीष्यते तत् । वनं प्रयामीति वदंश्च नत्वा विनिर्ययौ तूणधनुःसहायः ॥ १८ ॥ वनं प्रयान्तं तनयं विलोक्य राजा सुतस्नेहविमोहितात्मा । भूयोऽपि भूयोऽपि जगाम मूर्च्छामुद्वीज्यमानो व्यजनैर्जनेन ॥ १९ ॥ नत्वा निजाम्बामपराजिताख्यां जगाद रामोऽञ्जलिबन्धपूर्वम् । मातः ! सुतस्ते भरतो यथाहं पश्येस्ततस्त्वं ननु मामिवैतम् ॥ २० ॥ यतोऽद्य सत्यापयितुं स्वसंधामदत्त राज्यं भरताय तातः । मय्यत्र सत्येष न तद् विभर्ति वनाय तद् यातुमहं यतिष्ये ॥ २१ ॥ श्रुत्वेति रामस्य वचांसि मूर्च्छाभराद् धरायां निपपात देवी । मूर्च्छाविरामे विहिते सखीभिरुत्थाय बाढं रुदतीत्युवाच ॥ २२ ॥ आः केन मूर्च्छा व्यपरोपिता मे येनेयमासीद् सुखमृत्युहेतुः । कथं कथं रामवियोगदुःखं जीवत्यहं दैवहता सहिष्ये ? ॥ २३ ॥ रामोऽब्रवीत् कातरता तवेयं मातः ! कथं पत्न्यसि मत्पितुर्यत् ? । सिंहीसुतो याति न किं वनान्तं सिंही तु किं ताम्यति लेशतोऽपि ? ॥ २४ ॥ समस्ति तातेन ऋणं प्रदेयं यतो वरः केकयनन्दनायै । मय्यत्र सत्यम्ब ! पवित्रसत्यव्रतस्य तस्यानृणता कथं स्यात् ? ॥ २५ ॥ युक्त्याऽनया तां प्रतिबोध्य रामः पराञ्च मातॄः प्रणिपत्य यातः । सीतापि नत्वा नृपमेत्य देवीं रामानुयानाय रयादपृच्छत् ॥ २६ ॥ देव्यङ्कमारोप्य सगद्गदं तां सीतामशीताश्रुजला जगाद । पितुर्नियोगेन

वसनैर्मानासनैः सत्कृताः। ऐक्ष्वाकोऽपि वधूवरेण सहितो मित्रेण भूमीभृता संपूज्यानुगतो निवर्त्य तमथ स्वां राजधानीमगात् ॥ ६५ ॥

॥ इति सीताचरितनामनि महाकाव्ये सीतोत्पत्तिविवाहवर्णनो नाम प्रथमः सर्गः ॥

अथो नृपः पङ्क्तिरथो महात्मा तपोवनेषु प्रवया यियासुः । रामं निजे राज्यपदेऽभिषेक्तुमुच्चैरुपाक्रंस्त शुभे ग्रहेऽह्नि ॥ १ ॥ कैकेय्यथो मन्थरया तमाह न्यासीकृतो योऽस्ति वरस्त्वया मे । तेनाद्य भर्तर्भरतस्य राज्यं प्रयच्छ सत्यं यदि राघवेषु ॥ २ ॥ श्रुत्वेति वाक्यं नृपतिः सदम्भं दम्भोलिनेव प्रहतो गिरीन्द्रः । पपात मूर्च्छाकुलितो नृसिंहः सिंहासनाद् मीलितलोचनान्तः ॥ ३ ॥ श्रीखण्डतोयैर्व्यजनानिलैश्च मूर्च्छापनीतास्य परिच्छदेन । आस्थाय सिंहासनमन्तरेति नरेश्वरश्चिन्तितवान् विवेक्ता ॥ ४ ॥ स्त्रीवाचया चेद् भरतं स्वराज्ये निवेशये स्यादयशस्तदा मे । प्रतिश्रुतं चेच्च न पालये स्वं तदा कलङ्कः प्रथमः कुलेऽस्मिन् ॥ ५ ॥ तदस्त्वकीर्त्तिर्मम, किन्तु मा भूदभूतपूर्वोऽत्र कुले कलङ्कः । ध्यात्वेति निःश्वस्य च दीर्घमुष्णमाकारयामास नृपोऽथ रामम् ॥ ६ ॥ आहूतमात्रः समुपेत्य रामः प्रणम्य तातस्य पुरो न्यविक्षत् । स्नेहस्पृशा साश्रुदृशाऽभिपश्यन् पितापि तं गद्गदवागुवाच ॥ ७ ॥ स्वयंवरे वत्स ! पुरा मयाऽस्याः सारथ्यतुष्टेन वरः प्रदत्तः । तं याचते केकयराजपुत्री स्वपुत्रराज्येन किमत्र युक्तम् ? ॥ ८ ॥ रामोऽप्यभाषिष्ट सुहृष्टचेतास्ताताथितं युक्तमिदं जनन्या । यद् बन्धवे मे भरताय राज्यं धिनोति योऽस्मान् विधुनोति शत्रून् ॥ ९ ॥ तथापि तातः सुतवत्सलत्वादतिप्रसादादिति मामपृच्छत् । रघुप्रसूतेर्विनयातिपातसंसूचकं तत्तु मनो दुनोति ॥ १० ॥ यस्मै च कस्मैचन राज्यमेतत् तातः प्रसादीकुरुतेऽर्थिनेऽपि । कश्चिद् निषेधेऽनुमतौ च तत्र त्वत्पत्तिमात्रस्य न मे विकारः ॥ ११ ॥ सुतावुभौ ते भरतोऽप्यहं च दृशाविवार्या तुलितानुभावौ । निवेश्यतां तद् भरतोऽत्र राज्ये प्रमोदसंपद्भरतो मत मे ॥ १२ ॥ श्रुत्वेति रामाद् मुदितोऽथ

चर्चयित्वाऽर्चयित्वा च मण्डपान्तरमण्डयत् ॥७५॥ सीतास्वयंवरकृते जनकेन निमन्त्रिताः । तत्रेयुः कौतुकोत्तालभूपाला भूचरा अपि ॥७६॥ भूचराः खेचरास्तत्र भुजदण्डोन्मदिष्णवः । एत्य मञ्चेषु पञ्चेषुरूपा भूपा उपाविशन् ॥ ७७ ॥ रामश्च लक्ष्मणश्च द्वावपि तौ पितुरात्मनः । पुष्पदन्तौ पदोपान्ते मेरोरिव निषेदतुः ॥ ७८ ॥ सखीभिः सहिता सीता रत्नाभरणधारिणी । अथागात् तत्र मूर्त्ताभिः कलाभिरिव शारदा ॥ ७९ ॥ धनुषी पूजयित्वा सा रामं मनसि बिभ्रती । जनकस्य पदोपान्तेऽम्बुधेर्लक्ष्मीरिव स्थिता ॥ ८० ॥ सर्वेषामपि भूपानां निपेतुस्तत्र दृष्टयः । प्रत्यग्रविकसज्जातीकलिकायामिवालयः ॥ ८१ ॥ अथाह जनकद्वाःस्थः क्ष्माचराः खेचरा अपि । भो भोः शृण्वन्तु भूपाला मद्विभुर्वेदयत्यदः ॥ ८२ ॥ आरोपयति यः कश्चिदेकमप्येतयोर्धनुः । जयलक्ष्मीरिवावन्यां कन्यामुद्वहतां स मे ॥ ८३ ॥ एकैकशोऽथ दोष्मन्तः खेचराः क्ष्माचरा अपि । उपधनुः समागच्छन्स्तदारोपणकाम्यया ॥८४॥ नाशकन् द्रष्टुमप्येके नैके स्प्रष्टुमपि क्षमाः । आरोपयन्तो न्यपतन् केऽपि केऽप्यनमंश्च ते ॥ ८५ ॥ अथो दशरथानुज्ञामाप्य रामो महाभुजः । वज्रावर्ताभिधानस्य धनुषः सविधे ययौ ॥ ८६ ॥ सोत्प्रासं खेचरैर्दृष्टः साशङ्कं जनकेन च । लक्ष्मणेन च सोत्कर्षं सहर्षं चापि सीतया ॥ ८७ ॥ युग्मम् ॥ पितुः पुलकदण्डेन सहोद्धृतमथो धनुः । रामेण नामितं चैतद् भूपानामाननैः समम् ॥ ८८ ॥ कोटिमारोप्य तत् कीर्त्या सार्धमध्वनयद् धनुः । वैदेहीमनसा साकमाचकर्ष च राघवः ॥ ८९ ॥ संशयेन समं राज्ञो जनकस्योदतार्यत । रामेण तद् धनुश्चक्रे पाणौ च सह सीतया ॥ ९० ॥ द्वितीयमर्णवावर्त्तं धनुरारोप्य तत्क्षणात् । कन्या विद्याभृतामष्टादशोपायंस्त लक्ष्मणः ॥ ९१ ॥ अथ सीताकृते ताम्यन्मना भामण्डलस्तदा । युग्मजेय तवेत्युक्त्वा मुनिनैकेन बोधितः ॥ ९२ ॥ ततो भामण्डलेनोच्चैः सानुतापेन जानकी । नताभिनन्दितश्चायं जनकेन प्रमोदिना ॥ ९३ ॥ क्षरन्ती प्रस्रवं हर्षवाष्पाम्भश्च समं तदा । नता भामण्डलेनाथ विदेहा जननी निजा ॥ ९४ ॥ स्थानं स्वं स्वमथो यथागतमगुः क्षोणीचराः खेचरा राजानो जनकेन वाजि-

वदत् । त्वां तयोद्वाहयिष्यामि ततो वत्स ! विषीद मा ॥ ५५ ॥ ततश्चपलगत्याख्यो विद्याभृत् तदनुज्ञया । बद्ध्वा जनकमानीयाऽऽर्पयच्च-न्द्रगतेर्निशि ॥ ५६ ॥ अथाभ्युत्थाय जनकं रथनूपुरपार्थिवः । आश्लिष्योच्चैर्निवेश्यापि सगौरवमदोऽवदत् ॥ ५७ ॥ लोकोत्तरगुणैर्गीता सीता ते विद्यते सुता । भामण्डलश्च मे सूनुरनूनो रूपसंपदा ॥ ५८ ॥ योगस्तदेतयोर्जात्यरत्नहेम्नोरिवोचितः । मिथो भवतु संबन्धादाव-योरपि सौहृदम् ॥ ५९ ॥ जनकोऽथ जगादेति दत्ता रामाय सा मया । सकृत् कन्याः प्रदीयन्ते तदन्यस्मै ददे कथम् ? ॥ ६० ॥ अथ चन्द्रगतिः प्राह मया सौहृदहेतवे । प्रार्थितोऽसि त्वमानीय क्षमस्तां हर्तुमप्यहम् ॥ ६१ ॥ रामाय कल्पिता सीता स्वसुता यद्यपि त्वया । तथापि नः पराजित्य परिणेष्यति तामयम् ॥ ६२ ॥ इत्थं सत्यपि सामर्थ्येऽथवा कार्यं द्वयं मया । रक्षणीयापकीर्तिश्च ग्राह्या च तव कन्यका ॥ ६३ ॥ वज्रावर्तार्णवावर्ते धनुषी देवताज्ञया । पृथग्यक्षसहस्रेणाधिष्ठिते दुःसहौजसी ॥ ६४ ॥ पूज्येते प्रत्यहं गोत्रदेवतावद् गृहे पुनः । कृते भविष्यतोः शौरिशार्ङ्गिणोस्तद् गृहाण ते ॥ ६५॥ आभ्यामारोपयत्येकमपि दाशरथिः स चेत् । तदा वयं जितास्तेनोद्वहतां ते सुतामयम् ॥ ६६ ॥ एकं सेवकसौजन्यादपरं भुजविक्रमात् । मद्भूरुभयथाप्येतन्न भय नाम पश्यति ॥ ६७ ॥ श्रुत्वेति मैथिलो दध्यौ हा ! वैषम्यमुप-स्थितम् । मया रामाय देया सा विघ्नस्त्वयमुपस्थितः ॥ ६८ ॥ अभीष्टः क्ष्माचरो रामोऽनभीष्टः खेचरस्त्वयम् । न वेद्मि विकटं कर्म हा सीते ! किं भविष्यति ? ॥ ६९ ॥ चिन्तयित्वेति जनकः कालक्षयकृते कृती । विहस्य खेचराधीशमब्रवीदेवमस्त्विति ॥ ७० ॥ ततो वज्रार्ण-वावर्ते अर्पयित्वा स ते धनु । मिथिलां प्रापयामास मैथिलं खचरेश्वरः ॥ ७१ ॥ आत्मनापि नभश्चारिसभा-मण्डलनन्दनः । तत्र चन्द्रगतिः प्राप स-भामण्डल-नन्दनः ॥ ७२ ॥ मिथिलां परितो विद्याधरसैन्यैरुदुद्रुतः । आवासानग्रहीदेप दत्तस्वर्गभ्रमान् भुवि ॥ ७३ ॥ अथो कथितवृत्तान्तो विदेहायै विदेहराट् । प्रातर्न्यधत्त सीतायाः स्वयंवरणमण्डपम् ॥ ७४ ॥ तत्र ते धनुषी वीरलक्ष्मीभ्रूलतिके इव ।

दपि ॥ ३८ ॥ श्रुत्वेति तत्क्षणात्पङ्क्तिरथो म्लेच्छजिगीषया । सुहृत्त्राणप्रयाणाय जयढक्कामदापयत् ॥ ३७ ॥ अथो दशरथं प्राह रामो नत्वा कृताञ्जलिः । म्लेच्छमात्रजये यूयं तात मा यात, याम्यहम् ॥ ३८ ॥ मयापि सानुजेनाय जेतव्यो युष्मदाज्ञया । इक्ष्वाकवो यदाजन्मविक्रमा भरतादयः ॥ ३९ ॥ इत्थं कथञ्चिदासाद्य पितुराज्ञां सलक्ष्मणः । रामश्चमूसमूहेन वृतोऽगाद् मिथिलामथ ॥ ४० ॥ म्लेच्छभूपांस्तमोरूपान् रामचन्द्रः सलक्ष्मणः । तत्र वित्रासयामास करैरिव शरैः क्षणात् ॥ ४१ ॥ हृष्टोऽथ जनकोऽभ्येत्य रामचन्द्रं सलक्ष्मणम् । पुरीं प्रवेशयामास स्वयं त्वेष मनोऽविशत् ॥ ४२ ॥ रामेणागत्य जनको म्लेच्छातङ्काद् न केवलम् । स्वसुताया वरावाप्तिचिन्ताया अपि मोचितः ॥ ४३ ॥

जनेभ्यो जानकीरूपं श्रुत्वा द्रष्टुं तदागमत् । कौतुकी नारदः कन्यान्तःपुरे प्रविवेश च ॥ ४४ ॥ आपीनं धृतकौपीनं पिङ्गकेशदृशं भृशम् । तुन्दिलं छत्रिकादण्डकमण्डलुवृषीधरम् ॥ ४५ ॥ भयंकरं तमालोक्य सीता भीता सवेपथुः । आरटन्ती हहा मातरिति गेहान्तराविशत् ॥ ४६ ॥ धृत्वा बाहुशिखाकण्ठकच्छकर्णेषु दासिकाः । रुरुधुस्तं क्रुधोत्ताला द्वारपाला अपि द्रुतम् ॥ ४७ ॥ श्वभ्यः स्वं कीरवत्तेभ्यो मोचयित्वा कथञ्चन । ययावुत्पत्य वैताढ्यं तत्र कोपादचिन्तयत् ॥ ४८ ॥ अस्तीह दक्षिणश्रेणीभर्तुश्चन्द्रगतेः सुतः । युवा भामण्डलो दोष्मान् विद्याधरधुरन्धरः ॥ ४९ ॥ सीतां चित्रपटे कृत्वा दर्शयाम्यस्य येन ताम् । हठादपहरत्येप क्षते प्रतिकरोम्यदः ॥ ५० ॥ चिन्तयित्वेति विदधे तत्तथा नारदो मुनिः । भामण्डलोऽपि तां दृष्ट्वा मन्मथग्रहिलोऽभवत् ॥ ५१ ॥ बुबुधे नारदानीतचित्रालिखितयोषिति । कामं भामण्डलस्यैतद्वयस्येभ्योऽथ तत्पिता ॥ ५२ ॥ आहूय नारदं चन्द्रगतिर्भक्तिपुरस्सरम् । काऽसौ कस्यात्मजेत्यादि पप्रच्छ पटयोषिति ॥ ५३ ॥ आचख्यौ नारदोऽप्येतामपुष्मै पटयोषितम् । यथानाम यथाधाम यथारूपं यथागुणम् ॥ ५४ ॥ विसृज्य नारदं राजा भामण्डलमथा-

साथ पञ्चेपुपञ्चास्यवनं यौवनमासदत् ॥ १७ ॥ अनुरूपो वरः कः स्यादस्या इति दिवानिशम् । चिन्तयामास चित्ते तज्जनको जनको नृपः ॥ १८ ॥ राज्ञोऽस्य मण्डलं राहुरिव म्लेच्छमहीपतिः । तदाऽग्रसद् वलै रङ्गन्नातरङ्गतमाभिधः ॥ १९ ॥

इतश्चादिमहीभर्तुरादिनाथस्य हेतवे । स्वस्तिमत्यस्त्ययोध्येति पुरन्दरकृता पुरी ॥२०॥ तत्रादिभूमिभृद्वंश्यादित्यगोत्राब्धिचन्द्रमाः । अभूज्जनकभूपालसुहृद् दशरथो नृपः ॥ २१ ॥ दु'शासनस्य तस्यासंश्चतस्रः प्राणवल्लभाः । कौशल्या च सुमित्रा च कैकेयी किन्त्व सुप्रभा ॥ २२ ॥ राज्ञोऽस्य तासु चत्वारः समभूवंस्तनूभुवः । रामो लक्ष्मणभरतौ शत्रुघ्नः क्रमशोऽप्यमी ॥ २३ ॥ पद्मनामा हली तेषु रामो रम्यगुणास्पदम् । नारायणाक्षः किञ्चार्धचक्रभृल्लक्ष्मणोऽष्टमः ॥ २४ ॥ अथास्थानस्थितस्यास्य राज्ञो वेत्री व्यजिज्ञपत् । स्वामिन् ! जनकदूतोऽस्ति सिंहद्वारि निवारितः ॥ २५ ॥ 'प्रवेशय' नृपेणोक्ते वेत्रिणासौ प्रवेशितः । पेदयाकं प्रणनामैव पुरस्ताद् निषसाद च ॥ २६ ॥ नृपोऽपि दूतमुद्भूतहर्षोत्कर्षो जगाद तम् । मैथिलस्य सराष्ट्रस्य कुशलं सुहृदो मम ? ॥ २७ ॥ जानामि प्रेषितोऽसि त्वं मन्निर्वृत्ति-कृतेऽमुना । विशेषेण पुनर्ब्रूहि किमागमनकारणम् ? ॥ २८ ॥ दूतोऽप्यवक्त गणशः सन्त्यात्ताः स्वामिनो मम । देव ! त्वमेव किन्त्वेकः सुहृदात्मा च किं वहु ? ॥ २९ ॥ जनकस्य सुखैर्दुःखैरिन्दोरिन्दीवरं यथा । गृह्यसे त्वं ततस्तेन स्मृतोऽसि रिपुसंकटे ॥ ३० ॥ अस्ति वैताढ्यकैलाशनगयोरन्तरालगः । देशोऽर्धवर्बरो नाम जन्मभूरिव पाप्मनः ॥ ३१ ॥ मायूरमालनगरे तस्य देशस्य मण्डने । आतरङ्गतमो नाम म्लेच्छराजोऽस्ति दारुणः ॥ ३२ ॥ सुताः सहस्रशस्तस्य नृपीभूयोपभुञ्जते । देशान् काम्बोजवाल्हीकशुकमङ्कनकादिकान् ॥ ३३ ॥ इदानीमातरङ्गस्तैस्तरङ्गैरिव वारिधिः । भीषणोऽक्षौहिणीनाथैरभाङ्क्षीज्जनकक्षितिम् ॥ ३४ ॥ प्रतिस्थानं च मातङ्गास्ते चैत्यानि न्यपात-यन् । शृङ्गाणीव सुतुङ्गानि धर्मविश्वम्भराभृतः ॥ ३५ ॥ तत्कुरुष्व परित्राणं धर्मस्य जनकस्य च । अतिमात्रमभीष्टौ ते यदेतौ जीविता-

आसां पदार्थो व्यक्त एव ।

व्यासार्थस्तु कथानकेभ्योऽवसेयस्तान्येतानि,—

अस्तीह मिथिला नाम पुरी देवपुरीनिभा । तस्यां जनक इत्यासीदसीमसुकृतो नृपः ॥ १ ॥ भिया श्रद्धेव धर्मस्य तस्यानन्दैकमन्दिरम् । विदेहा भुवि देहाभिरामा लक्ष्मीरिवाभवत् ॥ २ ॥ सरस्वतीव सद्बोधकविते विश्वविश्रुते । साऽसूत समयेऽन्यत्र युगपत्पुत्रदारिके ॥ ३ ॥ जातमात्रादतो युग्माज्जहार किल कश्चन । देवस्तत्पूर्ववैरेण दारकं दारुणाशयः ॥ ४ ॥ वैताढ्यशिरसि व्योम्नस्तं बालं त्रिदशोऽमुचत् । द्योतयन् दिङ्मुखान्यत्र नक्षत्रमिव सोऽपतत् ॥ ५ ॥ पतन्तं च तमद्राक्षीत् तदा चन्द्रगतिः स्वयम् । दक्षिणश्रेणिनगररथनूपुरनायकः ॥ ६ ॥ किमेतदिति संभ्रान्तः सैष विद्याधरेश्वरः । तन्निपातानुसारेण नन्दनोद्यानमाययौ ॥ ७ ॥ ददर्श तत्र तं बालं पतितं पुष्परेणुपु । पुत्रीयन्नाददे चायमपुत्रः खेचरेश्वरः ॥ ८ ॥ पुष्पवत्याः स्वकान्तायास्तं समर्प्याथ सोऽर्भकम् । देव्यसूत सुतं गूढगर्भेत्याघोषयत् पुरे ॥ ९ ॥ जन्मोत्सवं विधायाथ हृद्यं विद्याधराग्रणीः । तं भामण्डलसंबन्धाद् नाम्ना भामण्डलं व्यधात् ॥ १० ॥ धात्रीभि पञ्चभिः पाल्यमानोऽसौ ववृधे क्रमात् । नन्दाद्याभिर्यथा शुक्लतिथिभिर्बालचन्द्रमाः ॥ ११ ॥

इतश्चापहृते तत्र विदेहा रोदिति स्म हा । जनकोऽन्वेषयन्नाप तत्प्रवृत्तिं च न क्वचित् ॥ १२ ॥ हृते सुते सितेयं तदङ्कसेतीव नामतः । पितृभ्यां युग्मजा पुत्री सा सीतेति निरोच्यत ॥ १३ ॥ पुत्रापहारभीताभ्यां पितृभ्यां साथ भूमये । कल्पिता लोठयित्वाऽस्यां भूसुतेति स्मृता ततः ॥ १४ ॥ कालेन भूयसा शोकस्तयोः स्तोकत्वमीयिवान् । शोकहर्षौ हि जन्तूनामरघट्टघटीभ्रमौ ॥ १५ ॥ व्यवहारव्यतीर्णेव लक्ष्मीरथ कलान्तरैः । सीता विववृधे धात्रीपञ्चकेनोपलालिता ॥ १६ ॥ नितम्बस्थलमुल्लासिभ्रूवल्लि कुचपर्वतम् ।

व्याख्या—तीर्थं भवाम्बुधेरवतारमार्गं, यद्वा, चतुर्वर्णं श्रीश्रमणसंघम्, अथवा, प्रथमगणधरं कुर्वन्तीति तीर्थंकरा अर्हन्तस्तेषामतीतानागतवर्तमानविहरमाणानां जनन्यो मातरस्तीर्थंकरजनन्यस्ता जयन्ति सर्वोत्कर्षेण वर्तन्ते। किंविशिष्टाः। 'जणविम्हयन्ति' जनानां त्रिलोकीलोकानां विस्मयमाश्चर्यं जनयन्ति यास्तास्तथा। विस्मयकारणमुत्तरार्धेनाह—'पसवंतित्ति' याः पुत्ररत्नं सुतरत्नं जातावेकवचनं सुतमाणिक्यानीति, प्रसवन्ति जनयन्ति। किंविशिष्टम्। 'तेलुक्कत्ति' त्रैलोक्यस्य स्वर्भूर्भुवोरूपस्य श्रीर्लक्ष्मीस्तस्याः शिरस्तत्तथा सिद्धिपदमिति भावः, तत्र तिलकं मण्डनं यदुक्तमागमे—"नमो त्थु ते रयणकुक्खिधारिए। नमोत्थु ते जगपईवदाइए।" इत्यादि ॥५५॥

अथ गाथात्रयेण सतीनाममन्त्राक्षरैरात्मानं पवित्रयन्नाह—

सीयाएवी सुलसा राइमई मयणरेह दमयंती। अज्जा चंदणबाला मणोरमा तह विलासवई ॥ ५६ ॥
अंजणासुंदरी चेव नम्मयासुंदरी सिवा। धारिणी चिल्लणादेवी पभावई कलावई ॥ ५७ ॥
रेवई देवई जिट्ठा सुजिट्ठा पउमावई। नंदा भद्दा सुभद्दा य रिसिदत्ता मिगावई ॥ ५८ ॥

[सीतादेवी सुलसा राजीमती मदनरेखा दमयन्ती। आर्या चन्दनबाला मनोरमा तथा विलासवती ॥
अञ्जनासुन्दरी चैव नर्मदासुन्दरी शिवा। धारिणी चिल्लणादेवी प्रभावती कलावती ॥
रेवती देवकी ज्येष्ठा सुज्येष्ठा पद्मावती। नन्दा भद्रा सुभद्रा च ऋषिदत्ता मृगावती ॥]

---

१ नमोऽस्तु ते रत्नकुक्षिधारिके! नमोऽस्तु ते जगत्प्रदीपदायिके!।

इति श्रीकूर्मापुत्रकथा । भद्रगुप्तस्तु वज्रस्वामिकथायामुपदिष्टः ॥ ५३ ॥

अथ बाहुल्येन मुनिमुपश्लोकयति—

विसमभवभमणनासणजिणसासणगयणमंडणमियंका । अन्नेवि महामुणिणो गुणिणो मम दिंतु सिद्धिसुहं ॥ ५४ ॥

[विषमभवभ्रमणनाशनजिनशासनगगनमण्डनमृगाङ्काः । अन्येऽपि महामुनयो गुणिनो मह्यं ददतु सिद्धिसुखम् ॥]

व्याख्या—धन्याद्या मुनयस्तावत्केचनापि नामतोऽभिहिताः, अन्येऽपि 'समणह कोडिसहस्सदुग्ग थुणिज्जिय निच्च विहाणि' इति वाक्यात्पञ्चदशकर्मभूमिषु ये केचनापि वर्त्तन्त इत्यपरेऽपि, गुणिनः गुणाः क्षमाद्याः सन्ति येषां ते तथा, महामुनयो महर्षयः 'मम दिन्तु सिद्धिसुहं' मह्यं ददतु सिद्धिसुखम् । किं विशिष्टास्ते ? । 'विसमत्ति' विषमः स्थपुट उच्चनीचजातिकुलाद्यारोहावरोहक्रमेण विसंस्थुलो योऽसौ भवस्तत्र भ्रमणं तत्तथा, तन्नाशयति निराकरोति तत्तथा तच्च तज्जिनशासनमर्हन्मतं तदेव निर्मलत्वाद् महत्वाच्च गगनमाकाशं तस्य मण्डनाय मृगाङ्का दुष्कर्मसंतप्तजन्तुजाताह्लादनत्वाच्चन्द्रा इति ॥ ५४ ॥

अथ महासतीगुणानुमोदनां कर्तुकामः पुरस्तीर्थंकरजननीरभिष्टुवन्नाह—

जणविम्हयजणणीओ जयंति तित्थंकराण जणणीओ । पसवंति पुत्तरयणं जाओ तेलुक्कसिरितिलयं ॥५५॥

[ जनविस्मयजनन्यो जयन्ति तीर्थंकराणां जनन्यः । प्रसवन्ति पुत्ररत्नं यास्त्रैलोक्यश्रीतिलकम् ॥ ]

---

१ श्रमणानां कोटिसहस्रद्विकं स्तूयेत नित्यं विधानेन ।

इव तेजसा । चक्रीति विदितः कामं विजयेन महीभुजाम् ॥ ६४ ॥ जगत्यां विहरन्नर्हन् जगदुत्तमसंज्ञितः । तदैत्य समवासार्षीत् पुरीपरिसरे वने ॥६५॥ तं धर्मचक्रिणं चक्रवर्ती वन्दितुमाययौ । तद्विधाय यथास्थानं निषसाद कृताञ्जलिः ॥६६॥ इतो द्रोणद्रुमादेव्यौ कमलाभ्रमरौ च ते । च्युत्वा भरतवैताढ्येऽभवन् विद्याधराङ्गजाः ॥ ६७॥ चारणश्रमणीभूय चत्वारोऽपि समाहिताः । जगदुत्तमतीर्थेशं तेऽपीयुर्वन्दितुं तदा ॥ ६८ ॥ नत्वा विभुं निषण्णेषु तेषु पप्रच्छ चक्रभृत् । कुतोऽमी नाथ ! चत्वारो धर्मांशा इव चारणाः ? ॥ ६९ ॥ अमी भारतवैताढ्याद् नाथोक्ते चक्रभृज्जगौ । भरते तीर्थकृच्चक्री केवली वास्ति संप्रति ? ॥ ७० ॥ स्वाम्यूचे तीर्थकृच्चक्री केवली चात्र कोऽपि न । किन्तु राजगृहे कूर्मापुत्रोऽस्ति केवली गृही ॥ ७१ ॥ चक्र्यूचे स व्रती किं न स्वाम्यूचेऽवद्यवर्जितः । गृहेऽस्ति प्रतिबोधाय पित्रोर्दुष्प्रतिकारयोः ॥ ७२ ॥ श्रुत्वेति चारणाः प्रोचुः स्वामिन् ! केवलिनो वयम् । भविष्यामो न वा स्वामी प्रोचे भद्राः ! भविष्यथ ॥ ७३ ॥ ते तु प्राह कदा नाथ ! नाथोऽप्याह महाशयाः ! । कूर्मापुत्राद् यदा वित्थ तन्मन्दिरकथानकम् ॥ ७४ ॥ ततस्ते विस्मिता नत्वा स्वामिनं चारणर्षयः । कूर्मापुत्रं गता यावत्तं नत्वा मौनमासिरे ॥ ७५ ॥ तावच्च तेन ते प्रोक्ता महासत्त्वाः ! जिनेन वः । नेदं मन्दिरमाख्यायि महाशुक्रगतं हि तत् ॥ ७६ ॥ श्रुत्वेति तेऽपि संजातजातिस्मरणवर्त्मना । क्षपकश्रेणिमासाद्य केवलज्ञानिनोऽभवन् ॥ ७७ ॥ भूयस्तीर्थकरं गत्वा तेऽस्थुः केवलिपर्षदि । ततो जिनं जगादेन्द्रोऽधुना किं नानमत्यमी ? ॥ ७८ ॥ स्वाम्यूचे केवलं कूर्मापुत्रादेषामजायत । शक्रोऽथाह कदा कूर्मापुत्रोऽसौ प्रव्रजिष्यति ? ॥ ७९ ॥ स्वाम्यूचे सप्तमे घस्मादह्नि यामे तृतीयके । भविष्यति हरे ! कूर्मापुत्रः श्रमणकेवली ॥ ८० ॥ इतश्च भगवान् कूर्मापुत्रः स्वपितरौ क्रमात् । प्रबोध्य प्राव्रजत्तौ च प्रव्रज्यानुत्तरं गतौ ॥ ८१ ॥ कूर्मापुत्रो भगवानपि सुरसंदोहपूजितो भुवनम् । परितः प्रबोध्य कैरवमिव शिवमूर्धानमिन्दुवत्प्राप ॥ ८२ ॥

प्रत्येकं भट्टमुख्यांश्चाहूय दर्शनिनोऽन्वहम् । तत्तद्धर्मागमं राज्ञीं श्रावयामास भूपतिः ॥ ४६ ॥ स्वं स्वं धर्मागमं ते तु पञ्चाप्युच्चैर्व्यपञ्चयन् । तं तु हिंसात्मकं राज्ञी श्रावं श्रावमखिद्यत ॥ ४७ ॥

ततो जैनान्मुनीन् भक्त्याऽऽहूय तद्धर्मदेशनाम् । श्रावयामास वसुधावासवस्तां क्षमाशचीम् ॥ ४८ ॥ जन्तुजातदयारूपं शृण्वन्ती सा जिनागमम् । संसारस्थापि मेने स्वं महानन्दपदे गतम् ॥ ४९ ॥ अथो नवसु मासेषु दिनेष्वर्धाष्टमेषु च । राज्ञ्यसूत सुतं कल्पद्रुमवद् मेरुचूलिका ॥ ५० ॥ राज्याङ्गानि विमुच्यान्यत् पूर्णपात्रं वितन्वता । तस्य जन्मोत्सवश्चक्रे सुमहीयान् महीभुजा ॥ ५१ ॥ ततः सूनुरसौ राज्ञा महोत्सवपुरस्सरम् । दोहदानुगुणं धर्मदेव इत्यभ्यधीयत ॥ ५२ ॥ कूर्मापुत्र इति ख्यातः पुनरुल्लापनैरयम् । धात्रीभिः पञ्चभिः पाल्यमानः शिशुरवर्धत ॥ ५३ ॥ जनवन्धनखेलातः पुरोपार्ज्यत कर्म यत् । खर्वनाम्नाऽमुना जज्ञे द्विहस्तोच्चवपुस्तु सः ॥ ५४ ॥ कलाचार्याश्रयादेव स कलाः सकला अपि । स्वत एवाऽऽपदादर्शो मृजामात्रादिव प्रभाम् ॥ ५५ ॥ आसन्नमुक्तचारित्रवशादेष वशी भृतम् । निकटे पल्वलादीनां शाड्वलाः स्युर्न किं द्रुमाः ? ॥ ५६ ॥ विमुखो विषयेच्छायां यौवनस्थोऽप्यभूदयम् । कल्पते पशुधर्माय पशुरेव न तादृशाः ॥ ५७ ॥ दूर्वी सैद्धान्तिकर्षीणां सविधं न मुमोच सः । किं चित्रमथवा योऽभूद् गर्भस्थोऽप्यागमस्पृहः ॥ ५८ ॥ शृण्वानोऽन्वहमेवासौ यतिभ्यो जैनमागमम् । श्रुतपूर्वमिदं क्वापीत्यूहया जातिमस्मरत् ॥ ५९ ॥ ततश्च क्षपकश्रेणीरूढोऽज्ञानतमोव्ययात् । स जातकेवलालोको लोकालोकमलोकत ॥ ६० ॥ व्यवहारमलंकर्तुं ग्रहीष्यामि यदि व्रतम् । तदिमौ पितरौ वक्षः स्फुटित्वा हि मरिष्यतः ॥ ६१ ॥ प्रशान्तवृत्त्या तिष्ठे तदेतयोः प्रतिबोधये । इत्यस्थाद् भगवान् कूर्मापुत्रः सदन एव सः ॥ ६२ ॥

इतो महाविदेहोर्व्यामस्ति स्वस्तिनिकेतनम् । विजये मङ्गलावत्यां नगरी रत्नसंचया ॥ ६३ ॥ देवादित्योऽभवत्तस्यामादित्य

सहमानो परीषहान् ॥ २६ ॥ विहारक्रमयोगेण कदाचिद् दुर्गमं पुरम् । केवली पुनरप्येत्य दुर्गिलोद्यानमास्थित ॥ २७ ॥ यक्षिण्यवधिना मत्वा कुमारस्यायुरल्पकम् । साऽऽगत्य सादरं नत्वाऽपृच्छत्केवलिनं तदा ॥ २८ ॥ प्रभो! वर्धयितुं शक्यं स्वमल्पायुः कथचन? । केवली प्राह नार्हन्तोऽप्यायुः संधातुमीशते ॥ २९ ॥ निरुत्साहा करन्यस्तसर्वस्वेवाथ यक्षिणी । गता स्वं भवनं पृष्टा सा कुमारेण सादरम् ॥ ३० ॥ प्रिये ! किमसि खिन्नेव साऽब्रवीदेवमेव हि । ततोऽपि साग्रहं पृष्टा साऽऽख्यत्केवलिभाषितम् ॥ ३१ ॥ संविग्नोऽसावथ प्राह द्रष्टव्यः केवली स मे । इत्याग्रही स नीतश्च यक्षिण्यापि तदन्तिके ॥ ३२ ॥ नत्वा केवलिनं सोऽपि न्यषीदत्तत्पदान्तिके । तं वीक्ष्य पितरावस्याऽरोदिषातां च मोहतः ॥ ३३ ॥ केवली प्राह त वत्स ! वन्दस्व पितराविमौ । किमेतदिति स प्रोचे केवल्याख्यच्च तत् तथा ॥३४॥ ततः कुमारः सोत्कण्ठं प्राग्वदालिङ्ग्य तौ रयात् । प्रवृत्तो रोदितुं कृच्छ्राद् यक्षिण्याऽयमवार्यत ॥ ३५ ॥ देवदूष्याञ्चलेनास्य संप्रमार्ज्य दृशौ तदा । न्यवेशयत स पादाब्जमूले केवलिनोऽनया ॥ ३६ ॥ केवल्यपि हि संसारविषनाशसुधारसम् । विदधे प्रतिबोधाह्वायेशनं धर्मदेशनम् ॥ ३७ ॥ तद् निशम्य चिरं सम्यग् यक्षिणी श्राविकाऽभवत् । तामापृच्छ्य कुमारस्तु भेजे गुर्वन्तिके व्रतम् ॥ ३८ ॥ तप्यमानस्तपस्तीव्रं सहमानः परीषहान् । अधीयानः कुमारर्षिः स चतुर्दशपूर्व्यभूत् ॥ ३९ ॥ कालं कृत्वा यथाकालममी पितृकुमारका । महाशुक्रेऽभवन् देवा विमाने मन्दिराभिधे ॥ ४० ॥ यक्षिणी सापि वैशाल्यां भूत्वा स्त्री कमलाभिधा । तत्राभूत्तद्वयस्येन भ्रमरेण समं सुरः ॥ ४१ ॥

इतश्चास्ति पुरं राजगृहं लीलागृहं श्रियः । राजा महेन्द्रसिंहोऽभूत्तत्र सिंह इवौजसा ॥ ४२ ॥ कूर्मादेवीति राज्यस्य तस्याः कुक्षाववातरत् । च्युत्वा कुमारदेवोऽथ भवनस्वप्नसूचितः ॥ ४३ ॥ स्वप्नं त भर्तुराचख्यौ कूर्मादेवी निशात्यये । राजा व्याख्यच्च ते देवि ! भावी श्रीभवनं सुतः ॥ ४४ ॥ ततोऽस्या हृष्टमनसो वहन्त्या गर्भमुत्तमम् । धर्मागमश्रुतौ जातसौहृदो दोहदोऽभवत् ॥ ४५ ॥

सुवेलाख्यस्य वल्लभा ॥ ६ ॥ तादृक्पुण्यक्षये स्वस्यायुःक्षये चागते समम् । मृत्वा भद्रमुखी नाम यक्षिण्यहमिहाऽभवम् ॥ ७ ॥ सुवेलः कथमास्ते स स्वामिन्निति निवेदय । अथाख्यत् केवली भद्रे ! च्युत्वा स तदनन्तरम् ॥ ८ ॥ सुतो द्रोणनृपस्यास्ते जातस्ते वल्लभः खलु । आख्यया दुर्लभोऽप्येष सुलभोऽत्रैव पत्तने ॥ ९ ॥ श्रुत्वेति यक्षिणी हृष्टा नत्वा केवलिनं ततः । धृत्वा मानवतीरूपं सा ययौ दुर्लभान्तिकम् ॥ १० ॥ मानुषोद्द्रावणक्रीडापरं तं वीक्ष्य सा जगौ । निःसत्त्वैः किममीभिर्भीषितं मामनुधाव तत् ॥ ११ ॥ दुर्लभोऽपि निशम्येति द्रुतं तामन्वधावत । धावन्ती तत्पुरः सापि व्यामोहयान्यान् वने ययौ ॥ १२ ॥ तत्र सा बहुशालाख्यवटकोटरवर्त्मना । गता पातालमन्वायि तेन सूचीव तन्तुना ॥ १३ ॥ भूपभूर्भुवनं तत्र मणीमयमलोकत । आदाय सारमर्केन्दुरोचिषामिव निर्मितम् ॥ १४ ॥ अथास्मै विस्मयस्मेरलो-चनाय सुलोचना । निवेशिताय पल्यङ्के सार्घ्यपाद्यादि निर्ममे ॥ १५ ॥ ततो भद्रमुखी स्मेरमुखी प्राञ्जलिराह तम् । दीपालीदिनवद् नाथ ! वीक्षितोऽसि चिराद् मया ॥ १६ ॥ तामालोक्य कुमारोऽपि क्वापीयं वीक्षिता मया । विमृशन्निति संस्मृत्य जातिं तामन्वरज्यत ॥ १७ ॥ पुद्गलानशुभान् हृत्वा धृत्वा च शुभपुद्गलम् । तमथारंस्त सा कामाद् गुणस्यूतेव तत्तनौ ॥ १८ ॥ इतः कुमारपितरौ ज्ञात्वा तद्गमनं शुचा । विश्वगप्यगवेषिष्टां नालभेतां च तं क्वचित् ॥ १९ ॥ तयोः पुत्रवियोगार्तिविमुक्ताशनपानयोः । तदैव मन्त्रिणा प्रोक्तं केवल्यागमनं मुदा ॥२०॥ ततस्तौ प्रावृषेण्याब्दाविवाश्रुजलवर्षिणौ । गत्वा केवलिनं नत्वोपविश्य तमपृच्छताम् ॥ २१ ॥ भगवन् ! कुलदीपो नौ भानुर्भूनभसोरिव । कुमारो दुर्लभः क्वागात् कृपां कृत्वा निवेदय ! ॥ २२ ॥ केवली प्राह यक्षिण्याऽपहृतो वां कुमारकः । कथं तावूचतुः केवल्याख्यच्चाखिल-मेतयोः ॥ २३ ॥ ऊचाते तौ कदा नौ स मिलिष्यत्याह केवली । यदैष्याम्यहं भूयस्तदा वां स मिलिष्यति ॥ २४ ॥ श्रुत्वेत्यथैतौ संविग्नौ दुर्लभानुजमङ्गजम् । राज्ये निवेश्य भेजाते व्रतं केवलिसंनिधौ ॥ २५ ॥ समं केवलिना देशाद्देशं तौ विजह्रतुः । तप्यमानावधीयानौ

ङ्किणीमानयं महान्। वृषभानपरानात्तदिक्कान् हिक्कारवैर्व्यधात् ॥१०८॥ राजा दिग्विजयं कृत्वाऽन्यदाऽऽयातो ददर्श तम्। घट्ट्यमानं परैः शृङ्गैर्वृषभैस्तं जरद्गवम् ॥१०९॥ तन्मूला भूपतेरात्मवैभवादावपि क्षणात्। जले तैलमिवानित्यभावना प्रासरत्तदा ॥११०॥ विभवो वैभवं बन्धुयुवतीयौवनादिकम्। सर्वमेतच्चलं चण्डानिलोद्धूतार्कतूलवत् ॥ १११ ॥ स्वयं बुद्ध्वेति साम्राज्यमुत्सृज्य तृणखण्डवत्। परिव्रज्यामुपादत्त सिद्धसाक्षिकमेव सः ॥ ११२ ॥ देवतार्पितलिङ्गोऽयं द्वादशाङ्गीधरः स्वयम्। विजहार धरापीठे कर्मसामजकेसरी ॥ ११३ ॥ एतत्ततो जगदनित्यतयाभिनाट्यमानं विलोकितुमिवाश्रितकेवलश्रीः। प्रत्येकबुद्धमुनिराट् करकण्डुनामा धामाध्यरोहदपुनर्भवनामधेयम् ॥ ११४ ॥

॥ इति श्रीकरकण्डुकथा ॥

हल्लविहल्लौ श्रेणिकसुतौ श्रीवीरशिष्यीभूय निर्वृतौ, शालमहाशालौ तु पृष्ठचम्पायां राजयुवराजौ श्रीवीरात्प्रबुध्य प्रव्रज्य च मोक्षं गताविति विदितम्, सिंहगिरिस्तु श्रीवज्रस्वामिकथायामुपदिष्ट एव, आर्यमहागिरि-आर्यसुहस्तिनौ स्थूलभद्रकथायां तच्छिष्यौ कथितपूर्वौ, आर्यरक्षितस्तु वज्रस्वामिकथायामुक्तः, शाम्बप्रद्युम्नौ तु कृष्णसुतौ श्रीनेमेः शिष्यीभूय शत्रुञ्जये सिद्धौ, प्रसिद्धमेतत्।

संप्रति कूर्मापुत्रो यथा;—

पुरासीद् दुर्गमपुरे द्रोणो नाम नरेश्वरः। द्रुमादेवीभवश्चास्य सुतोऽभूद् दुर्लभाभिधः ॥ १ ॥ स तु दुर्ललितः प्राप्तान् गृहे सेवादिकर्मणे। लोठयन् कन्दुकीकृत्य चेटांश्चिक्रीड सर्वदा ॥ २ ॥ अन्यदा दुर्गिलोद्यानेऽभिधानेन सुलोचनः। तत्रैत्य समवासार्षीत् केवली सूरिरुत्तमः ॥ ३ ॥ तत्र भद्रमुखी नाम यक्षिण्येकाऽभवद् वने। बहुशालवटस्याधोभूमिभवनवासिनी ॥ ४ ॥ केवलालोकभास्वन्तं स समेत्य सुलोचनम्। भक्त्या प्रणम्य पप्रच्छ पद्मकोशीकृताञ्जलिः ॥ ५ ॥ अहं मानवती नाम मानुष्यपि पुरा प्रभो!। वेलन्धरसुरस्याऽऽसं

मपठच्चामरे चापि चेलतुः ॥ ८८ ॥ पुरप्रवेशं तस्याथ करकण्डोर्महीपतेः । तदा संभूय नायच्छंश्चाण्डालोऽयमिति द्विजाः ॥ ८९ ॥
करकण्डुस्ततो वंशरत्नं पस्पर्श पाणिना । तत्र ज्वलति नेशुश्च प्रत्यूहा इव ते द्विजाः ॥ ९० ॥ नृपासनमथासीनः पौरप्रकृतिभिर्नतः ।
छत्राधः स्थापयित्वा स पितरौ तावचोदयत् ॥ ९१ ॥ दधिवाहनपुत्रेण राज्ञाथ करकण्डुना । वाटधानकवास्तव्याश्चाण्डाला ब्राह्मणी-
कृताः ॥ ९२ ॥ कण्डूलकाख्यमेतेभ्यो महास्थानमयं ददौ । ईश्वरेच्छा हि यत्कृत्यविधावस्खलिता खलु ॥ ९३ ॥ तेनैत्य वटुना चम्पासन्न
ग्राममथार्थितः । स्वग्रामव्यत्ययेनैष लेखं चम्पेन्दवे ददौ ॥ ९४ ॥ अनात्मनीनश्चाण्डालोऽस्माहँलेखेनैष भाषते । इति चम्पेन्दुराक्रोश-
हँलेखं त्वस्फाटयत्क्रुधा ॥ ९५ ॥ करकण्डुरपि ज्ञात्वा तत्कोपाटोपभीषणः । दधिवाहनमुच्छेत्तुं तदानीमभ्यषेणयत् ॥ ९६ ॥ देशदाहो-
द्धतैर्धूमैः परागैश्च बलोद्धतैः । द्विषतां द्वैधमप्याशा रुन्धंश्चम्पामयं ययौ ॥ ९७ ॥ वार्यामिव गजं क्षिप्त्वा नगर्यां दधिवाहनम् । तद्बहि-
र्वेष्टमाधाय करकण्डुरथ स्थितः ॥९८॥ पद्मावत्यपि मत्वेति मिथः संधिकृते तयोः । प्रवर्तिनीं तथाख्यानादापृच्छ्याागात् तदन्तिकम् ॥९९॥
नता तेनाभ्यधाद्वत्स ! कस्ते तातेन विग्रहः ? । कथं तातोऽयमित्युक्ताऽमुना तां युक्तिमाह सा ॥ १०० ॥ सोऽपृच्छत् पितरौ प्रीतस्ताव-
प्येवमशंसताम् । मुद्रिकाङ्कावलीरत्नाभिज्ञादर्शनपूर्वकम् ॥ १०१ ॥ पद्मावतीं नृपोऽथाह यद्यप्यस्तीदमम्बिके ! । तथापि नाभिमानेनाप-
सर्तुमधुना सहे ॥ १०२ ॥ ततः पद्मावती चम्पामध्येऽगात्पतिमन्दिरे । रुदतीभिर्नताऽभ्येत्य दासीभिरुपलक्ष्य सा ॥ १०३ ॥ मत्वा राजापि
तामेत्य साश्रु नत्वा निवेश्य च । पप्रच्छ किं तदा जातं साह यद् बहिरागतम् ॥ १०४ ॥ निर्ययावथ चम्पेन्द्रः प्रीत्या पुर्यां द्रुतं तदा ।
करकण्डुस्वनसीत्तमभ्येत्य लुठदङ्ककैः ॥ १०५ ॥ चम्पेन्द्रोऽप्यालिलिङ्गैनमभिषिच्य मुदश्रुभिः । चम्पाराज्यं च दत्त्वा स्मै प्राव्रजद् घृजिनं
द्विषन् ॥ १०६ ॥ करकण्डुरपि क्षोणीं प्रशासन् प्रियगोकुलः । विलोक्य गोकुले श्वेतं वृषमेकमपूपुषत् ॥ १०७ ॥ स्वर्णशृङ्गखुरो रत्नकिं-

यायास्य कण्डूरुद्दण्डवेदना ॥ ७० ॥ स पञ्चवर्षदेशीयः क्रीडंश्चाण्डालदारकान् । नृपीभूय करे कण्डूकण्डूयनमयाचत ॥ ७१॥ अमीभिस्तच्च कुर्वाणैर्डिम्भोऽयं दाधिवाहनिः । करकण्डुरिति स्वैरमभ्यधीयत दारकैः ॥ ७२ ॥ नाम्नाऽमुनैव विख्यातो वर्धमानः क्रमादसौ । प्रपेदे यौवनं नागपोतः कलभतामिव ॥ ७३ ॥ अन्यदा तद्वने कायचिन्तार्थं व्रतिनावुभौ । आगतौ लघुमाचष्ट स्थिरधीः स्थविरस्तयोः ॥ ७४ ॥ धीमन् ! वंशः प्रवर्धिष्णुर्नवपर्वाऽस्ति योऽग्रतः । स्वग्राहकस्य भविता दशपर्वा स राज्यदः ॥ ७५ ॥ तद्वाक्यं शुश्रुवे वृक्षान्तरेण करकण्डुना । बटुनैकेन चोत्खन्य मूलाद् वंशस्त्वखन्यत ॥ ७६ ॥ दृष्ट्वा च करकण्डुस्तमाच्छिद्याऽऽदत्त तत्करात् । मद्भूमेर्वंशमादाय क गन्तासीति विब्रुवन् ? ॥ ७७ ॥ राजाज्ञादानपूर्वं तं धृत्वाथ करणोऽनयत् । विप्रोऽधिकारिणामन्यायिनं चाकथयत्तथा ॥ ७८ ॥ [1]साक्षेपमूचिरे ते तं कथं रे मलिन ! त्वया । विप्रादाच्छेदि वंशोऽयमस्मै प्रत्यर्प्यतां द्रुतम् ॥ ७९ ॥ सोऽब्रवीत् किं मुधा दानीं स्मशानस्य ददाम्यहम् । तदेनं तद्भवं वंशं विप्रचौराय नार्पये ॥ ८० ॥ अथाधिकारिणः प्रोचुस्तथाप्यस्माद्गिराऽर्पय । स प्राहान्यान् प्रयच्छामि म्रियमाणोऽप्यमुं न तु ॥ ८१ ॥ ते प्रोचुरमुना राज्यं किं ते शठ ! भविष्यति । सोऽब्रवीदेवमेवैतद् नान्यथा महतां गिरः ॥ ८२ ॥ हसन्तस्ते पुनः प्रोचुर्यदा ते राज्यमेधते । यष्टेरस्याः पदे ग्राममस्मै देया द्विजाय तत् ॥ ८३ ॥ ओमित्युदीर्य करणात् करकण्डुरयादयात् । विलक्षस्तु द्विजः स्थानं तद्वधोर्थं समुद्यतः ॥ ८४ ॥ करकण्डुस्तु तज्ज्ञात्वा पितृभ्यां सहितो निशि । निरीय काञ्चनपुरं ययौ श्रान्तस्त्विहाऽस्वपीत् ॥ ८५ ॥ इतश्च तन्नृपोऽकस्मादपुत्रः पञ्चतां गतः । दिव्यानि पञ्च तत्कालमध्यवास्यन्त मन्त्रिभिः ॥ ८६ ॥ भ्रान्त्वा पुरान्तराऽमूनि बहिस्तत्पार्श्वमाययुः । असौ गजेन गर्जित्वा पुण्येनेवाभ्यषिच्यत ॥ ८७ ॥ अश्वोऽथाहेषत च्छत्रं व्यकसत् कीर्तिवद्दिवि । पुरोधा मन्त्र-

---

[1] ग. घ. °थंममीमिलत् ।

विभयैवैतं पश्यन्ती स तमस्यपि । आशशासाङ्कमारोप्य स्नपयन्त्यश्रुवारिभिः ॥ ५२ ॥ जात ! त्वमाजनेरेवारण्यभूत इव स्वयम् । वर्धेथा मन्दभाग्यायास्त्वयि मे न हि योग्यता ॥ ५३ ॥ विभातायां विभावर्यां विभावर्यंशुकावृतम् । विधाय सास्य कण्ठेऽधादूर्मिकां दाधिवाहिनीम् ॥ ५४ ॥ तमथो वनदेवीनां भलयित्वा लतागृहे । वपुः क्षालयितुं साऽगात्तडागान्तस्तडिच्छविः ॥ ५५ ॥ क्षालयित्वाङ्गमभ्येति यावदेषा लतागृहम् । श्मशानपालश्चाण्डालस्तावदग्रे समाययौ ॥ ५६ ॥ बालस्तेन लतागेहे देहेनार्क इवापरः । दृष्टः प्रहृष्टमनसा कराभ्यामुदपादि सः ॥ ५७ ॥ ममापुत्रस्य पुत्रोऽयं वनदेवीभिरर्पितः । इत्युक्त्वालः स चाण्डालश्चचाल स्वगृहं प्रति ॥ ५८ ॥ लतान्तरितया देव्या तन्निरूप्य व्यचिन्त्यथ । यदुत्तरति शृङ्गाभ्यां शृङ्गजा तद्वरं खलु ॥ ५९ ॥ निर्विण्णाहमतीवास्माद् नानादुःखभुवो भवात् । छित्त्वा केशांश्छुटिष्ये तद्दीक्षाग्रहणाकर्मणा ॥ ६० ॥

विमृशतीति तत्पृष्ठे लग्ना साऽध्वनि धेनुवत् । चाण्डालस्त्वविशद् वाटधानकाख्यं स्वपाटकम् ॥ ६१ ॥ प्रिये ! ते निरपत्यायाः सुतरत्नमुपायनम् । सुवाणा इति पाणस्तं स्वपत्न्यै बालमार्पयत् ॥ ६२ ॥ इदं पद्मावती दृष्ट्वौदासीन्यादित्यचिन्तयत् । अहो ! विचित्रता कापि कर्मणामवलोक्यते ॥ ६३ ॥ क्व संभवः शिशोरस्य भूभुजां विमले कुले । क्व च श्वपचगेहेऽस्मिन् विश्रामश्च कलङ्कदः ? ॥ ६४ ॥ इत्युत्तेजितवैराग्या सा प्रविश्य पुरान्तरा । व्रतं निवृत्तकामादात् प्रवर्तिन्याः पदान्तिके ॥ ६५ ॥ गुरूपास्तिमुरीकृत्य नित्यमेवोत्तमं तपः । तन्वती मोक्षसाधीयः साऽधीयायोचितं श्रुतम् ॥ ६६ ॥ दुस्त्यजापत्यमोहेन मोदकादि कदाचन । पुत्रायोपनयन्ती सा चक्रे तामन्त्यजां सखीम् ॥ ६७ ॥ बालकः स तु पूर्वस्मिन् भवेऽभूत्तपकाग्रणीः । आदाय स्वांशुकाद् यूकाः परवस्त्रेषु चाक्षिपत् ॥ ६८ ॥ तपःप्रभावाज्जज्ञे भूपतेस्तनुभवस्ततः । चाण्डालपुत्रकश्चाभूदुत्तमोऽहमिति स्मयात् ॥ ६९ ॥ परवस्त्रेषु चात्मीययूकाक्षेपविपाकतः । भवेऽस्मिन्नुवि-

लघु ॥ ३२ ॥ अथवा प्रार्थनादैन्यादलं मे वीरयोषितः । सत्त्वैकमनसो यस्माद् दुर्दैवमपि नश्यति ॥ ३३ ॥

इति धैर्यमथालम्ब्य प्रक्षाल्य मुखमम्भसा । प्रत्याख्याय च सागारं सिंहीवासौ वनेऽचरत् ॥ ३४ ॥ यावद्दिशैकया दूरं सा जगाम महासती । तावत्तापसमद्राक्षीद्विश्वासमिव देहिनम् ॥ ३५ ॥ नीता तेनाश्रमेऽनंसीदियं कुलपतिं ततः । पृष्टा तेनापि पित्रेवातुल्यवात्सल्यया गिरा ॥ ३६ ॥ वत्से ! कासि किमेकासि कस्यासि खलु नन्दिनी । अमरी किन्नरी विद्याधरी किंवा सरीसृपी ? ॥ ३७ ॥ सोचेऽहं चेटकोर्वीशसुता चम्पेशगेहिनी । मत्तेभेनापहृत्येह पातिता विजने वने ॥ ३८ ॥ ततः कुलपतिः प्राह चेटकस्यास्म्यहं सुहृद् । तत्प्राप्ता पितृगेहे त्वं वत्से ! मा स्म विखिद्यथाः ॥ ३९ ॥ तेनेति गदिता वन्यवृत्तिः सा तापसीष्वथ । भयामर्षान्विता वर्षाचातुर्मासीमिह स्थिता ॥ ४० ॥ अन्यदाऽचिन्तयदियं क्वाहं सम्यक्त्वनिर्मला । क्व च मिथ्यात्वपङ्केऽस्मिन् पातो धिक्कर्मवैवशम् ॥ ४१ ॥ वरं वनं वरं भैक्ष्यं वरं प्राणविमोचनम् । मिथ्यात्विषु न तु स्थातुमार्हत्याया ममोचितम् ॥ ४२ ॥ इत्यसौ व्यवहारेण नत्वा कुलपतिं जगौ । अस्थां वर्षाचतुर्मासीमाश्रमे भवतामहम् ॥ ४३ ॥ नागात्त्वनुपदं कश्चिदगम्येऽत्र वने मुने ! । तद्वसन्तीं भुव यामि यदि कोऽपि मिलेद् मम ॥ ४४ ॥ तन्मार्गदर्शकं कञ्चिद् मुनिमादिशताद्य मे । तयेति गदितः सोऽस्यै शिष्यमेकमथार्पयत् ॥४५॥ सोऽप्येत्य कियतीं भूमिं जगौ पद्मावतीमिति । अतः परमगम्या नः पृथ्वी हलविलेखिता ॥ ४६ ॥ ऋजुरेष प्रयातीतः पन्था दन्तपुरं प्रति । भद्रे ! तद्याहि पन्थानः शिवास्ते याम्यहं गुरुम् ॥ ४७ ॥ विसृज्य तमथो पद्मावती यान्ती शनैः शनैः । साय दन्तपुरोपान्ते प्राप प्रेतवनं महत् ॥ ४८ ॥ प्रत्याख्यायात्र सागारं लतागारे क्वचिद्गता । स्मृत्वा देवान् गुरून् गुर्विण्यशेत श्रमवत्यसौ ॥ ४९ ॥ नृत्यदुत्तालवेतालमालाकिलकिलारवैः । शृगालादिरुतैर्भीतेवास्या निद्राऽनशद् निशि ॥ ५० ॥ तत्तद्विभीषिकाभीतेराकुला सा कुलाङ्गना । कृष्णाष्टमीव शीतांशुं निशीथेऽसूत नन्दनम् ॥ ५१ ॥ तद्देह-

धीरिति ॥ १२ ॥ देवस्य वटशालस्याधस्ताद् हस्ती यदा व्रजेत्। तदा त्वमाशु प्रालम्बमालम्बेथा मया सह ॥ १३ ॥ इत्यमन्त्रयतां यावदिमौ नृपतिदम्पती । तावद्वटस्य तस्याधः सिन्धुरः प्रापदेव सः ॥ १४ ॥ लब्धलक्षो ललम्बे च तत्प्रालम्बमिलापतिः । राज्ञी तूद्यमते यावत्तावदेवाव्रजद् गजः ॥ १५ ॥ न्यग्रोधादुत्ततारोच्चैः प्रमोदाच्च महीपतिः । प्रापच्च पृष्ठतः सैन्यं शोकस्तस्याग्रतः पुनः ॥ १६ ॥ विलपन् विपुलापाजोऽरोदीद्बालो यथा ततः । वियोगकारणं देव्या निःश्वासैर्ज्ञापयन् इदम् ॥ १७ ॥ हा पद्मवदने ! पद्मनेत्रे ! पद्मकरक्रमे ! । क्व मया सद्मरम्ये ! त्वं पद्मावति ! विलोक्यसे ॥ १८ ॥ नात्मम्भरिरपासीत्त्वां ह्रियमाणामिभेन यः । स कथं पास्यति क्षोणीमधमो दधिवाहनः ? ॥ १९ ॥ अन्तर्वत्नीं प्रवास्य त्वामेकपत्नीं प्रियेऽधुना । श्वशुरं दर्शयिष्यामि कथं कथमहं जने ? ॥ २० ॥ प्रवासितप्रियाशोकपतितं रघुराजवत् । अमात्यास्तमुपेत्याशु सानुरोधमबोधयन् ॥ २१ ॥ मा मा देव ! रुदन्नेवमबलाकृत्यमाश्रय । वैधुर्ये यदि धीरेषु धैर्यं कुत्रोपयुज्यताम् ? ॥ २२ ॥ तद्धैर्यमवलम्बस्व केतनं पुंस्त्वस्य यत् । पुरीमेहि निजां देवी विलोक्यानेष्यते ततः ॥ २३ ॥ प्रधानपुरुषैरेवं बोधं बोधमनेकधा । कथंकथमपि क्ष्मापो राजधानीमनीयत ॥ २४ ॥ पद्मावती तु करिणा कर्मणेव पुराभुवा । प्रावेश्यत महाभीमामथापदमिवाटवीम् ॥ २५ ॥ करी खेदपरीतोऽथाविशदेकं महासरः । वायुवेगागतस्तोयमिवादातुं घनोऽर्णवम् ॥ २६ ॥ निममज्ज गजस्तत्र साहसीव नरोऽम्बुनि । देवी तु वेतसं पुण्यमिवाप्योदतरत्ततः ॥ २७ ॥ सरःपालीमथारूढाटवीं वीक्ष्य विमानुषाम् । रुरोद रोदयन्ती सा प्रस्वनः पर्वतानपि ॥ २८ ॥ हा ! तात ! हहहा ! मातः ! सुतेयं वामभागिनी । कैवर्तेनेव शफरी कृता धात्राऽमृताद् बहिः । २९ ॥ धातर्निरपराधाहं कथं भर्त्रा वियोजिता ? । प्रालम्बशाखाप्रमादिन्या ममागो व्यक्तमेव वा ॥ ३० ॥ स्वशीलरत्नरक्षार्थमसवो दुस्त्यजा न मे । गर्भरत्नमयो न्यासस्त्वार्यपुत्रेण दुस्त्यजः ॥ ३१ ॥ तदहं देव ! रे शंस क्व यामि करवाणि किम् ? । इहानयार्यपुत्रं मे तं वा प्रापय मां

सादरम्। तं दृढं बोधयन्नस्थाद् गीर्भिर्विविधभङ्गिभिः ॥ २८ ॥ तदा चोवाच तं वेश्या प्राक्सिद्धाङ्कं विरस्यभूत्। भूयो निष्पन्नमस्त्यन्नं किं विलम्बयसि प्रभो ! ॥ २९ ॥ नन्दिषेणोऽप्युवाचैतां बोधितो दशमो नहि। दशमोऽद्याहमेवातः प्रव्रजिष्यामि भामिनि ! ॥ ३० ॥ इत्युक्त्वा नन्दिषेणः स्वं भुक्तभोगफलं विदन्। निर्गत्य स्वामिनः पार्श्वे प्रव्रज्यां पुनराददे ॥ ३१ ॥ आलोच्य दुष्कर्म तदेतदुच्चैः शमी समीपे जिनपुङ्गवस्य। स नन्दिषेणो मुनिरायुषोऽन्ते समाधिना देवभुवं जगाम ॥ ३२ ॥

॥ इति श्रीनन्दिषेणकथा ॥

अथ करकण्डुर्यथा—

आस्ते कलिङ्गदेशेषु पुरी चम्पेति विश्रुता। कूपच्छायेव लोकानां यत्राव्याप्तिमनोरथाः ॥ १ ॥ तत्र नक्षत्रनाथांशुगुणोज्ज्वलगुणोदधिः। राजाऽऽसीदपनीतारिवाहनो दधिवाहनः ॥ २ ॥ चेटकोर्वीशदुहिता सहिता रूपसंपदा। राज्ञी तस्यापरिज्ञातच्छद्मा पद्मावतीत्यभूत् ॥ ३ ॥ संसारसुखसर्वस्वानुषङ्गिफलमन्यदा। गर्भं कादम्बिनीवार्काद् दधौ सा दधिवाहनात् ॥ ४ ॥ आसीत्तस्याः करिस्कन्धगताहं नृपवेषभृत्। विश्वग्राजधृतच्छत्रा विचरामीति दोहदः ॥ ५ ॥ पतिभक्ता न पत्ये तं दोहदं सा न्यवेदयत्। कृष्णपक्षेन्दुलेखावत् क्षीयते स्म तु केवलम् ॥ ६ ॥ नृपः शपथपूर्वं तामपृच्छत् खेदकारणम्। तदाज्ञाभङ्गभीरुश्च साऽप्यथाऽकथयत्तथा ॥ ७ ॥ हर्षसंदोहदे तस्या दोहदेऽथ महीभुजा। पूर्यमाणे ववर्षाब्दो मुदश्रुभिरिवाम्बुभिः ॥८॥ घनसिक्तमहीगन्धाद् विन्ध्याद्रिस्मृतिदुर्धरः। सिन्धुरः क्ष्मापदम्पत्योरुच्चचाल दिशैकया ॥९॥ हित्वा परिजनं सर्वमुत्पथेनाथ विप्लुतः। नामन्यतैष मातङ्गो गुरुशिक्षामिवाङ्कुशम् ॥१०॥ दूरस्थं पार्श्वं एवाशु पार्श्वस्थं दूरतः पुनः। गजवेगेन संभ्रान्तौ दम्पती तावपश्यताम् ॥ ११ ॥ इति कर्तव्यतामूढो राजा न्यग्रोधमग्रतः। एकमालोक्य दयितां जगादोत्पन्न-

व्रजन् पथि। ऊचे शासनदेव्येदमन्तरिक्षतलस्थया ॥ ८ ॥ किमुत्सुकायसे वत्स ! प्रव्रज्याग्रहणं प्रति। चारित्रावारकं भोगफलं कर्मास्ति यत्तव ९ ॥ कञ्चित्कालं प्रतीक्षस्व गृहे तत्कर्मणः क्षये । प्रव्रज्यां प्रतिपद्येथाः सर्वं काले फलेग्रहि ॥ १० ॥ चारित्रावारकं कर्म साधुसङ्गजुषो मम। करिष्यति किमित्युक्त्वा स ययौ स्वामिनोऽन्तिके ॥११॥ निषिद्धः स्वामिनापीति रभसेन भृशायितः। प्रपेदे स परिव्रज्यां तत्पादकमलान्तिके ॥ १२ ॥ अथ षष्ठाष्टमादीनि तप्यमानस्तपांसि सः। व्यहार्षीत् प्रभुणा साकं द्रोणाकरपुरादिषु ॥ १३ ॥ जपन् सिद्धान्तमनिशं सिद्धाकर्षणमन्त्रवत्। विभीषिका इवासह्यान् सैष सेहे परीषहान् ॥१४॥ संकटादिव निःसर्तुं स भोग्यफलकर्मणः। तपोभिः प्रतनूचक्रे स्वतनूमतनूद्यमः॥ १५ ॥ महर्षिः सोऽन्यदैकाकी चिकीर्षुः षष्ठपारणम्। ययौ वेश्यागृहे धर्मलाभवाचमुवाच च ॥ १६ ॥ न नोऽर्थो धर्मलाभेन द्रव्यलाभोऽस्तु केवलम्। इति प्रत्याह तं वेश्या सोपहासविकारयुक् ॥ १७ ॥ किं मां हन्त वराकीयं हसतीति विचिन्त्य सः। कृष्ट्वा नीव्रतृणं लब्ध्या रत्नराशिमपातयत् ॥ १८ ॥ द्रव्यलाभोऽयमित्युक्त्वा स तस्माद्ववले गृहात् । ससंभ्रमं तमभ्येत्य सापि वेश्येदमभ्यधात् ॥ १९ ॥ ग्रवक्रयाधमर्णां मामाधाय त्वं क्व यास्यसि ?। नदीव रसपूर्णा यदलङ्घ्याहं पुरस्तव ॥ २० ॥ तपःकष्टमिदं मुञ्च भुङ्क्ष्व भोगान् मया सह। त्यक्ष्यामि सर्वथा प्राणान् प्राणनाथाहमन्यथा ॥ २१ ॥ भूयो भूयस्तयेत्युक्तो भोगान्भोगान्विदन्नपि । भोग्यकर्मवशात्तस्याः सोऽनुमेने वचस्ततः ॥२२॥ शश्वद्दशाधिकान् वापि बोधयिष्यामि नो यदि । तदादास्ये पुनर्दीक्षां प्रतिज्ञामिति चाकृत ॥ २३ ॥ मुक्तर्षिलिङ्गः सोऽवात्सीद्वेश्यावेश्मनि चिन्तयन्। दीक्षानिषेधिकावाचं देवताया जिनस्य च ॥ २४ ॥ भोगान् सह तयाऽभुङ्क्त सोऽन्वहं च जनान् दश। प्रबोध्य भव्यान् दीक्षार्थं प्रैषीदुपजिनेश्वरम् ॥ २५ ॥ क्षीणेऽन्यदा भोगफले तस्य बोधयतः सतः । नवाबुध्यन् जनाष्टक्कजातीयो दशमो न तु ॥ २६ ॥ तस्मिन्नबुध्यमाने सा वेश्या रसवतीं कृताम्। आचख्यौ नन्दिषेणाय समयज्ञा मुहुर्मुहुः ॥ २७ ॥ सोऽपूर्णाभिग्रहो भोक्तुं नोत्तस्थौ किन्तु

पथश्रान्तो ययौ ग्रामे स मुनिग्रामणीः क्वचित् ॥ ७० ॥ याचित्वोपाश्रयं तत्र सायं संस्तारके स्थितः । भावितात्मा स राजर्षिः प्रीतिमानित्यचिन्तयत् ॥ ७१ ॥ धन्योऽहं पुण्यवान् यानमिव यस्यावतीर्थितम् । अकस्माद् व्रतमायातं गृहीतं च मया नयात् ॥ ७२ ॥ कदाहं गुरुपादान्ते दान्तेन मनसा गतः । प्रव्रज्यां पालयिष्यामि यथाविधि समीरिताम् ॥ ७३ ॥ कदाहं भवदाहं च स्वरसप्रशमोर्मिभिः । गुरूपदेशतः सम्यक् शमयिष्यामि सर्वथा ॥ ७४ ॥ चिन्तयन्निति निर्माय शिरसि प्राञ्जलोऽञ्जलिम् । स्तुवन् पञ्चापि पञ्चाङ्गं ननाम परमेष्ठिनः ॥ ७५ ॥

आहारोपधिदेहमोहरहितः श्रीपुण्डरीको मुनिश्रेष्ठः क्षामितसर्वजन्तुनिवहो लीनः परे ब्रह्मणि ।
तत्पूर्वाध्वपरिश्रमेण महता खिन्नोऽपि नास्थाद् महच्चित्रं दीर्घपदप्रयाणविधिना सर्वार्थसिद्धिं ययौ ॥ ७६ ॥

॥ इति श्रीपुण्डरीककथा ॥

आर्द्रकुमारोऽभयकुमारकथायाम् , कीर्तिधरस्तु सुकोशलकथायामुक्तः । नन्दिषेणस्तूच्यते, यथा;—

अस्ति स्वस्तिश्रियोरेकगृहं राजगृहं पुरम् । नृपस्तत्र जितारातिश्रेणि श्रेणिक इत्यभूत् ॥ १ ॥ कुमारमण्डलीमौलिमण्डनं तस्य भूपतेः । नन्दिषेण इति ख्यातः सुतरत्नमजायत ॥ २ ॥ अन्यदा विहरन् वीरः पुरग्रामाकरादिषु । समेत्य समवासार्षीत् तत्रर्षीन्दुसमन्वितः ॥ ३ ॥ तन्निशम्य समायातं प्रणन्तुमथ पार्थिवः । सोमः सौम्येन वा नन्दिषेणेन सहितो ययौ ॥ ४ ॥ प्रणम्योचितभूपीठप्रतिष्ठे सति पार्थिवे । चकार भवनिष्कारदेशिनीं देशनां विभुः ॥ ५ ॥ असारेऽस्मिन्नसारे संसारे सारमेकं तपः खलु । यतः स्वर्गापवर्गोऽपि देहिनां करगोचरः ॥ ६ ॥ श्रुत्वेति देशनां प्राप्ते नृपे निजनिकेतनम् । तं प्रव्रजितुमापृच्छद् नन्दिषेणो भवं त्यजन् ॥७॥ कृच्छ्रादनुमतः पित्रा स दीक्षार्थी

आरोपयामि लज्जायां तदेनं विधिवन्दनात् । चेततेऽसौ यदि पुनः प्रच्युतः स्वप्रतिश्रवात् ॥ ५१ ॥ चिन्तयित्वेति निर्माप्योत्तरासङ्गं यथाविधि । वन्दित्वा तं नृपोऽपृच्छत् प्राञ्जलिः सुखसंयमम् ॥ ५२ ॥ ततोऽसौ प्राह विहितमियत्कालं मया तपः । राज्यार्थी सांप्रतं राजन् ! भवन्तमहमागमम् ॥ ५३ ॥ स्वबन्धोर्व्रतखिन्नस्य वचः श्रुत्वा व्रतार्थ्यसौ । शोकहर्षाश्रुमानूचे प्रधानानिति भूपतिः ॥ ५४ ॥ भोः ! भोः ! सचिवसामन्ताः ! बन्धुर्मे वोढुमक्षमः । व्रतं वत्सतरो भारमिव तेनागतो मयि ॥ ५५ ॥ कारणीयस्ततो राज्यमयं प्राज्यमहं यथा । युष्माभिरनुमन्तव्योऽस्मि च संयमहेतवे ॥ ५६ ॥ आपृच्छ्येति प्रधानांस्तद्यतिलिङ्गमुपाददे । निजं च कण्डरीकाय राज्यलिङ्गं नृपो ददौ ॥ ५७ ॥ कण्डरीकस्ततः साकं प्रधानैः पुरमाविशत् । भद्रासनं च स्वपितुः काकश्चैत्यमिवाश्रयत् ॥ ५८ ॥ माङ्गलिक्यं व्यधुस्तस्य सामन्तसचिवादयः । बहिरन्तश्च तेनोच्चैः शल्येनेवातिदुःखिताः ॥ ५९ ॥ अयं सूदानथादिक्षद् दुष्कालादिव निःसृतः । प्रगुणं मत्कृते सर्वमशनं कुरुताशु रे ! ॥ ६० ॥ तथा ते चक्रिरे सोऽपि स्वोदरं समपूरयत् । भोज्यैः, कौतुपिकः पांशुविसरैः कुतुपं यथा ॥ ६१ ॥ विध्यातजठराग्नित्वात्तस्याहारव्यथा निशि । बभूव वेल्लतो भूमौ शय्यायां च प्रतिक्षणम् ॥ ६२ ॥ हुङ्कारङ्कारसूत्कारपुरस्सरमथारटत् । मातरं पितरं देवं सस्मार च मुहुर्मुहुः ॥ ६३ ॥ परित्राणं न कोऽप्यस्य चकार सचिवादिषु । औषधेन विना व्याधिरिव शाम्यत्वसाविति ॥ ६४ ॥ ततोऽसौ कुपितस्तेभ्यश्चिन्तयामासिवानिति । प्रातरेतान् पीलयिष्ये सपुत्रपशुबान्धवान् ॥ ६५ ॥ कांश्चित्कांश्चिच्च सामन्तमन्त्रिणः कण्ठमर्दतः । चूर्णयिष्येऽसिना ये मेऽप्युपेक्षामिति कुर्वते ॥ ६६ ॥ कृष्णलेश्यापरिणाम इत्यसावारटन् भृशम् । अप्रतिष्ठो विपद्यागादप्रतिष्ठानकावनिम् ॥ ६७ ॥ राजर्षिः पुण्डरीकस्तु धन्यंमन्योऽध्वनि व्रजन् । दध्यौ व्रतं ग्रहीष्यामि गत्वाहं गुरुसाक्षिकम् ॥ ६८ ॥ क्षुत्तृषार्तोऽपि घर्मार्तोऽप्युर्वीचंक्रमणक्रमात् । पाषाणकण्टकाविद्धांह्रिगलद्रुधिरोऽपि हि ॥ ६९ ॥ शुभध्यानपरः शस्तलेश्यापरिणताशयः ।

३० ॥ अथाह कण्डरीकोऽपि युक्तमार्य ! त्वयोदितम् । परं तत्पौरुषं मन्ये यत्तारुण्येऽपि संयमः ॥ ३१ ॥ महापद्मसुतः किं न त्वत्कनिष्ठश्च किं न हि । अहं तदाग्रहं कृत्वा यद् गृह्णामि न संयमम् ॥ ३२ ॥ संसारो दुस्त्यजस्तावद् व्रतं तावच्च दुष्करम् । दुष्प्रापं च शिवं तावद्धीरा यावदुदासते ॥ ३३ ॥ प्रतिज्ञामिति निर्माय वार्यमाणोऽपि बन्धुना । सोत्सवं कण्डरीकोऽथ व्रतं जग्राह साग्रहः ॥ ३४ ॥ कोऽपि राज्यधरो यावदेधते तावदुन्मनाः । पुण्डरीकः पुना राज्येऽप्यस्थाद्भावेन संयमी ॥ ३५ ॥ तप्यमानस्तपस्तीव्रं सहमानः परीषहान् । कण्डरीकमुनिः साकं गुरुभिर्व्यहरद् भुवि ॥ ३६ ॥ यथा कालं वसन्तर्तुरथ प्रावर्तताऽन्यदा । कूजितैः कलकण्ठीनामकुण्ठीकृतमन्मथः ॥ ३७ ॥ पलाशपुष्पदीपालिमालितेऽवनिमण्डले । पुष्पाणि पूरयत्युच्चैर्मधावुत्तरसाधके ॥३८॥ भृङ्गकूजितहुंकारमन्त्रजापपरायणः । कण्डरीकं वशीचक्रे तदा मन्मथमान्त्रिकः ॥ ३९ ॥ युग्मम् ॥ चारित्रावरणे कर्मण्युदितेऽचिन्तयत् ततः । कण्डरीकमुनि कोऽयमपस्मारो व्रतं मम ॥ ४० ॥ दुर्विधानां च वृद्धानामुभयेषां व्रतं मतम् । येषां भोगेष्वसंपत्तिरशक्तिश्च किल क्रमात् ॥ ४१ ॥ हहा ! तदाहमार्येण वारितोऽप्यभजं व्रतम् । अथवाऽद्यापि किं नाम विनष्टं मे त्यजाम्यदः ॥ ४२ ॥ भजामि द्विगुणैर्भोगैः पूरयामि सुखक्षतिम् । तदार्यदित्सितं राज्यमादायात्मक्रमागतम् ॥ ४३ ॥ चिन्तयित्वेति शयितान् मुक्त्वा गुरुपदाम्बुजान् । प्रकृत्या मलिनः सोऽगाद् भृङ्गवत्पुण्डरीकिणीम् ॥ ४४ ॥ स तत्रोपवने गत्वोपाधिमालम्ब्य शाखिनि । कण्डरीको विशिश्राम श्रान्तः शाड्वलभूतले ॥ ४५ ॥ उद्यानपालकेनाथ ज्ञापयामास भूपतिम् । भूमानपि तदाकर्ण्य विस्मयादित्यचिन्तयत् ॥ ४६ ॥ व्रते भग्नप्रतिज्ञोऽयमेकाकी यदिहागतः । महासत्त्वोऽथवैकाकिप्रतिमास्थो भविष्यति ॥ ४७ ॥ तथाप्यल्पपरिवार एव यामि तदन्तिके । कथञ्चनायं भग्नः स्याद्विचित्रा कर्मणां गतिः ॥ ४८ ॥ चिन्तयित्वेति राजापि प्रधानैः कैश्चिदन्वितः । उद्यानमागतोऽपश्यत्कण्डरीकं तथास्थितम् ॥ ४९ ॥ तदालोक्य महीपालः शोकेनाङ्गीकृतो हृदि । न्यमृशत्तातपुत्रोऽयं हा ! कर्मवशगोऽभवत् ॥ ५० ॥

विवेकिभिरुपास्यते ।स्वर्गापवर्गसंपत्तिकारणं यः सनातनः ॥ ११ ॥ आत्मासौ पञ्चभिरपीन्द्रियै रागमुपागतैः। मोहतीक्ष्णैर्निहन्येत स्वस्व-
तृष्णासिधेनुभिः ॥ १२ ॥ तपोहुताशनोद्भासिज्ञानाद्यन्वयचेतितः । आत्मा सज्जोभवत्येष हतोऽपीन्द्रियघातकैः ॥ १३ ॥ विषयांस्त्याजयित्वै-
तानीन्द्रियाणि रिपूनिव । तदा दासीकरोत्यात्मा वैराग्यास्त्रं यदाप्नुयात् ॥ १४ ॥ अन्नपानादिरोधेनात्मनः सेनापतिस्तपः । बद्धमूलान्
पुरेऽमुष्मिन् मारयत्यान्तरान् रिपून् ॥ १५ ॥ स्थापितोऽथ मनोऽमात्यः करणेष्वेषु पञ्चसु । पुरेऽस्मिन्नात्मनो राज्यं विप्लावयति
विप्लुतः ॥ १६ ॥ विवेक उपरिस्थायी न्यायी यद्यस्य योज्यते । आत्मभूपालहस्ते स्युस्तदा सर्वा अपि श्रियः ॥ १७ ॥ ज्ञात्वा विवेकतोऽनेन
करणाचारचञ्चुना । कल्याणं ग्रस्तमप्यात्माऽऽदत्ते संयमयन्मनः ॥१८॥ श्रुत्वेति देशनां नत्वा गुरुपादानथो नृपः । जगाम नगरीमन्तर्भववैरा-
ग्यमुद्वहन् ॥ १९ ॥ मन्त्रिभिर्मन्त्रयित्वाथ कण्डरीकं जगौ नृपः । वत्स ! राज्यं गृहाणेदं पालयेथा यथाक्रमम् ॥ २० ॥ परिव्रज्यां ग्रहीष्यामि
विरक्तोऽहं भवात्पुनः । वार्धके मुनिवृत्तित्वं कुलाचारादपीति नौ ॥ २१ ॥ उवाच कण्डरीकस्ते भ्रातः ! का भ्रातृता मयि। क्षिप्त्वा संसार-
गुप्तौ मामात्मानं मोचयिष्यसि ? ॥ २२ ॥ आत्मनः स्वदते यत्तद् दीयते लघवे पुरः । तदार्य ! मह्यं स्वमतं व्रतं दापयसे न किम् ? ॥२३॥
अथाह पुण्डरीकस्तं वत्स ! युक्तं त्वमब्रवीः । ऋते व्रतं मनुष्यत्वे नान्यत्किमपि सुन्दरम् ॥ २४ ॥ यौवने मुक्तिवर्त्मेदं परं न वहते यतः ।
स्वस्थानेऽत्र स्थितात्कामचरटाद् भयमुत्कटात् ॥ २५ ॥ स्मरस्य विषयानस्य भञ्जयन्ती समन्ततः । मुखे शिबिरदन्तांश्च पातयन्ती
निरन्तरान् ॥ २६ ॥ पक्ष्म वल्लभवाजीन्द्रान् खञ्जयन्तीन्द्रियाणि च । भस्मयन्ती च कबरीगरीयोवनजालिकाम् ॥ २७ ॥ जरा यदा तु चारित्र-
सेनानीशमवाहिनी । दिग्जयं कुरुते मोक्षमार्गोऽयं सुवहस्तदा ॥ २८ ॥ विशेषकम् ॥ तन्ममेयं जरा वत्स ! व्रतसाहाय्यकारणम् । तेन त्वां
वच्मि तारुण्यं यावत्तावद् गृहे वस ॥ २९ ॥ जाते राज्यधरे पुत्रे तारुण्ये चात्र जीर्यति । स्वकुलाचारतः पश्चाद् गृह्णीयास्त्वमपि व्रतम् ॥

शतं घर्षाणयायुर्भुक्त्वा ततोऽपि च । धीर ! त्वं धारिणीकुक्षौ पुत्रत्वेन समागमः ॥ ४२ ॥ गजो येनाभवस्तेन स्वप्ने सा गजमैक्षत । तृषार्त्तो येन चागास्त्वं तेन सा वृष्टिदोहदा ॥ ४३ ॥ तत्तिरश्चापि भवता पुरा जीवानुकम्पया । सोढं दृढतया कष्टमिदानीं तु किमुच्यते ? ॥ ४४ ॥ पदस्पर्शेन साधूनां पूज्यः पांशुकणोऽपि हि । जायते वत्स ! तेनायं विषोद्भुमुचितस्तव ॥ ४५ ॥ श्रुत्वेति जातिस्मृतिमान् मेघः प्रमदबाष्पयुक् । विभुं नत्वा ददौ मिथ्यादुष्कृतं स्वविकल्पिते ॥ ४६ ॥ तपोऽऽभितप्य क्षमया प्रधानं विपद्य भेजे विजयं विमानम् । च्युत्वा ततोऽप्येष महाविदेहजनेः शिवं यास्यति मुक्तदेहः ॥ ४७ ॥

॥ इति श्रीमेघकुमारकथा ॥

अथ पुण्डरीको यथा—

जम्बूद्वीपे विदेहेऽस्ति विजयः पुष्कलावती । नृपुण्डरीकिणी तत्रास्ते पुरी पुण्डरीकिणी ॥ १ ॥ महापद्म इति श्रीणां सद्म तत्राभवद् नृपः । राज्ञी तस्य विनिर्धूतच्छद्मा पद्मावतीत्यभूत् ॥ २ ॥ तयोश्च पुण्डरीकश्च कण्डरीकश्च विश्रुतौ । सुतावजनिषातां द्वौ तत्त्रधर्मभुजाविव ॥ ३ ॥ दत्त्वाथ पुण्डरीकाय राज्यं भूमिपतिस्ततः । स्थविराचार्यतः प्राप्य व्रतं तप्त्वा शिवं ययौ ॥ ४ ॥ त एव स्थविराचार्या विहरन्तोऽवनीतले । पुर्यां कालान्तरेणात्र समेत्य समवासरन् ॥ ५ ॥ श्रुत्वा तदागमं राजा कण्डरीकसमन्वितः । पुण्डरीको महाभूत्याभ्येत्य चैतानवन्दत ॥ ६ ॥ गुरवस्ते मुखद्वारविन्यस्तमुखवस्त्रिकाः । धर्मलाभाशिषं दत्त्वा तस्मै धर्ममुपादिशन् ॥ ७ ॥ यौवनं वनजाक्षीणामपाङ्गप्रतिहस्तकम् । प्रेमापि पद्मिनीपत्रस्थितोदकणसोदरम् ॥ ८ ॥ विषयाः किन्त्व किम्पाकविपक्वफलसोदराः । वपुःश्रियोऽपि संध्याभ्ररागाभिनयनाटिकाः ॥ ९ ॥ संपातदा सदा ज्ञेया संपदामपि संहतिः । तदपि प्राणिनामायुर्वायुसब्रह्मचारि च ॥ १० ॥ मत्वेति धर्म एवैको

कीर्मृदुलाः खादन् पिबन् रेवाम्बु निर्मलम् ॥ २२ ॥ ग्रीष्मे भीष्मेऽन्यदा वन्यदावधूमाकुलीकृतः । अगास्तृष्णातुरस्तूर्णं पल्वलं प्रतनूदकम् ॥ २३ ॥ तत्र पातुं प्रविष्टोऽम्बु निमग्नः पङ्कसंकटे । प्राणं कुर्वन् स्वमाक्रष्टुं निमग्नोऽस्मि विशेषतः ॥ २४ ॥ ततः पूर्वापराद्धेभयूना व्यूढेन हस्तिना । तत्रागतेन दन्ताभ्यां विद्धस्त्वं कटु चारटः ॥ २५ ॥ सप्तमोर्व्यामिव प्राप्तः सप्तरात्रमिति व्यथाम् । विषह्य पालयित्वायुः समा विंशोत्तरं शतम् ॥ २६ ॥ आर्तध्यानेन मृत्वात्र भारते विन्ध्यपर्वते । चतुर्दन्तः करी मेरुप्रभो यूथाधिपोऽभवः ॥ २७ ॥ युग्मम् ॥ ततो ग्रीष्मे दवं दृष्ट्वा संभ्रान्तः समचिन्तयः । मयेदृग्दृष्टपूर्वोऽग्निसंभ्रमः क्वचिदप्यहो ! ॥ २८ ॥ चिन्तयन्निति संजातजातिस्मृतितया व्यधाः । प्रावृष्युत्पाट्य विटपिविटपान् स्थण्डिलत्रयम् ॥ २९ ॥ ग्रीष्मकाले तथैवाथ दीप्यमाने दवानले । भीतो दहनतस्त्वं तु प्रथमं स्थण्डिलं गतः ॥ ३० ॥ तदग्रे परितोऽभ्येत्य निकुञ्जेभ्योऽग्निभीरुभिः । उपर्युपरि संलीनैर्नीरन्ध्रं श्वापदैर्वृतम् ॥ ३१ ॥ मुक्त्वा तत्कृपया तेषां द्वितीयं स्थण्डिलं गतः । तत्तथैव ततोऽयासीस्तृतीयं सपरिच्छदः ॥ ३२ ॥ अस्थास्तत्र निराबाधे प्रविश्य करिणीयुतः । तारिकासहितः सायं नभसीव निशाकरः ॥ ३३ ॥ कण्डूयितुं ततः स्वाङ्गमेकोऽङ्घ्रिस्त्वयकोद्धृतः । स्थानेऽत्र शशकोऽभ्येत्य तस्थौ दावभयातुरः ॥ ३४ ॥ कृतकण्डूयनो यावद्यथास्थानेऽमुचः पदम् । स्पृष्टश्च तावदेतेन शनकैः शशकस्त्वया ॥ ३५ ॥ सहसैव त्वयाऽऽकुञ्च्य धृतो जीवानुकम्पया । त्रिभिरेव स्थितं पादैः कृपाहो ! ते पशोरपि ॥ ३६ ॥ मनुष्यायुस्त्वया बद्धं तया सत्त्वानुकम्पया । संसारश्च सुपुण्यात्मन् ! अतनुः प्रतनुः कृतः ॥ ३७ ॥ दिनद्वयेन सार्धेन दग्ध्वा वनमशेषतः । स्वयमेव तदा दावपावकः प्रशमं ययौ ॥ ३८ ॥ ययुस्तद्भीतितो मुक्ताः शान्तेऽग्नौ श्वापदाः समे । स्थण्डिलेभ्यो विनिःसृत्य कुटुम्बेभ्यो यथा जनाः ॥ ३९ ॥ मेघ ! त्वमपि खिन्नात्मा तदानीं क्षुत्तृषातुरः । तूर्णं निर्यातुकामोऽद्रिर्वेगाहत इवापतः ॥ ४० ॥ मृतावस्थस्ततः काकोलूकजम्बुकभक्षणाम् । दुःसहं सहमानोऽस्था महासत्त्व ! दिनत्रयम् ॥ ४१ ॥ पालयित्वा

जस्वप्नसूचितम् । सुरत्नं रत्नगर्भेव गर्भे सुतमधारयत् ॥ २ ॥ तस्यास्तृतीयमासेऽब्दवृष्टिखेलनदोहदम् । अकाले पूरयामास राजा दिव्यानुभावतः ॥ ३ ॥ असूयत तया सूनुः समये निःसमद्युतिः । दोहदान्वयतो मेघकुमार इति विश्रुतः ॥ ४ ॥ पाल्यमानः क्रमेणाप वृद्धिं नृपतिनन्दनः । असौ धात्रीभिरुद्यानपालीभिरिव चन्दनः ॥ ५ ॥ अष्टादश लिपीस्ततो द्विगुणान्यायुधानि स. । ततोऽपि द्विगुणा बिभ्रत् कला भेजेऽथ यौवनम् ॥ ६ ॥ इतश्चान्येद्युरुद्याने वने गुणशिलाभिधे । यथाविहारं श्रीवीरः समेत्य समवासरत् ॥ ७ ॥ श्रेणिकः सपरीवारो निरीय नगरादथ । प्रणन्तुमाययौ नाथं स्वर्गादिव पुरन्दरः ॥ ८ ॥ प्रणम्योचितभूपीठप्रतिष्ठेषु नृपादिषु । स्वामी संसारधिक्कारदायिनीं देशनां व्यधात् ॥ ९ ॥ देशनान्ते प्रबुद्धात्मा विभु मेघो व्यजिज्ञपत् । नाथ ! संसारपाथोधितरीं दीक्षां प्रयच्छ मे ॥ १० ॥ जगादाथ जगन्नाथः प्रमादं वत्स ! मा कृथाः । ततश्चानेन पितरावापृष्टौ नम्रमौलिना ॥ ११ ॥ कृच्छ्रादनुमतस्ताभ्यामथ मेघो महोत्सवात् । जग्राह साग्रहो दीक्षां करेण परमेशितुः ॥ १२ ॥ स्वामिना दीक्षयित्वाथ स्थविरेभ्यः समर्पितः । रात्रौ संस्तारकस्तस्य स्थानद्वारि क्रमादभूत् । १३ ॥ ततः शरीरचिन्तायै गच्छदागच्छतां तदा । स्थविराणां पदैर्मेघ. सर्वाङ्गीणमघट्ट्यत ॥ १४ ॥ कदलीकोमलाङ्गस्य बदरीविटपोपमैः । तत्पादैर्घट्ट्यमानस्य निद्राऽऽयासीदमुष्य न ॥ १५ ॥ अचिन्तयच्च खिन्नात्मा मेघोऽमी व्रतिनः पुरा । गृहस्थं मां मृदूल्लापैरालपन् निखिला अपि ॥ १६ ॥ घट्टयन्तस्त्विदानीं मां पदैरमृदुपातिभिः । कुम्भकारगृहद्वारपङ्कतामनयन् हहा ! ॥ १७ ॥ तत्प्रभाते विभुं नत्वा यास्यामि निजमन्दिरम् । व्यलोकि मालवः स्पष्टं भक्तिताश्चापि मण्डकाः ॥ १८ ॥ ततः प्रगे तथा कर्तुं तमुपेतं प्रभुर्जगौ । वत्स ! ते जाग्रतो रात्रौ चिन्ता या समजायत ॥ १९ ॥ महासत्त्ववतां मेघ ! त्वादृशां नोचितैव सा । दाहे चर्मैव दुर्गन्धं सुगन्धस्त्वगरुर्यतः ॥ २० ॥ अपरं च भवादस्मात्तृतीये त्वं भवान्तरे । सुमेरुप्रभ इत्यासीर्विन्ध्ये यूथाधिपः करी ॥ २१ ॥ सुखं स्वीयपरीवाररत्वमस्थाः प्रतिकाननम् । सल्ल-

ङ्गारेण हा! मया ॥ ५४ ॥ ही! नीरवाहवन्नीचैर्गामिना यत्कृतं मया। रुष्टे राज्ञीह तज्जातमकृत्यमपि निष्फलम् ॥ ५५ ॥ अयं च रमणी राजवंशमुक्तामणीर्नृपः। भुञ्जानोऽपि यदेतस्यां रज्यते नटयोषिति ॥ ५६ ॥ तन्मन्ये मोहराजस्याविषयः कोऽपि न क्वचित्। मुक्त्वा जिनमुनीनेतान् महाव्रतधुरन्धरान्॥ ५७ ॥ विषयीकुर्वते ये स्वदृशामेणीदृशोऽपि न। ईर्यायै न्यञ्चमुखा धारासारसिक्ता वृषा इव॥ ५८ ॥ तदेत एव धन्या ये विमलं ब्रह्म बिभ्रति। यत्र चामी प्रवर्त्तन्ते मार्गः सोऽस्तु ममापि हि॥ ५९ ॥ इति भावयतस्तस्य विगलत्पापकर्मणः। विपेदे मोहसंतानमुत्पेदे केवलं महः ॥ ६० ॥ तत्कालं तन्महाज्ञानमहिमान वितेनिरे। देवा जयजयेत्युच्चैरुच्चरन्तश्चतुर्विधाः ॥ ६१ ॥ द्रव्यलिङ्गं समादत्स्व नमस्कुर्मो यथा वयम्। त्रिदशैरिति विज्ञप्तः केवली तत्तथाऽकरोत्॥ ६२ ॥ वंशः स एव कनककमलं तत्क्षणादभूत्। विमानिभिः स्थितोऽत्रैव नतोऽसौ देशनां व्यधात्॥ ६३ ॥ उन्मुखैर्भूचरै राजादिभिर्विस्मितमानसैः। चातकैरिव मेघाम्भः पपे तद्देशनावचः ॥ ६४ ॥ प्रबुद्धा बहवो जीवास्तस्य देशनया तदा। केचिद्दिग्विरतिं सर्वविरतिं केचनाश्रयन्॥ ६५ ॥ राजा स्वेङ्गितवैराग्यादात्मवैराग्यतो नटी। राज्ञी च राजवैराग्यात्तत्पार्श्वे जगृहुर्व्रतम्॥ ६६ ॥ तदानीमेव तस्योच्चैस्तस्थुषः कमलासने। सर्वे ते क्षपकश्रेणिमारुह्यासन् समासनाः ॥ ६७ ॥

क्रमादिलातीतनयो मुनीन्दुस्तैः साकमुत्पाकसमृद्धिपात्रम्। निर्धूय निर्धूतभवो भवोपग्राहीणि कर्माणि शिवं प्रपेदे ॥ ६८ ॥

॥ इतीलातीपुत्रकथा ॥

अथ मेघकुमारो यथा—

अस्ति स्वस्तिकमाणिक्यराजि राजगृहं पुरम्। आसीत्तत्र गुणश्रेणिकलितः श्रेणिको नृपः ॥ १ ॥ तत्प्रिया धारिणी नाम साम-

सिद्धिशिलामिव भवोपरि ॥ ३४ ॥ खड्गखेटकहस्तोऽङ्घ्रिविलसत्पादुकाद्वयः । इलासूनुरथारोहद्वंशं विश्वमनोऽपि च ॥ ३५ ॥ स्थितां वंशमवष्टभ्य शालभञ्जीमिवाग्रतः । नटीमालोकयन् राजा तदानीमित्यचिन्तयत् ॥ ३६ ॥ स्वयं वंशाद् निपत्यो चेन्नटोऽयं म्रियते यदि । नटीमेतां तदाऽक्लेशात् क्षिपाम्यन्तःपुरे निजे ॥ ३७ ॥ इतश्च वीक्ष्यमाणः खे खेचरैर्भूचरैरपि । इलासूनुः किलाऽधत्त करणानि चतुर्दश ॥३८॥ सप्त पश्चात्पुरः सप्त तान्यथो फलकोपरि । ऊर्ध्वोऽस्थात्कीलकान् कृत्वा पादुकारन्ध्रगोचरान् ॥ ३९ ॥ पौरामात्यादयस्तस्य नाट्यातिशयरञ्जिताः । दध्युर्ददाति राजा चेदस्मै दद्मो वयं ततः ॥४०॥ राजापि मृत्युमाकाङ्क्षंस्तस्यान्तर्विस्मितोऽपि हि । ऊचे न किञ्चिदालोकि मयैतत्तत्पुनः कुरु ॥ ४१ ॥ विलक्षीभूय कृष्णास्यैः पौरामात्यैरथ स्थितम् । स तु लोभात्पुनस्तेने करणानि चतुर्दश ॥ ४२ ॥ नृपस्तत्पतनाकाङ्क्षी जगाद पुनरप्यदः । व्यलोकि न तथा सम्यक् करणानि पुनः कुरु ॥ ४३ ॥ नृपाविवेकाविमनाः सर्वोऽप्यासीज्जनस्ततः । इलासूनुः पुनर्लोभात्तत्तथा कष्टमातनोत् ॥ ४४ ॥ राजा तथैव चाचख्याविजातीतनयः पुनः । शङ्कितश्चिन्तयामास किमयं ग्रहिलो नृपः ? ॥४५॥ अज्ञानो वाथ विद्वेषी यदेवं वक्ति मां मुहुः । चिन्तयन्निति तं दृष्टिविकाराद् ज्ञातवानयम् ॥ ४६ ॥ तदा च प्रांशुवंशाग्राधिरूढोऽयमलोकत । इभ्यगेहे क्वचिद्भिक्षाकृते प्राप्तं मुनिद्वयम् ॥ ४७ ॥ ईर्यैषणोक्षणाभ्यस्तमीक्षणं क्षणमप्यहो ! । अददान पुरो दानं ददत्यामपि योषिति ॥ ४८ ॥ दृष्ट्वा तद् व्रतिनोर्द्वन्द्वमद्वन्द्वशमभाजनम् । इलासूनुरथोत्सूनभावोद्वेगो व्यभावयत् ॥ ४९ अहो ! मोहस्य विहितद्रोहस्याब्धेश्च तुल्यता । स्ताघो यस्य महावंशैरपि न प्राप्यते क्वचित् ॥ ५० ॥ यदुच्चकुलसंभूतोऽप्यहमुच्चकुलोद्भवाः । सुकन्या लभमानोऽपि व्यलगं नीचयोषिति ॥ ५१ ॥ मन्मुखं को नु वीक्षेत गृह्णीयाद् मेऽभिधां च कः । भाषते कोऽपि मां को नु पदेनापि स्पृशेच्च माम् ? ॥ ५२ ॥ येन मोहमहान्धेनाऽकार्यसज्जेन पातितम् । असुखे हा ! मनः पित्रोर्निर्निमित्तोपकारिणो. ॥ ५३ ॥ मानिता न सुहृद्वाचो गणितं नात्मलाघवम् । जनवादाच्च नो भीतं कुला-

मोहितश्छिन्नन्यस्तवल्लेप्यक्लृप्तवत् । पाषाणोत्कीर्णवच्चास्थाद् यन्त्रकीलितवच्च सः ॥१४॥ इत्थेति जल्पितो मित्त्रैर्नोचे किञ्चन लज्जया । भूयो
ऽप्यभिहितोऽवादीदयं मुक्तत्रपो द्रुतम् ॥ १५ ॥ भो वयस्या इमामेव परिणेष्यामि नर्तकीम् । नो चेत्प्राणपरित्यागं करिष्यामि हुताशने ॥१६॥
ततो नीतो गृहं मित्त्रैः प्रतिबोध्य कथंचन । तत्रास्थाद् मदनावस्थाव्याकुलो मौनभागयम् ॥१७॥ पितृभ्यामथ पृष्टोऽयं लज्जमानो जगाद न ।
ताभ्यां पृष्टैस्तु तन्मित्त्रैस्तदीप्सितमकथ्यत ॥ १८ ॥ श्रुत्वा तदीहितं श्रेष्ठी मर्माहत इवाकुलः । पुत्रं रहसि कृत्वेति सानुतापमभाषत ॥ १९ ॥
कुलीनानुचितं वत्सार्थयसे त्वं किमीदृशम् । चाण्डालकूपिका क्वापि गम्यते तृषितैरपि ? ॥ २० ॥ निष्ठिताः किं वणिक्पुत्र्यः पात्रं सौन्द-
र्यसंपदाम् । अवाच्यामपि साधूनां यन्नटीमनुरज्यसे ? ॥२१॥ इलातीसूनुरप्याह ताताहमिति वेद्म्यदः । किं करोमि परं कामो वामो मथ्ना-
ति मन्मनः ॥२२॥ महान्तोऽपि न विन्दन्ति कृत्याकृत्यं स्मरातुराः । जानन्तोऽपीति किं तात ! यूयं त्याजयथ त्रपाम् ? ॥ २३ ॥ असाध्य इति
पित्राथोपेक्षितोऽयं दुरीहितः । नटेभ्यः स्वर्णतुलितामुद्वोढुं तामयाचत ॥ २४ ॥ ऊचुस्ते नोऽक्षतं रत्ननिधानमियमङ्गजा । विक्रीणामो वयं
नैतां वसुभिः प्रचुरैरपि ॥ २५ ॥ अथ ते प्रतिबन्धोऽस्यां तदागच्छ मिलाशु नः । शिल्पं शिक्षस्व चास्माकं तवैवेयं प्रिया ततः ॥ २६ ॥
इति स्वस्यावधीर्योच्चैः कुलं शीलमथो यशः । नटानाममिलत्तेषामहो कामग्रहो बली ॥ २७ ॥ अहो ! नटीकृते नृत्यपटीयानप्यभूदयम् । यद्वा
योषित्कृते शम्भुरपि जज्ञे महानटः ॥ २७ ॥ ततो बेन्नातटपुरं नटपेटकसंयुतः । ययाविलातीपुत्रोऽपि द्रविणार्जनहेतवे ॥ २९ ॥ प्रेक्षाकृते
तमादिक्षत्तत्र राजारिमर्दनः । तद्वर्ग्या राजसौधाग्रेऽवसरप्रसरं न्यधुः ॥ ३० ॥ तदा नान्दीरवाहूताः स्यूताः कौतुकरंहसा । उपर्युपरि
नीरन्ध्रममिलन् परितः प्रजाः ॥ ३१ ॥ सान्तःपुरपरीवारः पौरामात्यादिभिर्वृतः । कुट्टिमाग्रसभावेदीमलंचक्रे च भूपतिः ॥ ३२ ॥ रङ्गभूमौ
नटा वंशं तदा प्रांशुममण्डयन् । वरत्राभिश्चतसृभिर्भववद् गतिभिर्युतम् ॥ ३३ ॥ उभयप्रान्तविश्रान्तकीलिकं फलकं च ते । वंशोपरि न्यधुः

भावभिषग्वरात्परामवाप्य सम्यक्त्वमहौपधीमथ । विमुच्य नास्तिक्यमयं क्रमागतामयः क्रमेणाजनि निर्जरो नृपः ॥ ३९ ॥

सूरिस्तु पूरितजगद्यशसा रसायां धर्मोद्यमार्थमखिलानि खलानि भित्त्वा ।
कर्मक्षयं क्रमतया च विधाय मोक्षमुत्पन्नकेवलकलः कलयाञ्चकार ॥ ४० ॥

॥ इति श्रीकेशिकथा ॥

अथेलातीपुत्रो यथा ;—

वसन्तपुरमित्यस्ति पुरं तत्राभवत् पुरा । अग्निशर्मेति विप्रोऽस्य महिला सोमिलेति च ॥१॥ सोऽन्यदा साधुससर्गात् प्रबुद्धो व्रतमग्रहीत् । तत्प्रियापि तथा देहच्छायेव हि सधर्मिणी ॥ २ ॥ पूर्वाभ्यासवशादेतावनुरागं परस्परम् । तथा जातिमदं नामुञ्चतामात्तव्रतावपि ॥ ३ ॥ ततोऽनशनमाधाय तदनालोच्य दुष्कृतम् । मृत्वा द्वावपि सौधर्मकल्पे देवौ बभूवतु. ॥ ४ ॥ इलावर्धनमित्यस्ति पुरमस्मिन्निलातले । तत्र श्रेष्ठी धनाख्योऽभूद् धारिणी चास्य गेहिनी ॥ ५ ॥ तावपुत्रावमन्येतां पुत्रार्थमुपयाचिते । पुरदेव्या इलावत्या यात्रां पुत्रस्य नाम च ॥ ६ ॥ इतश्च सोऽग्निशर्मात्मा च्युत्वा सौधर्मकल्पतः । आययौ धरिणीकुक्षौ शुक्तौ स्वातिपयो यथा ॥ ७ ॥ कालेनाजायत सुतः शुभेऽह्नि शुभलक्षणः । ईलातीपुत्र इत्याख्यां पितरौ तस्य चक्रतुः ॥ ८ ॥ ततोऽङ्गैर्मृदुलै. कान्तिकन्दलैरिव चन्द्रमाः । स विश्वनयनानन्दी क्रमेण ववृधेतमाम् ॥ ९ ॥ च्युत्वा सौधर्मतस्तस्य प्रिया जातिमदादभूत् । नटस्य नन्दिनी रूपलावण्यरसदीर्घिका ॥ १० ॥ तथा ननर्त सा वंशप्रान्तरङ्गतरङ्गिता । यथा किं मानवा देवदानवा अपि विस्मिताः ॥ ११ ॥ एतामिलावतीपुत्रो मित्त्रवर्गयुतोऽन्यदा । खेचरीमिव नृत्यन्तीं चत्वरेऽथ व्यलोकयत् ॥ १२ ॥ अथास्यां रूपलावण्यविज्ञानातिशयेक्षणात् । असौ भवान्तरप्रेमाभ्यासादप्यन्वरज्यत ॥ १३ ॥ एतस्यां

राजमन्त्रिणौ ।। १९ ।। स्वरूपे तत्र देवानां जीवानां च गणेन्दुना । दिश्यमाने जगादेति विहस्य वसुधापतिः ।। २० ।। मुने ! ते भाषित
सर्वमसंबद्धमसत्त्वतः । असत्त्वं च तत्प्रत्यक्षागोचरत्वात् खपुष्पवत् ॥ २१ ॥ सत्प्रत्यक्षागोचरं न यथा भूतचतुष्टयम् । इति स्थितिमुपन्यस्य
तमूचुः सूरयोऽप्यथ ॥२२॥ भद्र ! किं भवतोऽध्यक्षविषयातीतमेव तत् । उतान्यदेहिनामाद्यपक्षे स्तम्भादिवस्तुनः ॥ २३ ॥ अभावताप्रसङ्गः
स्यात्तन्मध्यपरभागयोः । अर्वाग्विभागमात्राप्त्यै व्यापारात्तव चक्षुषः ॥ २४ ॥ अन्यपक्षोऽथवा तस्यांसिद्धत्वाद्धेतुसि तत्कथम् ? । तत्सिद्धौ
तु तवैवेह सिद्धा सर्वज्ञजीवता ॥ २५ ॥ तस्मादनुपपत्तिस्ते देवजीवादिनिष्कृतौ । जीवे च सूपपादत्वाद् वेद्यादीनामिति स्थितम् ॥ २६ ॥
ततो राजाह भगवन् ! परलोकोऽस्ति चेत्कचित् । धार्मिका मे सवित्री तत् पापीयान् जनकोऽभवत् ॥२७॥ त्वन्मते नियतं स्वर्गदुर्गतिव्य-
तिषङ्गिणौ । प्रतिबोधयतस्तन्मां कथमागत्य तौ न हि ? ॥ २८ ॥ अथाह भगवान् राजन् ! यथा कारागृहस्थितः । ईष्टे न बान्धवान् द्रष्टुमेवं
जीवोऽपि नारकः ॥ २९ ॥ अन्यच्च विषयासक्ता दिव्यप्रेमपराः सुराः । समाप्तकृत्या नो मर्त्यलोकं दुर्गन्धमियूति ॥ ३० ॥ राजोचे द्वौ पुरा
चौरौ संगृह्यैकस्तयोर्मया । खण्डितो न तथाप्यात्मा तत्तनौ क्वापि वीक्षितः ॥ ३१ ॥ क्षिप्तः कुम्भ्यां द्वितीयस्तु तद्द्वारं च नियन्त्रितम् ।
कथं तदात्मा निरगात् कुम्भ्यात्मानोऽविशन् कथम् ॥ ३२ ॥ सुरिराह यथा नीलनालिकेरात्पयोध्वनिः । निःसरत्ययसि ध्माते यथा विशति
चानलः ॥ ३३ ॥ अन्यश्च दारितादग्निररण्योः क्वापि दृश्यते । तद्वदात्मा न वीक्ष्येत देहात् खण्डीकृतादपि ॥ ३४ ॥ राजोचे तोलितश्चैक-
श्चारैः सात्मा मया पुरा । निरात्मा च ततो भारस्तत्तनौ तादृगेव किम् ? ॥ ३५ ॥ सूरिः प्राह दृतिः पूर्वं रिक्ताथो वायुपूरिता । तोल्यतां
तादृगेवास्यां भारो हि नाधिको भवेत् ।। ३६ ।। राजंस्तद्देहिनामात्मा गन्धः सुमनसामिव । देहाद् भिन्नोऽपि चिद्रूपश्चेष्टाजिह्मो मरुल्लघुः ॥
॥ ३७ ॥ पीत्वेत्थमाचार्यगवीप्रसूतोपदेशदुग्धं मधुरं सितावत् । प्रदेशिनो भूमिपतेर्विजिल्ये मिथ्यात्वहृत्पूरविषस्य पूरः ॥ ३८ ॥ गुरोरथो

अथ केशी यथा—

श्रावस्ती भरतक्षेत्रेऽस्तीह नगरी वरा। तत्र क्षत्रशिरोरत्नं जितशत्रुरभून्नृपः ॥ १ ॥ तत्र श्रीपार्श्वनाथस्य गणभृद् गुणसंभृतः। केशिनामा चतुर्ज्ञानी द्वादशाङ्गधरोऽभवत् ॥ २ ॥ इतः श्वेताम्बीति ख्याता पुरी पौरगणाञ्चिता। प्रदेशी नाम राजाऽऽसीत् तत्रासीमभुजाबलः ॥ ३ ॥ चित्रनामा च तन्मन्त्री राजकार्येण केनचित्। श्रावस्त्यामाययौ तस्यां जितशत्रुनृपान्तिके ॥ ४ ॥ केशी गणधरस्तत्र जगन्मोहतमोऽपहः। तेनैक्षि गोभिरूर्जस्वी जन्मान्धेनेव भास्करः ॥५॥ गत्वा नत्वा च तं भक्त्या निषसादैष तत्पुरः। चक्रे च केशिनाप्यस्य बोधाय धर्मदेशना ॥ ६ ॥ प्रबुद्धस्तत्क्षणादेष केशिदेशनया तया। मन्त्री पवित्रसम्यक्त्वं श्रावकत्वमशिश्रियत् ॥ ७ ॥ सिद्धकार्योऽन्यदा मन्त्री गच्छन्निजपुरीं प्रति। श्रीकेशिगणभृत्पादान् वन्दित्वैवं व्यजिज्ञपत् ॥ ८ ॥ पूज्यपादैरनुग्राह्यः श्वेताम्ब्यागमनादहम्। धर्मं चेत्प्रतिपद्येत प्रदेश्यपि नरेश्वरः ॥ ९ ॥ सूरयोऽप्यूचिरे मन्त्रिन्! स राजा नास्तिकस्तव। वास्यो धर्मेण किं क्वापि कर्पूरेणेव रामठः? ॥ १० ॥ मन्त्री प्राहोपकार्यास्तत्रान्ये सन्ति भूरिशः। पौरा भक्तिविधौ शूरा दूरादास्तामयं नृपः ॥ ११ ॥ वर्तमानेन योगेन तत्रैष्यामः कदाचन। इत्युक्ते सूरिभिर्मन्त्री स्वां पुरीमगमत्ततः ॥ १२ ॥ सूरयोऽप्येकदा पृथ्व्यां विहरन्तो यथागमम्। समेत्य श्वेताम्बीपुर्यामुद्याने समवासरन् ॥ १३ ॥ वरैर्वर्धापितो मन्त्री तदागमनवार्तया। स्थानस्थ एव सद्भक्त्या गुरुपादानवन्दत ॥ १४ ॥ अचिन्तयच्च मिथ्यात्वग्रहग्रस्तो नृपो मम। याता हा! दुर्गतिं घोरां सति मन्त्रिणि मय्यपि ॥ १५ ॥ तदेनं गुरुपादान्ते कथंचन नयाम्यहम्। तद्गीःश्रवणतोऽस्यापि यदि मोहो विजीयते ॥ १६ ॥ इतश्च वाहनव्याजाद् राजानं बहिरानयत्। परिश्रमविनोदायोद्याने प्राविविशच्च सः ॥ १७ ॥ धर्मव्याख्यापरं तत्र केशिनं वीक्ष्य भूपतिः। सोत्प्रासमवदद् मन्त्रिन्! मुण्डोऽयं रारटीति किम्? ॥ १८ ॥ चित्रोऽप्युवाच नो विद्मोऽभ्यर्णीभूय निशम्यते। इत्युभावुपसर्पाते केशिनं

मुद्ययौ । तत्प्रभावाच्च नागच्छत् पठतोऽप्येकमक्षरम् ॥ १२ ॥ प्रज्ञापात्रं परे शिष्याः खेदयन्तस्तमूचिरे । कुरु गाढं स्वरं येनायाति पाठो-
ऽतिदूरगः ॥ १३ ॥ इत्यस्य खिद्यतः सूरिर्बोधायेदमलेखयेत् । जीव ! मा रुष्य मा तुष्य यतो दोषाः स्वयंकृताः ॥ १४ ॥ घोषयन्नित्यसौ
नित्यं स्वशक्तेः सारमग्रहीत् । जीव ! मापतुषेत्यादि पदमन्यद् मुमोच च ॥१५॥ ततोऽसावतिघोषेण शश्वत्कौतुकिनो जनात् । लेभे माषतु-
षाभिख्यां मासाहसपतत्त्रिवत् ॥ १६ ॥ ज्ञानावरणखेदेनाभ्यग्रहीदित्ययं गुरोः । आचाम्लानि तदा मोक्ष्ये पाठोऽयं मे यदैष्यति ॥ १७ ॥
मुनेर्माषतुषस्यैवमाचाम्लानि वितन्वतः । द्वादशाब्दी व्यतीयाय सोऽस्य पाठस्त्वियाय न ॥ १८ ॥ स्वपाठपट्टिकामग्रे मुक्त्वैकान्तस्थितोऽन्य-
दा । निनिन्द मूर्खताकन्दमात्मानं स महातपाः ॥ १९ ॥ रे जीव ! भवता पूर्वभवे ज्ञानं व्यराध्यत । यथा तथा तवाभ्यर्थ्य क्लिश्यतोऽपि
समेति न ॥ २० ॥ ह्रिमंस्था लोकसंस्थास्ते पदानुसृतिलब्धयः । भवन्ति कवयो धन्याः स्वाराद्धं यैः श्रुतं पुरा ॥ २१ ॥ पुरा विराधित-
ज्ञानं धिग् धिग्मामधमाधमम् । श्लोकार्धमपि यस्येयद्धर्पतोऽपि समेति न ॥ २२ ॥ इत्थं विविधमात्मानं निन्दतोऽपि च गर्हतः । क्षपकश्रेणि-
लीनस्य केवलज्ञानमुद्ययौ ॥ २३ ॥ उत्पन्नकेवलोऽन्येषामनुग्रहविधित्सया । मोहाहिगारुडमिव श्लोकार्धं तदथापठत् ॥ २४ ॥ तन्निशम्या-
गमेनास्य यानस्येव प्रवासिनः । प्रवर्धयन् गुरुं तुल्ला हर्षफुल्लाननास्ततः ॥ २५ ॥ जगुर्माषतुषं पूज्याः कथं पाठस्तवागतः ? । ज्ञानेनाह स
तेनोक्तः केनोचेऽप्रतिपातिना ॥ २६ ॥ परितः सपरीवारा सूरयो भक्तिभूरयः । नेमुस्तं निस्तुषज्ञानमथ माषतुषं मुनिम् ॥ २७ ॥ सुराः
समेत्य सद्भक्तिकलिताश्चलितासनाः । तदा केवलिनस्तस्य महिमानं वितेनिरे ॥ २८ ॥ सैष माषतुषकेवली ततो गोभिरुज्ज्वलतराभिरि-
न्दुवत् । लोकसंहतितमोहतिक्रमात् कौ-मुदं किल विकास्य निर्वृतः ॥ २९ ॥

॥ इति श्रीमाषतुषमुनिकथा ॥

त्तमं तपः ॥ ६२ ॥ ज्ञातास्मत्पुत्रसंबन्धा यूयं हि मणकाद् मुनेः । नाकारयिष्यतोपास्तिं स्वार्थं सोऽथ न्यमोच्यत ॥ ६३ ॥ अमुमल्पायुषं मत्वा कर्तुं श्रुतधरं मया । सिद्धान्तसारमुद्धृत्य दशवैकालिकं कृतम् ॥६४॥ यथास्थानं नयाम्येतदिति जल्पन् गुरुस्ततः । शिष्यसंघोपरोधेन शास्त्रं समवृणोद् न हि ॥ ६५ ॥ अथ शय्यम्भवः सूरिर्यशोभद्रं महामुनिम् । श्रुतसागरपारीणं पदे स्वस्मिन् न्यवेशयत् ॥ ६६ ॥

अनङ्गहार्यप्ययमङ्गहारी गुणैरपूर्वोऽपि सपूर्व एव । शय्यम्भवो जृम्भितकीर्तिपूरः पूर्णायुरुच्चैःपदमाससाद ॥ ६७ ॥

॥ इति श्रीशय्यम्भवकथा ॥

प्रभवो जम्बूस्वामिकथायाम्, श्रीयकः स्थूलभद्रकथायाम्, उदायनस्त्वभयकुमारकथायामुपदिष्टः ॥ सांप्रतं तु माषतुषो यथा,—

पुरे रत्नपुरे सूरिरासीद् गुणनिधिः पुरा । संघमुख्यः श्रुतनिधिर्धर्मव्याख्याविशारदः ॥ १ ॥ वैयावृत्त्यकरस्तस्य भवज्ञातेयबान्धवः । मुनिः प्रसन्ननामाऽऽसीद् मूर्खतैकनिकेतनम् ॥२॥ स सूरिरेकदा श्रान्तो भूरिशो धर्मकर्मभिः । आगत्य भोजनादूर्ध्वं श्राद्धैर्व्याख्यामकार्यत ॥ ३ ॥ ततो विश्रान्तमालोक्य प्रसुप्तं पार्श्व एव सः । अप्रसन्नमनाः सूरिश्चिन्तयामासिवानिति ॥ ४ ॥ धन्योऽयं पुण्यवानस्मद्भ्राता मौर्ख्य-बलेन यः । निश्चिन्तः सुखमेवास्ते स्वैरशायी दिवानिशम् ॥५॥ वयं तु पाठवैगुण्यात् क्रीडाशुकवदन्वहम् । आबाधास्थास्त एवैके लापयामो नवैर्नवैः ॥ ६ ॥ दुर्ध्यानेनामुना कर्म ज्ञानावरणमार्जितम् । अनालोच्याप्रतिक्रम्य मृत्वा सूरिः सुरोऽभवत् ॥ ७ ॥ धन्योऽयं पुण्यवान् सूरिः प्रकाशयति यः श्रुतम् । इति ध्यानहतज्ञानावरणोऽस्य तु बान्धवः ॥ ८ ॥ मृत्वा स्वर्गमगाद् भोगान् भुक्त्वा तस्मादपि च्युतः । नगरे श्रीपुरे जज्ञे श्रीपतेर्वणिजः सुतः ॥ ९ ॥ युग्मम् ॥ धन्य इत्याख्यया सैष व्रतेच्छुः शैशवादपि । क्रमेण संयमं प्राप्य सूरिः श्रुतधरोऽभवत् ॥ १० ॥ सूरिदेवोऽपि स च्युत्वा सज्जनाख्यो वणिक्सुतः । भूत्वा भेजे प्रबुद्धः सन् धन्याचार्यान्तिके व्रतम् ॥ ११ ॥ तस्य पूर्वकृतं कर्म ज्ञानावरण-

गृहाद्बालो वञ्चयित्वात्ममातरम् ॥ ४२ ॥ तदा शय्यम्भवाचार्यश्चम्पायां विहरन्नभूत् । ययौ बालोऽपि तत्रैव स्वर्णं पातालमध्विव ॥ ४३ ॥
कायचिन्तादिना सूरिः पुरीपरिसरे व्रजन् । बालमिन्दुमिवायान्तं दृष्ट्वाऽमोदत वार्धिवत् ॥ ४४ ॥ दृष्ट्वा बालोऽपि तं सूरिं सूरं कमलकोश-
वत् । विकसद्वदनो जज्ञे स्फुटरोमाञ्चकण्टकः ॥४५॥ अथापृच्छत् तमाचार्या बालमुत्फालहर्षभाक् । कस्त्वं कुतस्तथाऽयासीर्वत्स ! पुत्रोऽसि
कस्य च ? ॥ ४६ ॥ सोऽर्भकोऽभिदधे राजगृहादत्राहमागमम् । सूनुः शय्यम्भवस्यास्मि वत्सगोत्रद्विजन्मनः ॥ ४७ ॥ मम गर्भगतस्यापि
प्रव्रज्यामाददे पिता । पुरात्पुरं तमन्वेष्टुं संभ्रमीव भ्रमाम्यहम् ॥ ४८ ॥ जानते यदि मे तातं वत शय्यम्भवं ततः । पूज्यपादाः प्रसीदन्तु
क्व सोऽस्तीति वदन्तु च ॥ ४९ ॥ पितरं यदि पश्यामि तदा तत्पादसंनिधौ । प्रव्रजाम्यहमप्यङ्ग या गतिस्तस्य सैव मे ॥ ५० ॥ सूरिरप्याह
तातं ते जानामि स सुहृन्मम । शरीरेणाप्यभिन्नश्चायुष्मंस्तमिव विद्धि माम् ॥ ५१ ॥ तन्ममैव सकाशे त्वं परिव्रज स ते पिता । दैवयो
मिलित एवात्रास्माकमेवातिथिर्भव ॥ ५२ ॥ सूरिस्तं बालमादायादीक्षयद्वसतौ गतः । सर्वसावद्यविरतिप्रतिपादनपूर्वकम् ॥ ५३ ॥ उपयोगं
ददौ योगी कियदस्यायुरित्यथ । षण्मासान् यावदस्तीति तच्च सद्यो विवेद सः ॥ ५४ ॥ अत्यल्पायुरयं बालो भावी श्रुतधरः कथम् । इत्यु-
द्दधार सिद्धान्तसारं सूरिवरस्ततः ॥ ५५ ॥ कृतं विकालवेलायां दशाध्ययनगर्भितम् । दशवैकालिकं तेन नाम्ना शास्त्रं बभूव तत् ॥ ५६ ॥
गुरूपदेशात्तं ग्रन्थं पठित्वा विधिना सुधीः । षण्मासान्ते तु मणकः कालं कृत्वा ययौ दिवि ॥ ५७ ॥ मणकेऽत्र विपेदाने सूरीनश्रूणि
मुञ्चतः । यशोभद्रादयो नत्वाऽभ्यधुः किमिदमर्हति ? ॥५८॥ ततो मणकवृत्तान्तं सुतसंबन्धबन्धुरम् । सूरयः कथयामासुस्तज्जन्ममरणावधि
॥ ५९ ॥ ऊचुः शिष्या नमद्ग्रीवा यशोभद्रादयस्ततः । पूज्यैरपत्यसंबन्धः किमादौ ज्ञापितो न नः ? ॥ ६० ॥ गुरुवद् गुरुपुत्रेऽपि वर्तेतेति
वचो वयम् । अकरिष्यामहि तदा सत्यं तत्पर्युपासनात् ॥ ६१ ॥ सूरिरूचे तदा नास्याभविष्यत्सुगतिप्रदम् । वयोवृद्धेषु युष्मासु वैयावृत्त्यो-

थाऽध्वरम् । हन्ति प्रौढतपा हन्त ! नारदः परमार्हतः ॥ २२ ॥ इति यूपमुपाध्यायस्तमुत्पाट्य यथास्थिताम् । तामर्हत्प्रतिमां पुण्यां दर्शयित्वै-
वमब्रवीत् ॥ २३ ॥ इयं हि प्रतिमा यस्य देवस्य श्रीमदर्हतः । तत्त्वं तदुदितो धर्मोऽध्वरादि तु विडम्बनम् ॥ २४ ॥ चिरं प्रतारितोऽसि त्वं
मया स्वोदरपूर्तये । नातः परमुपाध्यायस्तवास्मि स्वस्ति तेऽनघ ! ॥ २५ ॥ शय्यम्भवोऽपि तं नत्वा यज्ञोपाध्यायमब्रवीत् । त्वमुपाध्याय
एवासि सत्यतत्त्वप्रकाशनात् ॥ २६ ॥ इति दत्त्वाऽस्य यज्ञोपकरणं सर्वमप्यसौ । ययौ मुनिपदैरेव प्रभवस्वामिसंनिधौ ॥ २७ ॥ वन्दित्वा
सपरीवारं गुरुमग्रे निविष्टवान् । पप्रच्छ धर्मतत्त्वं स मुक्तिमार्गमनर्गलम् ॥ २८ ॥ अहिंसा सत्यमस्तेय ब्रह्माकिञ्चन्यमित्यथ । धर्मतत्त्वं
दिदेशास्मै प्रभवोऽपि भवोज्झनम् ॥ २९ ॥ श्रुत्वेति विलसद्बोधः प्रभवस्वामिनोऽन्तिके । शय्यम्भवो भवोद्विग्नः परिव्रज्यामुपाददे ॥ ३० ॥
तप्यमानस्तपस्तीव्रमधीयानो महामतिः । गुरुपादप्रसादेन स चतुर्दशपूर्व्यभूत् ॥ ३१ ॥ श्रुतज्ञानादिना तुल्य मूर्त्यन्तरमिवात्मनः । प्रभवस्तं
पदे न्यस्य परलोकमसाधयत् ॥ ३२ ॥ शय्यम्भवो यदा पर्यव्राजील्लोकस्तदाखिलः । तद्भार्यां रुदतीं दृष्ट्वा शोचयन्निदमभ्यधात् ॥ ३३ ॥
भट्टः शय्यम्भवः कष्टं निष्ठुरेभ्योऽपि निष्ठुरः । स्वप्रियां तरुणीमेतां सुशीलामपि योऽत्यजत् ॥ ३४ ॥ पुत्राशयैव जीवन्ति योषितो हि पति
विना । अप्रसूतपुत्रोऽपि नैतस्याः कथमेषा भविष्यति ॥३५॥ पृच्छन्ति स्म च लोकास्तामयि ! शय्यम्भवप्रिये ! । गर्भसंभावना कापि किं नामा-
स्ति तवोदरे ? ॥३६॥ मनागित्यभिधातव्ये सापि प्राकृतभाषया । ऊचे मणयमित्यल्पमात्रगर्भा ह्यभूत्तदा ॥३७॥ तस्याश्च ववृधे गर्भः प्रत्याशेव
शनैः शनैः । समयेऽपि सुतो जज्ञे तन्मनोऽम्भोधिचन्द्रमाः ॥३८॥ तदा मणयमित्यासीद् ब्राह्मण्या कृतमुत्तरम् । अतस्तस्यापि बालस्याभिधा
मणक इत्यभूत् ॥ ३९ ॥ पाल्यमानोऽर्भकः सोऽष्टवर्षीभूतो जगाद ताम् । क्व नाम तातो मे मातर्वेषेणाविधवासि यत् ? ॥ ४० ॥ सोचे यज्ञ-
रतस्तातस्तव शय्यम्भवोऽभवत् । प्रतार्य व्रतिभिर्धूर्तैर्नीतो गर्भगते त्वयि ॥ ४१ ॥ पितुः शय्यम्भवस्यर्षेर्मिलनायोत्सुकः स तु । निरियाय

मण्डपः । आहूतानेकवेदान्ती स यष्टुमुपचक्रमे ॥ २ ॥ इतश्च प्रभवस्वामी तदाऽऽगात्तत्र पत्तने । मत्वा श्रुतोपयोगेन तं योग्यं बोधसंपदः ॥ ३ ॥ आदिशच्च द्वयोर्मुन्योर्यज्ञौकसि युवां जवात् । गत्वा भिक्षार्थिनौ ब्रूतं धर्मलाभाशिषं सुखम् ॥ ४ ॥ अदातुमिच्छुभिस्तत्र यज्ञवाटद्विजातिभिः । अपि प्रस्थाप्यमानाभ्यां युवाभ्यां वाच्यमीदृशम् ॥ ५ ॥ अहो! कष्टमहो! कष्टं तत्त्वं विज्ञायते न हि । अहो! कष्टमहो! कष्टं तत्त्वं विज्ञायते न हि ॥ ६ ॥ अथ वन्दनमालाङ्कद्वारमुत्तम्भितध्वजम् । द्वार्मुक्ताचामनाहावं समिद्व्यापृतमाणवम् ॥ ७ ॥ स्तूपावबद्धछगलं वेदिमध्येद्धपावकम् । होमद्रव्यभूतानेकपात्रमृत्विग्भिरञ्चितम् ॥ ८ ॥ समिदाद्यर्पणव्यग्राध्वर्यमध्वरवाटकम् । तौ मुनी जग्मतुर्भिक्षासमये गुर्वनुज्ञया ॥ ९ ॥ विशेषकम् ॥ भिक्षामदित्सुभिर्विप्रैर्विसृष्टावथ तौ मुनी । गुर्वादिष्टमहो! कष्टमित्याद्यूचतुरुच्चकैः ॥१०॥ अध्वरे दीक्षितस्तस्मिन् सैष शय्यंभवो द्विजः । यज्ञवाटान्तरद्वारस्थितोऽश्रौषीद् वचस्तयोः ॥ ११ ॥ दध्यौ चोपशमस्फातिप्रधानाः साधवो ह्यमी । न मृषावादिनस्तेन तत्त्वे संदेग्धि मे मनः ॥ १२ ॥ इत्यपृच्छदुपाध्यायं किं तत्त्वं मङ्क्षु कथ्यताम् । उपाध्यायोऽवदत्तत्त्वं वेदाः स्वर्गापवर्गदाः ॥ १३ ॥ शय्यम्भवोऽभ्यधाद् नूनं प्रतारयसि मादृशान् । यज्ञादिदक्षिणालोभाद्वेदास्तत्त्वमिति ब्रुवन् ॥ १४ ॥ मुनयो निर्ममा वीतरागद्वेषपरिग्रहाः । सर्वज्ञपुत्रका नैते वदन्ति वितथं क्वचित् ॥ १५ ॥ न गुरुस्त्वं त्वया यस्माद्विश्वमाजन्म वञ्चितम् । नितान्तं शिक्षणीयोऽसि प्रत्युताद्य दुराशयः ॥ १६ ॥ यथावस्थितमाख्याहि तत्त्वमेवमपि स्थिते । न चेच्छेत्स्यामि ते मौलिमित्यसिं कोशतोऽकृषत् ॥ १७ ॥ उपाध्यायोऽप्यदो दध्यौ मिमारयिपुरेष माम् । यथार्थतत्त्वकथने समयोऽयमुपस्थितः ॥ १८ ॥ इदं च पठ्यते वेदेष्वाम्नायोऽप्येष नः सदा । कथ्यं यथास्थितं तत्त्वं शिरश्छेदे हि नान्यथा ॥ १९ ॥ तस्मात्प्रकाशयाम्याशु तत्त्वमस्मै यथातथम् । यथा जीवामि जीवन् हि नरो भद्राणि पश्यति ॥ २० ॥ इत्याचख्यावुपाध्यायो ध्यायन् कुशलमात्मनः । अधस्तादस्य यूपस्य न्यस्तास्ति प्रतिमार्हतः ॥ २१ ॥ पूज्यतेऽत्र स्थितैवैषा सिद्धपुत्रोऽन्य-

सनार्धे निवेश्य च। पप्रच्छ कुण्डलकथां दत्त्वा शपथमात्मनः ॥१०५॥ युग्मम् ॥ असूनां वसुदत्तस्य मार्गयित्वाभयं ततः। नृपाय नागदत्तोऽपि यथावृत्तमशंसत ॥१०६॥ अतिप्रीतस्ततो राजाऽऽरोप्य भूयोऽपि तं गजम्। सौधाय व्यसृजद् वीक्ष्यमाणं पौरवधूजनैः ॥१०७॥ वसुदत्तं च नृपतिस्तत्क्षणाच्चूर्णचित्रितम्। धूतसूर्पं शिखाबद्धबिल्वमारोप्य रासभम् ॥१०८॥ नागदत्तापकार्येष इति घुष्टागसं भृशम्। पुर्यन्तं भ्रामयित्वा तं विदधे देशतो बहिः ॥१०९॥ युग्मम् ॥ इतश्च प्रियमित्रेण पुनरागत्य मन्दिरे। पुत्र्या नागवसोरर्थे धनदत्तोऽभ्यधीयत ॥ ११० ॥ ततस्तातगिरा नागदत्तोऽपि तदमन्यत। मनसा प्रतिपन्नं हि नान्यथा जायते सताम् ॥ १११ ॥ अथ नागवसुर्नागदत्तेनात्मानुरागिणी। द्रव्यानुरूपसामग्र्या तेन सा पर्यणीयत ॥ ११२ ॥ असक्तो विषयानेष ततोऽभुङ्क्त तया सह। पयसीवाम्बुजं प्रेम्णि निमग्नोऽप्यलिप्तोऽमुना ॥ ११३ ॥ अथैकदा समं पत्या सूक्तिगोष्ठीं वितन्वती। गवाक्षस्थाऽशृणोद् नागवसुराक्रन्दितं क्वचित् ॥ ११४ ॥ पप्रच्छ नागदत्तं सा किमिदं श्रूयते प्रिय!। नागदत्तोऽब्रवीत्कान्ते! भवनाटकमीदृशम् ॥ ११५ ॥ विद्वद्गोष्ठी क्वचित् क्वापि कलहः क्वापि गीतयः। क्वचिदाक्रन्दितं यत्र तत्र रज्येत कः सुधीः ? ॥ ११६ ॥ ततो नागवसुः प्राह धिग्भवं त्यज्यतामयम्। नागदत्तोऽभ्यधादीदृग् मनो मेऽपि त्वरस्व तत् ॥ ११७ ॥ परस्परमथापृच्छ्य पितरौ तौ व्रतार्थिनौ। संघपूजार्थिसत्काराभयदानादि तेनतु. ॥ ११८ ॥

तौ सुस्थितौ सुस्थितसूरिपार्श्वे व्रतं गृहीत्वा महतोत्सवेन। तप्त्वा तपो दुस्तपमायुषोऽन्ते सौधर्मकल्पे त्रिदशावभूताम् ॥ ११९ ॥

॥ इति श्रीनागदत्तकथा ॥

अथ शय्यम्भवो यथा—

अस्ति श्रीमोचितस्वर्गस्पृहं राजगृहं पुरम्। तत्र शय्यम्भवो नाम याज्ञिकोऽभूद् द्विजोत्तमः ॥ १ ॥ पुरोपान्तसरःपालौ विलसद्यज्ञ-

क०॥ शासनदेव्यः ! स्थ क्वापि हा ! यदि मातरः ! । तदागच्छत शीघ्रं मे पतिभिक्षां प्रयच्छत ॥८५॥ देव ! रे केव रेखा ते निष्ठुरेषु निवेदय ।
यदस्य मृदुलाङ्गेषु बन्धवैशसमादितम् ॥ ८६ ॥ यदि मे कुपितो देव ! तदा मामेव मारय । कल्याणपात्रमेनं तु रक्ष रक्ष मम प्रियम् ॥ ८७ ॥
४॥ तस्या निष्कारणप्रेमप्रहिलाया इतीरितम् । निशम्य नागदत्तोऽथ चिन्तयामास चेतसि ॥ ८८ ॥ यदि शासनदेवीनां प्रभावेण छुटिष्यते ।
तदा निरुपमप्रेमवतीयं परिणेष्यते ॥ ८९ ॥ नो चेदाहारदेहादि व्युत्सृष्टं सिद्धसाक्षिकम् । नाहं कस्यापि मे कोऽपि न च मुक्त्वा जिनेश्वरम्
॥९०॥ हठात्कण्ठेऽथ धृत्वा ते चक्रर्दण्डपाशिकाः । हन्यमानाश्च नानास्त्रैर्जिनशासनदैवतैः ॥९१॥ अथ ते परितः पेतुर्वमन्तो रुधिरं मुखैः ।
नागदत्तयशोवृक्षं सिञ्चन्तः कलशैरिव ॥९२॥ बन्धाश्च नागदत्तस्य तुत्रुटुस्तत्क्षणादपि । हर्षाद्द नागवसोश्चापि कञ्चुकान्तरसेवकाः ॥९३॥
किमेतदिति साकूते नागदत्ते पुरोऽभवन् । जिनशासनदेव्योऽस्य वर्षन्त्यः कुसुमोत्करम् ॥ ९४ ॥ जय जीवाभिनन्देति ददत्योऽस्मै महाशिषः ।
तास्तदाऽप्रतिचक्राद्या नागदत्तं बभाषिरे ॥ ९५ ॥ विस्मयं वत्स ! मा कार्षीर्वयं शासनदेवताः । पुण्यात्तव कुमार्याश्च कारुण्यादित्यकार्ष्मंहि
॥ ९६ ॥ अथोचे नागदत्तस्ता भगवत्यो वरं कृतम् । एतान् लम्भितशिक्षांस्तु सज्जीकुरुत बालिशान् । ९७ ॥ अथो तदुपरोधेन प्रगुणीकृत्य
तानमूः । सत्त्वं च नागदत्तस्य सर्वाः स्तुत्वा तिरोऽभवन् ॥ ९८ ॥ अथेति ज्ञातवृत्तान्तः पौरामात्यान्वितो नृपः । तत्रागत्य समालिङ्ग्य
नागदत्तमभाषत ॥ ९९ ॥ श्रेष्ठिपुत्र ! तव ब्रूमः किं वयं महिमाद्भुतम् । धन्योऽहमपि यत्पुर्यां पुण्यपात्रं भवादृशाः ॥ १०० ॥ यत्र त्वं
तत्कुलं पुण्यं यस्य त्वं स पिताऽद्भुतः । यस्याः कुक्षावभूत्सोऽस्त्वं सा श्लाघ्या जननी खलु ॥ १०१ ॥ अज्ञानादपराद्धं यद् मया त्वयि
महात्मनि । सर्वथा मर्षणीयं तदेष बद्धोऽञ्जलिस्तव ॥ १०२ ॥ संभाष्येति महीपालस्तमारोप्य करीश्वरम् । पुर्यां प्रवेशयामास गौरवेण
गरीयसा ॥१०३॥ सहैतं धनदत्तेन नीत्वावासं निजं नृपः । भोजयित्वा नवीनानि चीनानि परिधाप्य च ॥ १०४ ॥ भूषणैर्भूषयित्वा च स्वा-

सहस्राम्रवणं सोऽपि गत्वा चैत्यान्तराविशत् ॥ ६५ ॥ कायोत्सर्गस्थितं तत्र नागदत्तं चलानकं । स ददर्श कुधीर्दर्शे इव राहुर्दिवाकरम् ॥ ६६ ॥ गुणेन प्रोतयित्वाथ कुण्डलं कण्ठलम्बितम् । विधाय नागदत्तस्य पार्श्वे पत्तीन् न्ययुङ्क्त सः ॥ ६७ ॥ सरावेणेव शुशुभे तेनासौ कण्ठलम्बिना । मार्गन्निव जगन्नाथात् कल्याणं निजमुक्तये ॥ ६८ ॥ गत्वाथ मायिकः पृथ्वीनायकाय शशंस सः । देव ! किं क्रियते तत्र यत्र स्यादमृतं विषम् ? ॥ ६९ ॥ य एव नगरस्तम्भो धनदत्तो महाधनः । तस्यैव सूनुना नागदत्तेनाऽहारि कुण्डलम् ॥ ७० ॥ सबाह्याभ्यन्तरं देवादेशतः पश्यता पुरम् । स्थगयन् कुण्डलं दृष्टः स माकन्दवने मया ॥ ७१ ॥ ततोऽसौ धारितस्तत्र चैत्य एवास्ति पत्तिभिः । यदादिशति देवोऽतः परं तत्क्रियते द्रुतम् ॥ ७२ ॥ अथाह नृपतिः क्रुद्धो धनदत्तस्य मन्दिरे । मुच्यन्तां पत्तयः शीघ्रं कारायां क्रियतामयम् ॥ ७३ ॥ स च कुण्डलचौरस्तु तत्र देवकुले धृतः । प्रातः पौरसमक्षं तं महादण्डेन दण्डयेः ॥ ७४ ॥ स्वामिन् ! प्रमाणमादेश इत्युक्त्वा तत्क्षणादयम् । पत्तीन् गृहे विमुच्यास्य धनदत्तमधारयत् ॥७५॥ तद्वृत्तान्तमजानाना प्रातर्नागवसुः पुनः । सहस्राम्रवणे चैत्ये ययौ नन्तुं जिनाधिपम् ॥ ७६ ॥ पूजयन्ती जिनं यावत्तत्रास्ते सा सखीवृता । राजतन्त्रयुतस्तावद्वसुदत्त समाययौ ॥७७॥ अरे ! गृह्णीत बध्नीत राज्ञः कुण्डलतस्करम् । मण्डपस्थो जगर्जेति वसुदत्तो मृगेन्द्रवत् ॥ ७८ ॥ नागदत्तः पुनस्तस्मिन्नपि कारुण्यपुण्यधीः । दध्यौ प्रकटितो हा ! धिग्वराकोऽयं मरिष्यति ॥ ७९ ॥ तदिदं प्राक्कृतं किञ्चिद् दुष्कृतं सहतां वपुः । उपेक्षैवास्य युज्येत कृतघ्नस्य विनाशिनः ॥ ८० ॥ वसुदत्तगिरा दण्डपाशिकैर्यष्टिमुष्टिभिः । ताडयित्वा दृढं नागदत्तोऽबध्यत धिग्विधिम् ॥ ८१ ॥ ततो नागवसुर्दृष्ट्वा नागदत्तं तथापदि । हा ! हतास्मीति जल्पन्ती मूर्च्छिता न्यपतद् भुवि ॥ ८२ ॥ सपूत्कारं सखीभिस्तु चन्दनव्यजनादिभिः । हृतमूर्च्छा व्यलापीत् सा रुदती सुदती भृशम् ॥ ८३ ॥ हा सर्वज्ञ ! मदीयं किं दुष्कर्मोदयमागतम् । येनायं साधुमूर्धन्योऽभीष्टो मे कष्टभागभूत् ? ॥ ८४ ॥ जिन-

क०। शत्रुनृपप्रियः ॥४४॥ दृष्टा नागवसुस्तेन वातायनतले तदा। आगत्य गृहमुद्वोढुं प्रियमित्रादयाचत ॥४५॥ तेनोचे नागदत्ताय धनदत्तात्मजन्मने।
दत्तेयं किं प्रदीयन्ते क्वापि कन्याः पुनः पुनः ? ॥ ४६ ॥ वसुदत्तः पुनः प्राह मोहात्कन्यां प्रयच्छ मे। द्रव्यं समीहसे यावत् तावद् दास्यामि ते
३॥ ध्रुवम् ॥ ४७ ॥ प्रियमित्रो हसन्नाह कथं कन्याट्टमस्ति मे। द्रव्यैर्विक्रीयमाणां ते येन यच्छामि कन्यकाम् ॥ ४८ ॥ इत्युक्तः प्रियमित्रेण विल-
क्षवदनस्ततः। वसुदत्तो निजं धाम स गत्वेदमचिन्तयत् ॥ ४९ ॥ हतको नागदत्तोऽय यावत्तावदियं न मे। तच्छले पातयित्वैनं मारयामि
नृपाज्ञया ॥ ५० ॥ चिन्तयित्वेत्यसौ दुष्टो नागदत्तं निशुम्भितुम्। छलानि मृगयामास स्वयमेव दिवानिशम् ॥ ५१ ॥ वाह्यालीतो निवृत्तस्या-
न्येद्युरुद्यानवर्त्मनि। पपात नृपतेः कर्णात् कुण्डलं वाजिवल्गनात् ॥ ५२ ॥ तद् विवेद न भूपालस्तदाश्वक्रीडयाकुलः। सेनारजोऽन्धितरन्यै-
रपि तन्न विलोकितम् ॥५३॥ प्रासादमागतो भाण्डागारिकाय समर्पयन्। भूषणानि नृपोऽज्ञासीत् पतितं क्वापि कुण्डलम् ॥५४॥ वसुदत्तमथा-
दिक्षत् कुण्डलं येन केन मे। गृहीतं तत्परिज्ञाय मत्पुत्रमपि शिक्षयेः ॥ ५५ ॥ देव ! प्रमाणमादेश इत्युदीर्य निरीय च। असौ गवेषयामास
स्वयमन्यैश्च कुण्डलम् ॥ ५६ ॥ इतश्च नागदत्तोऽपि कायोत्सर्गविधित्सया। नगर्या निर्ययौ सायं सहस्राम्रवणं प्रति ॥ ५७ ॥ अग्रेऽगाद्
नागदत्तश्च वसुदत्तश्च पृष्ठतः। खल्लिविल्वसमायोगः सोऽयं विधिकृतो हहा ! ॥ ५८ ॥ दृष्ट्वैवाशकुनं मार्गाद् नागदत्तो न्यवर्तत। दृष्टोऽयं
वसुदत्तेन वृक्षान्तरितवर्ष्मणा ॥ ५९ ॥ नागदत्तः पथान्येन सहस्राम्रवणं गतः। तस्थौ प्रतिमया चित्ते धर्मध्यानपरायणः ॥६०॥ वसुदत्तश्च
दध्यौ किं नागदत्तोऽयमध्वनः। एतस्माद् ववले शीघ्रं तत्र पश्यामि कारणम् ॥६१॥ ध्यात्वेति दुष्टधीः सोऽयमगमद् यावदग्रतः। तावत्पति-
तमद्राक्षीत्कुण्डलं रविबिम्बवत् ॥ ६२ ॥ दृष्ट्वा तच्चिन्तयामास हर्षलोत्कर्षमानसः। छलमेतदहो ! लब्धं नागदत्तं निशुम्भितुम् ॥ ६३ ॥
ववले कुण्डलं दृष्ट्वा पुरः कुण्डलिनं यथा। तथापि पातयाम्यद्य साधुतामस्य मूर्धनि ॥ ६४ ॥ चिन्तयित्वेदमादाय कुण्डलं त्वरितक्रमः।

संप्रति मार्जितः ॥२४॥ अथाह नागदत्तस्तान् वृथायं विस्तरो गिराम् । प्रास्तूयत भवद्भिर्मे मनोभावबहिर्मुखैः ॥२५॥ मनागपि न रागोऽस्यां कारणं प्रच्छने त्वदः । अस्या जिनेशपूजायां कौशले कौतुकं मम ॥२६॥ सवयोभिः समं त्वेतैरालापानिति कल्पयन् । चैत्याद् निर्गत्य गतवान् नागदत्तो निजं गृहम् ॥ २७ ॥ इतश्च सापि सहिता सखीभिः स्वनिकेतनम् । तं ध्यायन्ती ययौ नागवसुर्वसुमिव श्रियाः ॥ २८ ॥ तत्र नाशेत नाभुङ्क्त नापिबद् नालपच्च सा । भाषितापि सखीभिर्नादत्त हुङ्कारमप्यहो ! ॥ २९ ॥ मात्रा मत्वेति सातङ्कं सा सबाष्पमथोदिता । प्रियेऽहं शंस हा वत्से ! देहे किं तव बाधते ? ॥ ३० ॥ अथ नागवसुः प्राह मातः ! किमपि वेद्मि न । परं विजृम्भते बाढं देहे दाहज्वरो मम ॥ ३१ ॥ ततोऽसौ परिहासेन सखीभिरिति भाषिता । किं न दाहज्वरः प्रातः पीत्वा सलवणं सखि ! ॥ ३२ ॥ स्मित्वा मन्दात्तमन्दात्ता दध्यौ नागवसुस्ततः । हन्त दत्ताभिरेताभिर्ज्ञाताहं किं करोमि तत् ? ॥ ३३ ॥ ततो रहसि पृष्टाभ्यस्तत्सखीभ्यस्तदाशयम् । मत्वा नागश्रियाऽशंसि प्रियमित्राय तत्तथा ॥ ३४ ॥ प्रियमित्रस्ततोऽवादीत् तामथ प्रीतिमानिति । स्थाने तु रागमाधत्त प्रिये ! पुत्रीयमावयोः ॥ ३५ ॥ नागश्रीस्त्वरयामास तं हर्षेण वदन्त्यदः । त्वरस्व प्रिय ! मत्पुत्र्या नागदत्तं पतीकुरु ॥ ३६ ॥ तथेति प्रियमित्रोऽपि गतवांस्तन्निकेतनम् । धनदत्तेन पृष्टश्च स्मितपूर्वमिदं जगौ ॥ ३७ ॥ श्रेष्ठिन् ! यानीह रत्नानि स्थलेषु च जलेषु च । उत्पद्यन्ते पदं तेषां भवतो भवनं किल ॥३८॥ तन्नागवसुनामास्ति सुतारत्नं गृहे मम । तद् दातुं नागदत्ताय प्राप्तोऽहं तव सूनवे ॥ ३९ ॥ अथाह धनदत्तोऽपि युक्तमुक्तं त्वया सखे ! । परं मे विषयोद्विग्नः स्वभावादेव नन्दनः ॥ ४० ॥ प्रियमित्रस्ततोऽवादीद् यद्यप्येव तथापि मे । सा सुता नागदत्तैकमानसा नान्यमिच्छति ॥ ४१ ॥ धनदेवोऽभ्यधाद् भद्र ! यद्येवं तन्निजं सुतम् । बोधयित्वा तदुक्तं ते कथयिष्यामि निर्णयम् ॥ ४२ ॥ इत्युदीर्य विसृष्टेऽस्मिंस्तदर्थं प्रार्थितः स्वयम् । श्रेष्ठिना नागदत्तो न पाणिग्रहममन्यत ॥ ४३ ॥ इतश्चासीत् तलारक्षाधिकारी तत्र पत्तने । वसुदत्त इति ख्यातो जित-

भविता तव । इत्युक्ता तेन सा गर्भं बभार क्रमयोगतः ॥ ५ ॥ दोहदेषु ततः संघपूजादेवार्चनादिषु । श्रेष्ठिना पूर्यमाणेषु पूर्णेषु च दिनेषु सा ॥ ६ ॥ असूत किरणस्यूतदेहद्योतितदिङ्मुखम् । सुतं रूपयुतं देवी पद्मवासेव मन्मथम् ॥ ७ ॥ जन्मोत्सवं विधायास्य श्रेष्ठी स्वप्नानुसारतः । नागदत्त इति ख्यातनामानं तनयं व्यधात् ॥ ८ ॥ धात्रीभिः पाल्यमानोऽयं ववृधे प्रतिवासरम् । भानोरमृतनाडीभिरिव बालः सुधाकरः ॥ ९ ॥ स पञ्चवर्षदेशीयो जगृहे सकलाः कलाः । आरुरोह च सौन्दर्यभवनं यौवनं क्रमात् ॥ १० ॥ पित्रा सार्धं व्रजन् देवगुरूणामाश्रये सदा । शृण्वन् धर्ममभूच्चैष विषयेषु पराङ्मुखः ॥ ११ ॥ तद्रूपमोहिताः कन्याः समाजग्मुरनेकशः । चिद्रूपचन्द्रमाः किन्तु स नोद्वोढुममन्यत ॥ १२ ॥ इत्थं विषयवैमुख्यं ज्ञात्वाऽस्य पितरावथ । दुर्दान्तमित्रगोष्ठीषु निरतं कुरुतः स्म तम् ॥ १३ ॥ [1]अनिच्छन्नप्यसौ चित्ते मित्राणामुपरोधतः । कूपारामविहारेषु विजहार दिवानिशम् ॥ १४ ॥ सहस्राम्रवणोद्यानं वयस्यैरयमन्यदा । नीतः कन्दर्पशिविरमिवाम्रस्तवकाञ्चितम् ॥१५॥ क्रीडावाप्यां कृतस्नानोऽवचित्य कुसुमान्यथ । विवेश तत्र तीर्थेशभवनं सह तैरथ ॥१६॥ कयाचित् कन्यया तत्र कृतां पूर्वप्रविष्टया । जिनपूजामथालोक्य नागदत्तो विसिष्मिये ॥ १७ ॥ नागदत्तं च सा नागकुमारमिव रूपतः । स्वभावं स्वसखीभ्योऽपि गोपयन्ती निरैक्षत ॥१८॥ तस्य रूपसुधाम्भोधेर्नीरङ्गीवसनान्तरम् । लावण्याम्भः पपौ नेत्राञ्जलिभिः सा विवेकिनी ॥१९॥ अथ तत्रानुरक्ता सा लज्जमाना सखीवृता । निर्ययौ जिनगेहात् तं निध्यायन्ती मुहुर्मुहुः ॥२०॥ नागदत्तस्तु तीर्थेशं पूजयित्वाऽभिवन्द्य च । वयस्यानाह केयं भोः ! कन्या कस्या च नन्दनी ? ॥२१॥ तैरूचे प्रियमित्रस्य सार्थवाहस्य नन्दनी । जाता नागश्रिया नागवसुनाम्नी कुमारिका ॥२२॥ इयं विश्ववधूसृष्टिशलाका विश्वकर्मणः । षष्ठमस्त्रं च पञ्चेषोर्जेतुं कमपि दुर्जयम् ॥२३॥ अनुरूपवराप्राप्तिर्दोषोऽस्यामेक एव हि । त्वया विलोकितायां तु सोऽपि

---

१ ग. घ. वाम्रस्थलमालितम् ।

२७ ॥ स्वाम्याज्ञातमिति श्रुत्वा स्थविरा यावता स्थिताः । आकारसंवृतिं कृत्वा तावत्प्रापातिमुक्तकः ॥ २८ ॥ प्रतिश्रयान्तरविशत् कृत्वा नैषेधिकीमयम् । गुर्वनुज्ञामयाचिष्ट नत्वेर्यापथिकीविधौ ॥ २९ ॥ तत्प्रमादानधिक्षेपतयैव गुरवोऽपि तम् । तदाऽनुज्ञापयामासुरीर्यापथप्रतिक्रमम् ॥ ३० ॥ ततोऽयमिच्छामीत्युक्त्वा प्रतिक्रामन् समाहितः । 'दगमट्टी' पदस्यार्थं स्मरन् संवेगमित्यगात् ॥ ३१ ॥ अहो 'दग' इहाप्कायो ये तल्लेशेऽपि जन्तवः । चेत्ते सर्षपमानाः स्युर्जम्बूद्वीपे न मान्ति तत् ॥ ३२ ॥ 'मट्टी' च मृत्तिका ज्ञेया ये तल्लेशेऽपि जन्तवः । चेत्ते पारापताङ्गाः स्युर्जम्बूद्वीपे न मान्ति तत् ॥ ३३ ॥ तद् मया चिन्मयालोकविकलेन दुरात्मना । विराद्धास्तच्चये जीवाः सामायिकविरोधिना ॥ ३४ ॥ अनालोच्यात्मनो वीक्षामनालोच्य जिनागमम् । अनालोच्य गुरोः शिक्षामनालोच्य तु दुर्गतिम् ॥ ३५ ॥ हहा ! मयातिमूढेन तत्कृतं किल दुष्कृतम् । स्मरतोऽपि न यद् माति हृदि मे निर्दयादिमे ॥३६॥ एवं जातलयः क्षिप्रं क्षपकश्रेणिमाश्रयन् । घातिकर्म विघात्यैष लेभे केवलमुत्तमम् ॥ ३७ ॥ दुन्दुभीस्ताडयन्तोऽथ वर्षन्तः कुसुमोदकम् । स्तुवन्तोऽभ्येत्य ते देवाः सेवामस्य वितेनिरे ॥३८॥ इत्यतिमुक्तकनामा बालर्षिः सपदि धर्षितविकर्मा । भव्यान् विबोध्य भुवने चिरमथ मुक्तिश्रियं भेजे ॥ ३९ ॥

॥ इत्यतिमुक्तकमुनिकथा ॥

अथ नागदत्तो यथा,—

अस्ति वाराणसी नाम नगरी श्रीगरीयसी । जितशत्रुनृपस्तत्र क्षत्रधर्मधनोऽभवत् ॥ १ ॥ राजप्रसादपात्रं च श्रेष्ठी तत्र महाधनः । धनदत्तोऽभवत्तस्य धनश्रीरिति गेहिनी ॥ २ ॥ साऽपश्यदन्यदा स्वप्ने नागदेव्या स्वकण्ठतः । उत्तार्य सादरं हारं निजकण्ठे निवेशितम् ॥ ३ ॥ तदेत्य पत्युराचख्यौ प्रातः प्रीतिभरेण सा । सोऽभ्यधाद् नागदेवी नः सा प्रिये ! कुलदेवता ॥ ४ ॥ तस्याः प्रसादत पुत्रोऽचिरेण

भिक्षां वो दापयाम्यहम् । इति स्वाम्यङ्गुलीलग्नः स्वमगारमगाच्च सः ॥ ८ ॥ श्रीदेवी गौतमं वीक्ष्यातिमुक्तकसमन्वितम् । हृष्टाऽभ्येत्य प्रणम्यान्नपानीयैः प्रत्यलाभयत् ॥ ९ ॥ निर्यान्तमथ साकूतं कुमारः प्राह गौतमम् । भगवन् ! वसतौ कस्यां यूयं वसत कथ्यताम् ॥ १० ॥ स्वामी जगाद देवानुप्रिय ! धर्मगुरुर्मम । श्रीवीरो यत्र समवसृतोऽस्ति नगराद् बहिः॥११॥ ततो विसृष्टस्तेन श्रीगौतमोऽभ्येत्य भक्तिभाक् । उपासामासिवान् वीरस्वामिनं भवनामिनम् ॥ १२ ॥ अथातिमुक्तकः प्रीत्या मातापितृसमन्वितः । अभ्येत्य भगवत्पादानवन्दत समाहितः ॥ १३ ॥ भगवानपि संसारसुखधिक्कारदायिनीम् । चक्रे पीयूषदेशीयां देशनां वशिनां वरः ॥ १४ ॥ अथ प्रभुं प्रणम्योचे राजपुत्रोऽतिमुक्तकः । आदित्सामि प्रभो ! दीक्षां वीक्ष्यातिविरसं भवम् ॥ १५ ॥ मा कृथाः प्रतिबन्धं त्वमित्यूचे भगवानपि । सोऽपि गत्वा स्वमावासमुवाच पितराविति ॥ १६ ॥ पितरौ ! दुस्तरादस्माद् बिभेमि भवसागरात् । तन्मे दापयितुं दीक्षामङ्घ्रिर्नौ यूयमर्हथ ॥ १७ ॥ ततस्तौ साश्रमूचाते पुत्र ! त्वमसि कोमलः । व्रतभारं कथं वोढा सोढाऽसि च परीषहान् ? ॥ १८ ॥ राजपुत्रोऽभ्यधादात्मवशो धर्मालसो जनः । संकटेऽन्यवशः सर्वं सोढा वामत्वमस्य धिक् ॥१९॥ तद् मातृहृदयं कृत्वा नापथ्यं भावरोगिणः । मम वाच्यं किमप्युच्चैः पितरौ ! वां वल्लभोऽस्मि चेत् ॥२०॥ इत्युक्तियुक्तिभिः कृत्वा पितरौ स निरुत्तरौ । जग्राह साग्रहो दीक्षां श्रीवीरचरणान्तिके ॥२१॥ स्वामिना दीक्षयित्वाऽसौ स्थविरेभ्यः समर्पितः । क्रमेणाधीयमानश्चैकादशाङ्गधरोऽभवत् ॥ २२ ॥ वर्षाकालेऽन्यदा वृष्टौ जातायां बाल्यकौतुकात् । पतद्ग्रहं समादाय ययावेष बहिर्भुवि ॥ २३ ॥ स्फारीकृत्य पयःकुल्यां मृत्पालीबन्धतोऽभितः । चिक्रीड स चिरं तत्र बेडीकृत्य पतद्ग्रहम् ॥२४॥ दृष्ट्वेति संयमाऽऽबाधां कुर्वाणमतिमुक्तकम् । पप्रच्छुरुत्सुका वीरमृषयोऽस्मिन् कृपाजवः ॥ २५ ॥ प्रसीद सुकृतश्रीद ! निवेदय महोदय ! । कुत्र याता भवे मुक्तिं बालर्षिरतिमुक्तकः ? ॥ २६ ॥ स्वाम्युवाच भवेऽत्रैव सेत्स्यत्येष महामनाः । कुर्वीध्वं बालमित्येनं गर्हितं मा स्म कर्हिचित् ॥

साऽब्रवीद् यत्र मार्गेऽभूदप्कायोऽचित्त एव हि । आयासिषमहं तेन प्रायश्चित्तागमोऽत्र न ॥ ८३ ॥ अचित्ताप्कायमध्वानं कथं वेत्सीति सूरिणा । उदिते पुष्पचूलाऽऽख्यदुत्पन्नं मेऽस्ति केवलम् ॥ ८४ ॥ मिथ्या मे दुष्कृतं केवल्याशातित इति ब्रुवन् । आचार्यः प्रवया दध्यौ सेत्स्यामि किमहं न वा ? ॥ ८५ ॥ केवल्यूचे मुनिश्रेष्ठाः ! मा कुर्पीध्वमनिर्वृतिम् । गङ्गामुत्तरतां वोऽपि भविष्यत्येव केवलम् ॥ ८६ ॥ उत्तरीतुं ततो गङ्गां लोकेन सह सूरयः । तदेवारुरुहुर्नावं को हि स्वार्थमुपेक्षते ? ॥ ८७ ॥ स सूरिः पुण्यसारत्वाद् निषसाद यतो यतः । ततस्ततोऽनमद् वेडा तद्भारेणाऽधरीकृता ॥ ८८ ॥ ततो नौस्थितलोकेन सूरिः सोऽक्षेपि वारिणि । शूले न्यधात् प्रवचनप्रत्यनीकामरी च तम् ॥ ८९ ॥ अप्कायादिदयासारं स सूरिर्भावयस्तदा । क्षपकश्रेणिमारूढोऽन्तकृत्केवल्यजायत ॥ ९० ॥ तुरीयशुक्लध्यानस्थः सद्यो निर्वाणमाप सः । निर्वाणमहिमानं च तदासन्ना व्यधुः सुराः ॥ ९१ ॥ यस्मिन् शिवगतिमहिमा चक्रे सुमनोभिरर्णिकासूनोः । तीर्थं प्रयाग इति तद्भवति स्म भुवीह विख्यातम् ॥ ९२ ॥ ॥ इत्यर्णिकापुत्रकथा ॥

यशोभद्रः शय्यम्भवकथायां वक्ष्यते । भद्रबाहुर्वज्रस्वामिकथायामुक्तः । अथातिमुक्तको यथा—

पोलासपुरमित्यस्ति पुरं पुष्कलवैभवम् । तत्रासीद् विजयोर्जस्वी विजयो नाम पार्थिवः ॥ १ ॥ श्रीदेवीति प्रिया तस्य सिंहस्वप्नेन सूचितम् । असूत सुतमुद्युक्तमतिमुक्तकसंज्ञितम् ॥ २ ॥ तत्रान्यदा पुरेऽभ्येत्य श्रीवीरः समवासरत् । गौतमस्तु विवेशान्तर्विहर्तुं गणभृद्वरः ॥ ३ ॥ क्रीडन्नासीत्तदा दासीदासैरनुगतः पथि । क्रमाष्टवर्षदेशीयो राजपुत्रोऽतिमुक्तक. ॥ ४ ॥ स गौतमं समायान्तं वीक्ष्य चन्द्रं चकोरवत् । हृष्टोऽभिसृत्य नत्वा च जगादेति कृताञ्जलिः ॥ ५ ॥ के यूयं भगवन्नत्र कथं विचरथोच्यताम् । अथ स्वामी जगौ स्मित्वा कुमारं सुकुमारगी. ॥ ६ ॥ देवानुप्रिय ! निर्ग्रन्था वयं श्रमणलिङ्गिनः । भिक्षार्थं विचरामोऽत्र पुरे पोलासनामनि ॥ ७ ॥ ततोऽतिमुक्तकः प्राह

जननीजीवदेवस्तस्यास्तदादि तु । स्वप्ने पूर्वमिव प्राज्यसुखान् स्वर्गानदर्शयत् ॥ ६३ ॥ प्रबुद्धा कथयामास सा पत्ये स्वर्गदर्शनम् ।
क्र०। सोऽथ पाखण्डिनोऽपृच्छत् ब्रूथ किं स्वर्गलक्षणम् ? ॥ ६४ ॥ तेष्वेके प्रोचिरे स्वर्गस्वरूपं प्रियसंगमः । पुष्पचूला न तत् स्वप्नदृष्टस्वर्गाऽन्व- ह
मन्यत ॥ ६५ ॥ राज्ञा पृष्टोऽन्निकापुत्रः स्वर्गान् द्वादश तत्तथा । नव ग्रैवेयकांश्चाप्यनुत्तरानाख्यदुत्तरान् ॥ ६६ ॥ प्रमाणं वचनं जैनमिति
०॥ निश्चित्य राज्ञ्यथ । गुरुं पप्रच्छ भगवन् ! स्वर्गाप्तिः केन कर्मणा ? ॥ ६७ ॥ सूरिराह जिने देवे सुसाधौ च गुरौ मतिः । यस्य तस्याङ्गिनः
स्वर्गपदवी न दवीयसी ॥ ६८ ॥ पुनश्चारित्रधर्मे च गुरुणा कथिते सति । सा राज्ञी लघुकर्मत्वाद्भवोद्विग्नैवमभ्यधात् ॥ ६९ ॥ भगवन् !
पतिमापृच्छ्य पादमूले तवैव हि । उपादास्ये परिव्रज्यां मर्त्यजन्मतरोः फलम् ॥ ७० ॥ इत्युक्त्वा पुष्पचूलाथ गुरून्नत्वा विसृज्य च ।
आपप्रच्छ महीनाथं सोऽपि तामिदमूचिवान् ॥ ७१ ॥ तदा त्वामनुमन्येऽहं व्रताय वरवर्णिनि ! । ममैवौकसि चेद्भिक्षामादत्से व्रतिनी सती
॥ ७२ ॥ तथेति प्रतिपेदाना दत्तदानार्तिपु व्रतम् । पुष्पचूलाददे भूपकृतनिष्क्रमणोत्सवा ॥ ७३ ॥ सा शिक्षामाददे सर्वां गुर्वादेशपथानुगा ।
तपश्चचार चातीव तीव्रकर्मारिकृन्तनम् ॥७४॥ विज्ञाय भाविदुर्भिक्षं प्रैपि देशान्तरे गणः । जङ्घाबलपरिक्षीणस्तस्थे चात्रैव सूरिभिः ॥७५॥
आनीयान्तःपुराद्भक्तपानादि प्रतिवासरम् । गुरवे पुष्पचूलाऽदात् पित्रे पुत्रीव भक्तिभाक् ॥ ७६ ॥ अनन्यमनसस्तस्या गुरूणां पर्युपासनात् ।
भावयन्त्याः स्वमुत्पेदे केवलज्ञानमन्यदा ॥ ७७ ॥ पुरा ह्यभूत् प्रयुञ्जानः कृत्यं यो यस्य तस्य सः । केवल्यपि च कुर्वीत स यावद् वेत्ति तं
नहि ॥ ७८ ॥ पुष्पचूलाऽथ विज्ञाय केवलज्ञानचक्षुषा । सर्वं संपादयांचक्रे सूरिर्यद् यदचिन्तयत् ॥ ७९ ॥ सूरिः पप्रच्छ तां साध्वीं वत्से !
वेत्सि कथं ननु । ममाभिप्रायमेवं यत् संपादयसि चिन्तितम् ? ॥ ८० ॥ उवाच पुष्पचूलापि प्रकृतिं वेद्मि वः खलु । यो यस्य शश्वदासन्नः
प्रकृतिज्ञो हि तस्य सः ॥ ८१ ॥ सार्यिका पिण्डमानिन्येऽन्यदा वर्षति वारिदे । सूरिणोचे श्रुतज्ञाऽसि वृष्टौ किमिदमर्हति ? ॥ ८२ ॥

महमप्यनलंभूष्णुरेतयोः । मिथस्तदेतयोरेव युक्तमुद्वाहमङ्गलम् ॥ ४३ ॥ मित्त्राणि मन्त्रिणः पौरानथ पप्रच्छ पार्थिवः । अन्तःपुरे यदुत्पन्नं रत्नं तस्य क ईश्वरः ? ॥ ४४ ॥ ते प्रोचुर्देशमध्येऽपि रत्नं किमपि यद्भवेत् । तस्यापीशो महीनाथः का कथाऽन्तःपुरे पुनः ? ॥ ४५ ॥ यद् यदुत्पद्यते रत्नं स्वदेशे तद्विशांपतिः । यथाकामं नियुञ्जीत बाधकस्तस्य कोऽपि न ॥ ४६ ॥ तेषां भावानभिज्ञानामाज्ञस्व्याथ वचो नृपः । युक्ते फले इवापत्ये ते मिथः पर्यणाययत् ॥ ४७ ॥ राज्ञी पुष्पवती तस्य श्राविकाऽभूत्तया नृपः । अवार्यत तथा कुर्वंस्तामवाजीगणत्पुनः ॥ ४८ ॥ क्रमेण पुष्पकेतौ तु कथाशेषत्वमीयुषि । पुष्पचूलोऽभवद् भूपः पुष्पचूला महिष्यभूत् ॥ ४९ ॥ अकृत्यं वारयन्ती तत्तदापत्यापमानिता । राज्ञी पुष्पवती जात्वा व्रतं तप्त्वा ययौ दिवि ॥ ५० ॥ स देवोऽवधिनाऽपश्यत्तामकृत्यनियोजिताम् । निजां दुहितरं स्नेहात् पुनरेवमचिन्तयत् ॥ ५१ ॥ मम प्राग्भवे प्राणप्रियेयं दुहिताऽभवत् । करोमि तत्तथा घोरे नरके न पतेद्यथा ॥ ५२ ॥ इति स्वप्नान्तरे तस्या नरकानतिदारुणान् । दर्शयामास निर्दीर्यमाणसांराविनारकान् ॥ ५३ ॥ वर्तिका श्येनमुक्तेव मृगीव दवनिर्गता । सा दृष्टनारका भीत्या प्रबुद्धापि व्यकम्पत ॥ ५४ ॥ तच्चथाऽकथयद्भीतभीता सा पत्युरेप तु । शिवेच्छुः पुष्पचूलायाः कारयामास शान्तिकम् ॥ ५५ ॥ स तु पुष्पवतीजीवदेवस्तद्धितकाम्यया । तादृशानेव नरकाननुरात्रमदर्शयत् ॥ ५६ ॥ अथाख्यन् नरकान् राज्ञे पृष्टाः पाखण्डिनो यथा । तथामन्यत राज्ञी न स्वप्नदृष्टविलक्षणान् ॥ ५७ ॥ आहूयाग्निकापुत्रं राजाऽपृच्छत्तदेव हि । नरकान् स तथैवाख्यद् दृष्टाः स्वप्ने यथा तया ॥ ५८ ॥ राज्ञ्यप्युवाच भगवन् ! किं भवद्भिरपीदृशः । मयेव वीक्षितः स्वप्नो वितथेयं कथमन्यथा ? ॥ ५९ ॥ सूरिः प्रोवाच हे वत्से ! विनापि स्वप्नदर्शनम् । संसारे नास्ति तद् यद् न विज्ञायेत जिनागमात् ॥ ६० ॥ पुष्पचूलाथ पप्रच्छ भगवन् ! केन कर्मणा । ईदृशान्नरकान् घोरान् प्राप्नुवन्ति शरीरिणः ? ॥ ६१ ॥ आख्याति स्माग्निकापुत्रो महारम्भपरिग्रहैः । मांसाशनैर्गुरुप्रत्यनीकत्वेनाङ्गिनां वधैः ॥ ६२ ॥ ततश्च

क०। सर्वथा मा कृथाः खेदमार्यपुत्राचिरादहम् । भ्रातरं बोधयिष्यामि कारिष्यामि त्वदीप्सितम् ॥२३॥ गत्वा भ्रातरमूचे च नितरां कुपितेव सा ।
विवेकिन् ! किमिदं भ्रातर्भवतानुष्ठितं यद ॥ २४ ॥ स्वकुटुम्बवियोगेन क्लिश्यते तव भावुकः । श्वश्रूश्वशुरपादानामहमुत्कण्ठिताऽस्मि
९॥ च ॥ २५ ॥ अनुमन्यस्व मे नाथं स्वस्थानगमनं प्रति । तमन्वेष्याम्यहमपि तस्याऽऽयत्ता न ते यतः ॥ २६ ॥ स्थास्यत्येवैष वाग्बद्धः प्रणन्तुं
श्वशुरौ त्वहम् । एकाकिन्यपि यास्यामि किं कार्यं तदनेन ते ? ॥ २७ ॥ इति साग्रहमुक्तस्तु जयसिंहो व्यसर्जयत् । तावुद्गमथुरां प्रत्या-
गन्तुं लग्नौ च तौ द्रुतम् ॥ २८ ॥ अम्बिकाऽभूत्तदा गुर्वी नेदीयःप्रसवापि च । इति मार्गेऽपि साऽसूत सुतं लक्षणविश्रुतम् ॥ २९ ॥
नादत्तामस्य तौ नाम पितरौ तत्करिष्यतः । अन्निकापुत्र इत्येनं तज्जनस्तूदलापयत् ॥ ३० ॥ उत्तरामन्निकानाथो जगाम मथुरामथ । तौ
ववन्दे च पितरौ ताभ्यां मूर्धन्यचुम्बि च ॥३१॥ देशान्तरोपार्जनेयं ममोपादीयतामिति । ब्रुवाणः सोऽर्भकं पित्रोरर्पयामास हृष्टयोः ॥३२॥ इयं
वधूर्वः पुत्रोऽयं ममैतत्कुक्षिसंभवः । इत्याचख्यौ च संबन्धं भक्तिबन्धुरया गिरा ॥३३॥ स्थविरौ चक्रतुस्तस्य शिशोः संधीरणाभिधाम् ।
अम्बिकापुत्र इति तु लोकनाम्ना स पप्रथे ॥३४॥ वर्धमानोऽन्निकासूनुः स्पर्धमानो नवेन्दुना । चतुर्वर्गार्जनोर्जस्वि प्रपेदे मध्यमं वयः ॥३५॥
भोगान् रोगानिवापास्य यौवनेऽपि स धीधनः । जयसिंहगुरोः पार्श्वे परिव्रज्यामुपाददे ॥३६॥ स क्रमेण परिक्रान्तचारित्रज्ञानदर्शनः । बभूव
गणभृद् गच्छकमलाकरभास्करः ॥ ३७ ॥ स सूरिः सपरीवारो वृद्धत्वे विहरन् ययौ । नगरं पुष्पभद्राख्यं गङ्गातटविभूषणम् ॥ ३८ ॥
तत्राभूद् भूपतिः पुष्पकेतुस्तस्य तु वल्लभा । बकुलस्येव वासन्ती पुष्पवत्यभिधानतः ॥ ३९ ॥ अभूतां युग्मजौ तस्याः पुत्रः पुत्री च
सुन्दरौ । अभूत्तयोः पुष्पचूलः पुष्पचूलेति चाभिधा ॥ ४० ॥ वर्धमानौ सहैवैतौ रममाणौ सहैव तौ । प्रीतिमन्तौ मिथोऽभूतां मराल-
पृथुकाविव ॥ ४१ ॥ राजा दध्यौ च यद्येतौ दारकौ स्नेहलौ मिथः । वियुज्येते तदा नूनं मनागपि न जीवतः ॥ ४२ ॥ वियोगं सोढु-

का नाम कन्यका ॥ ३ ॥ जयसिंहोऽन्यदा जामिमम्बिकामादिशद् निजाम् । समित्रोऽप्यद्य भोक्ष्येऽहं रम्यां रसवतीं कुरु ॥ ४ ॥ इत्युक्त्वा जयसिंहेन देवदत्तो निमन्त्रितः । आगाच्च तद्गृहे भोक्तुं तौ द्वावपि निषेदतुः ॥ ५ ॥ भक्ष्यभेदानथो मिष्टानष्टादश महारसान् । द्वयोरप्यम्बिका सा तु सुवेषा पर्यवेषयत् ॥ ६ ॥ तयोर्वातातप्रियाकर्तुं निराकर्तुं च मक्षिकाः । धुन्वती व्यजनं चक्रे कर्मैकं द्व्यर्थकारि सा ॥ ७ ॥ वीजनालोलदोःसिञ्जत्कङ्कणां तां मृगेक्षणाम् । देवदत्तो भृशं पश्यन्नभूत्कामवशंवदः ॥ ८ ॥ तद्रूपरसनिस्यन्दपाननिस्पन्दलोचनः । सोऽविदन् भोजनस्वादं बुभुजे गजलीलया ॥ ९ ॥ देवदत्तो द्वितीयेऽह्नि जयसिंहादथाम्बिकाम् । स्वमित्रैर्याचयामास सोऽपि तानेवमूचिवान् ॥ १० ॥ कुलीनोऽयं कलाज्ञोऽय सश्रीकोऽय सुधीरयम् । युवाऽय किं बहु ब्रूमः सर्वे वरगुणा इह ॥ ११ ॥ किन्तु यामिं प्रदास्यामि तस्मै यो मे गृहात् क्वचित् । न याता वीक्ष्यते प्रातरुत्थितैः स हि सज्जनः ॥ १२ ॥ एष संभाव्यते यास्यन्नद्य श्वो वापि सुन्दरः । किं न श्रुतं हि यद् ग्रामा वसन्ति प्राघुणैः किमु ? ॥ १३ ॥ प्राणप्रिया स्वसेयं मे जंगमा श्रीरिवौकसि । तदिमां संप्रहेष्यामि न भर्तुरपि वेश्मनि ॥ १४ ॥ असौ कर्तुं क्षमोऽपत्यजन्मावधि यदीदृशम् । तदुद्वहतु मे जामिं देवदत्तोऽम्बिकामिमाम् ॥ १५ ॥ देवदत्तानुमत्यैते ओमिति प्रतिपेदिरे । देवदत्तोऽपि तां कन्यां परिणिन्ये शुभेऽहनि ॥ १६ ॥ तत्र तस्याम्बिकाप्रेमपाशबद्धस्य तस्थुषः । प्रैष्युदग्मथुरास्थाभ्यां पितृभ्यां लेख ईदृशः ॥ १७ ॥ आवामन्धौ जराजीर्णौ जीवन्तौ यदि वीक्षसे । तदुद्धापय नौ नेत्रे रुदतोरिह पुत्रक ! ॥ १८ ॥ पितृवात्सल्यवद् मूर्तं स तं लेखमवाचयत् । पथिश्रान्तोऽयमित्यश्रुसलिलैः स्नपयन्निव ॥ १९ ॥ अचिन्तयच्च धिग् धिग्मां पितरौ विस्मृतौ हि मे । अहं विषयलग्नोऽस्मि पित्रोः पुनरियं दशा ॥ २० ॥ किं करोमि कथं यामि पतितोऽहं महापदि ? । स्वजिह्वयाथ बद्धस्य गतिः का मे भविष्यति ? ॥ २१ ॥ अम्बिका तत्करात्लेखमादाय तमवाचयत् । तद्दुःखकारणं सद्यो विवेद च जगाद च ॥ २२ ॥

ङ्गीनं तद्घ्राणाकोणमारुतैः ॥ ७० ॥ तादृक्छिन्तेन्दुमार्तण्डं लज्जामितसुरापगम् । तं वीक्ष्याद्रिदरीमिन्द्रोऽविशद् मुक्त्वा कृशोदरीम् ॥ ७१ ॥ वि-
ज्ञायावधिनेन्द्रस्तं मुनीन्द्रं कुपितं ततः । प्रैषीदस्य प्रबोधाय गान्धर्वानीकगायनीः ॥ ७२ ॥ कर्णाभ्यर्णं समेत्यैतास्तस्य गीतानि तेनिरे । उत्फ-
णस्य महामन्त्रवादिन्य इव भोगिनः ॥ ७३ ॥

क्रोधं प्रभो संहर यन्निमित्तमयं कृतोऽसौ नमुचिर्निरस्तः । कृतेऽन्नपाके स्वयमात्मनीनैः किं स्वाश्रयाग्निः प्रशमं न नेयः ? ॥ ७४ ॥

क्रोधः प्रसूतत्रिजगद्विरोधः क्रोधः कृतापत्प्रकरप्रबोधः । क्रोधः शिवाध्वन्यजनैकरोधः क्रोधः प्रणेयः कृतिभिस्ततोऽधः ॥ ७५ ॥

इत्यम्बरे शम्बधराङ्गनाभिः पृथ्व्यां च संघेन महीभुजा च । कथंकथञ्चित्प्रतिबोध्यमानः सस्मार स स्वं कुपितः कुमारः ॥ ७६ ॥

संहृत्य चाशु स्वतनोः प्रवृद्धिं रुषः प्रवृद्धिं च विधूय मूलात् । प्राप्तः स्वभावं क्षमितो जगित्वा पादे महापद्मनरेश्वरेण ॥ ७७ ॥

श्रीसंघदौःस्थ्यमिति विष्णुकुमार एष भित्त्वा क्रमेण निजकर्मबलं च जित्वा ।
उत्पन्नकेवलकलाकलितः प्रबोध्य विश्वंभरां शिवगतिं धिभरांबभूव ॥ ७८ ॥

॥ इति श्रीविष्णुकुमारकथा ॥

अथाम्बिकापुत्रकथा यथा,—

उभे स्तां मथुरानाम्नी नगर्यौ दक्षिणोत्तरे । मुख्याऽऽजनेन बिभ्राणे श्रियं क्षोणीदृशोरिव ॥ १ ॥ मथुरायामुदीच्यां च देवदत्तोऽभवद्
वणिक् । दक्षिणस्यां धनावाप्त्यै मथुरायामियाय सः ॥ २ ॥ वणिजा जयसिंहेन तत्रासीत्तस्य सौहृदम् । स्वसाऽऽसीज्जयसिंहस्य चाजि-

१ क. कीर्त्यै समर्प्य स्व° । २ ग. घ. दृशाविव ।

घाम्बुना । प्रज्ज्वलन् नमुचिः प्राह सूरीनूरीकृतः क्रुधा ॥५२॥ दत्ता सप्ताह्निकाऽह्नाय यात यूयं यथारुचि । तदूर्ध्वं तु यथादृष्टं हंस्यामि जिनलिङ्गिनम् ॥ ५३ ॥ श्रुत्वेति वसतावेत्य जगदुः सूरयो यतीन् । किं विधेयं महासत्त्वाः ! संकटेऽस्मिन्नुपस्थिते ? ॥ ५४ ॥ अथैकः प्राह भगवन् ! महापद्मस्य सोदरः । अनेकलब्धिमान् विष्णुकुमारोऽस्ति महातपाः ॥ ५५ ॥ तद्वाक्यान्नमुचिर्नूनमसावुपशमिष्यति । विना भानुप्रभां नैशं तमो नश्यति कर्हिचित् ? ॥ ५६ ॥ परं मन्दरशैलेऽस्ति तप्यमानः स सांप्रतम् । यो विद्यालब्धिमान् साधुस्तमाह्वातुं प्रयातु सः ॥ ५७ ॥ अथान्यः प्राह गमने शक्तिर्नागमने तु मे । गुरुस्त्वाह भवान् विष्णुकुमारेणागमिष्यते ? ॥ ५८ ॥ गुर्वाज्ञातः समुत्पत्य गरुत्मानिव स क्षणात् । ययौ विष्णुकुमारेण शालमानं शिलोच्चयम् ॥ ५९ ॥ दृष्ट्वा विष्णुकुमारस्तं निश्चिकायेति चेतसि । संघकार्यं ध्रुवं किञ्चित् प्रावृष्येव यदागतः ॥ ६० ॥ ततो नतोऽमुना विष्णुकुमारस्तत्तथा कथाम् । श्रुत्वाऽस्मात्सह तेनैवोत्पत्यागाद् गुरुसंनिधौ ॥६१॥ गुरून् नत्वा तदाज्ञातो गतश्च नमुचेः सदः । तं विनाऽन्यैर्नृपैर्नत्वोपावेश्यत महासने ॥ ६२ ॥ तत्र विष्णुकुमारोऽथ धर्माख्यानपुरस्सरम् । नमुचिं प्राह सन्त्वेते यावद्वर्षा महर्षयः ॥ ६३ ॥ नमुचिस्तूचिवान् राज्यं हित्वा मेऽथ वसन्त्वमी । मुनिरूचे पुरे चेन्न सन्तूद्याने पुराद् बहिः ॥ ६४ ॥ कोपाद् नमुचिरूचेऽथ पुरोद्यानस्य का कथा ? । राज्येऽपि मम न स्थेयं कार्यं चेज्जीवितेन वः ॥ ६५ ॥ सप्रहासं मुनिः प्राह राज्यमम्भोधिसीम ते । तत्याज्यं कथमेतेषां देहि स्थानं पदत्रयम् ॥ ६६ ॥ नमुचिः प्राह दत्त चेत् प्रेक्षिष्येऽहमतो बहिः । तं करिष्ये शिरश्छित्त्वा धकाराक्षरसोदरम् ॥ ६७ ॥ तन्तो विष्णुः शरीरान्तःकोपेनेव प्रसर्पता । ववृधे हिमवन्मुख्यान् पर्वतानपि खर्वयन् ॥ ६८ ॥ नमुचिः पार्ष्णिघातेन पातितस्तेन चासनात् । पराङ्मुखः प्रययौ शीघ्रं सप्तमीं नरकावनिम् ॥६९॥ [1]त्रस्तं चीत्कृत्य दिग्नागैरतं वीक्ष्याथ भयंकरम् । धिष्ण्यैस्तुपवद्ध-

---

१ क. ग. घ. पाददर्दरिकाघातैश्चकम्पे तस्य मेदिनी । तदात्वग्रस्तनमुचिविषभ्रगिभरादिव ॥ ६९ ॥

च ॥ ३२ ॥ सूरिः संसारवैराग्यकन्दकादम्बिनीं तदा । चकार देशनामुग्रक्लेशनाशपटीयसीम् ॥ ३३ ॥ देशनान्तेऽथ भूपालो भववैरा-
ग्यमुद्वहन् । गत्वा पुरं जगौ विष्णुकुमारं राज्यदत्तये ॥ ३४ ॥ स त्वाह तात ! राज्येऽस्मिन् महापद्मो निवेश्यताम् । युष्माभिरेव सत्राहं
प्रविव्रजिषुरस्मि तु ॥ ३५ ॥ ततो राज्ये महापद्मं कृत्वा पद्मोत्तरो नृपः । व्रतं विष्णुकुमारेण सहाऽऽदत्त महामतिः ॥ ३६ ॥ चक्रवर्तिपदे
कृताभिषेको द्वादशाब्दिकः । अभ्येत्याभ्येत्य भूपालैर्महापद्मस्य निर्ममे ॥ ३७ ॥ तावन्तं कालमस्थातां रथौ वादे तथैव तौ । मिथो-
ऽप्याज्ञामहाधीने रथौ सैन्ये स्वेशयोः ॥ ३८ ॥ जैनमीरथं निराकृत्य मिथ्यात्वमिति मूर्तिमान् । महापद्मः स्वजननीरथयात्रामसूत्रयत् ॥ ३९ ॥
दिक्षु कुक्कुटसंपातप्रमाणान्तरभूमिकाः । अकार्यन्त जिनेन्द्राणां विहारास्तेन कोटिशः ॥४०॥ जिनशासनभक्तेऽस्मिन् जनोऽपि जिनभक्ति-
मान् । सर्वोऽप्यभवदुक्तं हि यथा राजा तथा प्रजाः ॥ ४१ ॥

इतः पद्मोत्तरस्तीव्रतपस्तमहासिना । हतकर्मरिपुः सिद्धिं जयश्रियमिवाश्रयत् ॥ ४२ ॥ मुनेर्विष्णुकुमारस्य तपतो दुस्तपं तपः ।
लब्धयो वैक्रियाकाशगामित्वाद्या जज्ञिरे ॥ ४३ ॥ इतश्च सुव्रताचार्या वर्षास्था हस्तिनापुरे । ज्ञाता नमुचिना पूर्ववैरवृद्धेन दुरात्मना ॥
॥४४॥ ततोऽनेन महापद्मश्चक्री पूर्वप्रतिश्रुतम् । वरं यज्ञमित्यादेतो राज्यं देहीत्ययाच्यत ॥ ४५ ॥ अस्मै राज्यं प्रदायान्तःपुरान्तरविशद् नृपः ।
स चाभूत् कैतवाद्यज्ञदीक्षितो राज्यदीक्षितः ॥४६॥ मुक्त्वा जैनमुनीनेनं वर्धापयितुमाययुः । अन्यदर्शनिनो विप्राः पौराः प्रकृतयोऽपि च ॥४७॥
न श्वेतभिक्षवोऽभ्येयुरिति संप्राप्य सच्छलम् । आहूय सुव्रताचार्यानित्यूचे नमुची रुषा ॥४८॥ यदा यः कुरुते राज्यं यथावर्णा स लिङ्गिभिः ॥
द्रष्टव्यो नियतं राजरक्षिता हि तपोधनाः ॥ ४९ ॥ यूयं तु गर्वकठिनाः सर्वपाखण्डदूषिणः । विप्रनिन्दापराः क्षिप्रमिदं राज्यं तदुज्झत
॥ ५० ॥ तमूचुः सूरयो नास्मत्कल्पोऽयं तेन नागताः । न निन्दामश्च कमपि क्षमभाषा हि साधवः ॥ ५१ ॥ वचसा शीतलेनापि तप्ततैलमि-

भाव्यं तान् करिष्ये निरुत्तरान् ॥ १२ ॥ ओमित्युक्त्वा नृपस्तेन सह सूरीनुपाययौ । धर्मतत्त्वं च नमुचि पप्रच्छाक्षिप्य तानथ ॥ १३ ॥
मत्वा क्षुद्रममुं क्षुल्लकेन केनापि सूरयः । तदा पराजयन्ते स्म वादिना प्रतिवादिनम् ॥ १४ ॥ सोऽथ यातः सम राज्ञा रजन्यां तु समत्सरः ।
छन्नं प्राप्तो मुनीन् हन्तुं वनदेव्या न्यवध्यत ॥ १५ ॥ प्रातर्लोकेन राज्ञा च ज्ञातो मुनिषु मत्सरी । असामान्यं विमान्याथ नमुचिर्निरवास्यत
॥ १६ ॥ हस्तिनापुरमायातः स विलक्षो द्विजाधमः । महापद्मस्य तत्रापि युवराजस्य मन्त्र्यभूत् ॥ १७ ॥ इतः सिंहबलोऽन्वर्थनामा सीमा-
लभूपतिः । भञ्जं भञ्जं महापद्मवेशं दुर्गे विशत्यसौ ॥ १८ ॥ महापद्मेन रुष्टेन ततो नमुचिरौच्यत । मन्त्रिन्! सिंहबलध्वंसोपायं कमपि
विन्दसि ? ॥ १९ ॥ वेद्म्येवेति प्रतिज्ञाय सोऽपि सिंहबलं गतः । भङ्क्त्वा तद्दुर्गमचिरात्त बद्ध्वा च समानयत् ॥ २० ॥ वरं वृणिष्व-
त्यभाषिष्ट महापद्मः प्रसद्य तम् । यदा याचे तदा देय इत्यूचे नमुचिश्च तम् ॥ २१ ॥ यौवराज्यं महापद्मे पालयत्येतदम्बया । ज्वालया-
विष्कृतो जैनरथेनात्ममनोरथः ॥ २२ ॥ लक्ष्मीरपि सपत्न्यस्याः स्पर्धया ब्रह्मणो रथः । कारयित्वा भ्रमयितु तत्पूर्वमुपचक्रमे ॥ २३ ॥ तन्म-
त्वाऽभ्यग्रहीज्ज्वाला समक्षं भूपतेरिति । नाग्रेऽर्हद्रथयात्रा चेत् तत्परत्र ममाशनम् ॥ २४ ॥ रथयात्रे नृपेणाथ न्यषेत्स्यातामुभे अपि । द्वयोः
का दृग्निमील्येतोन्मील्येतापि च का यतः ? ॥२५॥ इति प्रेक्ष्य महापद्मः स्वाम्बापरिभव क्रुधा । अनापृच्छ्यैव पितर ययौ देशान्तरं निशि ॥२६॥
स्त्रीभिः श्रीभिश्च गणशोऽम्रियतैष पदे पदे । को विदेशः स्वदेशो वा पूर्वोपात्तसुकर्मणाम् ? ॥ २७ ॥ ततो नवमचक्रित्वपदलक्ष्मीमुपार्ज्य
सः । स्वपुरं पुनरागच्छदनेकनृपसेवितः ॥ २८ ॥ पित्रा सहर्षमभ्येत्य तत्र तेनादरादसौ । प्रावेश्यत पुरं पौरबद्धवन्दनमालिकम् ॥ २९ ॥
गत्वा सौधमसौ धन्यगुणां स्वजननीं नमन् । तयाऽशस्यत सानन्दमश्रुयन्त्या कराञ्जलम् ॥ ३० ॥ सुव्रतः सुव्रताचार्यः पुराद् बहिरिहा-
न्तरे । आययावर्यमेवान्यो हतमोहतमोभरः ॥ ३१ ॥ पद्मोत्तरनृपः सान्तःपुरपौरपरिच्छदः । पत्यावन्दिष्ट तत्पादान् निकषा निषसाद

[ धन्यस्तथा कृतपुण्यो विष्णुकुमारश्चान्निकापुत्रः । यशोभद्रो भद्रबाहुरतिमुक्तो नागदत्तश्च ॥
शय्यंभवश्च प्रभवः श्रीयक उदायनश्च माषतुषः । केशीलातिपुत्रो मेघकुमारश्च पुण्डरीकः ॥
आर्द्रकुमारसाधुः कीर्तिधरो नन्दिषेणकरकण्डू । हल्लविहल्लमुनीन्द्रौ शालमहाशालसिंहगिरयः ॥
आर्यमहागिर्यार्यसुहस्ती तथाऽऽर्यरक्षितः शाम्बः । प्रद्युम्नमुनिः कूर्मापुत्रस्तथा भद्रगुप्तश्च ॥ ]

व्याख्या——आसां पदार्थः स्पष्टः । व्यासार्थस्तु कथानकेभ्योऽवसेयः ॥ तत्र धन्यः शालिभद्रकथायाम्, कृतपुण्यः पुनरभयकुमारकथायामुद्दिष्टः । संप्रति विष्णुकुमारकथा यथा;—

कुरुषु स्वस्तिभागस्ति हस्तिनागपुरं पुरम् । तत्रेक्ष्वाकुरभूत् क्षोणीपतिः पद्मोत्तराभिधः ॥ १ ॥ ज्वालादेवी च लक्ष्मीश्चाभूतां द्वे तस्य वल्लभे । सम्यग्दृष्टिस्तयोराद्या मिथ्यादृष्टिः परा पुनः ॥ २ ॥ प्रासूत द्वौ सुतौ ज्वाला सिंहस्वप्नेन सूचितः । तयोराद्योऽभवद् विष्णुकुमार इति विश्रुतः ॥ ३ ॥ चतुर्दशमहास्वप्नसूचितः क्ष्मावसूचितः । द्वितीयस्तु महापद्म इत्यभूत्पद्मलोचनः ॥ ४ ॥ उभावपि शुभाकारौ तौ नरेन्द्रकुमारकौ । अवर्धेतामर्भकत्वं चन्द्रादित्याविवाश्रितौ ॥ ५ ॥ कलाकलापकलितौ तौ क्रमेण कुमारकौ । युवतीदृक्पिकीचूतवनं यौवनमीयतुः ॥ ६ ॥ प्रकृत्याऽगृध्नुना विष्णुकुमारेण निराकृते । राज्ञाथ युवराजत्वे महापद्मो न्यवेश्यत ॥७॥ इतश्चोज्जयिनीपुर्यां श्रीवर्मा पार्थिवोऽभवत् । मिथ्यात्वरुचिरासीच्च मन्त्री नमुचिसंज्ञितः ॥ ८ ॥ तत्पुरोपवनेऽन्येद्युः शिष्यः श्रीसुव्रतप्रभोः । समेत्य सुव्रताचार्यः शमवान् समवासरत् ॥ ९ ॥ तद्वन्दनाय निर्यान्तं वीक्ष्य राजा पुरीजनम् । पप्रच्छ नमुचिं लोकोऽस्तोकोऽयं क्व नु गच्छति ? ॥ १० ॥ नमुचिः प्राह देवात्रोपवने केऽपि सूरयः । सन्त्यायाताः प्रणन्तुं तांस्तद्भक्त्या यान्त्यमूः प्रजाः ॥ ११ ॥ राजोचे यावस्तर्ह्यावामपि मन्त्र्याह तत्र च । मध्यस्थेन त्वया

नपात्रेण तारय ॥ १६१ ॥ ततः स्वपाणिपद्मेन गणधारिधुरन्धरः । स्वजनैरन्वितं जम्बूकुमारं तमदीक्षयत् ॥ १६२ ॥ प्रभवोऽप्यन्यदाऽभ्येत्य सुधर्मस्वामिसन्निधौ । भावशत्रुप्रतिक्षेपदक्षो दीक्षामुपाददौ ॥ १६३ ॥ गणधारिधुरीणेन तदानीं प्रभवो मुनिः । कृतः सुकृतवान् जम्बूपादाम्बुजमधुव्रतः ॥ १६४ ॥ ततः श्रीवीरनिर्वाणाद् व्यतीत्य दशहायनीम्[1] । सुधर्मस्वामिना जम्बूस्वामी स्वामी गणे कृतः ॥१६५॥ श्रीसुधर्मगणाधीशे श्रिते निःश्रेयसश्रियम् । जम्बूः प्राबोधयद् विश्वं सरोजमिव भास्करः ॥ १६६ ॥ अथ वर्षचतुःषष्टौ गतायां वीरनिर्वृतेः । श्रीजम्बूस्वामिना चक्रे गच्छेशः प्रभवः प्रभुः ॥ १६७ ॥

आजन्मशीलकलनादिह जम्बुनाम्नि सौभाग्यमद्भुतमिहैव विभौ बभूव ।
यस्मादमु समधिगम्य गतेऽपि तस्मिन्नद्यापि नान्यमधिगच्छति केवलश्रीः ॥ १६८ ॥

॥ इति जम्बूस्वामिकथा ॥४९॥

अथ चतसृभिर्गाथाभिर्मुनिमतल्लिकानिकायं नामतः प्रस्तुवन्नाह—

धन्नो तह कयपुन्नो विण्हुकुमारो य अन्नियाउत्तो । जसभद्दभद्दबाहू अइमुत्तो नागदत्तो य ॥ ५० ॥
सिज्जंभवो अ पभवो सिरिओ उदायणो अ मासतुसो । केसी इलाइपुत्तो मेहकुमारो अ पुंडरीओ ॥ ५१ ॥
अद्दयकुमारसाहू कित्तिधरो नंदिसेणकरकंडू । हल्लविहल्लमुणिंदा सालमहासालसीहगिरी ॥ ५२ ॥
अज्जमहागिरिअज्जसुहत्थी तह अज्जरक्खिओ संबो । पज्जुन्नमुणी कुम्मापुत्तो तह भद्दगुत्तो य ॥ ५३ ॥

---

[1] ग. घ. ०हाय० ।

नाल इवामेध्ये कीट इव वसन् भवी। नव मासोऽह्नानि चत्वारि नयत्यसमदुःखभाक् ॥१४२॥ तत्रस्थश्चिन्तयत्येष निसृतोऽतः कथंचन। तत्करिष्ये यथा नात्र भूयोऽपि निपताम्यहम् ॥ १४३ ॥ ततोऽपि जायमानस्य यद् दुःखं योनिसंकटे। मूर्च्छितस्यैव जालमोऽयं न स्मरेद् घातमात्मनः। ॥ १४४ ॥ स्मारितोऽहं तु तत्पूज्यैरपुनर्भवनायकैः । स्मृत्वा तच्च भवत्योऽपि भवताऽध्वनि मामके ॥ १४५ ॥ अथोत्तरङ्गवैराग्यरसाङ्गीकृतचेतसः। अष्टावपि समं जम्बूकुमारमिदमभ्यधुः ॥ १४६ ॥ आश्रितो यस्त्वया पन्थाः सोऽस्माभिरपि संश्रितः। ततः सहैव नेतासि तेनास्मान् शिवपत्तनम् ॥१४७॥ उवाच प्रभवोऽप्युच्चैर्महासत्त्व! भवद्गुणैः। कृष्टस्त्वामनुयास्यामि पुत्राद्यापृच्छ्य सत्वरम् ॥१४८॥ मा प्रमादीर्महाभाग! विवेकोचितमाचरेः। इत्युक्तो जम्बुना यातः प्रभवो भवनं निजम् ॥ १४९ ॥ ज्ञात्वा जम्बूकुमारस्य सदारस्यापि निश्चयम्। श्वशुराः पितरौ वाऽऽसंस्तमेवानुयियासवः ॥ १५० ॥ अथ जम्बूकुमारोऽपि विधाय जिनपूजनम्। संघं विधिवदभ्यर्च्य संमान्य स्वजनादिकान् ॥ १५१ ॥ स्नातीयगन्धपानीयकृतमज्जनमङ्गजः। चन्दनेन सितध्यानेनेव सर्वाङ्गभासुरः ॥ १५२ ॥ रत्नाभरणसंभारैः सत्त्वसारैरिवाश्रितः। असमैः कुसुमैः स्वस्य यशोभिरिव शोभितः ॥ १५३ ॥ संवीतः सितवासोभिः पुण्येन्दुकिरणैरिव । बाह्यान्तरसहस्रेण शिबिकामधिरूढवान् ॥ १५४ ॥ कलापकम् ॥ ततो जन्मान्तरस्नेहरसेन सहचारिणा। अनादृतेन देवेन कृतनिष्क्रामणोत्सवः ॥ १५५ ॥ प्रवेशिताभिराकम्य सैन्यचारित्रभूभृतः। सेनाभिरिव पञ्चेषोः प्रियाभिस्ताभिरावृतः ॥ १५६ ॥ दानैरावर्जयन् दीनांस्तूर्यैर्मुखरयन् नभः । मायूरच्छत्रदण्डेन मण्डलं तिरयन् रवेः ॥ १५७ ॥ आलोक्यमानो लोकेन विस्मयालोलमौलिना । पौरीभिर्दीयमानाशीरक्षतक्षेपपूर्वकम् ॥ १५८ ॥ वन्दिवृन्दजयध्वानमुखरीकृतदिङ्मुखः । सुधर्मस्वामिपादाब्जपावनं वनमीयिवान् ॥ १५९ ॥ पञ्चभिः कुलकम् ॥ याप्ययानादथोत्तीर्य प्रतीष्टाचारमङ्गलः। मध्ये प्रविश्य नत्वा च गुरुपादान् व्यजिज्ञपत् ॥ १६० ॥ संसारसागरोत्तारकर्णधारमुनीश्वर!। मां सकुटुम्बं चारित्रया-

सौख्यप्रमाऽगुनभसोरिव । यत्र तत्र प्रिये ! मर्त्यसुखाभासस्य का कथा ? ॥१२२॥ सुपुप्तिक्षुत्तृपामर्त्तिरर्तिर्मूत्रपुरीषयोः । आर्त्तिर्भोगे वियोगे च क्व नार्त्तिर्मर्त्यजन्मनि ? ॥१२३॥ तद् विमुच्यासुखमयान् भोगान् रोगानिवैहिकान् । मोक्षसौख्यलतावीज प्रहीष्ये प्रहिणि ! व्रतम् ॥१२४॥ कनकश्रीरथोवाच न कः प्रार्थयते सुखम् ? । परं प्रत्यक्षमेवैतत्परोक्षस्य कथा वृथा ॥ १२५ ॥ तपः क्रियेत भोगेभ्यस्तेषु लब्धेषु तद् वृथा । प्रज्वालयति को वह्निमन्ते पाकमुपेयुपि ? ॥ १२६ ॥ अथ जम्बूर्जगौ प्रत्युत्पन्नदृष्टिस्त्वमीदृशी । प्रत्युत्पन्नदृशां दीर्घदृश्वरास्त्ववनीश्वराः ॥ १२७ ॥ स्वर्गापवर्गदं प्राप्य मानुष्यं तत्सुखस्पृशः । विनश्यन्त्यायतौ मूढा वीजभोजिकुटुम्बिवत् ॥ १२८ ॥ तदिदं राज्यवल्लब्ध्वा मानुष्यं दिनपञ्चकम् । तत् करिष्याम्यहं यद् न कृतं जन्मशतैरपि ॥ १२९ ॥ अथो कनकवत्यूचे त्वमपूर्वं करिष्यसि । हित्वा हस्तगतं भोज्यं कूर्परान्तं विलेक्ष्यसि ॥ १३० ॥ कुमारोऽथ जगौ गौरि ! क्रान्त्वा लोकैः शुकैरिव । भुज्यमाना भ्रमं भोगाः स्यन्ति शाल्मलिकोशवत् ॥ १३१ ॥ भवशैलेऽत्र पुंयोनिविवराद् विषयान्धलाः । क्षिप्यन्ते दुर्गतौ प्राप्ता अपि सिद्धरसाप्तये ॥ १३२ ॥ तदहं युवतीलोभं व्यतीत्य सुगुरोर्गिरा । कल्याणसिद्धये सिद्धरसार्थवास्मि सादरः ॥ १३३ ॥ जयश्रीरित्यथावादीद् नाथ ! साधूदितं त्वया । परं परोपकारो यः स पुण्यखनिरिष्यते ॥ १३४ ॥ त्वं द्विषन्नपि तद् भोगान् भजास्मत्कृतये कियत् । घनो जनोपकाराय क्षाराम्भोऽपि न किं पिबेत् ? ॥ १३५ ॥ विषं तदपि तत्प्रत्तं सुधायेत यथाऽङ्गिनाम् । तथा नः श्रेयसे भोगास्तेऽपि योगास्तव प्रभो ! ॥ १३६ ॥ तत् कृपालो ! कृपां कृत्वा स्वसंगमसुखामृतैः । संजीवयाऽस्मान्कामार्त्ता वल्लरीरिव नीरदः ॥१३७॥ जम्बूरथाह तां कामहतां स महतां वरः । असन्निर्बन्धमाधातुमलं कमललोचने ! ॥१३८॥ भोगा युष्माकमस्माकमुभयेषाममी विषम् । यच्चतुर्गतिकस्तेभ्यो भवो भवति भीषणः ॥१३९॥ तिर्यग्नारकदुर्देवनृतादुःखस्य का कथा ? । एकशोऽपि विपद् घोरा गर्भवासे निशम्यताम् ॥१४०॥ सूचीभिरग्निवर्णाभिर्भिद्यमानस्य लोमसु । यथा दुःखं भवेज्जन्तोर्गर्भेऽष्टगुणितं तथा ॥१४१॥ हन्त

ऽपि का त्रपा । १०१॥ तदेनां स्वयमुत्सृज्य प्रव्रजिष्यामि भामिनि ! । त्यज्यमानं प्रतीक्षिष्ये नात्मानमनया पुनः ॥ १०२ ॥ पद्मश्रीरित्यथाख्या-
दीदृजादीनव ! नाथ ! ते । गार्हस्थ्यादपरो धर्मः शर्मदो नोपयुज्यते ॥ १०३ ॥ गृहस्थाधारतो धर्मे यतन्ते यतयोऽपि हि । पक्षपाताद् विना
मातुर्जीवन्ति क्व नु जन्तवः ? ॥१०४॥ यथा सरोऽभि गच्छन्ति क्ष्माचराः खेचरा अपि । तृष्णाच्छिदे तथा यान्ति गृहस्थं धार्मिकाः परे॥१०५॥
गृहिधर्मं दुराधेयं सुरैरप्यसुरैरपि । पालयन्ति नराः शूरा दूरादुज्झन्ति चापरे ॥ १०६ ॥ अथ जम्बूरुवाचेशमुपकुर्वन्ति सेवकाः ।
प्रधानत्वं तदीशस्य सेवकेषूपयुज्यते ॥१०७॥ मानुषत्वच्युतेः पान्ति दिशन्ति च परं पदम् । क्षेमयोगकृता नाथा लिङ्गिनस्तेन गेहिनाम्॥१०८॥
न ध्यायन्ति न जल्पन्ति न चलन्ति न भुञ्जते । सावद्यं यतयो ये ते गृहिभ्यो नोत्तमाः कथम् ? ॥१०९॥ मेरुसर्षपयोर्यद्वदन्तरं रविकीटयोः ।
वार्धिगोष्पदयोर्यद्वत्तद्वद् यतिगृहस्थयोः ॥ ११० ॥ खण्डनी पीषणी चुल्ली पयःकुम्भी प्रमार्जनी । पञ्च शूना गृहे तेन दूना गृह्णीमहि व्रतम् ॥
१११॥ जगाद पद्मसेनाथ नाथ ! ते सुन्दरं वपुः । व्रतकष्टोचितं नैव कदलीगर्भकोमलम् ॥११२॥ अथ जम्बूरुवाचेदमशुचेः कृतघातिन. । का-
पेक्षा वपुष प्रेक्षावतां शश्वद्विनाशिनः ? ॥ ११३ ॥ स्वतन्त्रः परतन्त्रेण निर्मलः समलेन च । देहेन चेदुपार्ज्येत धर्मः तत्क्षूणमत्र किम् ? ॥
११४॥ जगाद जयसेनाथ नाथ ! तीर्थकरैरपि । कृत्वा राज्य परिव्रज्याददे तत्त्वं किमुत्सुकः ?॥११५॥ जम्बूरथाह ते ज्ञानादविदन् कालमात्मनः
स्पर्धा तैर्नोऽस्तु काऽऽतङ्कं प्रजानामिव राजभिः ? ॥ ११६ ॥ कृतान्तस्य करोऽकस्मादेत्यकस्मादलक्षितः । कर्हि चालयिता सार्थं संबलेन
यदाङ्गिनाम् ॥ ११७ ॥ दुष्कर्मचौरहन्तारः सहायाः साधवोऽद्य मे । कुर्वन्पथ्यदनं धर्मं यामि तन्मुक्तिपत्तनम् ॥ ११८ ॥ नभःसेना विहस्याथ
जगौ नाथ तव भ्रमः । मानसे वासितः केन वद स्वर्गापवर्गयोः ? ॥ ११९ ॥ भवोऽयमेव दौर्गत्यवतां दुर्गतिरिष्यते । स एव श्रीमतां स्वर्गो-
ऽपवर्गो रतिशालिनाम् ॥१२०॥ अथ जम्बूर्जगादेति वदन्ती नापराध्यसि । तैलमेवामृतं तस्य येनाज्यं नैक्षि कर्हिचित् ॥१२१॥ स्वर्गापवर्गयोः

हंकृति । अतं प्रातर्ग्रहीष्यामि सुधर्मस्वामिसंनिधौ ॥८१॥ अथाह प्रभव. श्रीमानिति प्राभवभाग्भवान् । भुनक्ति नैव किं भोगान् व्रताय यतसे कुतः ? ॥ ८२ ॥ वरेणेदमथावादि तथावादिनि तस्करे । सकर्ण ! त्वमुभाकर्णि समाकर्णय मद्गिरम् ॥८३॥ रसवीर्यविपाकेन किम्पाकेभ्योऽपि दारुणात् । अभिज्ञः कोऽनुभुञ्जीत विषयान् मुखपेशलान् ?॥ ८४ ॥ विरसा अपि रोचन्ते विषया विकृतात्मसु । कषायिणि मुखे क्षारमपि क्षीरायते जलम् ॥ ८५ ॥ विषयेच्छावशः प्राणी परिभूयेत कर्मभिः । आशाबद्धो रसः किं न म्रियते भस्म धार्त्तिकैः ? । ८६ ॥ तदलं विषयैर्ज्ञातासारैः सुगुरुसंगमात् । तिष्ठामहे महानन्दसौख्यायानन्तसंपदे ॥ ८७ ॥ अथाह प्रभवः स्वास्मिंस्त्वं बन्धुषु पराङ्मुखः । पितरौ दुष्प्रतीकारौ कथंकारं विमुञ्चसि ? ॥८८॥ अथ जम्बूरुवाचैनमहो मोहः शरीरिणाम् । बान्धवो बन्धवः केऽत्र पितरौ पितरश्च के ? ॥८९॥ पितृमातृसहस्राणि भ्रातृपुत्रायुतानि च । जातौ जातैर्व्यतीतानि कस्याहं कस्य ते पुनः ?॥९०॥ अहमेको न मे कोऽपि नाहमन्यस्य कस्यचित् । न तं पश्यामि यस्याहं दृश्यते न स यो मम ॥९१॥ मातृभूय पितृभूय पुत्रादीभूय भूरिशः । प्राणिनोऽत्र विवर्तन्ते ज्ञातेयं क्वोपयुज्यताम् ?॥९२॥ बन्धूनां प्रतिबन्धस्य खलूक्त्वा वार्त्तयापि तत् । धर्म एवाङ्गिनां शर्म दत्ते माता पिता सुहृत् ॥ ९३ ॥ अथाह प्रभवः पुत्रमुत्पाद्य प्रव्रजेस्ततः । अपुत्रस्यास्ति न स्वर्गो न च तृप्तिरमुत्र यत् ॥९४॥ विहस्याथ जगौ जम्बूर्गिरा शम्बूकगौरया । स्वर्गः पुत्रेण चेत् पुंसां वृथा धर्मक्रिया ततः ॥९५॥ श्वानशूकरसर्पाद्या दृश्यन्ते बहुसूनवः । तत् ते दिवं प्रयास्यन्ति न बालब्रह्मचारिणः ?॥९६॥ पुत्रैरावर्जितं पिण्डं लभन्ते पितरौ यदि । तृप्तास्तत् किमु भुक्तेन कस्यापि पितरो वयम् ॥९७। विषयप्रीतयालं तत्पुत्रोत्पादनवार्त्तया । इत्युक्ते जम्बुना जज्ञे प्रभवः पिहितोत्तरः ॥९८॥ अथोवाच समुद्रश्रीर्नाथेयं श्रीरनर्गला । प्राप्ता त्वया कथमिमां हित्वा भिक्षुत्वमीहसे ?॥ ९९ ॥ जम्बूरुवाच हे कम्बूपमकण्ठि ! निशम्यताम् । को विश्वासः श्रियोऽमुष्याश्चञ्चला चपलेव या ? ॥१००॥ यात्मनो जनकं धर्मं हन्ति नित्योपकारिणम् । निरपायाः श्रियस्तस्याः पतिद्रोहे-

मिव चेतासामन्तश्चन्द्र इव स्फुरन्। कलावत्तावयोर्नेत्रकुमुदानां मुदं कुरु ॥६१॥ श्रुत्वा पित्रोरिमां वाचमचलव्रतनिश्चय.। उचितज्ञः कुमारोऽयमभ्यधाद् मधुरं वचः ॥६२॥ तावदाचर्यत ब्रह्मव्रताय नियमो मया। कुतूहलाय वां कार्यं पाणिग्रहणमप्यदः ॥६३॥ विवाहस्य द्वितीयेऽह्नि ग्रहीष्यामि पुनर्व्रतम्। त्वेपं मूर्धन्यवात्सल्याद् नाहं भवदवानले ॥ ६४ ॥ आसां मृगीदृशां प्रेमस्थेमसंवन्धवन्धने। पतित्वेन पतित्वाऽसौ क्व मोक्षाय यतिष्यते ? ॥ ६५ ॥ इत्यालोच्य मिथस्ताभ्यां पितृभ्यां तन्मतं वचः। अकारि च मुदा पाणिपीडनोपक्रमक्रमः ॥ ६६ ॥ युग्मम् ॥ अथ जम्बूकुमारेण ज्ञापिते स्वव्रतोद्यमे। पितॄन् किंकार्यतामूढानाहुस्तानिति कन्यकाः ॥ ६७ ॥ इहापि परलोकेऽपि जम्बूस्वामी गतिः स नः। पद्मश्रियामिवोष्णांशुर्विद्युतामिव वाम्बुदः ॥६८॥ स्वमनोऽभिमते मार्गे सोऽस्माभिस्तेन वा वयम्। नेतव्याः सत्यमित्यस्तु स्पर्धावन्धः परस्परम् ॥६९॥ महासतीषु धन्यानां कन्यानां वचनैरिति। तेऽप्युद्दिश्य विवाहस्य दिनमानन्दिनः स्थिताः ॥७०॥ अथाननेन्दुनिर्गच्छद्वतुलसुधया तया। स्त्रीषु संजीवयन्तीषु भवदग्धं मनोभवम् ॥७१॥ वन्धूनामुपरोधेन विरोधेन तु चेतसः। लग्ने जम्बूकुमारोऽयमुपयेमे कुमारिकाः ॥ ७२ ॥ युग्मम् ॥ सह ताभिः स्मरशरैः सहिताभिस्तदा वदन्। गतस्पृहो गृहावासे वासवेश्मन्यवास्थित ॥ ७३ ॥ इतश्च विन्ध्यो विन्ध्याद्रौ व्यधाज्जयपुरेश्वरम्। पुत्रं प्रभुमथ ज्येष्ठः प्रभवो निरगात् क्रुधा ॥ ७४ ॥ चौरपञ्चशतीयुक्तः कुर्वन्नुर्व्यां स चोरिकाम्। जज्ञेऽवस्वापिनीतालोद्घाटिनीविद्ययोः पदम् ॥ ७५ ॥ गृहं तदा तदागत्य जम्बूस्वामिनिषेवितम्। विद्ये प्रयुज्य तन्वानश्चौर्यं स्तम्भमवाप सः ॥ ७६ ॥ केनाहं स्तम्भितो भृत्यैः सहितोऽपीति चिन्तयन्। दृशं प्रतिदिशं चौरग्रामणीरक्षिपत्ततः ॥ ७७ ॥ अथ सुप्तेऽखिले लोके कुमारं स्त्रीभिरावृतम्। अपश्यज्जाग्रतं सोऽब्जखण्डकैरवखण्डवत् ॥७८॥ प्रभवस्तमुवाचाथ जम्बूनामानमानतः। स्तम्भनीं देहि मे विद्यां गृह्णन् विद्याद्वयं मम ॥७९॥ जम्बूस्वामी ततो वाचमाचष्टे स्म शमैकभूः। नास्ति मे स्तम्भनी विद्या त्वद्विद्याभ्यां च किं मम ? ॥ ८० ॥ काङ्क्षामि यदहं गेहविरहं निर-

सरसीव सरोरुहम् ॥ ४० ॥ इतश्च श्रेष्ठिनो भ्राता जिनदास इति श्रुतः । मृत्वा शाश्वतजम्बूद्रौ जातवानस्ति दैवतम् ॥ ४१ ॥ तस्योपया-
चितादेष प्रसूत. सूनुरित्यथ । पितृभ्यां विहितो जम्बूकुमार इति नामतः ॥ ४२ ॥ समुद्रश्रीरिति तथा पद्मश्रीरिति च श्रुता । पद्मसेनेति
कनकसेनेति च समाख्यया ॥ ४३ ॥ विद्युन्मालिसुरस्यैताश्चतस्रश्चित्तवल्लभा । गृहेषु श्रेष्ठिमुख्यानामवतेरुर्दिवश्च्युताः ॥ ४४ ॥ युग्मम् ॥
नभसेना च कनकश्रीश्च कनकवत्यथ । जयश्रीरिति चाभूवंश्चतस्रोऽन्या कुमारिकाः ॥४५॥ अष्टौ मूर्त्यन्तराणीव महिषीणां बिडौजस. । ताः
पुरेऽत्र बभुर्बालाः सिद्धयोऽष्टाविवाथवा ॥४६॥ दातुं ताः पितृभिः जम्बूस्वामिने ऋषभोऽर्थित. । सर्वं मेने न कस्तुल्यगुणसङ्गाय कौतुकी ?
॥ ४७ ॥ तदानीं च महामोहतमोहतिदिवाकर । श्रीसुधर्मा समायासीद् वैभारगिरिकाननम् ॥ ४८ ॥ श्रुते तस्मिन् समायाते
निर्यातं नगरादथ । जनैर्भृङ्गैरिवाम्भोजादाजायितविराजितै ॥ ४९ ॥ श्रीसुधर्मगणाधीश नमस्कर्त्तुं समागमत् । तदा जम्बूकुमारोऽपि
समारोपितसंमद. ॥५०॥ ससारसागरोत्तारतरीविरमरीणया । गिरा गुरुश्चकारास्य पुरस्ताद् धर्मदेशनाम् ॥ ५१ ॥ जम्बूरम्बूज्ज्वलां वाचं
गुरो. संवरदात्तदा । पीत्वा रोमाञ्चरूपेणाभित पल्लवितोऽभवत् ॥ ५२ ॥ नत्वा मुनीन्द्रमुन्निद्रव्रतग्रहमहोद्यमः । जगामाऽयममायः सन्
सदन मदनं द्विषन् ॥ ५३ ॥ सत्वरः पितरौ नत्वा जम्बूः कम्बूज्ज्वलस्मितः । निजगादाऽयमादाय व्रतं प्रीतो भवाम्यहम् ॥ ५४ ॥ इत्याकर्ण्य
ततः कर्णाकालकूटोत्कटं वच. । सुतं व्रतनिषेधाय पितरावूचतुस्तराम् ॥ ५५ ॥ एकस्त्वमावयोर्दीपो भानुर्भूनभसोरिव । त्वां विना वत्स !
नितमां तमांस्यभिभवन्ति नौ ॥ ५६ ॥ मनोरथशताहूतप्रसूतव्रतकर्मभिः । दुर्लभस्तात लब्धोऽसि त्वमुदुम्बरपुष्पवत् ॥ ५७ ॥ तन्नश्चिरेण
संपूर्णमनोरथमहारथम् । किमीदृग्वाग्घनाघातैर्युक्त भङ्क्तुं तवानघ !? ॥५८॥ ययाचिरे चिरेणैता रूपाद्वैताङ्गयष्टयः । अष्ट याः कन्यकास्तुभ्यं
त्यजस्येताः कुतः सुत ! ?॥ ५९ ॥ स्वसङ्गसुभगंमन्याः कन्याः परिणयन्निमाः । कुतूहलं श्रुतोलृत्खुरावयोः पूरयाऽऽवयो. ॥ ६० ॥ आशाना-

विदेहेऽथ विजये पुष्कलाऽभिधे। नगर्यां वीतशोकायां भवदेवो दिवश्च्युतः ॥ २१ ॥ पुत्रः पद्मरथस्यासीद् वनमालाङ्गसंभवः । नाम्ना
शिवकुमारोऽयं पितृभ्यां परिणायितः ॥२२॥ युग्मम् ॥ अन्यदाऽसौ गवाक्षस्थ सार्थवाहस्य कस्यचित् । वेश्मन्युपात्तसद्भिक्षं मुनिमेकमलो-
कत ॥२३॥ अथास्थानगतं पापवारणं कृतपारणम् । गत्वा नत्वा मुनिं राजाङ्गजोऽन्ते समुपाविशत् ॥ २४॥ ततोऽसौ ज्ञानवानूचे भवदत्तो-
ऽस्म्यहं पुरा । भवांश्च भवदेवोऽभूदावामात्तव्रतौ तथा ॥२५॥ दिवश्च्युत्वाहमभवं विजयेऽत्रैव विश्रुते। नगर्यां पुण्डरीकिण्यां वज्रदत्तस्य
चक्रिणः ॥२६॥ पत्न्यां यशोधराख्यायां सुतः सागरसंज्ञितः। पित्रा धात्रीशपुत्रीभिस्तरुणः परिणायितः ॥२७॥ युग्मम् ॥ एकदाऽनेकदारान्त-
र्वर्ती मन्दिरमूर्द्धनि । दृष्टनष्टघनालोकात् प्रबुद्धो व्रतमादिषि ॥ २८ ॥ गृहीततीर्थकृद्दीक्षो गुरोरमृतसागरात् । तप्यमानोऽवधिज्ञानी
चाभवं प्रधिषन् भवम् ॥ २९ ॥ श्रुत्वा शिवकुमारोऽदः प्रबुद्धः शुद्धमानसः । नत्वा यतिं गतः प्रष्टुं पितरौ निश्चितव्रतः ॥ ३० ॥ पितृभ्या-
मननुज्ञातस्ततश्चाकृतभोजनः । गत्वा पौषधशालायां तस्थावस्थानमंहसाम् ॥ ३१ ॥ अथैष जगतीभर्तुरादेशाद् दृढधर्मणा । श्राद्धेन
बोधितो भुङ्क्ते षष्ठादाचाम्लपारणः ॥ ३२ ॥ ईदृक्तपःप्रकाशी च प्राशुकाशी व्रतीव सः । तत्र शुश्रूषितस्तुष्यत्कर्मणा दृढ-
धर्मणा ॥ ३३ ॥ अथ द्वादशवर्षान्ते भावनिर्व्यूढसंयमः । विद्युन्मालीति देवोऽभूद् ब्रह्मलोकेऽद्भुतद्युतिः ॥ ३४ ॥ राजन् सो-
ऽयमिति श्रुत्वा श्रेणिकः पुनरब्रवीत् । भविष्यति भुवि स्वामिन् कीदृशोऽयमतश्च्युतः ? ॥ ३५ ॥ विभुराह पुरेऽत्रैव ऋषभश्रेष्ठिसूरसौ ।
जम्बूनामावसर्पिण्यां भावी चरमकेवली ॥ ३६ ॥ तद् विद्युन्मालिनः कान्ताश्चतस्रो विनयाऽऽनताः । तीर्थेशमिति पप्रच्छुः कास्माकं
भाविनी गतिः ? ॥ ३७ ॥ श्रेष्ठिनां तनुजीभूय यूयमप्यस्य योषितः । भविष्यथ पुरेऽत्रैव तदिदं विभुरभ्यधात् ॥ ३८ ॥ अथ तद् दिवसादेव
स देवः सप्तमेऽहनि । धारिण्या ऋषभश्रेष्ठिपत्न्याः कुक्षाववातरत् ॥ ३९॥ पूर्णैरथ दिनैः श्रेष्ठिप्रिया सा सुषुवे सुतम् । आनन्दामृतरोचिष्णुं

श्रीराजिराजितं राजगृहमित्यस्ति पत्तनम् । यत्पौराणां वणिक्पुत्र इव सोऽपि धनेश्वरः ॥ १ ॥ नृपस्तत्र क्षतारिश्रीश्रेणिः श्रेणिक इत्यभूत् । धर्मी यो मार्गणाक्षेपं विदन्नपि विवेद न ॥ २ ॥ श्रीमान् वीरः शुनासीरप्रमुखामरसेवितः । तत्रेत्य समवासार्षीद् विभुर्वैभार-पर्वते ॥ ३ ॥ निशम्य स्वामिनं प्राप्तं राजा राजगृहेश्वरः । सपौरान्तःपुरामात्यः प्रीतो नन्तुं समाययौ ॥ ४ ॥ प्रणम्योचितभूपीठे निविष्टेषु नृपादिषु । स्वामी संसारधिक्कारदायिनीं देशनां व्यधात् ॥५॥ अत्रान्तरे समायासीद् दासीकृतरविस्त्विषा । चतुर्भार्यैः प्रभुं नन्तुं कश्चिदिन्द्र इवामरः ॥ ६ ॥ प्रदक्षिणात्रयीपूर्वं प्रणम्य परमेश्वरम् । निषसाद यथास्थानं सोऽपि रोपितविस्मयः ॥ ७ ॥ शक्रादिसुरचक्रेषु ज्वलन् रविरिवोडुषु । अकरोद् दुष्करं किं किं देवोऽयं पूर्वजन्मनि ? ॥८॥ श्रेणिकक्षोणिकान्तेन पृष्टः स्पष्टमिति प्रभुः । देवस्य तस्य वृत्तान्तं कथया-मासिवानिति ॥ ९ ॥ युग्मम् ॥ राजन् ! मगधदेशेऽत्र ग्रामे सुग्रामनामनि । राष्ट्रकूटान्वयी श्रीमानार्यावानार्यवागभूत् ॥ १० ॥ रेवती-कुक्षिजौ तस्य सुतौ भुवनविश्रुतौ । अभूतां भवदत्तश्च भवदेवश्च नामतः ॥ ११ ॥ भवदत्तोऽग्रहीद् दीक्षां सुस्थिताचार्यसन्निधौ । भाव-देवमपि कष्टुं भवाद् ग्राहयति स्म तम् ॥१२॥ भावदेवः प्रियां दध्यौ दामितोऽपि तपस्यया । लज्जया धारितः क्षुद्रः स्मरत्येव मरुस्थलीम् ॥ १३ ॥ द्युगते भवदत्तेऽथ भावदेव' प्रियामगात् । भग्नालानः करी विन्ध्याटवीमेवाभिधावति ॥ १४ ॥ अथ श्लथगुणग्रामः सुग्रामग्राम-सीमनि । चैत्यसमेतयेत्युक्तः स शमी कान्तया तया ॥ १५ ॥ मूढाशय ! नवामूढामिव मां मनुषे हृदि । जराजर्जरितां पश्य संसारस्य कुसा-रताम् ॥ १६ ॥ अस्मिन् पवित्रवस्तूनामपावित्र्यनिबन्धने । देहे जरापरायत्ते विमुह्यस्यधुना मुधा ॥१७॥ विषं मामभृतं दीक्षामन्यथा मा स्म मन्यथाः । तद् व्याघुट्य झटित्येव गुरु व्रज कुरु व्रतम् ॥ १८ ॥ इति प्रबोधितः प्रीतो नागिलाया गिरा चिरात् । साधु साध्विति तां स्तुत्वा साधुः सूरिं रयादयात् ॥ १९ ॥ आलोच्य तद् गुरोरग्रे तदुक्तं स व्रतं व्यधात् । येनाजनिष्ट सौधर्मे प्रभातिभासुरः सुर ॥२०॥ क्षेत्रे महा-

कृताञ्जलिः क्ष्मापतिमित्युवाच । ममाज्ञा परेषामपि तावकीना तात ! प्रमाणं बत किं पुनर्मे ? ॥ ५१ ॥ राजापि कोपारुणलोचनस्तं जगाद पापिन् ! परतो व्रजाशु । रे दर्शयस्यात्ममुखं स्वमातृर्दग्ध्वा त्वमग्नौ पतितोऽसि किं न ? ॥ ५२ ॥ अथाभयः प्राह पतङ्गमृत्युर्युक्तः श्रुतार्हद्वचनस्य मे न । तात ! प्रसादाद् भवतो ग्रहीष्ये व्रतं तु दिष्ट्या भगवत्पदान्ते ॥ ५३ ॥ नृपोऽप्यनाकर्णितकेन तूर्णं पुरं गतोऽन्तःपुरमत्ततं तत् । जीर्णेभशालां ज्वलितां च दृष्ट्वा विमृश्यकारिण्यभये जहर्ष ॥ ५४ ॥ ततोऽभये यत् 'परतो व्रजे' ति कोपात् तदाभाष्यत तद् विमृश्य । तैरेव पादैः प्रभुपर्वदि क्ष्मापतिः सुतं सान्त्वयितुं जगाम ॥ ५५ ॥ तत्रैव तं दीक्षितमालुलोके श्रीवीरनाथस्य पुरो निषण्णम् । विषण्णमेनं त्वभयो मुनीन्दुः प्राबोधयद् बोधयितव्यमेवम् ॥ ५६ ॥ तदात्मसंधावचनं विचिन्त्य राजन् ! विषादं हृदि मा दधीथाः । मया गृहीतं भगवत्पदान्ते व्रतं भवानप्यनुमोदतां तत् ॥ ५७ ॥ श्रुत्वेति राजा प्रणिपत्य नाथं मुनीनथान्यानभयं च भक्त्या । तं क्षामयित्वाऽश्रुमुखः स्वनिन्दापरः कथंचित् पुरमाजगाम ॥५८॥ श्रीवीरपादमूले तप्त्वा चिरमायुषोऽन्तमधिगम्य । अभयकुमारमुनीन्दुर्गतिमूहेऽनुत्तरा क्रमतः ॥५९॥

॥ इत्यभयकुमारकथायां पारिणामिकीबुद्धिनिबन्धनं चतुर्थः प्रकाशः ॥

अथ जम्बूस्वामिसत्त्वमहिमानमनुमोदयन्नाह—

नवनवइकणयकोडी चइऊणं तह य अट्ठ रमणीउ । गहिऊण संजमं जंबूसामिणा साहिअं कज्जं ॥ ४९ ॥

[ नवनवतिकनककोटीस्त्यक्त्वा तथा चाष्ट रमणीः । गृहीत्वा संयमं जम्बूस्वामिना साधितं कार्यम् ॥ ]

सुगमैवेयम्, परं 'साहिअं कज्जं' साधितं सिद्धिमानीतं कार्यं कृत्यं केवलज्ञानावाप्तिमुक्तिप्राप्तिरूपमिति संक्षेपार्थः । व्यासार्थस्तु कथानकादवसेयः । तच्चेदम् ;—

प्रयाति। विभावरीप्रणयश्च सैष विभावरीयानरुषोऽभ्युदेति ॥ ३६ ॥ हतान्धकारेभघटासशोणमायान्तमालोक्य हरिं पुरस्तात्। तारामृगीभिः सममिन्दुकृष्णसारः प्रतीचीं विधुरः प्रयाति ॥ ३७ ॥ ध्वान्तादिदं संप्रति गर्भवासादिवाविरासाऽखिलमेव विश्वम्। तेनार्कतेजोऽरुणधर्मणोऽस्य कर्णातिथिः कांस्यरवः क्रियेत ॥ ३८ ॥ दिशोऽन्धकारेण मिलन्ति नीलीरागा मृगाङ्केण सम हसन्ति। ततोऽनुरज्यन्ति दिवाकरेण धिक् चञ्चलत्वं चपलेक्षणानाम् ॥ ३९ ॥ श्रुत्वेति राजा रमणीविरक्तो विसृज्य देवीं स्वनिकेतनाय। आहूय चामात्यमथाभयाख्यमित्यादिदेशाभिनिवेशभीमः ॥ ४० ॥ ज्ञातं मयाऽन्तःपुरमद्य साक्षाद्रे दुराचारमशेषमेतत्। प्रज्वाल्यतां तद् द्रुतमेव मा भूरनीदृशस्त्वं किल मातृमोहात् ॥ ४१ ॥ आदिश्य तत्राभयमित्यभीक्ष्णमभीस्तदा क्रोधवशाद् भवस्य। नन्तुं जिनेन्द्राय जगाम राजा विराजमानोद्धतराजलक्ष्म्या ॥ ४२ ॥ अथ स्वभावादभयो विमृश्यकारीति दध्यौ सभयः स्वताते। सतीषु धुर्या मम मातरोऽमू रक्ष्यास्तदा स्यामहमेकतातः ॥ ४३ ॥ इद त्वसभाव्यतमं विकल्प्य तातेन दिष्ट किमह करोमि ?। कोपो दि कोऽपीह महीपतीनां पुरो नदीपूर इवाविषह्यः ॥ ४४ ॥ तथाप्युपाधि परिकल्प्य कालक्षेपो मया क्षेमविधौ विधेयः। प्रभोरविद्याऽन्तमुपैति कालक्षेपाद् यदि क्रोधभरः प्रशान्तिम् ॥४५॥ ध्यात्वेति धीमानभयस्तदीयाभ्यर्णे सुजीर्णेभकुटीमधाक्षीत्। चकार चोच्चैर्नृपतेर्निदेशाद् ददाह शुद्धान्त इति प्रघोषम् ॥ ४६ ॥

इतश्च धीरं नृपतिस्तदानीं मानी समानीय करावपृच्छत्। किमेकपत्नी किमनेकपत्नी स्वामिन् ! ममावेदय चेल्लणेति ? ॥ ४७ ॥ स्वामी जगौ श्रेणिक ! तावकीना सत्यः समस्ता अपि धर्मपत्न्यः। जगाद शीते निशि चेल्लणा तु स्मृत्वा मुनिं तं 'भविता कथ सः ?' ॥ ४८ ॥ श्रुत्वेति सद्यः प्रसृतानुतापदाहज्वरो डामरितान्तरात्मा। श्रीवीरनाथ प्रणिपत्य राजधानीं प्रति क्षोणीपतिर्दधावे ॥ ४९ ॥ प्रदीपनं तत्र विधाय वेगादभ्यागतं देशनसद्मनोऽग्रे। जगाद राजाऽभयमादरेण त्वया निदेशः किमनुष्ठितो मे ? ॥ ५० ॥ भयात्तकम्पस्त्वभयः प्रणम्य

इतस्तदानीं हिमसंनिपाते संध्याभ्रकन्थापिहितोऽपि सद्यः । और्वाग्नितापे विधृतोऽपि धात्रा दिनायुषोऽन्तेऽस्तमियाय भानुः ॥ २१ ॥ अस्तं गते भास्वति भर्तरीव दिक् पश्चिमेयं विधवेव नारी । विलापिनी वार्धिजलेषु सन्ध्यारागं तदा घट्टमिवास्यति स्म ॥ २२ ॥ तारामयोदारशिखामणीकैस्तमोमयैः श्यामलदंदशूकैः । दष्टं जगज्जीवयति स्म वेगादगादुपेत्य स्वयमोषधीशः ॥ २३ ॥ दिग्योषितामानन-कालिमा यः स स्वैरिणीनामगमद् मुखेषु । तदाननौज्ज्वल्यमगादमूषां मुखेषु शीतत्विषि जृम्भमाणे ॥ २४ ॥ रोदःपुटीयं कलशी तदन्त-र्ज्योत्स्ना समन्तादपि तक्रपूरः । तत्राश्रयन् बुद्बुदतामुडूनि चन्द्रोऽप्यधान्म्रक्षणपिण्डशोभाम् ॥ २५ ॥ अत्रान्तरे निर्मितसर्वरागकृत्यः कृती श्रेणिकभूमिपालः । देव्या समं चेल्लणयाऽध्युवास विलासवेश्मागरुधूपधूम्रम् ॥ २६ ॥ एकैकबाहौ विहितोपधानावन्योन्यदोःश्लिष्टतनू रतान्ते । चूलीतले पट्टदुकूलक्लृप्तावगुण्ठनावस्वपितामुभौ तौ ॥ २७ ॥ निद्राश्लथाश्लेषतयाथ देव्या बभूव हस्तो बहिरुत्तरीयात् । दूनश्च शीतेन स कोमलाङ्गोऽलिः कण्टकेनेव सुदुःसहेन ॥ २८ ॥ ततः प्रबुद्धा सहसैव देवी शीतार्त्तितः सीत्कृतिमादधाना । करेण तेनाम्बुजसंनिभेन नरेन्द्र-वक्षःश्रियमर्चति स्म ॥ २९ ॥ निरुत्तरीयं तमृषिं तदानीं स्मृत्वा च सोवाच कृपालुरेतत् । शीतेऽतिघोरे पततीदृशे हा महानुभावो भविता कथं सः ? ॥ ३० ॥ उक्त्वेति सेयं सरलस्वभावा निद्रामथावाप तथैव देवी । प्रायेण निद्रा सुलभैव तेषां येषां विकल्पा हृदये न केऽपि ॥३१॥ सीत्कारमात्रेण तदा च तस्या नृपोऽल्पनिद्रः सहसा प्रबुद्धः । तद्वाक्यमाकर्ण्य तथास्वरूपं प्ररूपयामास विकल्पमेवम् ॥ ३२ ॥ रिरंसितो निश्चितमस्ति कश्चिदन्यः प्रियोऽस्या हृदि भावलग्नः । शीतार्त्तिसंभावनयाऽयमित्थं संकेतभूमावनुशोचतीयम् ॥ ३३ ॥ ताम्यत्तितिक्षावशगो निशां तां स गोपतिर्जाग्रदथो निनाय । सचेतनो हि प्रियजामिरुच्चैरनीर्ष्यकः स्याद् न कदाचिदेव ॥ ३४ ॥ अत्रान्तरे मङ्गलतूर्यनादादनन्तरं मङ्गलपाठकास्तम् । प्राबोधयन् पञ्चमरागमुच्चैः प्रपञ्चयन्तः श्रुतिशुक्तिपेयम् ॥ ३५ ॥ विभावरीयं नृपते ! विभाता विभावरीशोऽस्तमय

कम् ॥ १०६ ॥ उपलक्ष्य स तैर्भक्त्या ववन्दे सोऽवदच्च तान् । किमेषा जीविका पापहेतुर्युष्माभिराहता ? ॥ १०७ ॥ तेऽवोचन् वञ्चयित्वाऽस्मान् पलायिष्टा यदा प्रभो ! । न तदा दर्शयामः स्मात्मानं भूमिभुजो ह्रिया ॥ १०८ ॥ तवैवान्वेषणे लग्ना भ्रमन्तः सागराम्बराम् । चौर्यवृत्त्यैव जीवामः किमन्यद् निःस्वशस्त्रिणाम ? ॥ १०९ ॥ मुनिरप्यभ्यधाद् भद्राः ! कष्टमापतितं यदि । धर्मानुबन्धि तत्कार्यं सफलं लोकयोर्द्वयोः ॥ ११० ॥ केनापि पुण्ययोगेन मानुष्यकमवाप्यते । प्राप्तस्य तस्य च फलं धर्मः स्वर्गापवर्गदः ॥ १११ ॥ दया जीवेषु सत्योक्तिरस्तेयं ब्रह्मचारिता । आकिञ्चन्यं च धर्मोऽयमार्हतोऽभिमतोऽस्तु वः ॥ ११२ ॥ स्वामिभक्ताः स्थ हे भद्राः ! राजेव स्वाम्यहं च वः । तन्ममैवैनमध्वानं प्रपद्यध्वं समाहिताः ॥ ११३ ॥ तेऽप्यूचुस्त्वं पुरः स्वामी सांप्रतं गुरुरप्यसि । त्वया ज्ञापितधर्माः स्मो दीक्षयाऽनुगृहाण नः ॥ ११४ ॥ इत्यार्द्रककुमारस्तान् प्रव्राज्य सहितश्च तैः । वन्दितुं श्रीमहावीरमथ राजगृहं ययौ ॥ ११५ ॥ तद्बाह्योपवने हस्तितापसाः सन्ति भूरिशः । ते हस्तिमांसमश्नन्तो दिवसानत्यवाहयन् ॥ ११६ ॥ ऊचुस्ते चेति हन्तव्यो वरमेको मतङ्गजः । यस्यैकस्यापि मांसेन भूयान् कालोऽतिवाह्यते ॥ ११७ ॥ एकेन्द्रियस्य धान्यस्य आयन्ते पञ्चभिः कणैः । पञ्चेन्द्रियत्वं तत्तृप्तिर्भूरिपञ्चेन्द्रियव्ययात् ॥ ११८ ॥ एवं च ते दयाभासधर्मनिष्ठास्तपस्विनः । करिणं मारणायैकं बबन्धुस्तरुणा सह ॥ ११९ ॥ सभारशृङ्खलाबद्धो यत्र चासीद् मतङ्गजः । तेनार्द्रकिः पथा प्राप महर्षिः करुणार्द्रधीः ॥ १२० ॥ महर्षिदर्शनात् तस्य वन्दनोत्सुकचेतसः । अयस्पाशा व्यशीर्यन्त कर्मपाशा इवाभितः ॥ १२१ ॥ निरर्गलः करी सोऽथ वन्दितुं तं महामुनिम् । अभ्यसार्षीज्जनस्तूचे मुनिरेष हतो हतः ॥ १२२ ॥ पलायांचक्रिरे लोका मुनिस्तस्थौ तथैव सः । इतोऽप्यवनमत्कुम्भस्थलः प्रणमति स्म तम् ॥ १२३ ॥ स हस्ती पुनरुत्थाय भक्तिमन्थरया दृशा । पश्यन् महर्षिं प्राविक्षदरण्यानीमनाकुलः ॥ १२४ ॥ तत्प्रभावाद्भुतं वीक्ष्य प्रणतास्तापसाश्च ते । मुनिना प्रत्यबोध्यन्त जीवतत्त्वोपदेशतः ॥ १२५ ॥ तत्र श्रेणिकराजोऽपि

स्त्रीघातपातकम् ॥ ८७ ॥ राज्ञा महाजनेनान्यैरथोद्वाहाय सोऽर्थितः । तां स्मरन् दैवतीं वाचं श्रीमतीं परिणीतवान् ॥ ८८ ॥ भुञ्जानस्या- ६
क० । निशं भोगान् श्रीमत्या सह तस्य तु । गार्हस्थ्याकीर्तनं सूनुरुत्पेदे क्रमयोगतः ॥ ८९ ॥ वर्धमानः क्रमेणाथ क्षीरकण्ठत्वमुत्सृजन् । स वक्तु-
मुल्लसज्जिह्वो राजकीर इवाभवत् ॥ ९० ॥ पुत्रे तावति स प्रोचे श्रीमतीं मतिमद्वरः । अतः परं सहायस्ते पुत्रोऽस्तु प्रव्रजाम्यहम् ॥ ९१ ॥
८॥ श्रीमती धीमती तत्रान्तरे ज्ञापयितुं सुतम् । सतूलपूजिकां तर्कुमादाय समुपाविशत् ॥ ९२ ॥ प्रारेभे कर्तनमियं पप्रच्छ च स
बालकः । मातः! किमेतदारब्धं कर्म कारुजनोचितम् ? ॥ ९३ ॥ साऽब्रवीज्जात ! ते तातः प्रव्रज्यार्थं गमिष्यति । गतेऽस्मिन् पति-
मुक्तायाः शरणं तर्कुरेव मे ॥ ९४ ॥ बालकोऽपि जगादेवमक्षरैर्लल्लमन्मनैः । बद्ध्वाऽहं धारयिष्यामि कथं यास्यति मे पिता ? ॥
॥ ९५ ॥ इत्युक्त्वा तर्कुसूत्रेण लालयेवोर्णनाभकः । अवेष्टयत् पितुः पादौ स मुग्धमधुराननः ॥ ९६ ॥ जगादाम्बां च मा भैषीः
स्वस्था भव मया यतः । बद्धपादः करीवासौ प्रयातु कथमातुरः ? ॥ ९७ ॥ श्रीमतीपतिरप्येवमचिन्तयदहो शिशोः । कोऽपि स्नेहानुबन्धोऽयं
मन्मनःपक्षिपाश्यभूत् ॥ ९८ ॥ मत्पदोस्तत्कृताः सन्ति यावन्तः सूत्रवेष्टकाः । तावन्त्यब्दानि धास्यामि पुत्रप्रेम्णा गृहस्थताम् ॥९९॥ पादयो-
स्तन्तुबन्धाश्च गणिता द्वादशाभवन् । गार्हस्थ्ये द्वादशाब्दानि ततः सोऽप्यत्यवाहयत् ॥ १०० ॥ संधावधौ च संपूर्णे वैराग्येणोर-
रीकृतः । यामिन्याः पश्चिमे यामे स धीमानित्यचिन्तयत् ॥ १०१ ॥ भवकूपाद् विनिर्गन्तुं व्रतमालम्बरज्जुवत् । मया प्राप्तं च मुक्तं
च मग्नस्तत्रास्म्यहं पुनः ॥ १०२ ॥ मनसैव व्रतं भग्नं प्राग्जन्मनि तथाप्यहम् । अनार्यत्वं प्रपन्नोऽस्मि का गतिः स्यादतः परम् ? ॥१०३॥
भवत्विदानीमप्यात्तपरिव्रज्यस्तपोऽग्निना । सात्तात् प्रक्षालयामि स्वं मलिनीभूतहेमवत् ॥ १०४ ॥ प्रातश्च श्रीमतीं पत्नीं स संभाष्यानुमान्य
च । यतिलिङ्गमुपादाय निर्ममो निर्ययौ गृहात् ॥ १०५ ॥ सोऽभि राजगृहं गच्छन्नन्तराले ददर्श तत् । चौर्यवृत्तिपर स्वस्य सामन्तशतपञ्च-

न्विता । श्रीमती पतिरमणक्रीडया रन्तुमाययौ ॥ ६८ ॥ भर्तारं वृणुतेत्यूचुस्तत्र सर्वाश्च बालिकाः । कयापि कोऽपि सर्वाभिर्वराः स्वरुचि वव्रिरे ॥ ६९ ॥ श्रीमत्युवाच सख्योऽसौ वृतो भट्टारको मया । ततः साधु वृतं साधु वृतमित्याह देवता ॥ ७० ॥ रत्नवृष्टिं च तन्वाना देवता गर्जितं व्यधात् । तद्भीताऽलगीयत मुनेः श्रीमती तस्य पादयोः ॥ ७१ ॥ उपसर्गोऽनुकूलोऽयं मद्व्रतापथ्यमत्र धिक् । इति ध्यात्वा-ऽन्यतः सोऽगादनगारशिरोमणिः ॥ ७२ ॥ आदित्सु रत्नवृष्टिं तां राजा देव्या न्यवार्यत । अस्यै वरणके दत्तं द्रव्यमेतद् ब्रुवाणया ॥ ७३ ॥ ततश्च तद् धनं सर्वमाददे श्रीमतीपिता । सर्वे स्वं स्वं ययुः स्थानं तदा सायमिवाण्डजाः ॥ ७४ ॥ अथोद्वोढुमढौकन्त श्रीमतीं बहवो वराः । श्रीमती त्वाह पितरं महर्षिः स वृतो मया ॥ ७५ ॥ मम तद्वरणेऽदायि द्रव्यं तद्गृह्यदेवता । तद् द्रव्यमाददानेन त्वयाऽप्यनुमतं हि तत् ॥ ७६ ॥ तत् तस्मै कल्पयित्वा मां नान्यस्मै दातुमर्हसि । सकृत् कन्याः प्रदीयन्ते इति तात ! न किं श्रुतम् ? ॥ ७७ ॥ श्रेष्ठ्यूचे स कथं प्राप्यो न ह्येकत्रावतिष्ठते । अलिः पुष्पमिव स्थानमातिष्ठति नवं धवः ॥ ७८ ॥ स किमायास्यति नवा प्राप्तोऽपि ज्ञायते कथम् ? । किं नाम तस्याभिज्ञानं कति नायान्ति भिक्षवः ? ॥ ७९ ॥ श्रीमत्यूचे मया तात ! तदा गर्जितभीतया । दृष्टं लक्ष्मास्ति तत्पादे लग्नयैव विलग्नया ॥ ८० ॥ तस्मादतः परं तात ! तथा कुरु यथाऽखिलान् । यातायातपरान् साधून् पश्यामि प्रतिवासरम् ॥ ८१ ॥ तातादिष्टा स्वयं तेभ्यः सैषा भिक्षां ददत्यथ । दिदृक्षमाणा तल्लक्ष्मांह्री मुनीनामवन्दत ॥ ८२ ॥ द्वादशाब्दे च दिङ्मूढः स महामुनिरन्यदा । उपालक्षि तया तत्रागतस्तल्लक्ष्मवीक्षणात् ॥ ८३ ॥ तमृषिं श्रीमती प्राह तत्र देवकुले तदा । त्वं वृतोऽसि मया नाथ ! त्वमेव हि वरो मम ॥ ८४ ॥ तदा गतोऽसि मां मुग्धां निर्धूय स्वेदबिन्दुवत् । क्व यास्यसि मया प्राप्तस्त्वमृणं धारयन्निव ॥ ८५ ॥ दृष्टनष्टो यदाऽभूस्त्वं तदाद्यपि हि नाथ ! मे । परासोरिव कालोऽगात् तत् प्रसीद भजस्व माम् ॥ ८६ ॥ एवं स्थितेऽपि नैष्ठुर्याद् यदि मामवमन्यसे । भूत्वा तदग्निसाद् दास्ये तव

द्विपः ॥ ४८ ॥ आसने शयने याने भोजनेऽन्यक्रियास्वपि । अभयालंकृतामाशां दृशामग्रे चकार सः ॥ ४९ ॥ कीदृग् मगधदेशोऽस्ति
कीदृग् राजगृहं पुरम् । कस्कोऽध्वा तत्र गमनेऽपृच्छद्देवं च पार्श्वगान् ॥ ५० ॥ दध्यावार्द्रकराजोऽपि कुमारो मम निश्चितम् । यास्य-
त्यकथयित्वैव कदाप्यभयसंनिधौ ॥ ५१ ॥ ततश्च पञ्च सामन्तशतान्यादिशदार्द्रकः । युष्माभिर्यत्कुमारोऽयं रक्ष्यो देशान्तरं व्रजन्
॥ ५२ ॥ देहच्छायेव तत्पार्श्वं सामन्तास्तेऽत्यजन् नहि । बन्धे धृतमिवात्मानमार्द्रकेयोऽप्यमन्यत ॥ ५३ ॥ अथैष हृदये छन्नाऽभयो-
पगमनं सुधीः । प्रत्यहं कर्तुमारेभे वाह्याल्यां वाहवाहनम् ॥ ५४ ॥ अश्वारूढाश्च पार्श्वेऽस्थुः सामन्तास्तेऽङ्गरक्षकाः । कुमारो वाह-
यन्नश्वं किञ्चिद् गत्वा न्यवर्तत ॥ ५५ ॥ एवं च वाहयन् वाहं स ययावधिकाधिकम् । पुनः पुनश्च व्याघुट्यायर्यौ ते च विश-
श्वसुः ॥ ५६ ॥ आर्द्रकसूनुरन्येद्युः पुंभिः प्रत्यायितैर्निजैः । याने सज्जीकृते रत्नपूर्णे तां प्रतिमां न्यधात् ॥ ५७ ॥ तदैवं वाहयन्नश्वमदृश्यी-
भूय पूर्ववत् । तत्र यानं समारुह्य स ययावार्यनीवृतम् ॥ ५८ ॥ यानादुत्तीर्य संप्रेष्य प्रतिमामभयाय ताम् । सप्तक्षेत्र्यां धनान्युप्त्वा यति-
लिङ्गमुपाददे ॥ ५९ ॥ उच्चारयितुमारेभे यावत् सामायिकं च सः । आकाशस्थितया तावदूचे देवतयोच्चकैः ॥ ६० ॥ यद्यपि त्वं महास-
त्त्वोऽग्रहीर्दीक्षां तथापि मा । कर्मभोगफलं तेऽद्याप्यास्ते गमय तेन तत् ॥ ६१ ॥ भुक्त्वा भोगफलं कर्माददीथाः समये व्रतम् । अवश्यमेव
हि भोक्तव्यं भोग्यं तीर्थकृतामपि ॥ ६२ ॥ महात्मंस्तद् व्रतेनालं यदात्तमपि हास्यते । स्नानेन तेन किं हस्तिस्नानायेत पुरेव यत् ? ॥ ६३ ॥
अथार्द्रककुमारोऽपि स्वमूरीकृत्य पौरुषम् । दैवीं वाचमनादृत्य प्रव्रज्यां स्वयमाददे ॥ ६४ ॥ प्रत्येकबुद्धः स मुनिः पालयन् निशितं व्रतम् ।
विहरन्नेकदा प्राप वसन्तपुरपत्तनम् ॥ ६५ ॥ बाह्यदेवकुले क्वापि तस्थौ प्रतिमया च सः । सर्वाधिपरिहारेण समाधिमधिजग्मिवान् ॥ ६६ ॥

इतोऽत्र धनदत्तस्य सुता धनपतीभवा । श्रीमतीत्यभवद् बन्धुमतीजीवो दिवश्च्युतः ॥ ६७ ॥ तत्र देवकुलेऽन्येद्युः पौरबालाभिर-

॥२६॥ एषाऽऽर्द्रककुमारस्य पुरः पेटोपढौक्यताम् । मदीयं तस्य मद्बन्धोर्वाच्यमेतच्च वाचिकम् ॥३०॥ रहस्येकाकिना भूत्वोन्मुद्र्य पेटामिमां स्वयम् । तदन्तर्वस्तु संप्रेक्ष्यं दर्शनीयं न कस्यचित् ॥ ३१ ॥ इति कर्तव्यमित्युक्त्वा स पुमान् स्वपुरं ययौ । उपायनान्यार्पयच्च स्वस्वामि-स्वामिपुत्रयोः ॥ ३२ ॥ तच्चार्द्रककुमारायाचख्यावभयवाचिकम् । ततो रहसि स स्थित्वा तां पेटामुदघाटयत् ॥ ३३ ॥ ददर्श च तदन्तस्थ तमस्युद्द्योतकारकम् । बिम्बं तदादिनाथस्य योगीव ज्योतिरान्तरम् ॥ ३४ ॥ दध्यौ च किमिद किञ्चिदङ्गाभरणमुत्तमम् । मूर्ध्नि कण्ठे किमारोप्यं हृदयेऽन्यत्र वा क्वचित् ? ॥ ३५ ॥ दृष्टपूर्वमिवेदं मे क्वापीति प्रतिभासते । न तु स्मृतिपथ याति मन्दाभ्यासस्य शास्त्रवत् ॥ ३६ ॥ इत्यार्द्रककुमारस्य चिरं चिन्तयतः सतः । मूर्च्छा जातिस्मृतिज्ञानजनन्यजनि भूयसी ॥ ३७ ॥ उत्पन्नजातिस्मरणः स्वयमेवात्तचेतनः । स एवं चिन्तयामास पूर्वजन्मकथां निजाम् ॥ ३८ ॥ इतो भवात् तृतीयस्मिन् भवे मगधनीवृति । कुटुम्ब्यासं वसन्ताख्ये पुरे सामायिकाभिधः ॥ ३६ ॥ भार्या बन्धुमती मेऽभूदश्रौषं च तया सह । यथावदार्हतं धर्मं सुस्थिताचार्यसंनिधौ ॥ ४० ॥ आदिषि च व्रतं बुद्धः कदाचन विलोक्य ताम् । अन्वराङ्क्षमिदं मत्वा सा कृत्वाऽनशनं मृता ॥ ४१ ॥ तथामृतां च तां श्रुत्वा मयाप्येतद् विचिन्तितम् । महानुभावा मृता सा व्रतभङ्गभयात् खलु ॥ ४२ ॥ भग्नव्रतः पुनरहं तदलं जीवितेन मे । कृत्वेत्यनशनमहं विपद्य त्रिदशोऽभवम् ॥ ४३ ॥ ततश्च्युत्वाऽहमुत्पन्नोऽस्म्यनार्यो धर्मवर्जितः । प्रतिबोधयिता यो मां स बन्धुः स गुरुश्च मे ॥ ४४ ॥ तदनुज्ञाप्य पितरमननुज्ञाप्य वाप्यहम् । आर्यदेशं गमिष्यामि यत्र मेऽस्त्यभयो गुरुः ॥ ४५ ॥ इत्थं मनोरथं कुर्वन्नादिनाथार्चनापरः । आपृच्छदन्यदा तातं स यातुमभयान्तिकम् ॥ ४६ ॥ अवादीदार्द्रकेशस्तं न गन्तव्यं खलु त्वया । वत्स ! स्थानस्थितानां हि सौहृदं श्रेणिकेन नः ॥ ४७ ॥ पित्राज्ञया निषिद्धश्चोत्कण्ठितश्चाभय प्रति । अवदश्रुः कुमारोऽस्थाद् वारीबद्ध इव

क० । ॥ ९ ॥ द्रागुन्मीलितमुत् प्राहार्द्रकिर्मन्त्रिणमस्ति ते । प्रभोः कोऽपि सुतप्रष्ठस्तेन मैत्रीचिकीरहम् ॥ १० ॥ मन्त्र्यूचेऽस्ति धियां पात्रं
१६ ॥ पञ्चमन्त्रिशताधिपः । अभयो नाम तनयः श्रेणिकस्य महीपतेः ॥ ११ ॥ दाक्ष्यदाक्षिण्यनैपुण्यपुण्यपण्यकलामयम् । नाभयं निर्भयं विश्ववित्तं
वेत्सि कुमार ! किम् ? ॥ १२ ॥ आर्द्रकेन्द्रोऽपि पुत्रं स्वमभये सौहृदार्थिनम् । ऊचे सन्मार्गसंलग्नः कुलीनोऽसि ममाङ्गज ! ॥ १३ ॥ अवाप्य
पितुरादेशं स्वमनोरथसंनिभम् । जनान्तिकेन सचिवं तमुवाचार्द्रकासुतः ॥ १४ ॥ मामनापृच्छ्य मा यासीः श्रोतव्यं गच्छता त्वया ।
अभय प्रति मे स्नेहसोमसूत्रसमं वचः ॥ १५ ॥ मन्त्र्यप्येवमिति प्रोचे कुमार सुकुमारगीः । ययौ राज्ञा विसृष्टश्च वेत्रिदर्शितमाश्रयम् ॥ १६ ॥
परेद्युर्मणिमाणिक्यप्रभृति प्राभृतं नृपः । अर्पयित्वा स्वपुरुषं व्यस्राक्षीद् मन्त्रिणं च तम् ॥ १७ ॥ अथार्द्रकिः कुमारोऽपि हस्ते तस्यैव
मन्त्रिणः । प्रैषीद् विद्रुममुक्तादिवस्तून्यभयहेतवे ॥ १८ ॥ स पुमान् मन्त्रिणा सत्रा गत्वा राजगृहे पुरे । प्राभृतान्यर्पयामास श्रेणिकायाभयाय
च ॥ १९ ॥ किञ्चाभयकुमाराय मन्त्रिणोऽवाचि वाचिकम् । यदार्द्रककुमारस्ते सख्यसौभ्रात्रमिच्छति ॥ २० ॥ अथ कर्मजया बुद्ध्याऽभ-
यश्चिन्तितवानिति । विराधितव्रतत्वेन जातोऽनार्येषु स ध्रुवम् ॥ २१ ॥ नूनमासन्नभव्यः स महात्मा राजपुत्रकः । अभव्यदूरभव्यानां न
मया सख्यकामना ॥ २२ ॥ तदुपायेन केनापि कृत्वा तं परमार्हतम् । आप्तो भवामि स ह्याप्तो योऽग्रिमो धर्मवर्त्मनि ॥ २३ ॥ तस्यार्द्रककुमा-
रस्य तीर्थकृद्बिम्बदर्शनात् । उत्पद्यते यदि पुनर्जातिस्मरणमुत्तमम् ॥ २४ ॥ तत् प्राभृतच्छलेनार्हत्प्रतिमां प्रेषयाम्यहम् । चिरं तद्रत्नघटितां
महाचार्यप्रतिष्ठिताम् ॥ २५ ॥ इत्यादिनाथदेवस्याप्रतिमां प्रतिमां व्यधात् । पेटामध्ये समुद्रस्थां श्रेयःकामगवीमयम् ॥ २६ ॥ ततश्च धूपद-
हनघण्टिकादीनि तत्पुरः । मुमोच देवपूजोपकरणान्यखिलान्यपि ॥ २७ ॥ ददौ च तालकं द्वारे मुद्रयित्वाऽभयः स्वयम् । श्रेणिकोऽथा-
र्द्रकेन्द्रस्य मन्त्रिणं तं व्यसर्जयत् ॥ २८ ॥ अभयोऽपि हि तां पेटां तस्य हस्ते समार्पयत् । तं चोवाचेति सत्कृत्य वाचा स्वादुसुधामुचा

जगाद दशनज्योत्स्नापूरपूर्णासभं प्रभुः । पूर्वं जन्मन्यभूर्वत्स ! वत्सपालकबालकः ॥ १९३ ॥ नित्यदौर्गत्यनिर्विण्णः परमान्नमयं महम् । पुरे निरीक्ष्य क्षैरेयीमयाचस्तव मातरम् ॥१९४॥ अम्बा तव निरालम्बा सर्वसंपत्तिदुःखिता । रुरोद, प्रतिवेशिन्यः क्षीरादि कृपया ददुः ॥१९५॥ संस्कृत्य पायसं पात्रे परिवेश्य तवाम्बिका । बहिर्ययौ मुनिश्चागाद् मासक्षपणपारणे ॥ १९६ ॥ स्थानादुत्थाय हर्षाश्रुरोमाञ्चकवचाञ्चितः । भाजनात् पायसस्यास्मै भागमेकमदात्तदा ॥ १९७ ॥ अल्पं मासोषितस्यैतदित्यंशं व्यतरः परम् । घृतादिश्लाघ्यमध्यांय तस्मै पाश्चात्यमप्यदाः ॥ १९८ ॥ निर्निदानं मुनेर्दानं दत्तं भागैस्त्रिभिस्तदा । भागास्तेन तवेदानीं समजायन्त सान्तराः ॥ १९९ ॥ आकर्ण्यैवं शुभाकर्णिसकर्णः प्रभुदेशनाम् । उन्मीलद्विषयोद्वेगः स संवेगमुपागमत् ॥ २०० ॥ गृहभारं सुते ज्येष्ठे निवेश्य कृतपुण्यकः । श्रीवीराद् व्रतमादाय तप्त्वा सद्गतिभागभूत् ॥ २०१ ॥

॥ इत्यभयकुमारकथायां वैनयिकीबुद्धिनिबन्धनं द्वितीयः प्रकाशः ॥

इतश्चार्द्रकनामास्ति देशो मध्येपयोनिधि । तत्रार्द्रकपुरस्वामी भूमानार्द्रक इत्यभूत् ॥ १ ॥ अजनिष्टार्द्रकादेवीकुक्षिकासारकैरवम् । तस्यार्द्रककुमाराख्यः कुमारो मारसंनिभः ॥ २ ॥ तस्य चार्द्रकराजस्य बभूव श्रेणिकस्य च । पारम्पर्यगता प्रीतिश्चन्द्रकैरवयोरिव ॥ ३ ॥ अन्यदा श्रेणिकः प्रैषीद् निजामात्यमुपार्द्रकम् । समर्प्य प्राभृतं प्राज्यं सौहृदद्रुमदोहदम् ॥ ४ ॥ स्वप्रभुप्राभृतं निम्बकम्बलप्रभृति द्रुतम् । मन्त्री गत्वोपनिन्ये तदाददे चार्द्रको नृपः ॥ ५ ॥ महत्या प्रतिपत्त्या तं संभाव्यार्द्रकभूविभुः । पप्रच्छ कच्चित् कुशलं मद्बन्धोर्मगधेशितुः ? ॥ ६ ॥ स्वस्वामिकुशलोदन्तैर्मन्त्री पीयूषपेशलैः । तद्गात्रयष्टिमतनोज्जातरोमाञ्चपल्लवाम् ॥ ७ ॥ अपृच्छदार्द्रकिस्तात ! को नाम मगधाधिपः ? । तव येनेदृशी प्रीतिर्मधोरिव मनोभुवा ? ॥ ८ ॥ राजोचे श्रेणिको नाम राजास्ति मगधेश्वरः । पारम्पर्यागता मैत्री तत्कुले मत्कुलेऽपि च

क०। ॥ १७२ ॥ द्वारेणायान्तमेकेन निर्यान्तमपरेण च । कृतपुण्याभयौ दक्षौ जनं वीक्षांबभूवतुः ॥१७३॥ लीलावचालभूतालवालालम्बितपाणयः।
१५॥ पूर्वपत्न्यः समाजग्मुः कृतपुण्यस्य ता अपि ॥ १७४॥ पत्युः सदृक्तं तं यक्षं दृष्ट्वा स्मृत्वा च सास्रवः। सवेपथु सरोमाञ्चमवोचन्त स्मरातुराः
॥ १७५॥ भर्तृकर्तृकमस्माकं तच्चेत् स्यात्किलाकिञ्चितम् । मोदकांस्तत्परोलक्षान् दास्यामो यक्ष ! ते मुदा ॥ १७६ ॥ दिक्षु चक्षुः क्षिपन्ती-
भिस्ताभिर्दृष्टश्च वल्लभः । समधत्त च पञ्चापि समं पञ्चशरः शरान् ॥१७७॥ तात तातेति जल्पन्तः प्रमोदात् फुल्ललोचनाः । यक्षाङ्कपालीप-
ल्यङ्कमभ्यूपुस्तनयास्तदा ॥ १७८ ॥ कृतपुण्यस्ततः प्राह दिष्ट्यैता मम वल्लभाः । इमे रम्या. कुलव्योमभानवः सूनवश्च मे ॥ १७९ ॥ देशत्यागे
समादिश्य स्थविरां स्थविराशयः । अभयस्तास्तदायत्ता रमा रामाश्च निर्ममे ॥ १८० ॥ आगादनङ्गसेनापि प्रियसब्रह्मचारिणम् । यक्षं वीक्ष्य
स्मरोन्मादगद्गदं निजगाद च ॥ १८१ ॥ शुभानां शकुनस्वप्नप्रभृतीनामिदं प्रभो !। त्वदीक्षणमभूत् पुण्यं फलमस्तु तदीक्षणम् ॥ १८२ ॥
दृष्टस्तयाऽष्टमीचन्द्रभालयाऽथ निभालितः । अतिप्रगल्भमभ्येत्य प्रीत्या चैवमभाषत ॥ १८३ ॥ जीवितेश ! बहुक्लेशं देशे देशे पुरे पुरे ।
मया गवेषितः किन्तु नाप्तोऽसि स्वल्पभाग्यया ॥ १८४ ॥ परं पुरुषमाश्रित्य योऽभवद् न कदाचन । वेणीदण्डस्य बद्धस्य मोक्षः सोऽस्तु
त्वयाऽधुना ॥ १८५ ॥ अभयानुज्ञया सोऽथ प्रेयसीः प्रेमभूयसीः । ताः समादाय पञ्चापि निजं मन्दिरमाययौ ॥ १८६ ॥ सप्तार्चिरिव रोचि-
ष्णुर्लघु प्राज्यद्वियोगतः । प्रियाः कुर्वन् प्रियाः सप्त दीप्यते स्म स तेजसा ॥ १८७ ॥ मोहान्धतमसध्वंसी वैभारगिरिमूर्धनि । उदेति स्म
तदा वीरजिनेश्वरदिनेश्वरः ॥ १८८ ॥ आगाद् गुणमणिश्रेणिक्षोणिः श्रेणिकभूपतिः । अभयः कृतपुण्यश्च तत्र वन्दारव सुराः ॥ १८९ ॥
सर्वोपलम्भसिद्धार्थः सिद्धार्थकुलकौस्तुभः । स दम्भशैलदम्भोलिर्देशनां तत्र निर्ममे ॥१९०॥ अथावसरमासाद्य विध्वस्तवृजिनं जिनम् । विज्ञो
विज्ञपयामास कृतपुण्यः कृताञ्जलिः ॥ १९१ ॥ जगन्नाथ ! कथंकारमुपकारपरोऽपि सन् । निर्मन्तुरपि संप्रापं संपदो विपदन्तराः ?॥१९२॥

योर्नद्धस्तन्तुना जलजन्तुना ॥ १५४ ॥ गजवर्गोऽथ संभ्रान्तः समाचख्यौ क्षितीशितुः । निशातबुद्धिवर्धिष्णोरयं चाभयमन्त्रिणः ॥ १५५ ॥ ततोऽभयकुमारेण भाण्डागारे गवेषितः । जलकान्तः परं नासौ नानारत्नौघनिह्नुतः ॥ १५६ ॥ मा भूदन्याहितं हस्तिरत्नस्येति कृतत्वरः । पटहेन महीनाथः सर्वत्रैवमघोषयत् ॥ १५७ ॥ जलकान्तमणिं वेगाद् यः कश्चिदुपढौकयेत् । परिणेता सुतामर्धराज्योपेतां स भूपतेः ॥ १५८ ॥ स्फुटत्प्रमोदकन्देन कन्दुवित्तेन डिण्डिमः । स्पृष्टः सत्वरमागत्य जलकान्तश्च ढौकितः ॥ १५९ ॥ मणिर्विघटयाञ्चक्रे जलमूर्जस्वलप्रभः । ज्ञातमन्तुरिवानेशत् तन्तुः स्थलभयातुरः ॥ १६० ॥ रेमे स्तम्बेरमः स्वैरं कुशली नृपवेश्मनि । कन्दुवित्तस्य चित्तेऽथ स्फारः फलमनोरथः ॥ १६१ ॥ आपूपिकाय दातव्या कथं कन्या मनोरमा । इति चिन्ता महीभर्तुर्जागर्त्ति स्म पदे पदे ॥ १६२ ॥ ज्ञात्वा भूभर्तुराकूतमभयेन भयंकरैः । वचोभिस्ताडितस्तथ्यं कथयामास पौपिकः ॥ १६३ ॥ अभ्यधादभयः सत्यं स पवासपदमीदशाम् । कल्पद्रूणां सुवर्णाद्रौ दृश्यते संभवः परम् ॥ १६४ ॥ परिणिन्ये ततः कन्यां सुपुण्यः कृतपुण्यकः । प्राज्यं राज्यं च तल्लेभे भाग्यैः किं नाम दुर्घटम् ? ॥ १६५ ॥ सुमनःशालिनस्तस्य सुरभेः सुरसैर्गुणैः । सहाभयकुमारस्य प्रीतिरासीत् कलावतः ॥ १६६ ॥ सोऽभ्यधादभयं जातु सखे ! पत्नीचतुष्टयम् । ममास्तिपुत्रमत्रास्ति परं वेद्मि न मन्दिरम् ॥ १६७ ॥ अभयः प्राह चित्रं भोः ! गृहिणीर्वेत्सि नो गृहम् । ततः सर्वोऽपि वृत्तान्तस्तेन पूर्वो निवेदितः ॥ १६८ ॥ प्रासादं कारयामास द्विद्वारमभयस्ततः । द्वारमेकं प्रवेशाय निर्गमाय तथाऽपरम् ॥ १६९ ॥ यक्षस्य लेप्यप्रतिमा कृतपुण्यसमाकृतिः । तदन्तः स्थापिता को हि प्रज्ञापारंगमः सताम् ? ॥ १७० ॥ यो यक्षस्य नमस्यायै न मनुष्यो यतिष्यते । सकुटुम्बस्य तस्याधिं सव्याधिं स निधास्यति ॥ १७१ ॥ इत्युक्तिमभयोपज्ञां परिज्ञाय पुरीजनः । तमुपास्ते समस्तोऽपि निष्पर्यायसपर्यया

---

१ विभक्त्यन्तप्रतिरूपकाव्ययत्वेन अस्ति = विद्यन्ते पुत्रा यस्य पत्नीचतुष्टयस्येत्यास्तिपुत्रमिति समासः ।

क०। टिस्थपुटानना। ममादेशविपर्यासो हलाः! कोऽप्येष वो नवः ॥ १३५ ॥ माऽऽदत्तां वित्तमस्माकं भूपाल इति भीतया। कश्चिदप्ययमानीतो मया संतानहेतवे ॥ १३६ ॥ इदानीं सूनवोऽभूवल्लँक्ष्मीरक्षणयामिकाः। तत् किमेतेन निष्पीतरससारेक्षुबन्धुना? ॥ १३७ ॥
७४॥ ज्ञात्वा तदाग्रहं ताभिर्बद्धा वाससि मोदकाः। क्षिप्त्वाऽन्तर्मणयो मुक्तास्तदीयोच्छीर्षके तदा ॥ १३८ ॥ सुखसुप्तः सशय्योऽपि तत्र देवकुले निशि। अमोच्यत स चेटीभिर्दुष्टस्थविरया रयात् ॥ १३९ ॥ स एव तत्क्षणात् तत्र प्राच्याः सार्थः समाययौ। अनेदीयोऽपि नेदीयः कुरुते भवितव्यता ॥ १४० ॥ निद्राविरामे स ज्ञात्वा वृद्धाव्यापारमीदृशम्। अनुपार्जनमात्मानं यावज्जुगुप्सते मुहुः ॥ १४१ ॥ प्राच्याः सार्थः समायात इत्युपश्रुत्य तुष्टया। शुद्धये प्रहितः पत्न्या पदातिस्तावदागमत् ॥ १४२ ॥ भो भद्र! कुशलं तस्याः किं च गर्भेऽभवत् तदा। पृष्टोऽनेनेति हृष्टोऽस्मै पत्तिः पुत्रमचीकथत् ॥ १४३ ॥ मोदकांस्तानुपादाय द्रव्यानर्जनदुर्मनाः। स पश्चात्पातिभिः पादैराययौ निजमन्दिरम् ॥ १४४ ॥ अभ्युत्थानादि सा तस्मै चकारोचितमञ्जसा। संपद्यापदि वा पत्यौ समाः खलु कुलस्त्रियः ॥ १४५ ॥ सा भक्ता भर्तुरभ्यङ्गं मज्जनाय चकार च। सुतोऽध्ययनशालाया भोजनायाजगाम च ॥ १४६ ॥ एकमाकृष्य सा तस्मै ददौ शम्बलमोदकम्। स तं कवलयन्नेव जगाम च्छात्रमण्डलीम् ॥ १४७ ॥ आदत्त दन्तसंपर्काद् मणिं पाणौ स भास्वरम्। चित्रीयमाणश्छात्रेभ्यो दर्शयामास चोत्सुकः ॥ १४८ ॥ प्रत्येकं स मणिर्वस्तु किमेतदिति जल्पताम्। तेषां पाषाणसंचारं संचचार करात्करे ॥ १४९ ॥ बालः कन्दलितानन्दः पाणिनाऽऽन्दोलयन् मणिम्। रममाणः क्रमेणागादेकं कान्दविकापणम् ॥ १५० ॥ तत्र तस्य मणिः पाणेरन्तुपात्रे पपात च। तदन्तुकं तु धवलं द्वेधाभावमवाप च ॥ १५१ ॥ कन्दुवित्तस्तमालोक्य जलकान्तोऽयमित्यमुम्। निश्चित्य चेतसा धूर्तस्तमेवं बालमब्रवीत् ॥ १५२ ॥ नित्यं दास्यामि ते पूपानेतस्मादश्मनः प्रति। इति विप्लाव्य तं बालं कन्दुवित्तस्तमाददे ॥ १५३ ॥ हस्तिरत्नमथो नद्यां सिञ्चन्सेचनको वपुः। तदानीं पाद-

स्वचेतसि । कृतपुण्यकमुत्थाप्यानिनाय निजमन्दिरम् ॥ ११५ ॥ विशेषकम् ॥ स्नुषाचतुष्टयस्यापि पश्यतस्तत्र निस्त्रपा । तदीयं कण्ठमालम्ब्य रुदत्येवमवोचत ॥ ११६ ॥ हा वत्स ! बहुवात्सल्य ! विहाय निजमातरम् । एतावन्ति दिनानि त्वं क्व यातोऽसि क्व च स्थितः ? ॥ ११७ ॥ निरालम्बा धरालम्ब ! तवाम्बाऽस्मि न संशयः । त्वं पुत्र ! जातमात्रोऽपि हृतः केनापि पाप्मना ॥ ११८ ॥ नामतः श्रीनिवासोऽसि त्वद्वियोगदवानले । पतिता प्राप यं तापमसौ कस्यापि मा स्म भूत् ॥ ११९ ॥ संगमोऽद्यैव दैवज्ञैः सदैव फलशालिना । रात्रौ कल्पांह्रिपालोकस्वप्नेन च तवोदित ॥ १२० ॥ अहमासेदुषी सार्धं लेभे त्वामतिदुर्लभम् । भाग्यैरुज्जागरैर्जन्तूनभ्यागच्छति वाञ्छितम् ॥१२१॥ इदानीं तावकीनस्य ज्येष्ठबन्धोर्विपत्तित. । तव संपत्तितश्चास्मि शोकहर्षसमाकुला ॥१२२॥ बन्धुवध्वश्चतस्रोऽमूरमूश्च विपुलाः श्रिय. । एता नद्य इवाम्भोधिमगाधं त्वामुपस्थिताः ॥१२३॥ तदेतासामसामान्यतारुण्यमहिमाजुषाम् । श्रीणां स्त्रीणां च भोगेन सुभगकरणो भव ॥१२४॥ इति श्रुत्वोक्तिवैचित्र्यमेतस्याः कृतपुण्यकः । विस्फुरद्विस्मयस्मेरचेतोवृत्तिरचिन्तयत् ॥१२५॥ श्रीयोगः सुदृशां योगः स्वयंवरमिदं द्वयम् । उपस्थितमतो व्योमप्रसूनैः किं विकल्पनैः ? ॥१२६॥ ततस्तामवदद् मातर्न स्मरामि किमप्यदः । स्थविराऽसि त्वमेवेत्थमितिहासे प्रगल्भसे ॥१२७॥ मया तु मातुरादेशश्चक्रे सैष शिखामणि । सर्वकषा हि गुर्वाज्ञा दृश्यते चेदवज्ञया ॥१२८॥ यथैव ताश्चतस्रोऽपि परिणेतरि भर्तरि । अवर्तन्त तथा तस्मिन् प्रेमस्थेमवशंवदाः ॥ १२९ ॥ पुत्रा गोत्रजनक्रोडक्रीडावनकुरङ्गकाः । उदपद्यन्त चत्वारस्तासां चतसृणामपि ॥ १३० ॥ भोगैः क्षणमिव क्षीणा तस्य द्वादशवत्सरी । कालो हि सुखनिर्मग्नैर्गच्छन्नपि न लक्ष्यते ॥ १३१ ॥ स्थविरा स्वार्थसंपत्तिकृतार्थमन्यमानसा । एकान्तवश्यमेकान्ते वधूवर्गमभाषत ॥ १३२ ॥ सजाता सुतसंपत्तिरिदानीं मुच्यतामयम् । नादर सहकारेऽपि पुंसामात्तफलोत्करे ॥ १३३ ॥ अभ्यधुस्तास्त्वया दत्तः कान्तः कान्तगुणैकभूः । भुक्तश्चास्माभिरप्येष मातर्न त्यागमर्हति ॥ १३४ ॥ बभाषे स्थविरा रोपभ्रकु-

कं०।
३॥

स्मरोन्मादपरीणामं जनो जानाति पृष्ठतः ॥ ९७ ॥ अथ मानी विनिःसृत्य जगाम निजधामनि । स प्रियां च परिम्लानां वीक्षते स्म तदन्तरे ॥ ९८ ॥ स्वं तस्य पश्यतो धाम श्यामायितमुखत्विषः । धीरस्यापि पदं प्रापुर्नेत्रयोर्बाष्पबिन्दवः ॥ ९९ ॥ सापि दूरात् तमायान्तमवलोक्य विकस्वरा । विकल्पान्कल्पयामास सरोमाञ्चं सुलोचना ॥ १०० ॥ दिष्ट्याऽयं किं ममाभ्येति पाणिपीडनपण्डितः । यद्वा भाग्यपरीपाको मादृशामीदृशः कुतः ? ॥ १०१ ॥ अथ निश्चित्य प्रथमं मनसा परतो दृशा । उत्सेकेन ततोऽङ्गेन प्रत्युद्यातः पतिस्तया ॥ १०२ ॥ तस्य तेनोपचारेण विहितेन तया समम् । अमृतेनेव निर्वाणः पूर्वः परिभवानलः ॥ १०३ ॥ विनीता तेन सा रात्रौ पाठिता भोगमात्रिकाम् । गर्भरत्नं बभारान्तः प्रबोधमिव देहिनाम् ॥ १०४ ॥ स कदाचित् प्रियामूचे मदन्यो नास्ति मूढधीः । निष्फला मयि शास्त्रार्थदृष्टिर्वृष्टिरिवोषरे ॥ १०५ ॥ पितरौ यद् मयाऽगाधे क्षिप्तौ दुःखमहार्णवे । धनं निधनमानीतं पितृपर्यायसंचितम् ॥ १०६ ॥ अलमालप्य लोलाक्षि ! यत्तवोपकृतं पुनः । किमन्यत् त्वं सुधासिन्धुः कालकूटार्णवस्त्वहम् ॥ १०७ ॥ अधुना तु धुनात्येष दुष्टदौर्गत्यकुञ्जरः । च्युतो हस्तात् प्रशस्तास्ये ! यतो मे विभवाङ्कुशः ॥ १०८ ॥ कुर्वे सुवाणि ! वाणिज्यं धनं यद्यस्ति किञ्चन । इति पृष्टा प्रिया हृष्टा जगाद दयितं ततः ॥ १०९ ॥ अनल्पोऽयं समाकल्पः सुस्वाधीनं धनं हि वः । दीनाराणां सहस्रश्च गृह्यतामनुगृह्यताम् ॥ ११० ॥ तदादाय स लाभाय क्रीत्वा वस्तु यथोचितम् । प्राचीप्रस्थितमन्विष्य स्फीतार्थं सार्थमाययौ ॥ १११ ॥ तत्रानुयायिनीं पत्नीं निवर्त्य प्रीतमानसः । असौ विनिद्र एवास्ते सुप्तो देवकुले क्वचित् ॥ ११२ ॥

इतोऽस्ति तत्र वास्तव्या काचिदिभ्यकुटुम्बिनी । स्थविरा स्थेयसी तस्याः सूनुः सूनुविवर्जितः ॥ ११३ ॥ उदन्वति विपन्नोऽभूदुत्पातैः पोतभङ्गतः । मा गाद् राजकुले लक्ष्मीरतो वार्तां निगोप्य ताम् ॥ ११४ ॥ सार्थं तमेत्य सा किञ्चिच्चिन्तयित्वा

मञ्जसा ॥ ७७ ॥ अतिप्रसन्नवक्त्राब्जा सा चकोरविलोचना । जगाद दयितादेशविलसत्पुलकाङ्कुरा ॥ ७८ ॥ सखि ! कान्तस्य तस्याज्ञा मम सीमन्तखेलिनी । किमाचक्षे पुनः क्षेमं दैवे प्रातीपिके सति ? ॥ ७९ ॥ तथातिवत्सलस्तातस्तादृक् श्वश्रूः प्रियंवदा । जग्मतुर्द्वावपि दिवं धिग् धिग् मे मन्दभाग्यताम् ॥ ८० ॥ श्वशुराभ्यां श्रियोऽप्येताः प्रेषं प्रेषमशेषिताः । प्रियस्य तनयस्यार्थे धन को हि धनायति ? ॥ ८१ ॥ अस्ति पित्रा वितीर्णं मे किञ्चिदङ्गविभूषणम् । तत् त्वं गृहाण भूयाद् मे शीलमेवाङ्गभूषणम् ॥ ८२ ॥ इत्युदीर्य समुत्तार्य तनोराभरणानि सा । अर्पयामास तान्येतत् प्रीत्यै कुलमृगीदृशाम् ॥ ८३ ॥ भुजिष्या तान्युपादाय विस्मयस्मेरमानसा । चिन्तयन्ती तदौचित्यं निजमन्दिरमाययौ ॥ ८४ ॥ अनङ्गसेनया सार्धं कृतपुण्यस्य पश्यतः । उपनिन्ये च कुट्टिन्या यथादृष्टं जगाद च ॥ ८५ ॥ अङ्गस्य यदलङ्कारः प्रेषितः कुलयोषिता । उदक्तस्योदपानस्य तदेषा तलमृत्तिका ॥ ८६ ॥ अलमेतेन कौसुम्भरसनिर्यासरूपिणा । चिन्तयित्वेति तत्पत्न्यां कृपालुरथ कुट्टिनी ॥ ८७ ॥ तदलंकारसर्वस्वमेकावल्यादिसंयुतम् । दीनाराणां सहस्रेण सह प्रीत्याऽऽर्पयत् पुनः ॥ ८८ ॥ विशेषकम् ॥ कुट्टिन्या कामिनां मान्या दुहिताऽभिहिता रहः । पुत्रि ! पण्यपुरन्ध्रीणां निर्धनेन जनेन किम् ? ॥ ८९ ॥ गण्यतां कृतपुण्योऽपि निर्धनैकशिरोमणिः । इत्युक्ताऽनङ्गसेनापि प्रत्युवाच वचस्विनी ॥ ९० ॥ मातर्नातः परं माता मदीया नितरामसि । अप्रगल्भं प्रगल्भापि यदेवं खलु जल्पसि ॥ ९१ ॥ ऊढप्रौढिभिरेतस्य बताढ्यंकरणैर्धनैः । परःकोटिभिरायातैः सौहित्यं किं न तेऽभवत् ? ॥ ९२ ॥ गुणैरेतस्य मे चेतः केतकोदरसोदरैः । वासितं यत् तदन्यत्र गन्तुमुत्सहते नहि ॥ ९३ ॥ इति निर्बन्धमेतस्याः सम्यग् मनसि कुर्वती । जज्ञेऽसौ जरती जाग्रत्तृष्णा कृष्णानना ततः ॥ ९४ ॥ सावज्ञां कारयामास तत्र दासीभिरन्वहम् । नार्घं ददाति यत्कोऽपि निःश्रीके सवितर्यपि ॥ ९५ ॥ तदा तासामवज्ञानां निदानमथ चिन्तयन् । अक्काकर्तृकमेवेति बुबुधे स बुधः स्वयम् ॥ ९६ ॥ अनुक्तहुताशनेन हृदि दंदह्यते स्म च ।

क०। स्येव पुरन्दरः ॥ ५७ ॥ त्रयोऽस्यास्तनवोऽशोकचन्द्राख्यस्तेषु कूणिकः । ज्यायान् हल्लो द्वितीयस्तु विहल्लोऽभूत् कनिष्ठकः ॥ ५८ ॥

इतश्च नगरे तत्र सार्थवाहो धनावहः । आसीदसीमविभवो द्वितीय इव यक्षराट् ॥ ५९ ॥ भद्रेति दयिता तस्य ततो गर्भमधारयत् ।
२।। कृतपुण्य इति प्रीत्या व्याख्यातमखिलैर्जनैः ॥ ६० ॥ असूत सा सुतं काले कालेयच्छविभासुरम् । सार्थवाहो महोत्साहस्तदा चक्रे महो-
त्सवम् ॥ ६१ ॥ पुरस्कृत्य जनस्योक्तिं पूज्यपूजापुरस्सरम् । कृतपुण्यक इत्यस्य पितृभ्यां नाम निर्ममे ॥ ६२ ॥ क्रमेण वर्धमानोऽसौ स्पर्ध-
मानो नवेन्दुना । कलाकलापं जग्राह चित्रं दोषाकरस्तु न ॥६३॥ धन्यंमन्यां तदीयाख्या कन्यां सुकुलसंभवाम् । पितृभ्यामुत्सवेनैष तरुणः
परिणायितः ॥ ६४ ॥ तमथो साधुसंसर्गाद् विषयेषु पराङ्मुखम् । न्ययुङ्क्त शठगोष्ठीषु श्रेष्ठी तद्भोगकौतुकी ॥ ६५ ॥ अथ तादृक्सुहृद्वर्ग-
संसर्गेण निरर्गलः । स पण्यकामिनीदर्शं यथाकाममकामयत् ॥ ६६ ॥ स क्षणात् तैरुपाध्यायैः किञ्चिदध्यापितस्तथा । यथा यातु पितुर्मा-
तुर्न सस्मार स्मरातुरः ॥ ६७ ॥ अन्यदाऽनङ्गसेनाख्यां विख्यातां पण्ययोषितम् । सरसां कामयामास पीयूषसरसीमिव ॥ ६८ ॥ आनन्द-
मकरन्दैः स दूरमन्यातिशायिभिः । तृप्यति स्म न तां प्राप्य रोलम्ब इव मालतीम् ॥ ६९ ॥ कोटिशः कुट्टिनीकूटपादावर्तैरवर्तत । रसातल-
तलस्थानां तद्धनानामुदञ्चनम् ॥ ७० ॥ तस्य द्वादश वर्षाणि दिनानीवातिचक्रमुः । कालः स्यादतिजङ्गालस्तन्वङ्गीसङ्गिरङ्गिणाम् ॥ ७१ ॥
अक्षीयत ततो लक्ष्म्या चिरसंचितयापि च । दुःखिताभ्यां पितृभ्यां च देवभूयमभूयत ॥७२॥ कुट्टिनी तदपि क्रूरा पुनरेव धनाशया । प्रेषयामा-
स सा चेटीं चतुरोक्तिपटीयसीम् ॥ ७३ ॥ निकेतं कृतपुण्यस्य सातिवेगादुपाययौ । भित्तिगोपुरसोपानभ्रंशाख्यातधनक्षयम् ॥ ७४ ॥ प्राणे-
शमङ्गलाशंसिस्थौलकौसुम्भवाससम् । नव्यावतीर्णतारुण्यां साऽपश्यत् तत्र योषितम् ॥ ७५ ॥ कृतपुण्यस्य पत्नीति तां निश्चित्य कुतश्चन ।
अवोचत नता चेटी वाचं शिक्षाक्रमोचिताम् ॥ ७६ ॥ कल्याणि ! तव कान्तेन प्रहिता स्मि त्वदन्तिकम् । विज्ञातुं कुशलोदन्तं धनं चानेतु-

त्वांहि निर्गते श्रेणिक. सुलसासुतैः । सब्रह्मचारिभिर्दिव्यानुभावादेकनालजैः ॥ ३८ ॥ प्रसेनजित्सुहृन्नागरथिकस्य सुतैः श्रुतैः । द्वात्रिंशता समं प्राप सुरङ्गात्मा सुरङ्गया ॥३९॥ युग्मम् ॥ सुरङ्गानिर्गतं प्रेक्ष्य सुज्येष्ठा मगधेश्वरम् । चित्रदृष्टानुसारेणोपलक्ष्य मुमुदेतराम् ॥४०॥ साख्याय सर्ववृत्तान्तमापप्रच्छाथ चिल्लणाम् । प्रत्यज्ञासीच्चिल्लणापि स्थास्यामि त्वदृते न हि ॥ ४१ ॥ रथमारोपयदथ सुज्येष्ठा चेल्लणां पुरः । स्वयं चागात्ससानेतुं द्रुतं रत्नकरण्डिकाम् ॥ ४२ ॥ न स्थातुमुचितं वैरिगृहे चिरमितीरिभिः । प्रेरितोऽनुचरैर्लात्वा चेल्लणां चचले नृपः ॥ ४३ ॥ सुज्येष्ठाऽऽगादितो यावत् तावत् तं मगधेश्वरम् । न ददर्श घनच्छन्नमिव चन्द्रं चकोरिका ॥ ४४ ॥ तदा चाऽपूर्णकामत्वाद् भगिनीहरणादपि । साऽरटद् मुष्टमुष्टाऽस्मि ह्रियते हन्त ! चेल्लणा ॥ ४५ ॥ ततश्चेटकमुद्यान्त रथी वैरङ्गिको रयात् । उवाच कोऽयमाक्षेपो मयि सत्यपि नाथ ! ते ? ॥ ४६ ॥ कन्याप्रत्याहृतावन्वागतो यातः सुरङ्गया । सौलसेयानयं सर्वानेकेनैवेषुणाऽवधीत् ॥ ४७ ॥ तद्रथै रुद्धमार्गोऽस्थादथ वैरङ्गिको रथी । सुरङ्गान्तमगात् तूर्णं श्रेणिकस्तु सचेल्लणः ॥ ४८ ॥ सुज्येष्ठा विषयाकाङ्क्षाविरक्ताऽऽपृच्छ्य चेटकम् । समीपे चन्दनार्यायाः परिव्रज्यामुपाददे ॥ ४९ ॥ सुज्येष्ठे ! इति जल्पन्तं श्रेणिकं त्वाह चेल्लणा । सुज्येष्ठा नागता देव ! तत्कनिष्ठाऽस्मि चेल्लणा ॥ ५० ॥ श्रेणिको व्याजहारैतां नायासोऽभूद् मुधा मम । सुभ्रु ! त्वमसि सुज्येष्ठा तस्या न खलु हीयसे ॥ ५१ ॥ चेल्लणा पतिलाभेन भगिनीवञ्चनेन च । श्रेणिकस्तु तदावाप्त्या सौलसेयव्ययेन च ॥ ५२ ॥ कलितौ हर्षशोकाभ्यां तौ रथप्रजवादथ । ईयतुर्नगरं पश्चात् कृतकार्योऽभयोऽपि हि ॥ ५३ ॥ युग्मम् ॥ गान्धर्वेण विवाहेन परिणीयाथ चेल्लणाम् । सुलसानागयोर्गत्वा राजाऽऽख्यत् तत्सुतान् मृतान् ॥ ५४ ॥ नृपात् तौ दम्पती श्रुत्वा सुतोदन्तममङ्गलम् । मुक्तकण्ठमकुण्ठार्त्तिदीनौ रुरुदतुश्चिरम् ॥ ५५ ॥ अथानित्यकथाभिरतावाचार्य इव तत्त्ववित् । अभयो बोधयामास श्रेणिकेन सहागतः ॥ ५६ ॥ ततश्च चेल्लणादेव्या समं मगधभूपतिः । निर्विघ्नं बुभुजे भोगान् पौलो-

क०। वैशाल्यां यियासुरिव तां स्मरन् ॥ १६ ॥ दूतेन प्रार्थयामास सुज्येष्ठां चेटकादयम् । न दास्ये श्रेणिकायेमां चेटकोऽपीति चावदत् ॥ २० ॥
दूतेनाथ तथाख्याते श्रेणिकं खिन्नमभ्यधात् । अभयस्तात ! मा शोचीः करिष्ये वः समीहितम् ॥ २१ ॥ इति वैनयिकीबुद्ध्याऽभिधायैत्य
१॥ गृहेऽभयः । चिद्रूपो रूपमलिखत् फलके मगधेशितुः ॥२२॥ ततो गुटिकया वर्णस्वरभेद विधाय स. । वणिग्वेषं गृहीत्वा च वैशालीं नगरीं ययौ
॥ २३ ॥ उपचेटकराजान्तःपुरं चापणमग्रहीत् । तत्रान्तःपुरचेटीनां क्रेतव्यमधिकं ददौ ॥ २४ ॥ अभयश्चार्चयन्नित्यं श्रेणिकं लिखिते पटे ।
दासीपृष्टोऽयमाचख्यौ देवो मे श्रेणिको नृपः ॥ २५ ॥ दास्यश्च कथयामासुः सुज्येष्ठायै सविस्मयाः । रूप तादृग्यथादृष्टं श्रेणिकस्यातिदै-
वतम् ॥ २६ ॥ ज्येष्ठदास्या समानाय्य पटकं कौतुकेन सत् । ध्यायन्त्यासीच्च निश्चेष्टा सुज्येष्ठा योगिनीव सा ॥ २७ ॥ जगाद च क्षणं
स्थित्वा गत्वा रहसि सत्वरम् । गूढाभिप्रायसर्वस्वनिधानवसुधां सखीम् ॥ २८ ॥ यस्येदं फलके रूपं धीमतीच्छामि तं पतिम् । तत्संघ-
ट्टयितुं त्वेनं विधिभट्टारकोऽस्तु कः ? ॥ २९ ॥ यद्ययं मे पतिर्न स्यात् तदानीं हृदयं सखि ! । द्विधा भविष्यति नूनं दाडिमं व पचेलिमम्
॥ ३० ॥ तद्भद्रे ! क इहोपाय उपायो यदिवाऽस्त्ययम् । शरणं वणिगेवैष य एतद्रूपमर्चति ॥ ३१ ॥ सुज्येष्ठादास्यथावादीदभयं सोऽपि तां
जगौ । अचिरात्पूरयिष्यामि स्वामिन्यास्ते मनोरथम् ॥ ३२ ॥ सुरङ्गां खानयिष्यामि तमानेष्ये तया रयात् । अधिष्ठेयश्च तत्कालं त्वत्स्वामि-
न्यापि तद्रथः ॥ ३३ ॥ स्थानेऽमुष्मिन् दिनेऽमुष्मिन् क्षणेऽमुष्मिन् सुरङ्गया । राजैष्यतीति संकेतं तन्मुखेनाभयो ददौ ॥ ३४ ॥ दासी
तस्य तदाख्यायागत्य चाभयमब्रवीत् । प्रमाणं त्वद्वच इति पुनश्चान्तःपुरं ययौ ॥ ३५ ॥ अभयोऽपि हि संकेतकथाख्यापनपूर्वकम् । पितृ-
प्रयोजनमह्न आहूत् पितरमाश्वपि ॥ ३६ ॥ सुज्येष्ठा तत्प्रभृत्येव स्मरन्ती श्रेणिकं नृपम् । प्रभूतां प्रापदरतिं रतिनाथवशंवदा ॥ ३७ ॥ अन्यदा

---

१ ग. घ. पचेलिममिवैर्वारु द्विधा नूनं भविष्यति ।

॥ इत्यभयकुमारकथायामौत्पातिकीबुद्धिनिबधनं नाम प्रथमः प्रकाशः ॥

इतश्च श्रीविशालास्ति वैशालीति पुरी वरा । तत्र चेटीकृताराातिनृपोऽभूच्चेटको नृपः ॥ १ ॥ पृथग्राज्ञीभवास्तस्य बभूवुः सप्त कन्यकाः । तत्प्रतापोच्छलत्सप्तार्चिषो ज्वाला इवोज्ज्वलाः ॥ २ ॥ प्रभावती पद्मावती मृगावती शिवापि च । तथैव ज्येष्ठा सुज्येष्ठा चिल्लणा चेति ताः क्रमात् ॥ ३ ॥ प्रभावती वीतभयेश्वरोदायनभूपतेः । पद्मावती तु चम्पेशदधिवाहनभूभुजः ॥ ४ ॥ कौशाम्बीशशतानीकनृपस्य तु मृगावती । शिवा तूज्जयिनीशस्य प्रद्योतपृथिवीपतेः ॥ ५ ॥ कुण्डग्रामाधिनाथस्य नन्दिवर्धनभूभुजः । श्रीवीरनाथज्येष्ठस्य ज्येष्ठा दत्ता यथाक्रमम् ॥ ६ ॥ सुज्येष्ठा चिल्लणा चापि कुमार्यावेव तस्थतुः । रूपश्रियोपमाभूते ते मिथो बिम्बिते इव ॥ ७ ॥ कलाकलापकुशले श्रुतार्थोपनिषद्विदौ । मूर्ती इव सरस्वत्यास्ते रेमाते परस्परम् ॥ ८ ॥ अपरेद्युश्च सुज्येष्ठाचिल्लणाभ्यामलंकृतम् । कन्यान्तःपुरमभ्यागादेका स्थविरतापसी ॥ ९ ॥ सा च व्याचष्ट धर्मं स्वं मिथ्यात्वद्रुमसारणिः । उत्फुल्लगल्लमज्ञानपर्षदीव तयोः पुरः ॥ १० ॥ सुज्येष्ठा तु गुणश्रेष्ठा तस्या धर्मं निराकरोत् । श्रुतकूपनिपानाभैर्वचोभिर्युक्तिवर्मितैः ॥ ११ ॥ स्वस्वामिनीजयोन्मत्तास्तामन्तःपुरचेटिकाः । उत्तालतुमुलाः कण्ठे गृहीत्वा निरवासयन् ॥ १२ ॥ उपादातुं गता दातुं पतितेवाथ तापसी । पूजार्थिन्यागता सैवं प्रत्युतानर्थमासदत् ॥ १३ ॥ यान्ती च तापसी दध्याविमां वैदुष्यगर्विताम् । भूयसीषु सपत्नीषु दुःखपात्रीकरोम्यहम् ॥ १४ ॥ सुज्येष्ठारूपमित्येषा लिखित्वा चित्रपट्टके । श्रेणिकायोपनिन्येऽथ गत्वा राजगृहे पुरे ॥ १५ ॥ तां दृष्ट्वा लिखितां रूपमुषितामरनायिकाम् । राजा राजगृहाधीशः प्राशंसद् धूनयन् शिरः ॥ १६ ॥ अपृच्छच्च शुभे ! केयं किंकुला कस्य नन्दिनी । कुमारी परिणीता वा कां पुरीमधितिष्ठति ? ॥ १७ ॥ तापसी कथयामास सुज्येष्ठेयं कलानिधिः । विशालेशसुता कन्योद्वोढुमेतां त्वमर्हसि ॥ १८ ॥ विसृज्य तापसी तस्थौ कथञ्चिदथ पार्थिवः । पत्तौ विधाय

क०। यस्तटस्थितः। तस्य धीकौशलक्रीता मदीया मन्त्रिधुर्यता ॥ ३५ ॥ तदाकर्ण्य जनाः प्रोचुः कूपकण्ठगता इति। पाणिनेन्दुं य आदत्ते स इमा-
।०॥ मूर्मिकामपि ॥३६॥ ततोऽभयकुमारोऽपि संप्राप्तस्तत्र सस्मितम्। ऊचे किं गृह्यते नैषा किमेतदतिदुष्करम्? ॥३७॥ तं दृष्ट्वा च जना दध्युः को-
ऽप्यसावतिशायिधीः। समये मुखरागो हि नृणामाख्याति पौरुषम् ॥३८॥ ऊचुस्ते तं गृहाणेमामूर्मिकां तत्पणीकृताम्। यदीच्छसि श्रियं राज्ञो
धुर्यतां चास्य मन्त्रिषु ॥ ३९ ॥ ततोऽभयकुमारोऽपि मुद्रिकां कूपमध्यगाम्। आर्द्रगोमयपिण्डेन निजघानोपरिस्थितः ॥ ४० ॥ स निजौ-
त्पातिकीबुद्धेर्न्युञ्छनीभूतमुच्चकैः। तोयचक्रभ्रमायातं गोमयं पाणिनाऽऽददे ॥ ४१ ॥ तत्परिज्ञाय चारस्तैराजुहावाभयं नृपः। आलिलिङ्ग च
तं पुत्रप्रतिपत्त्या प्रमोदभाक् ॥ ४२ ॥ कुतस्त्वमागतोऽसीति पृष्टः श्रेणिकभूभुजा। अभयः प्राह संप्राप्तो बेन्नातटपुरादहम् ॥ ४३ ॥ राजा-
ऽभ्यधत्त भद्रास्य! तत्र भद्र इति श्रुतः। श्रेष्ठी किमस्ति किं चास्य नन्दानाम्नी च नन्दिनी? ॥ ४४ ॥ अस्तीत्युक्तोऽमुना राजा प्राह नन्दोद-
रिण्यभूत्। किं जातं, सोऽभ्यधात्पुत्रं सासूताभयसंज्ञितम् ॥ ४५ ॥ किंरूपः किंगुणः सोऽस्तीत्युदिते सति भूभुजा। ऊचे ह्यसौ स एवाहं
स्वामिन्नस्मीति चिन्त्यताम् ॥ ४६ ॥ राजा तमङ्कमारोप्यालिङ्ग्याघ्राय शिरस्यथ। प्राहानन्दाश्रुमान् वत्स! माता कुशलिनी तव? ॥ ४७ ॥
अभयोऽप्याह भृङ्गीव त्वत्पादाम्भोजकाङ्क्षिणी। स्वामिन्नायुष्मती मेऽम्बा बाह्योद्यानेऽस्ति संप्रति ॥ ४८ ॥ ततो नन्दां समानेतुमानन्दादभयं
पुरः। प्रस्थाप्य स्वयमुत्कण्ठोत्सुकोऽथागाद् महीपतिः ॥४९॥ अनञ्जनाक्षीं शिथिलवलयां लुलितालकाम्। ददर्श राजा सानन्दो नन्दामुद्यान-
वासिनीम् ॥ ५० ॥ नन्दामानन्द्य नगरं प्रविश्य च महीपतिः। पट्टराज्ञीपदे चक्रे जानकीमिव राघवः ॥ ५१ ॥ पुत्रीं स्वसुः सुसेनाया मुख्यतां
चापि मन्त्रिषु। राज्यार्धसंपदा साकमभयाय ददौ नृपः ॥ ५२ ॥ भर्तृभक्त्याऽभयः स्वस्मिन् पदातिपरमाणुताम्। मन्वानः साधयामास
दुःसाध्यानपि भूभुजः ॥ ५३ ॥

याः स्वनन्दिन्याः परेद्यवि । श्रेष्ठिना कारितो भोगानभुङ्क्त स तया सह ॥ १५ ॥ इतश्चाकस्मिक रोगं प्राप्य राजा प्रसेनजित् । तज्ज्ञः श्रेणिकमाह्वातुं शीघ्रमादिक्षदौष्ट्रिकान् ॥ १६ ॥ औष्ट्रिकेभ्यः परिज्ञाय पितुरत्यर्तिमुत्सुकः । नन्दां संबोध्य सस्नेहं प्रतस्थे श्रेणिकस्ततः ॥१७॥ वयं पाण्डुरकुड्यां गोपाला राजगृहे पुरे । आह्वानमन्त्रप्रतिभान्यक्षराणीति चार्पयत् ॥ १८ ॥ गत्वा च श्रेणिको राजगृहे राजानमानमत् । साम्राज्यदीक्षितं कृत्वा तं राजापि ययौ दिवि ॥ १९ ॥ विश्वं विश्वंभराभारं बभार श्रेणिकस्ततः । तेन गर्भवती मुक्ता गर्भं नन्दा च दुर्वहम् ॥ २० ॥ तस्या दोहद इत्यासीद् गजारूढा शरीरिणाम् । महाभूत्योपकुर्वाणा भवाम्यभयदा यदि ॥ २१ ॥ विज्ञपय्याथ राजानं तत्पित्राऽपूरि दोहदः । पूर्णे काले च सासूत सुतं चन्द्रमिवेन्द्रदिक् ॥ २२ ॥ दोहदार्थानुसारेण तस्याथ दिवसे शुभे । चकाराभयकुमार इति मातामहोऽभिधाम् ॥ २३ ॥ क्रमादधीतविद्योऽष्टवर्षोऽमर्षेण केनचित् । अतर्ज्यतैष कोऽसि त्वं पिता यस्य न विद्यते ॥ २४ ॥ ऊचेऽभयकुमारस्त ननु भद्रः पिता मम । त्वन्मातुः स पिता तेनोदिते नन्दां जगाद सः ॥ २५ ॥ भद्रस्तव जनको मातर्मदीयं जनकं वद । पुत्रेणेत्युदिते नन्दा निरानन्देदमब्रवीत् ॥ २६ ॥ देशान्तरादुपेतेन परिणीतास्मि केनचित् । मम च त्वयि गर्भस्थे तमीयुः केचिदौष्ट्रिकाः ॥ २७ ॥ रहः स किञ्चिदुक्त्वा तैः सहैव क्वचिदप्यगात् । अद्यापि त न जानामि कुतस्त्यः कश्चिदित्यहम् ॥ २८ ॥ स यान्नुवाच किञ्चित्त्वामिति पृष्टाभयेन सा । अक्षराण्यर्पितान्येतानीति पत्रमदर्शयत् ॥ २९ ॥ तद्विभाव्याभयः प्रीतोऽब्रवीद् मम पिता नृपः । पुरे राजगृहे तत्र गच्छावो ननु सम्प्रति ॥ ३० ॥ आपृच्छ्य श्रेष्ठिनं भद्रं सामग्रीसंयुतस्ततः । नान्देयो नन्दया सार्धं ययौ राजगृहं पुरम् ॥ ३१ ॥ मातरं बहिरुद्याने विमुच्य सपरिच्छदाम् । आत्मनात्मपरीवारः प्रविवेशाभयः पुरे ॥ ३२ ॥ इतश्च मन्त्रिणां कॢप्तमेकोनशतपञ्चकम् । तत्पूर्तौ श्रेणिकः कञ्चिदुत्कृष्टमगवेषयत् ॥ ३३ ॥ तनश्च तत्परीक्षार्थं शुष्ककूपे निजोर्मिकाम् । नृपश्चिक्षेप लोकांश्च पटहेनेदमादिशत् ॥ ३४ ॥ आदास्यते करेणैतामूर्मिकां

"अणुमाणहेउदिट्ठंतसाहिया वयविवागपरिणामा । हियनिस्सेयसफलवई बुद्धी परिणामिया नाम ॥ ५ ॥"

इत्येताः 'अज्जवि' अद्यापि बहुधा श्रुता अपीति भावः, जनस्य लोकस्य 'चित्ते' मनसि 'चमकंति' चमत्कुर्वन्त्याश्चर्यं जनयन्तीति संक्षेपार्थः । व्यासार्थस्तु कथानकादवसेयः । तच्चैतत् ;—

अस्ति राजगृहं नाम पुरं तत्राभवद् नृपः । प्रसेनजिदिति ख्यातः प्रतापी भानुमानिव ॥ १ ॥ तस्यासन् सूनवो नैके श्रेणिकाद्या महौजसः । पयोधेरिव भास्वन्तो मणयः कौस्तुभादयः ॥ २ ॥ अन्यदा तु स्वपुत्राणां राज्यार्हत्वं परीक्षितुम् । भोज्याय पायसस्थालानेकत्रादीदपद् नृपः ॥ ३ ॥ प्रवृत्तेषु ततो भोक्तुं कुमारेषु कुशाग्रधीः । सारमेयानयं सिंहसारमेयानमूमुचत् ॥ ४ ॥ कुमारा द्रुतमुत्तस्थुः कुक्कुरेष्वापतत्स्वथ । तथैव श्रेणिकस्त्वस्थाच्चलितोडुष्विव ध्रुवः ॥५॥ स्तोकं स्तोकं ददौ सोऽन्यस्थालेभ्यः पायसं शुनाम् । यावल्लिलिहिरे ते तत् तावच्च बुभुजे स्वयम् ॥ ६ ॥ येन केनाप्युपायेन परानेष निरोत्स्यति । भोक्ष्यते च स्वयं राज्यं राजा तेनेति रञ्जितः ॥ ७ ॥ राज्यार्हमानिनो मैनं मद्यान्तं शासिषुः परे । इत्यवज्ञाय तं देशान् कुमारेभ्यो ददौ नृपः ॥ ८ ॥ ततोऽभिमानी स्वपुराद् निःसृत्य श्रेणिको गतः । बेन्नातटपुरे भद्रश्रेष्ठिनोऽट्टमुपाविशत् ॥ ९ ॥ प्रभूतक्रायकैः श्रेष्ठी सोऽभवद् व्याकुलस्तदा । कुमारोऽप्यार्पयद् बद्ध्वा तत्पुटापुटिकादिकम् ॥१०॥ द्रव्यं माहात्म्यतस्तस्य श्रेष्ठी भूयिष्ठमार्जयत् । भानोः प्रभावतः किं न लभते मुकुरः प्रभाम् ॥११॥ अद्यावितथपुण्यस्य कस्यातिथिरसीत्ययम् । श्रेणिकः श्रेष्ठिना पृष्टो भवतामित्यभाषत ॥ १२ ॥ नन्दायोग्यो वरो दृष्टः स्वप्ने योऽयं स एव सः । इति श्रेष्ठी हृदि ध्यायन् धन्योऽहमिति चाब्रवीत् ॥ १३ ॥ संवृत्याट्टमथ श्रेष्ठी तं नीत्वा च स्ववेश्मनि । स्नपयित्वा परिधाप्य सगौरवमभोजयत् ॥ १४ ॥ पाणिग्रहं च नन्दा-

---

१ अनुमानहेतुदृष्टान्तसाधिका वयोविपाकपरिणामा । हितनिःश्रेयसफलवती बुद्धिः पारिणामिकी नाम ॥ ५ ॥

प्रणतिपूर्वमभयकुमारानगारगुणभारमथ विस्तारयन्नाह ;—

खंडियमोहपगारं अभयकुमार नमामि अणगारं। अज्जवि जस्स मईओ जणस्स चित्ते चमक्कंति ॥ ४८ ॥

[ खण्डितमोहप्राकारमभयकुमारं नमाम्यनगारम् । अद्यापि यस्य मतयो जनस्य चित्त चमत्कुर्वन्ति ॥ ]

अभयकुमारनामानमनगारं महर्षि नमामि नमस्करोमि। किंविशिष्टम्। 'खंडियमोहपगारं' खण्डितश्चूर्णीकृतो मोहो मूढतैव मुक्तिपुरीप्रवेशे प्रत्यूहकारः प्राकारः शालो येन, यद्वा, खण्डितोऽवगणितो मोहस्य प्रकृष्टो महतामप्यलङ्घ्य आकारो घाटः साम्राज्यलोभमयो येन स तथा तम्। यस्य किम्। मतय औत्पातिकीवैनयिकीकर्मजापारिणामिकीतिसंज्ञाश्चतस्रो बुद्धयः, तथाहि सिद्धान्तः—

" उप्पत्तिया वेणइया कम्मया परिणामिया। बुद्धी चउव्विहा वुत्ता पंचमा णोवलब्भइ ॥ १ ॥

पुव्वमदिट्ठमसुयमवेइअतक्खणविसुद्धगहियट्ठा। अव्वाहयफलजोगा बुद्धी उप्पत्तिया नाम ॥ २ ॥

भरनित्थरणसमत्था तिवग्गसुत्तत्थगहियपेयाला। उभउलोगफलवई विणयसमुत्था हवइ बुद्धी ॥ ३ ॥

उवओगदिट्ठसारा कम्मपसंगपरिघोलणविसाला। साहुक्कारफलवई कम्मसमुत्था हवइ बुद्धी ॥ ४ ॥

---

१ औत्पातिकी वैनायिकी कर्मजा पारिणामिकी। बुद्धिश्चतुर्विधोक्ता पञ्चमी नोपलभ्यते ॥ १ ॥

पूर्वादृष्टाश्रुताविदिततत्क्षणविशुद्धगृहीतार्था। अव्याहतफलयोगा बुद्धिरौत्पातिकी नाम ॥ २ ॥

भरनिस्तरणसमर्था त्रिवर्गसूत्रार्थगृहीतप्रमाणा। उभयलोकफलवती विनयसमुत्था भवति बुद्धिः ॥ ३ ॥

उपयोगदृष्टसारा कर्मप्रसङ्गपरिघोलनविशाला। साधुकारफलवती कर्मसमुत्था भवति बुद्धिः ॥ ४ ॥

परिष्ठापयितुं तस्य व्यस्मर्यन्त महात्मनः ॥ ५२ ॥ विहृत्य शीतले भानूदये चायमुपागतः । मुनीन्निमन्त्रयामास मासक्षपणिनस्तदा ॥ ५३ ॥ ते तु खुंकृत्य जगदुः कोपिनस्तं प्रमद्वरम् । भोजनैकस्मृते ! खेलं क्षिपामः केति शंसिनः ॥५४॥ ततो निमन्त्रणायाविष्कृते तत्पात्र एव ते । क्षपकाः खेलममुचन् गरलं पन्नगा इव ॥ ५५ ॥ तन्मुखाब्जच्युत खेलं मन्वानो मकरन्दवत् । स क्षमापद्मलस्वान्तश्चिन्तयामासिवानिति ॥ ५६ ॥ परिष्ठापयितुं खेलमल्लकान् व्यस्मरं हहा ! । निष्ठीवितुं न कल्पेतां वासिते खेलमल्लके ॥ ५७ ॥ मया प्रमद्वरेणैषामन्यभक्तिरपि क्षता । यददातुः प्रियालापोऽन्यत्र लाभान्तरायिकम् ॥ ५८ ॥ अशनव्यसन धिग्मां पशुवद् ग्रासलालसम् । क्षुत्परीषहसोढारस्त्वमी धन्यास्तपोधनाः ॥५९॥ सिच्यमानो रसैरात्मा सार्द्रतुम्बमिव ब्रुडेत् । तेनैते शोषयन्ति स्वं तितारयिषवो भवात् ॥६०॥ क्षान्त्या तितउनेवैवं चाजयन् प्राक्तनं रजः । स लेभे केवलं रत्नं लोकालोकप्रकाशकम् ॥ ६१ ॥ तदा शासनदेव्यागाद् नमश्चक्रे च तं मुनिम् । क्षपकास्तद् विलोक्यैताभभाषन्तोन्मिषत्क्रुधः ॥ ६२ ॥ हित्वा तपोधनानस्मानद्य त्वं कटपूतने ! । अमुं कथमवन्दिष्ठा रे क्रूरे ! कूरगड्डुकम् ? ॥ ६३ ॥ सोचे पवित्रमस्यामूज्ज्ञानमप्रतिपातिकम् । अवन्दिषमह तेन वन्दध्वं यूयमप्यमुम् ॥ ६४ ॥ ततस्ते विस्मयानन्दविषादभरभाविताः । तस्य केवलिनः पादाम्बुजेऽभूवन्मधुव्रताः ॥ ६५ ॥ तेषामपि तदात्मानं निन्दतामभिगर्हताम् । विलिल्यिरे घिकर्माणि प्रादुरासीच्च केवलम् ॥ ६६ ॥

देवा दुन्दुभिनादपूर्वमवनीं गन्धोदकोपस्कृतां कुर्वन्तः समुपेत्य केवलमहं कृत्वा च जग्मुर्दिवम् ।
कालात् केवलिनः प्रपञ्चितवचो धर्मस्य पञ्चापि ते साम्राज्याय शुभग्रहा इव जगत्युच्चैः स्थिता जज्ञिरे ॥ ६७ ॥

॥ इति कूरगड्डुकमुनिकथा ॥४७॥

दातव्यं नागदत्त इति त्वया। इत्याख्याय महीशाय देवता सा तिरोदधे ॥३२॥ राजापि द्वैधमप्याप प्रबोधं तमसोऽत्यये। राज्ञी तु पूर्यमाणेष्टदोहदा गर्भमावहत् ॥ ३३ ॥ असूत च क्रमात्पुत्रमसौ प्राचीव भास्करम्। नागदत्तं च तं राजाऽभ्यधत्तोत्सवपूर्वकम् ॥ ३४ ॥ धात्रीभिर्गुणपात्रीभिः पाल्यमानोऽयमर्भकः। पञ्चभिर्विषयेच्छाभिरिव कामो व्यवर्धत ॥३५॥ स पञ्चवार्षिकः पित्रा पण्डितेभ्यः समर्पित । बालेन्दुरिव वर्धिष्णुरग्रहीदुज्ज्वलाः कला. ॥ ३६ ॥ एकदा बहिरुद्याने गतेन शिशुनामुना । वन्दिताः सूरयस्तेभ्य शुश्रुवे धर्मदेशनाम् ॥ ३७ ॥ प्रकृत्योपशमी सोऽयं श्रुत्वोपशमदेशनाम्। सविग्नमानसो दीक्षामयाचिष्ट गुरूनथ ॥ ३८ ॥ गुरुरूचेऽस्ति चेद् वत्स ! व्रतेच्छा पृच्छ तन्निजौ। पितरौ तन्मतायाशु तुभ्यं दास्यामहे व्रतम् ॥ ३९ ॥ ततो नत्वा गुरून् गत्वा सोऽपृच्छत्पितराविति। तात ! मातरह किञ्चिद् याचे वां पुत्रवत्सलौ ॥ ४० ॥ तावूचतुरिदं सर्वं तवैव किमु याचसे ?। राज्यादपि पर किञ्चिदस्ति चेद् ब्रूहि वत्स ! तत् ॥४१॥ सोऽभ्यधत्त प्रणम्यैतौ दीक्षां दापयताऽद्य मे। तौ तु वाक्छलमात्मीयं निन्दन्ताविदमूचतुः ॥ ४२ ॥ क तात ! व्रतकष्टं तत् क च ते कोमल वपुः ?। रम्भास्तम्भो गृहस्तम्भः क्रियते कापि पुत्रक ! ? ॥ ४३ ॥ स्मित्वाऽवादीदयं केयं दयाऽङ्गस्य प्रयास्यतः। दयां कुरुत मे मुक्तिफलं दापयत व्रतम् ॥ ४४ ॥ अथैतौ निग्रहस्थानपतिताविव वादिनौ। तं व्रतायान्वमन्येतां तत्र प्रत्युत्तरासहौ ॥ ४५ ॥ नागदत्तस्ततः पित्रा कृतनिष्क्रमणोत्सवः। मुदाऽऽदत्त परिव्रज्यां सुसाधुगुरुसंनिधौ ॥४६॥ सिंहत्वेन विनिष्क्रम्य विस्मापितजगत्त्रयः। सिंहत्वेनैव गुरुभिः सहोर्व्यां विजहार सः ॥४७॥ स तु प्राक्तनतिर्यक्त्वानुभावेन क्षुधालुकः। कूरगड्डुक इत्यन्यनामा जेमनभूद् मुहुः ॥ ४८ ॥ ज्ञानदर्शनचारित्राण्यस्योदीयु. क्षुधा समम्। इन्दोरिव सहाङ्केन स्कन्धदेशप्रदेशकाः ॥४९॥ चत्वारो देवतावन्द्या गच्छेऽत्र क्षपकोत्तमा.। एकद्वित्रिचतुर्मासान् क्षपन्ति स्म क्रमेण ते ॥ ५० ॥ यावज्जीवं च तद्वैयावृत्त्याभिग्रहमग्रहीत्। मत्वा तत्पुण्यमक्षय्य बालर्षि कूरगड्डुकः ॥ ५१ ॥ बुभुक्षत्येकदा तेषां मुनीनां खेलमल्लका'।

गन्धनागन्धनांभिधम् ॥ १३ ॥ पर्यङ्कासनबन्धेन कृतनिर्दम्भकुम्भकः । स सर्पाकर्षिणीं विद्यां सभ्रूकुटिकमस्मरत् ॥१४॥ तया सुस्फुरयाकृष्टाः फणिनः पुरवासिनः । गन्धनागन्धनकुलाः स्वं स्वं मण्डलमापतन् ॥ १५ ॥ अथाह मान्त्रिकः सर्पानाक्षिप्यात्ततमुष्टिना । मुक्त्वापराधिनमरे ! परे यान्तु निरागसः ॥ १६ ॥ यथागतमगुः सर्पास्ततस्ते ये निरागसः । स एवैकः स्थितो येन राजसूनुरदश्यत ॥ १७ ॥ मान्त्रिकोऽग्नि-चितां कृत्वा तत्र चाहिं तमब्रवीत् । स्वमादत्स्व विषं दंशादहे ! वा दहने विश ॥ १८ ॥ अगन्धनकुलीनत्वाद् न वान्तमपिबद् विषम् । सर्पोऽयं त्वविशद्वह्निमेकरूपा हि मानिनः ॥ १९ ॥ मृते पुत्रेऽथ राजापि सर्पजातौ समत्सरः । ददौ दीनारमेकैकं सर्पतुण्डच्छिदं प्रति ॥२०॥ जामदग्न्य इव क्षत्त्रानहीनुत्खातुमुद्यतः । असर्पां कर्तुमारेभे स एवमवनीं नृपः ॥ २१ ॥ इतश्च क्षपकात्मा स ज्योतिष्केभ्यश्च्युतस्तदा । दृग्विषाहिकुले सर्पो देवताधिष्ठितोऽभवत् ॥ २२ ॥ सैष जातिस्मृतिज्ञानो मद्दृष्ट्या मा स्म भस्मसात् । भवन्तु जन्तव इति भ्राम्यति स्म दिवा न हि ॥ २३ ॥ दयालुर्न त्रसानश्नाद् निशायां निःसृतोऽपि सः । पायं पायं तु पवनान् प्रातः प्रातर्बिलेऽविशत् ॥ २४ ॥ अन्यदा राजदीनारलुब्धः पन्नगलुब्धकः । विलोक्य घर्षणं तस्य विवेद विपिने बिलम् ॥ २५ ॥ तेनौषधी बिलद्वारे मुक्ता द्रागाहिकर्षिणी । तयाकृ-ष्यत सर्पोऽयमयस्कान्तेन लोहवत् ॥२६॥ मद्दृष्ट्या मा स्म दह्यन्तां जीवा इति कृपावशात् । निस्ससार महात्माऽसौ पुच्छपद्धेन पन्नगः॥२७॥ यावान् यावान् निरायिष्ट तावांस्तावानयं जवात् । खण्डशः क्रियते स्माहितुण्डिकेन दुरात्मना ॥ २८ ॥ खण्ड्यमानमिदं नाङ्गमस्ति किन्तु विकर्म ते । शुभोदर्काभिमां पीडां रे ! जीवाधिसहस्व तत् ॥ २९ ॥ इति ध्यायन्नमस्कारपरः पञ्चत्वमाप्य सः । तस्यैव भूपतेः पत्न्यां पुत्रत्वेनोदपद्यत ॥३०॥ तदा च तदधिष्ठात्री स्वप्ने धात्रीशमब्रवीत् । राजन् ! मा स्म वधीः सर्पान् पुत्रस्ते भविताऽचिरात् ॥३१॥ पुत्रस्य नाम

---

१ ख. °नाहिकम् ।

अथ कूरगड्डुकमहर्षिगुणोत्कर्षमुद्घोषयन्नाह ;—

सा कावि खमा तं किंपि मद्दवं अज्जवं च तं किंपि । जह कूरगड्डुयमहेसिणो समत्ताइं कज्जाइं ॥४७॥

[ सा कापि क्षमा तत् किमपि मार्दवमार्जवं च तत्किमपि । यथा कूरगड्डुकमहर्षेः समाप्तानि कार्याणि ॥ ]

व्याख्या—इह हि वचनगोचरातीता अपि कूरगड्डुकमुनेः क्षमामार्दवार्जवादयो गुणास्तदीयतात्कालिकलोकोत्तरफलसंपत्तिस्मृतिपात्रस्य कवेरनुभवैकसाध्यसदर्थेन प्रसिद्धार्थेन तच्छब्देनैवोक्ताः । अत पदार्थः स्पष्टः । व्यासार्थस्तु कथानकादवसेयः । तच्चैतत् ;—

क्षितिप्रतिष्ठितं नाम्ना क्षतानीतिप्रतिष्ठितम् । पुरमेत्य पुरा प्रावृष्याचार्याः केऽपि तस्थिरे ॥ १ ॥ तदीयः क्षपकः कश्चित् क्षुल्लकेनानुगामिना । बहिर्भूमौ व्रजन् भेकीं प्रमादेनांह्रिणाऽमृणात् ॥ २ ॥ इयं भेकी विवेकीश ! त्वया हन्त ! हता मुने ! । इत्युक्तः क्षुल्लकेनायं दर्शयन् गणशोऽपराः ॥ ३ ॥ जनलज्जावशादूचे दुष्ट रे शिष्यपांशन ! । किमेषापि किमेषापि किमेषापि मया हता ? ॥४॥ युग्मम् ॥ प्रतिक्रमणवेलायामयमालोचयिष्यति । विमृश्येति स्थितस्तूष्णीं क्षुल्लोऽपि विनयी नयी ॥ ५ ॥ स तमावश्यकेऽप्याह तदनालोचनाकृतम् । महर्षे ! धर्षितां भेकीमालोचयसि किं नहि ? ॥ ६ ॥ अहो ! विगोपयत्यन्तः साधूनामपि मामयम् । तदेनमात्मना हन्मि यथा बूत्कुरुतेऽपि न ॥ ७ ॥ ध्यात्वेति क्षुल्लकं हन्तुं धावन्नुद्यम्य विष्टरम् । सोऽन्तरा मर्मणि स्तम्भास्फालितो न्यपतद् भुवि ॥ ८ ॥ हा ! जीवेहैव कोपद्रुफलं भुङ्क्ष्वाधमाधम ! । इति स्वं गर्हयन् सोऽथ मृत्वा ज्योतिष्कदेव्यभूत् ॥ ९ ॥ इतश्च पुरमस्त्येकं वसन्तपुरसंज्ञितम् । तत्रारिदमनोऽन्वर्थाभिधानः पार्थिवोऽभवत् ॥ १० ॥ पुत्रस्तस्यैकपुत्रस्य स्वगृहोपवनेऽन्यदा । पुष्पाणि पाणिना चिन्वन् दष्टो दुष्टेन भोगिना ॥ ११ ॥ तन्मत्वा दुःखितो राजा पटहेनेत्यघोषयत् । संजीवयति यः पुत्रं स मे राज्यार्धमर्हति ॥ १२ ॥ ततो गारुडिकः कश्चिद् नृपमेत्याशु मण्डलम् । सर्पाकृष्टिकृतेऽलेखीद्

विपद्येत तत्कामासादयेद् गतिम् ? ॥३८॥ स्वाम्यूचे समये तत्राप्रतिष्ठानं व्रजेदयम् । राजा दध्यौ गतिः कथमस्योग्रतपसोऽपि हा ! ? ॥३९॥ नृपो भूयोऽपि पप्रच्छ समयेऽस्मिन्महामुनिः । स कालं यदि कुर्वीत कां लभेत ततो गतिम् ? ॥४०॥ प्रभुरूचेऽस्ति योग्योऽयमनुत्तरगतेर्नृप !। राजाप्रीति जगौ नाथ ! किमियं व्याकृतिर्द्विधा ? ॥ ४१ ॥ स्वाम्याचख्यौ यदा राजन् ! राजर्षिर्वन्दितस्त्वया। रौद्रध्यानी तदा सोऽभूत् शुक्लध्यानी तु संप्रति ॥ ४२ ॥ राजा प्राह पुनः स्वामिन् ! ममाज्ञस्य निवेदय। रौद्रध्यानी कथमभूत् शुक्लध्यानी कथं च सः ? ॥ ४३ ॥ प्रभुरूचे च राजंस्त्वदग्रसैनिकवार्तया । शुश्रावाभिभवं सूनोर्मन्त्रिभ्यः स्वेभ्य एव सः ॥ ४४ ॥ स्पृष्टः सुतममत्वेन प्रसन्नो विस्मृतव्रतः। मनसा योद्धुमारेभे तैः समं क्रूरकर्मभिः ॥ ४५ ॥ प्रत्यक्षैरिव तैः साक्षाद् युध्यमानोऽधिकाधिकम् । निष्ठितास्त्रः प्रसन्नोऽभूदप्रसन्नमनाः क्रुधा ॥ ४६ ॥ स संनद्धं स्वमज्ञासीदिति चाचिन्तयत् क्रुधा । शिरस्केणापि हन्म्येतान् सर्वं शस्त्रं हि दोष्मताम् ॥ ४७ ॥ ततश्च शिरसि न्यास्थच्छिरस्कादित्सया करम् । तल्लुञ्चितं स्पृशन्नात्तव्रतमात्मानमस्मरत् ॥ ४८ ॥ अचिन्तयच्च धिग् धिग्मां रौद्रध्यानानुबन्धिनम् । किं तेन सूनुना किं तैरमात्यैर्निर्ममस्य मे ? ॥ ४९ ॥ इति चिन्तयतस्तस्य विलीने मोहदुर्दिने । विवेकभास्करः प्रादुरभूद् भूयोऽपि भासुरः ॥ ५० ॥ भक्त्या तत्रैव वन्दित्वा सोऽस्मानग्रे स्थितानिव। आलोच्याथ प्रतिक्रम्य प्रशस्तं ध्यानमास्थित ॥ ५१ ॥ प्रसन्नचन्द्रश्चिच्छेद शुक्लध्यानेन दुष्कृतम् । प्रदोषसंभवं ध्वान्तमुदयाद्रिरिवेन्दुना ॥ ५२ ॥ पप्रच्छ श्रेणिको भूयः प्रणम्य परमेश्वरम् । किमेष देवसंपातो दृश्यते द्योतिताम्बरः ? ॥ ५३ ॥ स्वाम्यप्याख्यत्प्रसन्नर्षेस्तत्पन्नमिह केवलम् । कर्तुं च तन्महिमानममराः संपतन्त्यमी ॥ ५४ ॥ व्यापारेषु ध्रुवं चित्तव्यापारो बलवत्तरः । प्रापय्य सप्तमीं यावज्जीवं नयति यः शिवम् ॥ ५५ ॥

श्रुत्वैवं मगधपतिः प्रमोदशाली व्याख्यान्ते स्वपुरमगाज्जिनं प्रणम्य । राजर्षिः स तु भगवान् प्रसन्नचन्द्रो निर्निद्रोदयमपुनर्भवं जगाम ॥५६॥

॥ इति प्रसन्नचन्द्रराजर्षिकथा ॥४६॥

चिरेण कर्म क्षपितम्, अनेन तु महात्मना तत्कालं बद्धं क्षपितं चेतिरूपं सच्चरितं प्रसन्नचन्द्रस्य राजर्षेः कथमाश्चर्यं न करोति ? अपितु करोतीति संक्षेपार्थः । व्यासार्थस्तु कथानकादवसेयः । तच्चैतत्;--

इहास्ति पोतनपुरं पुरं तत्र महीपतिः । प्रसन्नचन्द्र इत्यासीत् प्रसन्नश्चन्द्रवद् गुणैः ॥ १ ॥ तत्रैकदा पुरग्रामाकरद्रोणमुखादिषु ।
विहरन्नाजगाम श्रीवीरो देवासुरैर्वृतः ॥२॥ नगराद् बहिरीशान्यां दिशि देवा वितेनिरे । देशनासदनं स्वामी तदन्तर्निषसाद च ॥ ३ ॥ श्रुत्वा
स्वामिनमायातं पोतनाधिपतिर्नृपः । प्रणन्तुमाययौ पौरसामन्तामात्यसंयुतः ॥४॥ प्रणम्योचितभूपीठप्रतिष्ठेषु नृपादिषु । स्वामी चकार वैराग्य-
देशिनीं देशनामिति ॥ ५ ॥ जन्तुभिः पतितैरस्मिन्नगाधे भवनीरधौ । कथंचिद् मानुषं जन्म प्राप्यते यानपात्रवत् ॥ ६ ॥ प्राप्यापि तरकाण्डं
तद् गुरुं निर्यामकं विना । विना चारित्रमीहन्ते नानुकूलं किमप्यमी ॥ ७ ॥ इदं वारितदन्तादिभारमप्यङ्गवाहनम् । मृत्युभ्रष्टिं समारोप्य जरा-
वात्या विनाशयेत् ॥ ८ ॥ तद् यावद् न जरावात्या मृत्युभ्रष्टिश्च न कंचित् । तावच्चारित्रमादाय परं पारं प्रयात भोः ! ॥ ९ ॥ श्रुत्वेति देश-
नां सद्यो जातवैराग्यवैभवः । राजा व्रतमयाचिष्ट वीरं विरचिताञ्जलिः ॥ १० ॥ प्रतिवन्धं कृथा मेति नाथादेशादसावथ । गत्वा पुरे सुतं
वालमपि राज्ये न्यवेशयत् ॥ ११ ॥ सुतेन सह साम्राज्यधुरामारोप्य मन्त्रिषु । स्वयं व्रतधुरां धीरो वीरोपज्ञां बभार सः ॥ १२ ॥ तस्माद-
थ महावीरस्तेन राजर्षिणा सह । विहरन्नन्यदा प्राप पुरं राजगृहाभिधम् ॥१३॥ वैभारोदयशैले श्रीजिनेश्वरदिनेश्वरः । जगतां जनितश्रेयो-
वासरः समवासरत् ॥ १४ ॥ शैलपालात् तदाकर्ण्य राजा राजगृहेश्वरः । प्रचचाल प्रभुं नन्तुं सर्वद्धर्या सपरिच्छदः ॥ १५ ॥ रङ्गदुत्तुङ्गमा-
तङ्गमदामोदेन मेदिनीम् । वासयन् वासवः क्षोणेर्नगराद् निरगादयम् ॥ १६ ॥ राज्ञोऽग्रसैनिकौ तस्य नाम्ना सुमुखदुर्मुखौ । एकांह्रिणा त-
स्थिवांसं मुक्तौ गन्तुमिवोत्सुकम् ॥१७॥ लम्बितैकभुजं जन्तूनुद्धर्तुमिव दुर्गतेः । उदञ्चितैकपाणिं चोत्क्षेप्तुं तानेव सद्गतौ ॥ १८ ॥ दिवा-

क्रमेण प्राप समवसरणं स महीपतिः ॥ ३० ॥ पञ्चभिः कुलकम् ॥ स त्रिः प्रदक्षिणीकृत्य ववन्दे परमेश्वरम् । आसांचक्रे यथास्थानमास्थाने ऋद्धिगर्वितः ॥ ३१ ॥ तमृद्धिगर्वितं बोधपाकं शासितुमात्मना । अम्भोमयं विकृतवान् विमानं पाकशासनः ॥ ३२ ॥ स्फटिकाच्छपयोभित्तिप्रान्तकान्तमृणालिकम् । तदरालविचालस्थमरालमिथुनाद्भुतम् ॥ ३३ ॥ शिरस्थानीभवत्पद्मतन्नालस्तम्भशोभितम् । नीलवल्लीतुलं पद्मपरागोल्लोचरोचितम् ॥ ३४ ॥ उन्नीरशिखरप्रान्तकुम्भीभूताब्जकुड्मलम् । वीचिदण्डोपरिप्रेङ्खत्फेनकेतुपटोत्तरम् ॥ ३५ ॥ उपात्तोदारमन्दारपतत्कुसुमपूजितम् । सत्त्वैराम्भसिकैरुह्यमानं धुर्यैरिवोद्धतैः ॥ ३६ ॥ जलकान्तविमानं तत् शक्रोऽध्यास्त सहामरैः । चामरैरमरस्त्रीभिर्वीज्यमानः सहस्रशः ॥ ३७ ॥ पञ्चभिः कुलकम् ॥ गन्धर्वारब्धसङ्गीतदत्तकर्णो मनाग् मनाक् । मर्त्यलोकमवातारीदमर्त्याधिपतिस्ततः ॥३८॥ जाम्बूनदाम्बुजन्यस्तपादमष्टापदोन्नतम् । बिभ्राणं पार्श्वयोर्घण्टे सूर्याचन्द्रमसाविव ॥ ३९ ॥ देवदूष्यकुथच्छन्नपृष्ठं प्रष्ठं द्युकुम्भिनम् । मर्त्यलोकावतीर्णोऽथाध्यारुरोह पुरन्दरः ॥४०॥ युग्मम् ॥ गजाष्टदन्तीमाणिक्यवाप्यम्भोजेषु भूरिशः । द्वात्रिंशत्पात्रबन्धेन सङ्गीतमवधारयन् ॥४१॥ आगादथोपसमवसरणं भक्तिभावितः । जिनेन्द्रपादान् वन्दारुर्वृन्दारकशिरोमणिः ॥ ४२ ॥ युग्मम् ॥ गजस्थ एव सूत्रामा विमानेनानुगामिना । प्रत्यम्बुजं सुरस्त्रैणसंगीताद्वैतशालिना ॥ ४३ ॥ स त्रिः प्रदक्षिणीकृत्य स्वामिनो देशनासदः । उत्तीर्य च गजात् तत्र प्राविशत्सपरिच्छदः ॥ ४४ ॥ तत्र स्थितैः सुरनरैर्विस्मितैर्वीक्षितो हरिः । प्रभुं ननाम हारेण स्वस्तिकं रचयन् भुवि ॥ ४५ ॥ दशार्णभद्र इन्द्रस्य तया ऋद्ध्याथ दृष्टया । पुरऋद्ध्या ग्राम्य इव स्तम्भिताङ्गोऽभवत्क्षणम् ॥ ४६ ॥ दध्यौ चेति दशार्णेशो विस्मयस्मेरलोचनः । अहो ! शक्रविमानस्य शोभेयं भुवनाद्भुता ॥ ४७ ॥ अहो ! रुचिरगात्रत्वं सुरेन्द्रकरिणोऽस्य तु । अहो ! समृद्धिविस्तारः कोऽपि वास्तोष्पतेरयम् ॥ ४८ ॥ स्वसंपदभिमानोऽयं व्यधायि धिगहो ! मया । गोष्पदाब्ध्योरिवैतद्धि मम शक्रस्य चान्तरम् ॥ ४९ ॥ ऋद्धिगर्वादथ स्वात्मा हहा ! तु

अथ दशार्णभद्रश्लाघामुल्लाघयन्नाह;—

वंदे दसन्नभद्दं समसीसीए अहो सुरिंदस्स । घित्तूण तहा विरइं जेण पइन्ना सुनिव्वूढा ॥ ४५ ॥

[ वन्दे दशार्णभद्रं स्पर्धया अहो ! सुरेन्द्रस्य । गृहीत्वा तथा विरतिं येन प्रतिज्ञा सुनिर्व्यूढा ॥ ]

व्याख्या—'दसन्नभद्दं' दशार्णभद्रनामानं मुनिं 'वंदे' नमस्करोमि, 'जेण' येन 'पइन्ना' प्रतिज्ञा 'तथा श्रीवीरस्वामिनं वन्दिष्ये, यथासौ न केनापि वन्दितः' इति संधा, 'सुनिव्वूढा' सुष्ठु अतिशयेन निर्व्यूढा निर्वाहमनीयत । कया । 'समसीसीए' समशीर्षिकया स्पर्धया । 'अहो' इति विस्मये । कस्य । 'सुरिंदस्स' सुरेन्द्रस्य शक्रस्य । किं कृत्वा । 'घित्तूण' गृहीत्वा । काम् । 'विरइं' विरतिं प्रव्रज्याम् । कथम् । 'तहा' तथा तेन प्रकारेण सेन्द्रैरपि सुरैरसाध्येनेत्यर्थः । अविरता हि देवा देशविरतिमप्याप्तुमनलंभूष्णवः, क्व पुनः सर्वविरतिमिति संक्षेपार्थः । व्यासार्थस्तु कथानकादवसेयः । तच्चेतत्;—

दशार्णदेशभूसुभ्रूकिरीटप्रतिमं पुरम् । दशार्णपुरमित्यस्ति नेकरत्नविराजितम् ॥ १ ॥ दशार्णभद्र इत्यासीत् तत्रासीमयशा नृपः । संपदामेकवरिता सरितामिव सागरः ॥ २ ॥ एकदा तं सभासीनं सायमित्यूचिरे चराः । देव ! देवाधिदेवः श्रीवीरः प्रातरिहैष्यति ॥ ३ ॥ पयोदगर्जयेवाभूत् तद्गिरा भूविभू रयात् । धाराकदम्बवत्फुल्लपुलकाङ्कुरदन्तुरः ॥ ४ ॥ सभासमक्षमूचे च प्रगे ऋद्ध्या तया प्रभुम् । वन्दिष्ये न यया कश्चिद् ववन्दे त्रिजगत्यपि ॥ ५ ॥ इत्यमात्यादिकान् सर्वान् समुदीर्य विसृज्य च । प्रीतचेता जगामान्तःपुरं पृथ्वीपुरन्दरः ॥ ६ ॥ वन्दिष्ये भक्तिभागेवं स्तोष्ये चैवं प्रगे प्रभुम् । कथञ्चिदिति चिन्तावान् यामिनीं तामनीनयत् ॥ ७ ॥ रवावनुदितेऽप्येष समाहूय च भूयसः । आदिशन्नगराध्यक्षप्रभृतीनिति भूपतिः ॥ ८ ॥ मदीयसदनस्वामिसदसोरन्तरा चिरात् । कार्यं यानाय मे मुक्तदूषणं मार्गभूषणम्

रासभारोपितः सूर्पातपत्रस्तत्र पत्तने । वाद्यमानेन वाद्येनारेभे भ्रमयितुं भटैः ॥ ११३ ॥ कृतापराधः शुद्धान्ते वध्यतेऽसौ सुदर्शनः । नात्र दोषो नृपस्येति चक्रुराघोषणां च ते ॥ ११४ ॥ न युक्तं कृतवानेष नेह संभवतीदृशम् । अस्मिन् राजापि नेदृक्षः कुपितोऽत्र विधिः खलु ॥ ११५ ॥ धर्मो धिगस्य किं शेते पुराकर्म किमप्यदः । अयं मुच्येत नः सर्वद्रव्यैर्नो जीवितैरपि ॥ ११६ ॥ मिथो विचारयत्येव हाहाकारं च कुर्वति । पूर्जने रोदिति भ्राम्यन्नगादग्रे स्ववेश्मनः ॥ ११७ ॥ विशेषकम् ॥ अदृश्यत महासत्या स मनोरमया ततः । अचिन्ति च सदाचारो मत्पतिः किमिदं हहा ! ॥ ११८ ॥ इत्यन्तर्विवशा वेश्ममध्यमध्यास्य सत्वरम् । अर्चयित्वा जिनं कायोत्सर्गस्थेदमचिन्तयत् ॥ ११९ ॥ शृण्वन्तु भगवत्यः श्रीजिनशासनदेवताः ! । चन्द्रे लाञ्छनमस्तीदं सर्वथा मत्पतौ तु न ॥१२०॥ परमश्रावकस्यास्य साक्षिध्य चेत्करिष्यथ । तदाहं पारयिष्यामि कायोत्सर्गमिमं खलु ॥ १२१ ॥ अन्यथैवं स्थितिजुषोऽनशनं ध्रुवमेव मे । धर्मध्वंसे पतिध्वंसे किं जीवन्ति कुलस्त्रियः? ॥ १२२ ॥ मा क्षुथाः पुत्रि ! निर्वेदं भजिष्यामोऽखिलं वयम् । सा समाधिस्थिताऽश्रौषीद् गिरं दिव्यां कुतोऽप्यथ ॥ १२३ ॥ ततश्च न्यधुरारक्षाः शूलिकायां सुदर्शनम् । स्वर्णाम्भोजासनमभूदियं तस्य महात्मनः ॥ १२४ ॥ अथारक्षैर्वधायास्य दृढं व्यापारिता अपि । कण्ठपीठेऽसिदण्डानां प्रहारा हारतामगुः ॥ १२५ ॥ मौलौ मुकुटतां भेजुः कुण्डलत्वं च कर्णयोः । बाह्वोः केयूरतां भेजुः पादे कटकतां च ते ॥ १२६ ॥ तद् दृष्ट्वा चकितैरेतैर्विज्ञप्तो वसुधापतिः । आरुह्य करिणीं सोऽगाद् वेगादधिसुदर्शनम् ॥ १२७ ॥ व्रीडामुकुलितास्येन्दुस्तमालिङ्ग्य नृपोऽवदत् । दिष्ट्या न हि विनष्टोऽसि श्रेष्ठिन् ! आत्मप्रभावतः ॥ १२८ ॥ भवान् विनाश्यते क्वापि मादृशैरविवेकिभिः । धर्मो यस्याङ्गरक्षोऽस्ति जागरूकः सनातनः ? ॥ १२९ ॥ स्त्रीणां विवेकशस्त्रीणां वचनात्त्वां निहन्ति यः । अविमृश्यकरः पापी नापरो दधिवाहनात् ॥ १३० ॥ सुवंशजोऽप्यकृत्यानि कुरुते प्रेरितः स्त्रिया । स्नेहलं दधि मथ्नाति पश्य मन्थानको न किम् ? ॥ १३१ ॥ मया

किं नहि ? ॥ ९२ ॥ कियद्द्यापि सौभाग्यगर्वमुत्पाटयिष्यसि ? । इत्यालपन्ती सा पीनस्तनाभ्यां तमताडयत् ॥ ९३ ॥ इत्थं यथा यथा चक्रे सोपसर्गमनर्गला । सुदर्शनः शुभध्यानमारुरोह तथा तथा ॥ ९४ ॥ स दध्यौ चेति चेद् मुच्ये कथञ्चिदहमेतया । पारयामि तदुत्सर्गमन्यथाऽनशनं मम ॥ ९५ ॥ अमानिताथ घटितभ्रुकुटिः कुटिलाशया । तं भापयितुमारेभे भषन्ती निर्भयाऽभया ॥ ९६ ॥ त्वयीदमूषरे सर्वं मूर्ख ! रे वर्षितं मया । न वेत्सि मानिनी तुष्टाऽमृतं रुष्टा विषं पुनः ॥ ९७ ॥ चापस्येवाधुना जीवाधानं ते नमतो मयि । अन्यथा त्वध्वरे जात एवासीध्मं हविर्भुजः ॥ ९८ ॥ इत्थं यथा यथाऽभैषीदभया पातकाभया । तथा तथासौ सद्ध्यानमानशे निजमानसे ॥ ९९ ॥ विचक्रामाभया कामं विकला सकलां निशाम् । न चुक्षोभ त्वयादात्मदर्शनस्तु सुदर्शनः ॥ १०० ॥ ततः प्राभातिकीं वीक्ष्य रजनीं राजवल्लभा । विलक्षा स्वं विलिख्याशु नखैः पूत्कारमातनोत् ॥ १०१ ॥ आयान्ति स्म ततो यावद् यामिकास्तत्र संभ्रमात् । कायोत्सर्गस्थितं तावद् ददृशुस्ते सुदर्शनम् ॥ १०२ ॥ असिमन्न संभवत्येतदिति द्रुतमुपेत्य तैः । विज्ञप्तो भूपतिस्तत्राययौ पप्रच्छ चाभयाम् ॥ १०३ ॥ सोचेऽनुज्ञाप्य देव ! त्वामहं यावदिह स्थिता । आविर्भूतः पुरो भूत इवायं तावदीक्षितः ॥ १०४ ॥ ततः पटूनि चाटूनि कुर्वाणः स्मरघस्मरः । असौ पशुरिवोन्मत्तो मां रिरंसुरयाचत ॥ १०५ ॥ अनिच्छन्त्यां मयि ततो बलात्कारमय व्यधात् । मया च पूत्कृतं नान्यदबलानां बलं यतः ॥१०६॥ अस्मिन्निदमसंभाव्यमिति मत्वा महीपतिः । किमेतदिति पप्रच्छ सुदर्शनमनेकधा ॥१०७॥ पृष्टोऽपि राज्ञीकृपया किञ्चिद् नोचे सुदर्शनः । येनापकारिकाभ्योऽपि सन्तो हन्तोपकारिणः ॥ १०८ ॥ ततः संभावयामास दोषं तस्यैव भूपतिः । पारदारिकदस्यूनां तूष्णीकत्वं हि लक्षणम् ॥ १ ९ ॥ इति क्रुद्धः समादिक्षदखिलेऽप्यत्र पत्तने । दोषप्रख्यापनां कृत्वा दुष्ट एष निगृह्यताम् ॥११०॥ अथारक्षैस्ततो धृत्वा केशेष्वयमकृष्यत । यथा तथापि जायन्ते यौवने हि विगोपकाः ॥१११॥ स मुखे चर्चितो मष्या देहे चूर्णेन चित्रितः । बिल्वैरलंकृतो मूर्ध्नि कण्ठे निम्बदलस्रजा ॥११२॥

तत्र कामपि । पूजायै पण्डिता पर्वशर्वरीषु समानयत् ॥७३॥ तस्यामानीयमानायां प्रतिपर्वनिशं भृशम् । तया विश्वासमानीताः सर्वेऽन्तः-पुरयामिकाः ॥ ७४ ॥ एवंकारं व्यतीतेषु दिवसेषु कियत्स्वपि । विश्वानन्दी समागच्छत् कौमुदीयो महोत्सवः ॥ ७५ ॥ तदुत्सवाय राजाथ पटहोद्घोषपूर्वकम् । सर्वद्ध्योद्यानमाह्वास्त समस्तमपि पूर्जनम् ॥ ७६ ॥ प्रातरेष्यच्चतुर्मासधर्मकर्मकृते कृती । सोपायनो नृपं गत्वा पृच्छ-ति स्म सुदर्शनः ॥ ७७ ॥ अनुज्ञातो नृपेणाह्नि द्वितीये श्रीमदर्हताम् । अर्चा विरचयंश्चैत्यपरिपाटीं चकार सः ॥ ७८ ॥ ततो रात्रौ गृहीत्वैष पौषधं दुरितौषधम् । कायोत्सर्गेण कुत्रापि स्थितः शून्यगृहान्तरे ॥ ७९ ॥ इतोऽभयापि विहितशिरोऽर्त्तिच्छद्मना तदा । तस्थौ नृपतिमा-पृच्छ्य यदुत्पन्नधियः स्त्रियः ॥ ८० ॥ अथो सुदर्शनं याने न्यस्याच्छाद्य च वाससा । द्वाःस्थैरस्खलिता नीत्वाऽभयायै पण्डिताऽऽर्पयत् ॥८१॥ तमस्पष्टात्तरोल्लापा सा पाणिप्रणयीकृतम् । स्विद्यन्ती कम्पमानाथ प्रार्थयत्पार्थिवप्रिया ॥ ८२ ॥ मामकीनमनोमीनं वसन्तं रागसागरे । अग्रहीद् गुणजालेन धृतस्तेनासि धीवर ! ॥ ८३ ॥ क्षिप्तो हृच्चत्वरे वाढं बाहुपाशेन बन्धनम् । मत्तो नवनवस्फारं मारकर्म च लप्स्यसे ॥ ८४ ॥ पुंनागस्यास्य सुमनःकृष्टिमाधातुमुच्चकैः । गिरं व्यापारन्तीति कुटिलामङ्कुटीमिव ॥ ८५ ॥ स्कन्धे ललम्बे बाहुभ्यां मृदुलाभ्यां मृणालवत् । रम्भास्तम्भाभिरामाभ्यामूरुभ्यां मध्यमग्रहीत् ॥ ८६ ॥ चतुर्भिः कलापकम् ॥ ततः सुदर्शनोऽत्यर्थं समाधिस्तिमितोऽभवत् । वर्षासरित्परीरब्धः किमब्धिस्तरलायते ? ॥ ८७ ॥ पुनरप्यभयाऽवादीदनादीनत्वभावयुक् । प्रसीद नाथ ! सीदन्तीमिति मां किमु-पेक्षसे ? ॥ ८८ ॥ मन्मथो हन्ति मां हन्त दुर्वारप्रसरैः शरैः । सनाभिरसि तस्यातः पाहि मां शरणागताम् ॥ ८९ ॥ आनीतश्छद्मनासीति कोपं मा स्म वृथा कृथाः । बद्ध्वाऽऽनीतो नदीपूरः प्रजाशाः किं न पूरयेत् ? ॥ ९० ॥ व्रतकष्टमिदं मुञ्च मत्प्राप्त्या फलितं ह्यदः । स्वर्गापवर्गयोर्वार्ता स्मार्तानां गल्लझल्लरी ॥ ९१ ॥ ताम्यन्तीं याचमानां मां नम्रां मानय मानद ! । दैवात् करमुपायातां सुधां पिबसि

स्मित्वाऽभयाऽवोचत् पुमान् किं न सुदर्शन' ? । साऽवादीद् नैव राज्ञ्यूचे चतुरे ! वेत्स्यदः कथम् ? ॥५३॥ इत्युक्ता स्वानुभूतं साऽभयायै कपिला ततः । सुदर्शनस्य षण्ढत्ववृत्तान्तं तत्तथा जगौ ॥ ५४ ॥ अभयाप्यब्रवीदेवं यद्येवं वञ्चिताऽसि तत् । मूढे ! षण्ढोऽयमन्यस्त्रीजने नात्म-मृगीदृशि ॥ ५५ ॥ अतो विलक्षा कपिलाऽप्यब्रवीदित्यसूयया । वञ्चिता चेदहं मूढा प्रौढायाः किं तवाधिकम् ? ॥ ५६ ॥ अभयोचे मया चन्द्रकलयेव कराश्रितः । असंज्ञोऽपि द्रवेद् ग्रावा ससंज्ञः किं पुनः पुमान् ? ॥५७॥ सेर्ष्यमूचेऽथ कपिलाऽप्येवं मा गर्वमुद्वह । गर्वं वहसि चेद् देवि ! रम्यतां तत्सुदर्शनः ॥५८॥ व्याजहाराभया देवी साहंकारमिदं ततः । हले ! रमितमेवैनं मया विद्धि सुदर्शनम् ॥५९॥ योषाभिः पशु-वेषाभिरपि ते मुनयो वने । नीरसा अप्यरम्यन्त क्वासौ स्मरवशो गृही ? ॥६०॥ विलसामि न यद्येनं तद् विशामि हुताशनम् । इत्यालपन्त्या-वुद्यानं प्रपेदाते क्षणेन ते ॥ ६१ ॥ चिरं चिक्रीडतुस्तत्रोद्याने वानेयसंपदा । अभयाकपिले श्रान्ते निशान्ते जग्मतुस्ततः ॥ ६२ ॥ अभयात्म-प्रतिज्ञातमथ मन्मथजीवितम् । उपायपण्डितायै तत्पण्डितायै न्यवेदयत् ॥६३॥ अथैतां पण्डिता प्राह खण्डिताननदीधितिः । पात्रापात्रमनालोच्य धिक् प्रतिज्ञामिमां तव ॥ ६४ ॥ अन्योऽपि परनारीषु सोदरः श्रावको भवेत् । असौ किं नु महासत्त्वाशिरोरत्नं सुदर्शनः ? ॥ ६५ ॥ सदा गुरुकुलासेवी ध्यानमौनरतः सदा । आनेतुमभिसर्तुं वा स कथं नाम युज्यते ? ॥ ६६ ॥ वरं सिंहसटासर्पफणारत्नग्रहाग्रहः । न तु शील-विलोपाय प्रतिज्ञातः सुदर्शनः ॥ ६७ ॥ जिनाधिवासितोऽप्यन्तर्गभीरोऽपि सरित्पतिः । क्षये त्यजति मर्यादां न तथापि सुदर्शनः ॥ ६८ ॥ सदैन्यमभयाऽवादीदेकवेलं कथञ्चन । आनयैनं ततः सर्वं भलिष्यामि न ते च्छलम् ॥ ६९ ॥ अथो तथोदयत्प्रज्ञामण्डिता प्राह पण्डिता । निश्चयश्चेत्तवायं तदस्त्युपायो मया स्मृतः ॥ ७० ॥ पर्वाहे शून्यगेहादौ कायोत्सर्गं करोति सः । आनेतव्यो यदि परं तथास्थो नान्यथा पुनः ॥७१॥ उपायः साधु साध्वस्मिन् यतितव्यं त्वयानिशम् । इत्युक्तवत्यां तात्पर्याद् देव्यामामेत्युवाच सा ॥७२॥ सुदर्शनसमां कामप्रतिमां

सुतोपमाः । नखाश्चिन्तामणिसखास्त्वक् कल्पद्रुप्रवालरुक् ॥ ३४ ॥ अस्मिन् गुणमये प्राप्तलीलः शीलगुणो महान् । मुक्तास्थाले यथा रत्न-
मिन्दुकान्तममूल्यकम् ॥ ३५ ॥ श्रुत्वेति कपिला कामविह्वला तद्गुणश्रवात् । सुदर्शनेऽभिसर्तुं सा चक्रे चिन्तामहर्निशम् ॥ ३६ ॥ अन्यदा
नृपतेर्गूढादेशाद् ग्रामान्तरं गते । कपिले कपिलेयाय सुदर्शनमुवाच च ॥ ३७ ॥ अद्य ते सुहृदो देहापाटवं तेन ते गृहम् । नाययौ त्वां समा-
ह्वातुमातुरो मां न्ययोजयत् ॥३८॥ हा ! न वेद्मीदमित्युक्त्वा तं गृहं द्रुतमागतम् । नीत्वैकान्ते वृषस्यन्ती कपिला प्रार्थयत् किल ॥३९॥ पतितः
संकटे तस्याः स्मित्वोवाच सुदर्शनः । भद्रे ! युक्तमिदं यूनां भवस्यापि फलं ह्यदः ॥ ४० ॥ षण्ढः परमहं मूढे ! पुंरूपेण ममामुना । फलेन
शाल्मलितरोः शुकस्त्रीवाऽसि वञ्चिता ॥ ४१ ॥ ततो विरक्ता सा सद्यो याहि याहीति भाषिणी । द्वारमुद्घाटयामास निर्ययौ च सुदर्शनः ॥४२॥
स्तोकेन दुर्गतेर्द्वाराच्छुटितोऽस्मीति चिन्तयन् । कल्याणीशीलवृत्तिः स्वं धाम धीमानयं गतः ॥ ४३ ॥ नार्योऽनार्यौचितीशीलाः कीला इव
हविर्भुजः । भस्मतां मेलयन्त्यात्मपराश्रयमसंस्तुताः ॥४४॥ एताभ्यो भीरुरस्मीति विमृश्याथ सुदर्शनः । प्रत्यज्ञासीत् परगृहे नैको यास्याम्यतः
परम् ॥ ४५ ॥ देहबद्ध इव न्यायो विवेक इव मूर्तिमान् । प्रत्यक्ष इव धर्मोऽसौ नावद्यं किञ्चिदाचरत् ॥ ४६ ॥ यथाकालमथायाते तत्र चेन्द्रमहो-
त्सवे । सुदर्शनपुरंधाभ्यां सहोद्यानं ययौ नृपः ॥ ४७ ॥ इतो नरविमानस्थाऽभया कपिलयान्विता । शरल्लक्ष्मीरिवोत्फुल्लनयना नृपमन्वगात्
॥४८॥ सुदर्शनप्रिया षड्भिः समं पुत्रैर्मनोरमा । तत्रागाद् यानमारुह्य धर्मसंपद् गुणैरिव ॥४९॥ अभयां कपिलाऽपृच्छत् षट्पुत्रा केयमङ्गना ? ।
महादेवीव देहैक्यात् किमत्र षण्मुखान्विता ? ॥ ५० ॥ राज्यलक्ष्मीरिव गुणैः सुतैः षड्भिरियं युता । सुदर्शनप्रियाऽज्ञायि न त्व-
येत्यभयाऽवदत् ॥ ५१ ॥ श्रुत्वेति विस्मिता स्माह कपिला देवि ! यद्यसौ । सुदर्शनस्य गृहिणी तदस्यास्तनयाः कुतः ? ॥ ५२ ॥ अथ
॥ ३२ ॥ सैष रूपेण पञ्चेषुस्तेजसा तेजसां पतिः । सौन्दर्येण शरच्चन्द्रो गाम्भीर्येण तु वारिधिः ॥ ३३ ॥ दानिनोऽस्य करेऽङ्गुल्यः कामधेनु-

मुच्यते पञ्चपरमेष्ठिनमस्कृतेः । अस्या यस्याः प्रभावेण किङ्करीक्रियते जगत् ॥ १४ ॥ विधेयं साधु यत्प्राप्ता पठ किन्त्वखिलामिमाम् । उच्छिष्टो मा जपेः श्रेयः परत्रेह च ते यथा ॥ १५ ॥ सोऽथ शेषनमस्कारमधीत्य श्रेष्ठिनो मुखात् । परावर्तयताजस्रं धनं प्राप्येव निर्धनः ॥ १६ ॥ एवं तस्य नमस्कारजापव्यापारिणः सतः । कियत्यपि गते काले वर्षाकालः समाययौ ॥ १७ ॥ नीचैस्तराण्यथो नीचैरुच्चैरुच्चैस्तराण्यथ । तदानीमेकदानीव घनः स्वीयश्रियाऽधिनोत् ॥ १८ ॥ गृहाद् गृहीत्वा महिषीर्जगाम सुभगो वनम् । नदीं तीर्त्वा महिष्यस्तु परक्षेत्रे तदाविशन् ॥ १९ ॥ दृष्ट्वा ताः सुभगः शीघ्रं नमस्कारपरायणः । दत्तझम्पो नदीपूरे विद्धः कीलेन केनचित् ॥ २० ॥ तथैवावर्तयन् पञ्चपरमेष्ठि विपद्य सः । श्रेष्ठिपत्न्यास्ततः कुक्षौ तत्प्रभावादवातरत् ॥ २१ ॥ तस्मिन् गर्भगते श्रेष्ठी देवसंघार्चनादिकान् । पत्न्या ऋषभदासोऽथ पूरयामास दोहदान् ॥ २२ ॥ सार्हद्दासी ततः पुत्रमसूत शुभलक्षणम् । पुत्रजन्मोत्सवं श्रेष्ठी यथावैभवमातनोत् ॥ २३ ॥ पितृभ्यां सोत्सवं क्लृप्तनामा सैष सुदर्शनः । वर्धमानः क्रमेणेन्दुरिवाप सकलाः कलाः ॥ २४ ॥ कन्यां मनोरमा नाम्ना मनोरमकुलोद्भवाम् । रतिं स्मरमिव श्रेष्ठी तमथो पर्यणाययत् ॥ २५ ॥ पित्रोर्न केवलं नेत्रे कुमुदानन्दमिन्दुवत् । चक्रे राज्ञोऽपि लोकस्य सर्वस्यापि सुदर्शनः ॥ २६ ॥ इतो नगर्यां तत्राभूद् दधिवाहनभूपतेः । पुरोधाः कपिलः सोऽधात् सौहृदं श्रेष्ठिसूनुना ॥ २७ ॥ अर्जुनस्य विधुः पञ्चशरस्य च विधुर्यथा । सुदर्शनस्य स प्रायः परिपार्श्वमवर्तत ॥ २८ ॥ कपिलं कपिलानामा भार्याऽपृच्छत् तमन्यदा । विस्मरन् नित्यकृत्यानि क्वैयत्कालं विलम्बसे ? ॥२९॥ पार्श्वे सुदर्शनस्याहं तिष्ठामीति तदीरिते । कोऽसौ सुदर्शन इति तयोक्तः प्रत्युवाच सः ॥ ३० ॥ मम मित्रं सतां धुर्यं विश्वैकप्रियदर्शनम् । सुदर्शनं न चेद् वेत्सि तत् त्वं वेत्सि न किञ्चन ॥ ३१ ॥ तं ज्ञापयाधुनापीति तयोक्तः कपिलोऽवदत् । असावृषभदत्तस्य श्रेष्ठिनस्तनयो नयी

---

१ क. स्वर्णश्रि° ।

[ भवभ्रमणनिर्भययाऽभयया पातितोऽपि तथा विषमे । निर्व्यूढोऽसि सुदर्शन ! तव कीर्तिस्तेन मामहीति ॥ ]

व्याख्या—हे सुदर्शन ! भवभ्रमणनिर्भयया अभयया 'तह विसमे' तथा तेन निरपायचतुरुपायसारेण प्रकारेण विषमे संकटे वह्नाविव कनकपिण्डः 'पडिओवि' पातितोऽपि, यत्तदोर्नित्यसंबन्धत्वात्, येन 'निव्वूढो सि' निर्व्यूढोऽसि तस्माद् विषमादिति भावः विशेषमहिमानमादाय निःसृतोऽसि । 'तुह कित्ती तेण महमहइ' तव कीर्तिस्तेन हेतुना बहुलपरिमला प्रसरतीति संक्षेपार्थः । व्यासार्थस्तु कथानकादवसेयः । तच्चैतत्;—

अस्त्यङ्गदेशे दत्तारिकम्पा चम्पाभिधा पुरी । दुग्धोदधियशास्तस्यां नृपोऽभूद् दधिवाहनः ॥१॥ अभया विभया स्वास्यदासितेन्दुः प्रियास्य तु । रूपलावण्यकलिता कैटभारेरिवेन्दिरा ॥ २ ॥ इतस्तस्यां पुरि श्रेष्ठी गरिष्ठो धर्मशालिनाम् । अभूद् वृषभदासोऽस्यार्हद्दासीति प्रिया सती ॥ ३ ॥ श्रेष्ठिनस्तस्य महिषीपाल' सुभग इत्यभूत् । निनाय महिषीर्नित्यं स तु चारयितुं वने ॥ ४ ॥ माघमासे वनादेष निवृत्तः सायमन्यदा । अप्रावरणमद्राक्षीत् कायोत्सर्गस्थितं मुनिम् ॥ ५ ॥ अस्यां हेमन्तरात्रौ यः स्थाता स्थाणुरिव स्थिरः । असौ धन्यो महात्मेति चिन्तयन् स गृहं ययौ ॥ ६ ॥ महर्षिं हर्षितमहाहिमानीवर्षवेदनम् । तमेवार्द्रमना ध्यायन् यामिनीं तामनीनयत् ॥ ७ ॥ निशायामविभातायामादाय महिषीस्ततः । स ययौ तत्र यत्रास्ति स मुनिः प्रतिमास्थितः ॥ ८ ॥ नतिमानतिमात्रं तमुपासामासिवानसौ । तदास्यस्पर्धयेवार्क उदयौ तदुपास्तये ॥ ९ ॥ स 'नमो अरिहंताणं' इत्युक्त्वोदपतद् मुनिः । तत्पदं खेचरीविद्याधियान्तः सुभगस्त्वधात् ॥ १० ॥ स्वपञ्जाग्रन्नदंस्तिष्ठन्नक्रमहि गृहे बहिः । तदेवापठदुच्छिष्टोऽप्येकग्राहा हि तादृशः ॥ ११ ॥ पप्रच्छ विस्मितः श्रेष्ठी तत्प्रवृत्तिमय ततः । शशंस तत्तथोद्भूतां श्रेष्ठी पुनरुवाच तम् ॥ १२ ॥ आकाशगमने हेतुरसौ विद्या न केवलम् । किन्तु हेतुरसावेव गतौ स्वर्गापवर्गयोः ॥ १३ ॥ किमेक-

दुर्जनः सद्गुणानिव । विषेहे स तु मेतार्यः कलादस्य कदर्थनम् ॥२०॥ स यावज्जात्यहेमेव ताड्यमानोऽपि नास्फुटत् । कलादेनामुना तावत् माराङ्कमुपचक्रमे ॥ २१ ॥ वेष्टयित्वाभितो वध्रं नीरन्ध्रं मूर्ध्नि स क्रुधा । कीलौ मुनिवृषस्यास्य निचखान विषाणवत् ॥ २२ ॥ यथा यथा व्यथा जज्ञे मुनिरेष तथा तथा । प्रमोदमैत्रीकारुण्योपेक्षापुण्योऽभवद् भृशम् ॥ २३ ॥ कर्मकीलानपाकर्तुमाहत्य प्रतिकीलिकाः । वरं कार्यो हठीतोऽस्मि कृष्यमाणो मुधाऽमुना ॥ २४ ॥ निर्निमित्तोपकार्येष निःशेषदुरितापहम् । कथञ्चनापि कल्याणीबोधिरत्नमवाप्नुयात् ॥ २५ ॥ मे तार्यः सकलो लोको वराकोऽयं तु मज्जति । वृथा मेतार्यनामाहमेतस्मिन्नभवं हहा ! ॥ २६ ॥ देहोऽयं याति तद् यातु यद्यस्त्येष तदस्तु वा । किमस्य चिन्ता ह्यस्माक स्थित्वाऽर्धः श्वोऽपि यास्यति ॥ २७ ॥ इत्यस्य ध्यायतः पत्तपुटतो निःसृते दृशौ । एतत्समोऽस्ति कोऽप्यन्य इतीव बहिरीक्षितुम् ॥ २८ ॥ क्षपकश्रेणिनिःश्रेणिमथारोहन्नयं मुनिः । केवलं गुणमासाद्य सद्यो लोकाग्रमीयिवान् ॥ २९ ॥ तदानीं स्वर्णकृद्गेहप्राङ्गणे कश्चिदक्षिपत् । इन्धनं तद्भटत्कृत्या भीतः क्रौञ्चोऽवमद् यवान् ॥ ३० ॥ तान् विलोक्य जनः क्रोशन् निनिन्द मुनिघातकम् । निजेन कर्मणा सोऽपि मर्षालिप्त इवाभवत् ॥ ३१ ॥ राज्ञा विज्ञाय तत्तूर्णं स्वर्णकारं निशुम्भितुम् । प्रेषिताः पुरुषाः प्रादुरुत्क्रोशन्त इवारयः ॥३२॥

संसारस्य नृपस्य च प्रतिभयादुत्पन्नधीः स्वर्णकृत् श्रामण्यं सकुटुम्बकोऽपि स निजावासे समासेदिवान् ।
मुक्तः क्षोणिभुजा तदैव यतिरित्येतद् वयं मन्महे संसारेण तु मोक्ष्यते कचिदसौ जानाति तत्केवली ॥ ३३ ॥

अथ तदसीमशीलगुणध्यानप्रधानमानस संजातपुरोदर्शनमिव सुदर्शनमभिनन्दयन्नाह,—

भवभमणनिब्भयाए अभयाए पाडिओवि तह विसमे । निव्वूढो सि सुदंसण ! तुह कित्ती तेण महमहइ ॥४४॥

'मे अज्जवि तं चमक्केइ' ममाद्यापि तच्चमत्करोतीति संक्षेपार्थः। व्यासार्थस्तु कथानकादवसेयः। तच्चैतत्;—

अस्ति राजगृहं नाम पुरं तिलकवद्भुवः। यत्र मुक्तापरीवेषः शालवेषः प्रकाशते ॥१॥ तत्र वित्रासितारातिश्रेणिः श्रेणिक इत्यभूत्। राजा सुकृतसंदर्भराजितः परमार्हतः ॥ २ ॥ त्रिसंध्यमर्चयित्वार्हदर्चां तस्याः पुरोऽन्वहम् । स्वस्तिकं कुरुते स्वर्णयवैरष्टशतेन सः ॥ ३ ॥ पुरेऽस्मिन्नेकदैकाकिविहारप्रतिमास्थितः। मेतार्यो दशपूर्व्यागादर्यमेव तमोऽपहः ॥ ४ ॥ वैभारभूधरे कृत्वा स मासक्षपणं प्रभुः। सैंहीं वृत्तिं प्रपेदानः पारणायाऽविशत्पुरीम् ॥ ५ ॥ स्वामीर्यासमितो भ्राम्यन्नेषणावीक्षणापरः। राज्ञः सुवर्णकारस्य गृहाङ्गणमयं गत. ॥ ६ ॥ दरिद्रस्येव कल्पद्रुरन्धस्येव सुधाकरः। मेतार्यपादास्तिष्ठन्तो रेजिरेऽस्य गृहाङ्गणे ॥७॥ देवतावसरायोर्वीपतेः स्वर्णयवान् कृतान्। विमुच्य स्वर्णकारोऽयं गृहान्तरविशत्तदा ॥ ८॥ भ्राम्यन्नभ्येत्य तत्क्रीडाक्रौञ्चः पक्षी क्रमिभ्रमात्। जवादेव यवानेतानपचूर्णमचूनयत् ॥ ९ ॥ यावत्सुवर्णकारोऽपि गृहमध्यादुपाययौ। नालुलोके यवांस्तावद् दध्यौ चेति चमत्कृतः ॥ १० ॥ एतावन्मात्रकाले हा! ययुः क्व नु यवा मम?। देवार्चासमयश्चायं नान्यान् घटयितुं सहे ॥११॥ इहापराधे हा हन्त राजान्तक इव क्रुधा। मां विमुच्यापरं दण्डं नवखण्डं विधास्यति ॥१२॥ तदेनं सत्यवचनं मुनिं पृच्छामि तत्कथाम्। असौ तन्नाशसाक्षी यत् कर्मसाक्षीव भूचरः ॥१३॥ ध्यात्वेति दीनवदनोऽभिसृत्य मुनिमब्रवीत्। यवाः केन गृहीता मे प्रसीद कथय प्रभो! ॥१४॥ शृण्वन्नपि मुनिश्रेयानशृण्वन्निव तद्गिरम् स क्रौञ्चकृपया भेजे मौनं सर्वार्थसाधनम् ॥१५॥ क्रियासमभिहारेण पृच्छ्यमानोऽपि नावदत्। यदा तदामुनाऽशङ्कि खल्वयं यवतस्करः ॥१६॥ गृहान्तरा दुरात्मासौ ततः सौवर्णिको मुनिम्। नीत्वा रूक्षाक्षराक्षेपपूर्वं पप्रच्छ तत्कथाम् ॥ १७ ॥ यावत्तथापि नाशंसद् महात्मासौ कृपापरः। तावत्कुट्टयितुं तेन प्रारेभे यष्टिमुष्टिभिः ॥ १८ ॥ घटी हरति तोयानि ताड्यते झल्लरी यथा। दीपालिकाऽत्ति पिबति सूर्पो वा कुट्यते यथा ॥ १९ ॥ तथा क्रौञ्चो यवानश्नाद्

नैतस्याः प्रीतिहेतुस्ततोऽन्यतः । यामो ध्यात्वेति जग्मुस्ते तदासन्नं नगान्तरम् ॥ २१२ ॥ कृत्वा मनसि तत्रत्यदेवतां साधवो व्यधुः । कायोत्सर्गमथागत्य नत्वा तानित्युवाच सा ॥ २१३ ॥ अनुग्रहोऽयमस्माकमिह यूयं यदागताः । असंभवो हि मलयतरूणां मरुमण्डले ॥ २१४ ॥ त एवं तद्गिरा प्रीताः श्रीवज्रस्वामिना समम् । कृतानशनकर्माणः सत्कर्माणो दिवं ययुः ॥२१५॥ मत्वैतद् गोत्रभिद् गोत्रं तमागत्य रथस्थितः। प्रमोदात् पूजयामास वज्रादीनां वपूंष्यथ ॥ २१६ ॥ शक्रः प्रदक्षिणीचक्रे तं गिरिं सरथस्तदा । शाखिनो नमयन्नुच्चैः स्वदेहमिव भक्तितः ॥ २१७ ॥ विनम्रा एव तेऽद्यापि विद्यन्ते तत्र पर्वते । ततस्तस्याभिधा जज्ञे रथावर्त इति क्षितौ ॥ २१८ ॥

याते दिवं मुनिपताविह वज्रनाम्नि दुष्कर्मपर्वतघटादलनैकवज्रे ।
विच्छेदमाप दशमं किल पूर्वमुर्व्यां दुःखादिवास्य बत संहननं च तुर्यम् ॥ २१९ ॥

॥ इति वज्रस्वामिकथा ॥४२॥

---

अथ सविस्मयं मुनिजनार्यमेतार्यगुणचर्यामाह;—

दिढसिरवेढनिपीडणनिग्गयनयणोवि जं न परिकुविओ । मेअज्जखमासमणो मे अज्जवि तं चमकेइ ॥ ४३॥

[ दृढशिरोवेष्टनिपीडननिर्गतनयनोऽपि यद् न परिकुपितः । मेतार्यक्षमाश्रमणो मेऽद्यापि तच्चमत्करोति ॥ ]

व्याख्या—'मेअज्जखमासमणो' मेतार्यनामा क्षमाश्रमणो महामुनिः 'दिढत्ति' दृढश्चासौ शिरसो वेष्ट आर्द्रचर्मबन्धनं दृढशिरोवेष्टः, तेन निपीडनं तन्निपीडनं तेन निर्गते निःसृते नयने नेत्रे यस्य स तथा, अपीत्यतिशये, इत्थंभूतोऽप्यसौ 'जं न परिकुविओ' यन्न परिकुपित,

वत्स ! सांप्रतं विहरान्यतः ॥ २७२ ॥ लक्षमूल्यौदनाद् भिक्षां यत्राह्नि त्वमवाप्नुयाः । सुभिक्षमवबुध्येथास्तदुत्तरदिनोषसि ॥ २७३ ॥ सोपा-
रकपुरे श्रेष्ठी जिनदत्तो महाधनः । भार्यया सममीश्वर्या चतुर्भिश्च सहाङ्गजैः ॥ २७४ ॥ त्वत्सुभिक्षोपदेशेन निवृत्त्यापमृतेः कृती । आदास्यते
व्रतं त्वत्तो मर्त्यजन्मतरोः फलम् ॥ २७५ ॥ युग्मम् ॥ चत्वारो भवितारस्तत्सुता गच्छादिकन्दलाः । नागेन्द्रचन्द्रौ विद्याभृन्निर्वृती नामतश्च
ते ॥ २७६ ॥ एवमादि समादिश्य स्वामिना प्रेषितस्ततः । विहर्तुं वज्रसेनोऽपि प्रावृतद् नीवृतोऽभितः ॥ २७७ ॥ भिक्षामलभमानास्तु
दुर्भिक्षे वज्रसाधवः । अन्वहं गुरुभिर्दत्तं विद्यापिण्डमभुञ्जत ॥ २७८ ॥ द्वादशाब्दानि भोक्तव्यः पिण्डोऽयं वस्ततो यदि । संयमस्य न
बाधास्ति तमाहृत्य ददाम्यहम् ॥२७९॥ नो वा तदा सहास्नेन तनोस्त्यागं विदध्महे । इत्युक्ता गुरुभिर्धर्ममतयो यतयोऽभ्यधु ॥२८०॥ युग्मम् ॥
धिक् पाषाणमिमं पिण्डं पिण्डपोष्यमिदं च धिक् । प्रभो ! प्रसीद येनैतत् त्यजामो द्वितयं वयम् ॥ २८१ ॥ अथादाय मुनीन् वज्रो वालि-
खिल्यानिवार्यमा । गिरिं प्रत्यचलल्लोकान्तरं द्योतयितुं जवात् ॥ २८२ ॥ तत्रैकः क्षुल्लको नास्थाद् वार्यमाणो यदा तदा । क्वापि प्रतार्य तं
ग्रामे समारोहद् गिरिं गुरुः ॥ २८३ ॥ क्षुल्लकश्चानुपदिकीभूयाऽऽगात् तद्गिरेरधः । मा भूद् गुरूणामप्रीतिरिति तत्रैव चास्थित ॥ २८४ ॥
मध्याह्नक्रूरसूरांशुतापाद् म्रक्षणपिण्डवत् । विलीय विमलात्माऽसौ तत्क्षणाद् दिवमीयिवान् ॥ २८५ ॥ तदीयसत्त्वसंभारचमत्कारवशंवदाः ।
त्रिदशाः पूजयामासुराशु तस्य कलेवरम् ॥ २८६ ॥ श्रीवज्रं यतयोऽप्यूचुः प्रेक्ष्यावतरतः सुरान् । किमत्रावतरन्त्येते देवाः सर्वर्द्धयः प्रभो ! ?
॥ २८७ ॥ सोऽप्यूचे क्षुल्लकः कार्यमिदानीं स्वमसाधयत् । महिमानं ततस्तस्य सुपर्वाणः प्रकुर्वते ॥ २८८ ॥ श्रुत्वैवं मुनयो दध्युः शिशुनाप्य-
मुना यदि । स्वकार्यं साधितं वृद्धाः साधयामो न किं वयम् ? ॥ २८९ ॥ इति संवेगिनः साधूंश्चारित्रज्ञानयोगिनः । श्रावकीभूय तत्रैवं
मिथ्यादृग् देवताऽवदत् ॥ २९० ॥ पारणं भवतामद्य भगवन्तः ! प्रसीदत । गृह्णीत शर्कराक्षोदमोदकान् पानकं च नः ॥ २९१ ॥ अवग्रहोऽयं

दत्स्व सर्वविश्वहितं व्रतम् ॥ २५३ ॥ श्रुत्वेत्यूचेऽमुना देहि तदानीमार्यरक्षितः । स्वयं तमनुजग्राह दीक्षया शिक्षयापि च ॥ २५४ ॥ यातुमुत्कोऽन्यदा फल्गुरक्षितेनार्यरक्षितः । अधीतानेकयमको गन्तुमूचे पुनर्गुरुम् ॥ २५५ ॥ तन्निषिद्धस्त्वधीयानो यमकेभ्यः पराजितः । सोऽपृच्छद् गुरुमद्यापि शिष्यतेऽदः श्रुतं कियत् ? ॥ २५६ ॥ सस्मितं गुरुरप्याह पूर्वमेतद् तवाग्रिमम् । बिन्दुमात्रं त्वयाऽधीतमब्धितुल्यं तु शिष्यते ॥ २५७ ॥ शेषमध्यचिरेणापि त्वमागमयसि श्रुतम् । धीमन्नधीत्र धीरोऽसि किमकाण्डे विषीदसि ? ॥ २५८ ॥ एवमाश्वासितस्तेन गुरुणा करुणावता । पुनः प्रवृत्तः सोऽध्येतुं भग्नोत्साहोऽपि भक्तिभाक् ॥ २५९ ॥ फल्गुरक्षितमन्येद्युर्मूर्तिमद्बन्धुवाचिकम् । दर्शयन्नुत्सुको गन्तुं श्रीवज्रं स पुनर्जगौ ॥ २६० ॥ अयमुत्साह्यमानोऽपि हन्त ! गन्तुमनाः कथम् ? । एवं विचिन्तयन् वज्रस्वाम्यभूदुपयोगभाक् ॥ २६१॥ सोऽथामंस्तेत्यतो यातो नायमायास्यति ध्रुवम् । स्तोकमायुश्च मे पूर्वं मय्येव दशमं स्थितम् ॥२६२॥ अनुज्ञातस्ततस्तेन गमनायार्यरक्षितः । सफल्गुरक्षितः शीघ्रं पुरं दशपुरं ययौ ॥ २६३ ॥ तत्राभ्युपेत्य भूभर्त्रा मात्रा पित्रा च बन्धुभिः । पौरैश्च वन्दितश्चक्रे देशनामार्यरक्षितः ॥ २६४ ॥ प्रबुध्य तद्गिरा राजा सम्यक्त्वमपरे पुनः । पित्राद्या बन्धवश्चास्य प्रव्रज्यां प्रतिपेदिरे ॥ २६५ ॥

इतश्च विहरन् वज्रः प्रययौ दक्षिणापथम् । घनागमेऽत्र केकीव विवेकी मुमुदे जनः ॥ २६६ ॥ श्लेष्मबाधोदयेऽन्येद्युः शुण्ठीमानाय्य साधुना । भुक्त्वैतां भक्षयिष्यामीति स्वामी श्रवसि न्यधात् ॥ २६७ ॥ भक्षितुं विस्मृता सा च स्वामिनोऽध्ययनादिना । मुखवस्त्रिकया कायं प्रत्युपेक्षयतोऽपतत् ॥ २६८ ॥ पतितां तां च खाट्कृत्यास्मरद् वज्रो मुनीश्वरः । हाहा धिग् धिक् प्रमादोऽय ममेति स्वं निनिन्द च ॥ २६९ ॥ प्रमादे संयमो न स्याद् निष्कलङ्कः कथंचन । तं विना मानुषं जन्म जीवितं च निरर्थकम् ॥ २७० ॥ कुर्मस्ततो वपुस्त्यागं वज्रस्वामीत्यचिन्तयत् । अजायत समन्ताच्च दुर्भिक्षं द्वादशाब्दिकम् ॥ २७१ ॥ वज्रसेनाभिधं शिष्यं स्वाम्यथ श्रुतपारगम् । इत्यादिदेश त्वं

सह वज्रेण तमनु म्रियते हि सः ॥ २३४ ॥ एवं करिष्येऽहमिति प्रतिपद्यार्यरक्षितः । तेषां निर्यमणां कृत्वा पुरीं वज्राश्रितां ययौ ॥ २३५ ॥ नगर्या वहिरेवास्थात् तां निशामार्यरक्षितः । निशाशेषे स्वप्नममुं वज्रस्वामी ददर्श च ॥ २३६ ॥ यदद्य पयसा पूर्णः केनाप्यस्मत्पतद्ग्रहः । अपाय्यागन्तुना भूरि किञ्चिदस्थाच्च तत्पयः ॥ २३७ ॥ वज्रस्वामी महर्षीणां स्वप्नार्थं व्याकरोत् प्रगे । वहुपूर्वश्रुतग्राही कोऽप्येष्यत्यतिथिर्मम ॥ २३८ ॥ प्रातरेत्य कृतोपास्ति स्वाम्युवाचार्यरक्षितम् । कुतः समागाः, सोऽप्याह गुरोस्तोसलिपुत्रतः ॥ २३९ ॥ वज्रस्वाम्यव्रवीदार्यरक्षितस्त्वं किमाख्यया ? । सोऽप्याख्यदेवमिति च पुनर्वन्दनपूर्वकम् । ॥२४०॥ वज्रस्वाम्यपि तं ज्ञात्वा सप्रसादमदोऽवदत् । स्वागतं तव, कुत्र त्वं प्रतिश्रयमशिश्रियः ? ॥ २४१ ॥ वहिरावासितोऽस्मीति तेनोक्ते स्वाम्यभाषत । महात्मन् ! किं न जानासि दूरस्थोऽध्येष्यसे कथम् ? ॥ २४२ ॥ तेनोचेऽहं पृथग्वासी भद्रगुप्तगुरोर्गिरा । वज्रोऽप्याहोपयोगात् त्वां युक्तं पूज्या वभाषिरे ॥ २४३ ॥ वज्रोऽथ पृथगावासस्थितमप्यार्यरक्षितम् । अपूर्वप्रतिभं पूर्वाण्यध्यापयदमुं नव ॥ २४४ ॥ ततो दशमपूर्वस्य यमकानि गुरोर्गिरा । अध्येतुं विषमाण्यार्यरक्षितर्षिः प्रचक्रमे ॥ २४५ ॥ मातापितृभ्यामाह्वातुमथैनं फल्गुरक्षितः । प्राणप्रियोऽनुजस्तस्य प्रैष्यागत्य स तं जगौ ॥ २४६ ॥ किमेवं कठिनोऽभूस्त्वमनुत्कण्ठः कुटुम्वके । भ्रातः ! पत्त्र्यपि दिक्चक्रं भ्रान्त्वाऽभ्येति भुवं निजाम् ॥ २४७ ॥ वैराग्यपर्शुना छिन्नं यद्यपि प्रेमवन्धनम् । तथापि तव कारुण्यमस्ति पुण्यनिवन्धनम् ॥ २४८ ॥ शोकसंकटमग्नोऽस्ति वन्धुवर्गश्च सांप्रतम् । तदागत्य तमुद्धर्तुं भगवंस्तव सांप्रतम् ॥ २४९ ॥ इत्युक्तो वन्धुना वज्रमापप्रच्छाऽऽर्यरक्षितः । पठेत्युक्तोऽमुना भूयः पठन्नूचे च वन्धुना ॥ २५० ॥ वान्धवास्ते परिव्रज्यामनोरथरथस्थिताः । न कुत्रापि प्रवर्तन्ते त्वया सारथिना विना ॥ २५१ ॥ तदेहि देहि वन्धूनां व्रतं सुव्रत ! सत्वरम् । श्रेयस्यपि सकर्णोऽपि किमद्यापि प्रमाद्यसि ? ॥ २५२ ॥ अथार्यरक्षितः स्माह यदि सत्यमिदं वचः । ततस्त्वं तावदाद-

तदनन्तरमाचार्यान् साधूनपि यथाविधि। वन्दित्वा निषसादाग्रे विष्टरं प्रतिलिख्य सः ॥ २१५ ॥ तदेतदवधार्यार्यरक्षितोऽपि यथाक्रमम्। अभिनीय गुरूपान्ते निषसाद कृताञ्जलिः ॥२१६॥ श्रावक नूतनं मत्वा ढड्ढरावन्दनेन तम्। अपृच्छन् गुरवो वत्स! कुतो धर्मागमस्तव? ॥२१७॥ तेनोक्ते श्रावकादस्मादूचिरे मुनयः प्रभो!। रुद्रसोमासुतः सोऽयं विद्वान् मान्यो महीपतेः ॥२१८॥ अयमाद्यगुणस्थानस्थितानां धुरि गण्यते। आश्चर्यं श्रावकाचारं परिस्पृशति किं ह्यद.? ॥२१९॥ अथाह सोमभूः संप्रत्यस्ति श्रावकता मम। रत्नता सलिलस्येव लोहस्येव सुवर्णता ॥ २२० ॥ इति विज्ञपयामास चाचार्यानार्यरक्षितः। प्रसीद भगवन्! दृष्टिवादस्याध्यापनेन मे ॥ २२१ ॥ मया विवेकहीनेनोन्मत्तेनेव हतात्मना। हिंसोपदेशकं सर्वमधीतं नरकावहम् ॥ २२२ ॥ आचार्या अपि त शान्तं योग्यं मत्वैवमूचिरे। यदि त्व दृष्टिवादाधिजिगांसुस्तत् परिव्रज ॥ २२३ ॥ सोऽप्युवाच परिव्रज्यामिदानीमपि दत्त मे। किन्तु पूज्यैरत. स्थानादस्ति गन्तव्यमन्यतः ॥ २२४ ॥ मामत्र स्थितमन्तं हि राजा पुरजनोऽपि च। अत्यन्तमनुरागेण प्रव्रज्यां त्याजयेदपि ॥ २२५॥ आचार्या अपि तस्योपरोधेन सपरिच्छदाः। गत्वाऽन्यत्र तमुत्सप्रवृजिनं पर्यविव्रजन् ॥ २२६ ॥ अधीतैकादशाङ्गेन क्रमेणाचार्यसंनिधौ। दृष्टिवादोऽभवद् यावांस्तावांस्तेन समाददे ॥ २२७ ॥ अथार्यरक्षितायाख्यन् गुरवो गौरवोचितम्। यद् भूयान् दृष्टिवादोऽस्ति वज्रर्षेः संप्रति स्फुटः ॥ २२८ ॥

श्रीवज्रस्वामिनमथ प्रति यानार्यरक्षितः। अवन्त्यां भद्रगुप्तस्य प्रभोः पादानवन्दत ॥ २२९ ॥ गुणवन्तं तपोराशिं पूर्वावस्थाकुतीर्थिकम्। उपलक्ष्य तमाचार्याः परिषस्वजिरे मुदा ॥ २३० ॥ ऊचुश्च वत्स! धन्योऽसि कृतार्थोऽसि सुधीरसि। ब्राह्मण्यं योऽधिगम्यापि श्रामण्यं प्रत्यपद्यथाः ॥ २३१ ॥ अथाहं क्षीणशेषायुष्कर्मा त्वामर्थयेऽनघ!। कर्तुकामोऽस्म्यनशनं मम निर्यामको भव ॥ २३२ ॥ तथेति प्रतिपेदानं तमथो सूरिरन्वशात्। मा वज्रेण समं वत्स! वसेरेकप्रतिश्रये ॥ २३३ ॥ पृथक्स्थितिरधीयेथा यदेकामपि यामिनीम्। यो वसेत्

कथम् ? ॥ १६४ ॥ यदि त्वं मयि भक्तोऽसि यदि मां मन्यसे हिताम् । अधीष्व दृष्टिवादं तद् हेतुं स्वर्गापवर्गयोः ॥ १६५ ॥ अथार्यरक्षितः प्राह स्वाधीते विशदाशयः । दृष्टिवादं पठिष्यामि मातराख्याहि तद्गुरुम् ॥१६६॥ रुद्रसोमापि तनयविनयोच्छ्वसिता सती । भ्रमयन्त्यञ्चलं तस्मै निजगाद प्रसादभाक् ॥ १६७ ॥ इदानीं नहि जिह्रेमि त्वयाऽहं तनुजन्मना । मदादेशमनुष्ठातुं यदकार्षीर्मनोरथम् ॥१६८॥ सन्ति तोसलिपुत्राख्या आचार्या आर्यरक्षित ! । इक्षुवाटे ममैवेतः प्रतिपन्नप्रतिश्रयाः ॥ १६६ ॥ तत्पादपङ्कजोपास्तिभृङ्गतामङ्ग ! तां भज । ते त्वामध्यापयिष्यन्ति दृष्टिवादं जिनागमम् ॥ २०० ॥ एवं प्रातः करिष्यामीत्यभिधायार्यरक्षितः । दृष्टिवादाभिधां ध्यायन् नाऽशेत रजनावपि ॥ २०१ ॥ दृष्टिवादमथाध्येतुमापृच्छ्य जननीं प्रगे । दृष्टिवादार्णवागस्त्यमियाय चार्यरक्षितः ॥ २०२ ॥ अथैकं द्विजमायान्तं सार्धेक्षुनवयष्टिकम् । कोऽसि त्वमिति सोऽपृच्छदालिङ्ग्यैष तमब्रवीत् ॥२०३॥ अहं ह्युपतटग्रामात् त्वां द्रष्टुं त्वत्पितुः सखा । प्राप्तं कल्ये, मया कार्यव्यग्रेणासि न वीक्षितः ॥ २०४ ॥ गृह्यन्तामिक्षवश्चैते मयाऽऽनीताः कृते तव । गुरूणां दातुमुचिता लघुभ्यो हि सुखादिका ॥ २०५ ॥ उवाच सोमभूरित्थं तात ! मन्मातुरर्पयेः । अहं शरीरचिन्तार्थं गच्छन्नस्मि बहिर्भुवि ॥ २०६ ॥ इदं च कथयेस्तस्यै यद्गच्छन्नार्यरक्षितः । अधुनेक्षुलतापाणिमद्राक्षीदादितोऽपि माम् ॥ २०७ ॥ तथेति तत्कृते दध्यौ रुद्रसोमा निमित्तवित् । पूर्वाणि नव खण्डं च पुत्रो मेऽध्येष्यते ह्यतः ॥ २०८ ॥ नवाहं दृष्टिवादस्य पूर्वाण्यध्ययनानि वा । दशमं खण्डमध्येष्ये दध्यौ यानिति सोमभूः ॥ २०९ ॥ गत्वा चेक्षुगृहद्वारे चतुरोऽयमचिन्तयत् । कथमन्तर्विशाम्यर्हद्धर्माचाराविशारदः ? ॥ २१० ॥ प्रातर्वन्दनकायातश्रमणोपासकैः सह । वसत्यन्तः प्रवेक्ष्यामि प्रतीक्षे क्षणमत्र तत् ॥२११॥ इत्यार्यरक्षितस्तस्थौ द्वारेऽपि द्वारपालवत् । शृण्वन् सुधीरधीयानसाधूनां मधुरा गिरः ॥२१२॥ तत्रागाड्ढड्ढरो नाम श्रमणोपासकः प्रगे । वन्दनाय महर्षीणां हर्षेणोत्कर्षिताशयः ॥ २१३ ॥ नैषेधिकीं विधायैष प्रविवेश प्रतिश्रयम् । अथैर्यापथिकीं प्रत्यक्रामदुच्चैस्तरस्वरः ॥२१४॥

द्धाश्च जिग्यिरे ॥१७५॥ तेऽथ बौद्धैर्निषिद्धेभ्यो मालाकृद्भ्यो नृपाज्ञया । नालभन्तार्थतुलितान्यगस्तिकुसुमान्यपि ॥१७६॥ तदा पर्युषणापर्वण्यागतेऽर्हदुपासकाः । तत्तथाऽकथयन् वज्रस्वामिनेऽश्रुमुखास्ततः ॥१७७॥ समाश्वसित हे श्राद्धाः ! यतिष्ये वः सुतेजसे । इत्युक्त्वोत्पत्य भगवान् ययौ माहेश्वरीं पुरीम् ॥१७८॥ हुताशनाभिधानस्य देवस्योपवने स्थितः । योऽभूदारामिकस्तत्र मित्रं धनगिरेः स तु ॥१७९॥ अकस्मादागतं वज्रं दृष्ट्वैष तडिताभिधः । उवाच दिष्ट्याऽतिथये किमातिथ्यं करोमि ते ? ॥ १८० ॥ वज्रोऽभ्यधत्त कुसुमैः कार्यं मे प्रत्युवाच सः । इह संपादयिष्यामि पुष्पलक्षाणि विंशतिम् ॥ १८१ ॥ तर्हि त्वं प्रगुणीकुर्या इत्युक्त्वा भगवानपि । उत्प्लुत्य ताद्र्यवद् व्योम्नाऽगात् क्षुद्रहिमवद्गिरिम् ॥ १८२ ॥ श्रीदेव्या भक्तितस्तत्र दत्तमादाय पङ्कजम् । वैश्वानरवनं प्रत्याययौ वज्रोऽतिरंहसा ॥ १८३ ॥ विद्याशक्त्या विचक्रेऽथ विमानं भगवानिह । न्यधाच्च पुष्पलक्षांस्तान् विंशतिं पङ्कजं च तत् ॥ १८४ ॥ छत्रस्येवाम्बुजस्याधो निपद्य भगवानथ । चिन्तितोपनतैः स्फुलसप्रेक्षणो जृम्भकामरैः ॥ १८५ ॥ पुरीं नागपुरीमेत्यार्हन्मतस्य प्रभावनाम् । चक्रेऽतिशायिनीं बौद्धशासनं न्यक्चकार च ॥ १८६ ॥ युग्मम् ॥ श्रीवज्रविहितां वीक्ष्यार्हन्मतस्य प्रभावनाम् । बौद्धभक्तिं विहायात्र भूपोऽभूत् परमार्हतः ॥ १८७ ॥

इतश्चौद्रायणो राजा जज्ञे दशपुरे पुरे । सोमदेवश्च विप्रोऽस्य रुद्रसोमार्हती प्रिया ॥ १८८ ॥ तयोः सुतावभूतां द्वौ बुद्ध्या गुरुसुताविव । नाम्नाऽऽर्यरक्षितो ज्यायान् कनीयान् फल्गुरक्षितः ॥ १८९ ॥ तत्रार्यरक्षितो विद्यास्थानान्याप्तु चतुर्दश । जगाम पाटलीपुत्रं कृतार्थः पुनरराययौ ॥ १९० ॥ प्रवेशितः पुरे राज्ञा गजमारोप्य गौरवात् । विविधोपायनैः पौरैरपि तेनैष पूजितः ॥ १९१ ॥ स बन्धुसहितो विद्यार्थीहृद्याकृतिरानमन् । मात्राशीर्वादितः प्रातिवेश्मिकयेव निरादरम् ॥ १९२ ॥ व्यजिज्ञपदथ स्वाम्बां सोऽपि मातर्विलोक्य माम् । अधीतविद्यमायातमिह किं नाद्य माद्यसि ? ॥ १९३ ॥ साह वत्स ! त्वया हिंसोपदेशकमधीयत । वतस्त्वां नरकाध्वन्यं दृष्ट्वा हृष्याम्यहं

॥१५६॥ देशनान्तेऽवदद् वज्रं धनश्रेष्ठी कृताञ्जलिः। कृत्वा प्रसादं मत्पुत्रीमिमामुद्वह मानद ! ॥१५७॥ क्व भवानिन्दुतुल्यः क्व चेयं लक्ष्मशिखोपमा। तथाप्येनां स इव तामाद्रियस्व कृपां कुरु ॥१५८॥ विवाहानन्तरं वज्र ! हस्तमोचनपर्वणि। द्रव्यकोटीरसंख्यातास्तुभ्यं दास्ये भवत्वदः ॥ १५९॥ वज्रस्तमज्ञं विज्ञाय स्मित्वोचे करुणापरः। पर्याप्तं द्रव्यकोटीभिः कन्यया च तवानया ॥१६०॥ संध्यारागसहाध्यायी शम्पासंपातसोदरः। स्वप्नाभिनयशैलूषस्त्याज्योऽर्थोऽनर्थभूरयम् ॥१६१॥ नितम्बिन्यश्च तुम्बिन्यस्त्याज्या दूरेण हृष्वरैः। यकाभ्यो योगिनां योगरसबन्धो विलीयते ॥१६२॥ शचीशचापचपला जन्तूनां यौवनश्रियः। किम्पाकफलपर्यन्तविषमा विषया अपि ॥१६३॥ एकैकशोऽपि विषयाः क्षयाय खलु देहिनाम्। पतङ्गभृङ्गपाठीनकुरङ्गकरिणामिव ॥१६४॥ न कामविषयादन्यः कोऽपि नीचपदप्रदः। द्विपदोपीह जायेत यस्मादङ्गी चतुष्पदः ॥१६५॥ अहत्वा विषयान् मोहयामिकान् न मुमुक्षुभिः। जरामरणजन्मादिशृङ्खला खलु मोक्ष्यते ॥१६६॥ महानुभाव ! धन्यायाः कन्याया अपि ते धन !। युज्यते विषयत्यागोऽस्मासु यद्येकतानता ॥१६७॥ इत्थं भगवतस्तस्य सुधासारकिरा गिरा। रुक्मिणी शान्तविषयविषवेगाऽऽदित व्रतम् ॥१६८॥ धर्मोऽयमेव हि श्रेयान् यत्र निर्लोभतेदृशी। एवं विमृश्य बहवः प्रतिबोधं जना ययुः ॥१६९॥ तेनोद्दध्रेऽन्यदा विद्या पदानुसृतिलब्धिना। महापरिज्ञाचाराङ्गान्तरस्थाकाशगामिनी ॥१७०॥ ऊचे च भगवानेवमनया विद्यया मम। जम्बूद्वीपाद् गतावस्ति शक्तिरामानुषोत्तरम् ॥१७१॥ धार्यैवेयं महाविद्या हन्त ! देया न कस्यचित्। अल्पर्द्धयोऽल्पसत्त्वाश्च भाविनोऽन्ये ह्यतः परम् ॥१७२॥

जगाम विहरन् वज्रः पूर्वस्या दिशमुत्तराम्। रङ्कारालकरालोऽभूद् दुष्कालोऽत्र तदा पुनः ॥१७३॥ ततस्तदर्चितः संघं पटे कृत्वा विहायसा। पुरीं नागपुरीं निन्ये सुभिक्षसुभगामयम् ॥१७४॥ तस्यां जैनाश्च बौद्धाश्च स्पर्धमानाः परस्परम्। चक्रिरे देवपूजादि जैनैर्बौ- ॥५

कृतार्थताम् ॥१३७॥ तद् यूयमपि वज्रर्षिं हे देव्यो ! द्रष्टुमर्हथ । त्वरितं यात, नैकत्रस्थायिनो यतयो यतः ॥१३८॥ इति वैद्योपदिष्टेष्टतुल्ययाऽथ नृपाज्ञया । नन्तुं विलोकितुं श्रोतुं राज्यो वज्रमुपाययुः ॥ १३९ ॥ भगवानपि वज्रस्ता मत्वाऽऽयाता नृपाङ्गनाः । कुरूपीभूय विदधे देशनामतिपेशलाम् ॥ १४० ॥ राज्ञो राज्योऽपि गत्वाऽथ शशंसुरिति सस्मितम् । देव ! गीरेव रम्याऽस्य वृथा रूपकथा पुनः ॥ १४१ ॥ राजा त्वघटमानं तत् श्रुत्वा द्रष्टुं स्वयं च तत् । विस्मयेन द्वितीयेऽह्नि वज्रं वन्दितुमागमत् ॥ १४२ ॥ अनेकलब्धिमान् वज्रो विकृत्य कनकाम्बुजम् । निषसादाभ्रमुक्तोऽर्क इव स्वं रूपमुद्वहन् ॥१४३॥ ऊचे च लोको वज्रस्य रूपं स्वाभाविकं ह्यदः । गुणानामाकृतेश्चाद्य सदृशोऽभूत् समागमः ॥ १४४ ॥ राजापि व्याजहारैवं विस्मयस्मेरमानसः । यथेष्टरूपनिर्माणलब्धिर्वज्रमुनिः खलु ॥ १४५ ॥ मा भूवं प्रार्थनीयोऽहं योषितामिति शङ्कया । सामान्यं ह्यस्तनं रूपं व्यक्तं शक्त्यैव निर्ममे ॥ १४६ ॥

इतश्चात्रान्तरे रुक्मिण्युवाच पितरं निजम् । वज्रस्वाम्यागतोऽस्तीह यं वुवूर्षाम्यहं सदा ॥१४७॥ तन्मां वज्रकुमाराय संप्रदत्ताऽन्यथा तु मे । मरणं शरणं तात ! इषल्लेखेव गीरियम् ॥१४८॥ आभिजातसखीं लज्जां विहायैव ब्रवीमि यत् । तत्रेदं कारणं वज्रो मत्पुण्यैरयमागतः ॥१४९॥ एष प्रायेण न स्थास्नुर्यद्यद्येव हि गच्छति । किं ज्ञायते कदाप्येति भूयोऽप्युड्डीनपक्षिवत् ॥१५०॥ तस्मादलं विलम्बेन देहि वज्राय तात ! माम् । चिरकौमारदीनां मां कथं पश्यन् न दूयसे ? ॥१५१॥ नोद्वहत्यनगारोऽयमिति शङ्कां च मा कृथाः । व्रतस्थोऽपि न किं गौरीमुपायंस्त महेश्वरः ? ॥१५२॥ एवं धनोऽतिनिर्बन्धामुपवज्रं निनाय ताम् । सद्यः कृत्वा विवाहार्हसर्वालंकारभूषिताम् ॥१५३॥ पुत्र्या सममनैषीच्च धनकोटीरनेकशः । प्रलोभनं वरयितुर्यथा स्यादिति जातधीः ॥१५४॥ उपवज्रं गतः श्रेष्ठी रूपं तस्य निरूपयन् । प्राशंसदात्मनः पुत्रीं साग्रहां तत्स्वयंवरे ॥१५५॥ धनस्य हृदये स्वार्थप्रार्थना कर्तुमिच्छतः । न वज्रदेशनार्थोऽस्थात् क्षौमे लाक्षानुरागवत्

किं किञ्चित्कार्यमुद्दिश्य विहारक्रमतोऽथवा । इहागतोऽसि वज्रर्षे ! कथयास्मान् प्रमोदय ॥११९॥ वन्दित्वा भद्रगुप्तर्षिं वज्रो विरचिताञ्जलिः । उवाच वदनद्वारविन्यस्तमुखवस्त्रिकः ॥१२०॥ यद्यत् सुखविहारादि पूज्यपादैरपृच्छ्यत । तत्तत् तथैव देवानां गुरूणां च प्रसादतः ॥१२१॥ अध्येतुं दश पूर्वाणि त्वामागां गुर्वनुज्ञया । तद्वाचनाप्रदानेन प्रसीद भगवन् ! मयि ॥१२२॥ ततश्च दशपूर्वीं तं भद्रगुप्तोऽध्यजीगपत् । गुरोरजनितक्लेशो वज्रश्च दशपूर्व्यभूत् ॥ १२३ ॥ भद्रगुप्तमथापृच्छ्य वज्रो दशपुरं ययौ । पूर्वानुज्ञा कृता सिंहगिरिणा गुरुणाऽस्य तु ॥ १२४ ॥ तदनुज्ञादिने तस्य विदधे जृम्भकामरैः । गन्धाम्बुवृष्टिकुसुमप्रकरैर्महिमाऽद्भुतैः ॥ १२५ ॥ गणं वज्रमुनेः सिंहगिर्याचार्यः समर्प्य सः । प्रत्याख्यायान्नपानादि कालं कृत्वा ययौ दिवि ॥ १२६ ॥ वज्रस्वामी व्यहार्षीच्च मुनिपञ्चशतीवृत. । महीमहीनसौभाग्यश्रुतशीलादिविश्रुतः ॥ १२७ ॥

इतश्च पाटलीपुत्रे धनिश्रेष्ठोऽभवद् धनः । तत्कन्या रूपधन्याऽभूदभिधानेन रुक्मिणी ॥१२८॥ सा च तद्यानशालास्थसाध्वीभ्यो गुणसंस्तवम् । श्रीवज्रस्वामिनो नित्यमश्रृणोद् मसृणाशया ॥१२९॥ ततोऽसौ भाग्यसौभाग्यभासुरं तद्गुणश्रवात् । वज्रमेव पतीयन्ती न्यषेत्सीदपरान् वरान् ॥१३०॥ व्रतिन्यो जगदुश्चैतामयि ! मुग्धाऽसि रुक्मिणि ! । वज्रं प्रव्रजितं वीतरागं यत् त्वं बुभूर्षसि ॥१३१॥ रुक्मिण्यभिदधे वज्रो यदि प्रव्राजितस्तदा । प्रव्रजिष्याम्यहमपि या गतिस्तस्य सैव मे ॥१३२॥ इतश्च विहरन् वज्रः पाटलीपुत्रपत्तने । आगत्योद्यान एकस्मिन् शमवान् समवासरत् ॥१३३॥ तदागमनसंभ्रान्तः पाटलीपुत्रपार्थिवः । एत्य श्रीवज्रचरणानर्चयित्वा नमोऽकरोत् ॥१३४॥ वज्रोऽपि विदधे क्षीरास्रवलब्ध्याऽथ देशनाम् । निशम्य तामतिप्रीतो राजा स्वं सौधमाययौ ॥१३५॥ ततोऽन्तःपुरनारीभ्यो हर्षोद्गारं चकार सः । यथाऽद्य वन्दितो वज्रस्वामी चामीकरच्छविः ॥१३६॥ तं वन्दित्वा च दृष्ट्वा च तद्धर्मं निशमय्य च । मम गात्रं च नेत्रे च श्रोत्रे चागुः

समर्थ्यते ॥ ९९ ॥ गुरुभ्योऽप्यधिकं वज्रं मेनिरे मुनयो गुणैः । तद्भूतमपि किं पुष्पं वृक्षेभ्यो नातिरिच्यते ? ॥ १०० ॥ एतावता गणो भावी ज्ञातवज्रगुणः खलु । इत्यायातान् गुरून् वज्रसहिता मुनयोऽनमन् ॥ १०१ ॥ पृष्टं स्वाध्यायनिर्वाहे गुरुणा मुनयोऽभ्यधुः । पूज्यप्रसादाद् वज्रेणाऽज्ञानशैलो व्यभेदि नः ॥ १०२ ॥ वज्रोऽस्माभिरवज्ञातो ह्यज्ञाततद्गुणैश्चिरम् । इदानीमयमस्माकं बालोऽपि भगवत्समः ॥ १०३ ॥ बालोऽप्यस्त्येष गच्छस्य तदलुच्छगुणो गुरुः । ज्योतिश्चक्रस्य नेतास्ति भुवोऽणुरपि किं न हि ? ॥ १०४ ॥ गुरवोऽभ्यधुर्युष्माकमस्य ज्ञापयितुं गुणान् । अगमाम वयं ग्राममाचार्योऽयं च वोऽर्पितः ॥ १०५ ॥ अन्यथा वाचनाचार्यपदवीं नायमर्हति । गुर्वदत्तं यतोऽनेन कर्णश्रुत्यादद् श्रुतम् ॥ १०६ ॥ संक्षेपविधिरूपोऽस्योत्सारकल्पो महाशयाः ! । कार्यः पूर्णमिहाचार्यपदयोग्यस्ततो भवेत् ॥ १०७ ॥ ततश्च प्रागपठितं श्रुतमर्थसमन्वितम् । वज्रमध्यापयामासानायासादञ्जसा गुरुः ॥ १०८ ॥ ह्यभूद् दृष्टिवादोऽपि यावानेतस्य तावतः । साक्षिमात्रीभवन् पात्रीचक्रे वज्रमुनिं गुरुः ॥ १०९ ॥ अन्यदा विहरन्तोऽमी पुरं दशपुरं ययुः । भद्रगुप्तस्तदावन्त्यां दशपूर्वधरोऽभवत् ॥ ११० ॥ तदादिशन्नमी वज्रं त्वं वत्सोज्जयिनीं व्रज । दशपूर्वीमिहाधीष्व भद्रगुप्तगुरोर्मुखात् ॥ १११ ॥ इत्यात्मना तृतीयोऽयं प्रेषितो गुरुणा क्षणात् । वज्रोऽगाद् भद्रगुप्तांह्रिपूतामुज्जयिनीं पुरीम् ॥ ११२ ॥ तदैक्षिष्ट गुरुः स्वप्नं यदादाय करादु मम । पतद्ग्रहं पयःपूर्णं कश्चिदागन्तुकोऽपिबत् ॥ ११३ ॥ स्वप्नादिति स्वशिष्येभ्यो भद्रगुप्तः प्रगे जगौ । यदेष्यत्यतिथिः कोऽपि स ममाध्येष्यते श्रुतम् ॥ ११४ ॥ वज्रोऽपि नगरीद्वारे शर्वरीमतिवाह्य ताम् । प्रभाते भद्रगुप्तस्याचार्यस्य वसतिं ययौ ॥ ११५ ॥ प्रसिद्धिसदृशीं वज्रस्याकृतिं परिभाव्य च । वज्रोऽयमिति निश्चिक्ये भद्रगुप्तो जहर्ष च ॥ ११६ ॥ वन्दनाभिमुखं वज्रं भद्रगुप्तोऽथ सस्वजे । अङ्कमारोप्य चोवाच तन्मुखन्यस्तलोचनः ॥ ११७ ॥ कच्चित्सुखविहारस्ते कच्चित्तेऽङ्गमनामयम् । कच्चित्तपस्ते निर्विघ्नं कच्चित्ते कुशली गुरुः ॥ ११८ ॥

वहिर्भूमौ च गुरवो वज्रोऽस्थाद् वसतौ पुनः ॥ ८० ॥ साधूनां मण्डलेष्वेष वेष्टिकाः स न्यवीविशत् । आचार्य इव साधूनां तासां चादत्त वाचनाः ॥ ८१ ॥ वसतिद्वारमायाता दूरादेवातिगर्जितम् । श्रुत्वा तद्वाचनाध्वानं गुरवोऽचिन्तयन्निति ॥ ८२ ॥ अस्मदागमनं त्वेते पालयन्तो महर्षयः । स्वाध्यायं कुर्वते भिक्षां समादाय समागताः ॥ ८३ ॥ इत्याचार्याः क्षणं स्थित्वा विदाञ्चक्रुर्विमृश्य च । यथेष वज्रवालर्षेर्वाचनां ददतो ध्वनिः ॥ ८४ ॥ असौ पूर्वगतस्यैकादशाङ्ग्या अपि वाचनाम् । यद् दत्ते तत्किमध्यैष्ट गर्भस्थो विस्मयामहे ॥ ८५ ॥ स्थविरैः पाठ्यमानोऽयमत एवालसायते । वाल्यात्पाठालस इति ज्ञात्वा तं प्रेरयामहे ॥ ८६ ॥ अस्मदाकर्णनाशङ्की लज्जितो मा स्म भूदयम् । रोमाञ्चिताः शिष्यगुणैरित्याचार्या अपासरन् ॥ ८७ ॥ शब्देन महताऽऽचार्याश्चक्रुर्नैषेधिकीमथ । गुरूणां शब्दमाकर्ण्योदस्थाद् वज्रोऽपि विष्टरात् ॥८८॥ समुपेत्य मन्दगतिर्न यावत्प्राविशद् गुरुः । तावत्ता वेष्टिकाः सर्वाः स्थाने वज्रो मुमोच च ॥ ८९ ॥

गुरोर्दण्डं समादाय तस्य चांह्री ममार्ज च । धौतवांश्चासनस्थस्य ववन्दे च पदोदकम् ॥ ९० ॥ गुरवोऽचिन्तयन्नस्य व्रतिनः श्रुतसेवधेः । यथा जानन्ति माहात्म्यं प्रयतिष्यामहे तथा ॥ ९१ ॥ इत्याचार्या विभावर्यां शिष्येभ्योऽकथयन्निति । यास्यामो ग्राममुकं द्वित्राहं तत्र नः स्थितिः ॥ ९२ ॥ वज्रो वो वाचनाचार्यो भवितेति गुरोर्वचः । भक्तत्वादविचार्यैव प्रत्यपद्यन्त ते तथा ॥ ९३ ॥ प्रातःकृत्ये कृते वज्रं निषद्यायां न्यषादयन् । आचार्यस्येव विनयं तस्याकार्षुश्च साधवः ॥ ९४ ॥ सर्वेषामपि साधूनामानुपूर्व्या परिस्फुटान् । संक्रान्त्या वज्रलेपाभान् वज्रोऽप्यालापकान् ददौ ॥ ९५ ॥ अमोघवचनो वज्रो वभूवातिजडेष्वपि । तद् नव्यमद्भुतं दृष्ट्वा गच्छः सर्वो विसिष्मिये ॥ ९६ ॥ आलापान् साधवः पूर्वमधीतान् सुस्फुरानपि । संवादार्थमपृच्छंश्च वज्रोऽप्याख्यत्तथैव तान् ॥ ९७ ॥ एकवाचनया वज्रात् तावत् पेठुर्महर्षयः । यावद् न गुरुतोऽमूभिरनेकाभिरपि श्रुतम् ॥ ९८ ॥ तेऽभ्यधुः साधवोऽन्योन्यं गुरुर्यदि विलम्बते । वज्रपार्श्वे तदा शीघ्रं श्रुतस्कन्धः

र्मासाः षड्वयगुः । सुनन्दापि सदोद्विग्नाऽजनि तेन तनूभुवा ॥१६॥ तत्र सिंहगिरिस्त्वागादन्यदा सन्निवेशने । विनेयैर्धनगिर्यार्यसमितादिभि-रावृतः ॥ २० ॥ तं गुरुं धनगिर्यार्यसमितावित्यपृच्छताम् । प्रभो ! नौ स्वजना ह्यत्र तान् विवन्दयिषावहे ॥ २१ ॥ निमित्ततः कुतोऽप्याह यियासन्ताविमौ गुरुः । भावी लाभो महान् ग्राह्यं सचित्ताचित्तमद्य तत् ॥२२॥ सदनेऽथ सुनन्दाया जग्मतुस्तौ महामुनी । तस्याः सखीभिः सानन्दं द्वार्यायातौ निवेदितौ ॥ २३ ॥ सोल्लासमूचिरे सख्यः सुनन्दे ! नन्दनस्त्वया । अर्पणीयो धनगिरेः क्व नेष्यत्येष दृश्यताम् ॥ २४ ॥ सुनन्दापि निरानन्दा तमादाय स्तनन्धयम् । तेन निर्वेदितोदस्थादूचे धनगिरिं च सा ॥ २५ ॥ इयन्तं कालमात्मेव बालकः पालितो मया । नर्टिताहं त्वनेनोच्चैरनिशं रुदता भृशम् ॥ २६ ॥ यदि प्रव्रजितोऽसि त्वं तथाप्येनं स्वमङ्गजम् । गृहाण मामिव त्याक्षीर्मा स्मैनमपि संप्रति ॥ २७ ॥ श्रुत्वा धनगिरिस्त्वाह विन्यस्तमुखवस्त्रिकः । कल्याण्येवं करिष्यामि पश्चात्ताप तु यास्यसि ॥ २८ ॥ ॥ मा कृथाः सर्वथेदक्षं कुरुषे वा कुरुष्व तत् । समक्षं साक्षिणां भद्रे ! पुनर्नैनं हि लप्स्यसे ॥ २९ ॥ ततश्च साक्षिण कृत्वा सनिर्वेदं सुनन्दया । तस्मै स मुनये सूनुरर्पित-स्तेन चाददे ॥ ३० ॥ बालं धनगिरिः पात्रबन्धने तं न्यधत्त च । रोदनाद् दत्तसंकेत इवासौ विरराम च ॥ ३१ ॥ ततः सुनन्दासदनाद् मुनी तावात्तबालकौ । गुर्वाज्ञापालकौ भूयोऽपीयतुर्गुरुसंनिधौ ॥३२॥ तद्भारेण नमद्बाहुं दृष्ट्वा धनगिरिं गुरुः । अभाषताऽमुना भिक्षाभारेणायासितो भवान् ॥ ३३ ॥ तदेनमर्पयास्माकं विश्राम्यतु भुजस्तव । इत्यार्पयद् धनगिरिर्गुरोर्यत्नेन तं सुतम् ॥ ३४ ॥ बालार्कमिव तं बालं भासमानं समाददे । गुरुः करयुगेणादिसंध्या शोणनभोरुचा ॥३५॥ तद्भारभङ्गुरकरो गुरुराह सविस्मयः । अहो पुंरूपभृद्वज्रमिदं धर्तुं न शक्यते ॥३६॥ भावी प्रवचनाधारो महापुण्यः पुमानयम् । साध्वीनामिति तं बालं पालनायाऽऽर्पयद् गुरुः ॥३७॥ तं बालं गुरुणा गुप्तवज्रनामानमार्यिकाः । शय्यातरकुले भक्ते पालनायार्पयंस्ततः ॥ ३८ ॥ दत्ताः कुमारपोषाय शय्यातर्योऽपि तं शिशुम् । स्वस्वपुत्राधिकप्रीत्या पश्यन्त्यः पर्यपाल-

अस्त्यवन्तिषु विख्यातं पुरं तुम्बवनाभिधम्। श्रेष्ठी धनगिरिर्नाम तस्मिन् गुरुधनोऽभवत्॥ १॥ स बाल्यादपि संसारविरक्तात्मा सुनन्दया। धनपालेभ्यनन्दिन्याऽऽग्रहतः पर्यणीयत॥२॥ अन्यदा तु ऋतुस्नातां सुनन्दां ब्रह्मधीरपि। भेजे धनगिरिर्भोगफलं कर्म हि नान्यथा॥३॥ इतश्चाष्टापदगिरौ गौतमेन गणेन्दुना। प्रथितं पुण्डरीकाख्याध्ययनं यः पुराऽशृणोत्॥४॥ स हि वैश्रवणाभिख्यः यक्षसामानिकः सुरः। प्रच्युत्यावतरत्तस्याः सुनन्दायास्तदोदरे॥५॥ युग्मम्॥ अन्तर्वत्नीमथो पत्नीं मत्वा धनगिरिर्जगौ। एष गर्भो द्वितीयस्ते भविता प्रव्रजाम्यहम्॥ ६॥ अमनीषित एवाभूत् संबन्धोऽपि त्वया सह। प्रव्रज्यैव प्रिया मेऽतः परं स्वस्त्यस्तु ते पुन.॥ ७॥ उक्त्वेत्युज्झांचकारैतामवक्रय-कुटीमिव। गुरोः सिंहगिरेः पार्श्वे गत्वा च व्रतमाददे॥ ८॥ सुनन्दासोदरोऽप्यत्राभूदार्यसमितो व्रती। समं तेन तपस्तेपे स विपोढपरी-षहः॥ ९॥ नवमास्यां व्यतीतायां सुनन्दापि हि नन्दनम्। अजीजनज्जनानन्दकन्दमिन्दुमिवेन्द्रदिक्॥ १०॥

सुनन्दाप्रीतिपात्राणि सख्यो याः सूतिकागृहे। प्रतिजागरणायातास्ता बालमिदमूचिरे॥ ११॥ यदि जात! न ते तातः प्राव्रजि-ष्यत्तदोत्सुक। तव जन्मोत्सवः श्रेयानभविष्यत्तदा खलु॥ १२॥ विना पुमांसं नायान्ति नार्यः कार्योपयोगिताम्। अङ्गुल्यो मुष्टिबन्धाय विनाङ्गुष्ठं भवन्ति किम्?॥ १३॥ स तु बालोऽपि संज्ञावान् ज्ञानावरणलाघवात्। तासामाकर्णयामास तं संलापं समाहितः॥ १४॥ अचिन्तयच्च मे तातः परिव्रज्यामुपाददे। एवं स चिन्तयन्नेव जातिस्मरणमासदत्॥ १५॥ जातजातिस्मृतिज्ञानः संसारासारतां विदन्। अकुण्ठः क्षीरकण्ठोऽपि तातमार्गमियेष सः॥ १६॥ कथमुद्विज्य मां माता त्यक्ष्यतीति विचिन्त्य सः। मातुरुत्सङ्गलीनोऽपि रोदिति स्म दिवानिशम्॥ १७॥ गानैर्न क्रीडनैर्नाङ्कनृत्यैर्न च न चाटुभिः। वाद्यैर्न चुम्बनैर्नापि विरराम स रोदनात्॥ १८॥ एवं च रुदतस्तस्य शिशो-

१. क. ख. नायिकाः।

भद्रा धाम जगाम सा निजमथो भूमानपि स्वामिनः श्रीवीरस्य पदौ प्रणम्य विमनाः स्वां राजधानीमगात् ॥ १२६ ॥

अथ जगति सधन्यः शालिभद्रः स धन्यः सुकृतनिहतकर्मा भिन्नसंसारमर्मा ।
अनशनमिति कृत्वा भावशुद्धं च मृत्वा वितुपसुखसमृद्धिं प्राप सर्वार्थसिद्धिम् ॥ १२७ ॥

॥ इति श्रीशालिभद्रकथा समाप्ता ॥ ४१ ॥

---

अथ श्रीवज्रस्वामिनं तदपूर्वगुणग्रहणपूर्वं प्रणमन्नाह ;—

तरुणीजणेण धणसंचएण तह गुरुअबंधुनेहेण । न विलुद्धं जस्स मणो तस्स नमो वयरसामिस्स ॥ ४२ ॥
[ तरुणीजनेन धनसंचयेन तथा गुरुबन्धुस्नेहेन । न विलुब्धं यस्य मनस्तस्मै नमो वज्रस्वामिने ॥ ]

व्याख्या—तस्मै वज्रस्वामिने नमः, 'जस्स मणो' यस्य मनः 'न विलुद्धं' न विमूढम् । केन । 'तरुणीजणेण' प्रार्थनापरवशाभिनवयौवनयुवतीजनेन । न केवलमनेन, किन्तु धनसंचयेन धनानां गणिमधरिममेयपारिच्छेद्यानां संचयः समूहस्तेन । न केवलममुना, 'तह' तथा 'गुरुअबंधुनेहेण' गुरुरेव गुरुकः स चासौ बन्धुस्नेहोऽत्र मातृवात्सल्यं गुरुकबन्धुस्नेहस्तेन । यदुक्तमस्माभिरपि गणधरावल्याम् ;—

"बाल्ये न मातृवचनैरतिदीनदीनैः स्निग्धाङ्गनार्थनगिरा न हि यौवनेऽपि ।
श्रीसंचयैरपि चचाल मनो न यस्य तस्मै नमोऽस्तु दशपूर्वभृतेऽन्तिमाय ॥"

इति संक्षेपार्थः, व्यासार्थस्तु कथानकादवसेयः; तच्चैतत्—

प्रतिलाभितः ॥ १०८ ॥ श्रुत्वेति पारणं कृत्वाऽनुज्ञाप्य च जिनाधिपम् । सधन्यः शालिभद्रोऽद्रौ वैभारेऽनशनं व्यधात् ॥ १०९ ॥ तदा तदम्बा भद्रा च श्रेणिकश्च महीपतिः । भक्तियुक्तावुपेयातां श्रीवीरचरणान्तिके ॥ ११० ॥ नत्वा भद्राऽभ्यधाद् धन्यशालिभद्रौ क्व तौ मुनी । भिक्षार्थं नागतौ कस्मादस्माकं भवने विभो ! ? ॥ १११ ॥ सर्वज्ञोऽभिदधे भद्रे ! भवद्गेहमागताविमौ । ज्ञातौ त्वया तु नैवेहागमनव्यग्रचित्तया ॥ ११२ ॥ प्राग्जन्ममाता सूनोस्ते धन्या यान्ती पुरं प्रति । ददौ दधि तयोस्तेन तौ व्यधत्तां च पारणम् ॥ ११३ ॥ उभावपि शुभावेतौ भवत्यागाय सत्वरौ । पादपोपगमं कृत्वा वैभाराद्रौ स्थितावथ ॥ ११४ ॥ वैभाराद्रिं ययौ भद्रा श्रेणिकेन समं ततः । तथास्थितावपश्यच्च पतितौ तौ द्रुमाविव ॥ ११५ ॥ तद्दुःखमिति पश्यन्ति स्मरन्त्यपि च तत्सुखम् । रुरोद रोदयन्ती सा कन्दराः प्रतिनिःस्वनैः ॥ ११६ ॥ हा वत्स ! गृहमायातोऽप्यद्य निष्पुण्यया मया । न ज्ञातोऽसि प्रमादेन प्रसीद मयि मा रुषः ॥ ११७ ॥ हा वत्स ! यद्यपि त्वं नोऽत्याक्षीः पूर्वं तथाप्यभूत् । मनोरथो यदागत्य शिशिरीकुरुषे दृशौ ॥ ११८ ॥ हा वत्स ! वपुषस्त्यागहेतुनाऽनेन कर्मणा । मनोरथं तमपि मे भङ्क्तुमुद्यतवानसि ॥ ११९ ॥ हा वत्स ! हंसतूलीषु वपुस्ते सुखलालितम् । कथं विषहते ब्रूहि कठोराश्मतलव्यथाम् ? ॥ १२० ॥ हा वत्स ! श्रेणिकस्यापि यदम्लायि वपूष्मणा । तत्कथं कर्कशां भूमिं सहते शंस ते वपुः ? ॥ १२१ ॥ हा वत्स ! मृदुसंगीतपानदुर्ललितौ तव । सहिष्येते कथंकारं कर्णौ फेरुण्डफूत्कृतिम् ॥ १२२ ॥ अथोचे श्रेणिको हर्षस्थाने रोदिषि किं शुभे ! । ईदृग् यस्याः सुत. स्त्रीषु त्वमेका पुत्रवत्यसि ॥ १२३ ॥ असौ तृणमिवात्याक्षील्लक्ष्मीं भोगांश्च रोगवत् । मुक्तिसंपत्प्रदान् पादान् प्रपेदे स्वामिनः पुनः ॥ १२४ ॥ असौ श्रीवीरशिष्यत्वानुरूपं तप्यते तपः । त्वया तु स्त्रीस्वभावेन मुधा मुग्धेऽभितप्यते ॥ १२५ ॥

इत्थं श्रेणिकभूभुजा निजकरैरालुम्पताश्रूदकश्रेणिं पङ्कजबन्धुनेव नलिनीवालम्ब्य संबोधिता ।

भद्रागेहाङ्गयो गत्वा तावस्थातां महामुनी । तपःकृशतया किञ्चोपालक्ष्येतां न केनचित् ॥ ९० ॥ सशालिभद्रधन्यः श्रीवीरो वन्दिष्यतेऽधुना । इति हृल्लेखिता भद्रा नाऽद्राक्षीदपि तौ पुरः ॥ ९१ ॥ क्षणमेकमिह स्थित्वा निर्गतौ नगरादपि । समायान्ती जरत्येका दध्ना तौ प्रत्यलाभयत् ॥ ९२ ॥ श्रीवीरस्यान्तिके गत्वा तदालोच्य कृताञ्जलिः । शालिभद्रोऽभ्यधान्नाथ ! मातृत पारणं कथम् ? ॥ ९३ ॥ सर्वज्ञोऽभिदधे वत्स ! पुरस्यास्य समीपगे । शालिग्रामे समागच्छद् धन्येत्युच्छ्रवशिका ॥ ९४ ॥ कृत्वा परगृहे कर्म सा जीवति वराकिका । बालः संगमकस्तस्या वत्सरूपाण्यचारयत् ॥ ९५ ॥ इक्ष्वान्येद्युरथ ग्रामडिम्भान् पायसमश्नतः । गत्वा स्वगेहे जननीं पायसं सोऽप्ययाचत ॥ ९६ ॥ साप्युवाच दरिद्राऽस्मि मद्गेहे पायसं कुतः । स त्वज्ञानतया बालो ययाचे पायसं मुहुः ॥ ९७ ॥ तेनेति याच्यमानाथ दारिद्र्याच्च तथात्मनः । शोचन्ती पूर्वविभवं स्मारं स्मारं रुरोद सा ॥ ९८ ॥ कुररीमिव तारं तामुररीकृतरोदनाम् । श्रुत्वेति प्रातिवेश्मिन्यः पप्रच्छुर्दुःखकारणम् ॥ ९९ ॥ ताभ्योऽभ्यधत्त सा दुःखकारणं गद्गदाक्षरैः । क्षीराद्यदुश्च तास्तस्यै साऽपचत्पायसं ततः ॥ १०० ॥ खण्डाज्यपायसभृतं स्थालं बालस्य तस्य सा । अर्पयित्वा ययौ कर्म निर्मातुं परवेश्मनि ॥ १०१ ॥ विचरन् पारणायात्र क्षणे मासमुपोषितः । यतिरेकः समागच्छत् तपःक्षामोऽतिरेकतः ॥ १०२ ॥ सोऽचिन्तयदिदं साधु साधुपात्रमुपस्थितम् । चित्तं पात्रं च मे वित्तं त्रिवेणीसंगमोऽद्य तत् ॥ १०३ ॥ अथोत्थाय मुनिं नत्वा प्राञ्जलिः प्रार्थयद् मुदा । गृहाण पायसमिदं प्रसीद परमेश्वर ! ॥ १०४ ॥ इत्यसौ स्थालमुत्पाट्य पायसं मुनये ददौ । जग्राह मुनिरप्यस्यानुग्रहाय महाशयः ॥ १०५ ॥

मुनिर्निर्ययौ च धन्या च परगेहादिहागमत् । मत्वा भुक्तमनेनास्मै पायसं सा पुनर्ददौ ॥ १०६ ॥ अनासादितपूर्वं तद् बालोऽपि बुभुजेतमाम् । तदजीर्णेन यामिन्यां स्मरन् साधुं व्यपद्यत ॥ १०७ ॥ तेन दानप्रभावेण स त्वं गोभद्रनन्दनः । सा च पूर्वभवाऽम्बा ते यथाऽसि

भार्याभिः सनर्मकम् । सुकरं चेद् व्रतं नाथ ! किं त्वयाऽऽद्रियते न हि ? ॥७०॥ धन्योऽप्यूचे व्रते विघ्नो भवत्यस्ताश्च पुण्यतः । अनुमन्त्योऽद्य मेऽभूवन् प्रव्रजिष्यामि तद् द्रुतम् ॥ ७१ ॥ अथोचूस्ताश्च भर्तारमश्रुमिश्रविलोचनाः । प्रसीद नाथ ! नो हासविकासं कर्तुमर्हसि ॥ ७२ ॥ अथाह धन्यः स्नेहस्य भव्या द्रव्यात्मनोऽपि न । संसक्तिः पश्यतैतस्यां जायते यद्यदङ्गिनाम् ॥ ७३ ॥ क्रियते मानुषः पोत्तिं परिधाप्य बहिःश्रियः । मर्द्यते निर्दयं हस्तैः पादैश्च परिपीड्यते ॥ ७४ ॥ पिष्टैरावर्त्यते स्वैरं खटीभिश्च खरण्ड्यते । चपेटाभिश्च हन्येत निरागोऽपि हि मूर्धनि ॥ ७५ ॥ इत्थं विगोपकात् तत्तेनाम्भसा तपसा यथा । गतस्नेहमलं भूयोऽप्यलंकुर्वीत संपदे ॥ ७६ ॥ भावस्नेहस्य तद् ब्रूमः किमतोऽधिक एव सः । बलीयान् बहिरङ्गाद् यदन्तरङ्गो विधिः स्मृतः ॥ ७७ ॥ मत्वेति भवतीभिस्तद् वाच्यमेव न किञ्चन । अवश्यं प्रव्रजिष्यामीत्यालपन् धन्य उत्थितः ॥ ७८ ॥ त्वामनु प्रव्रजिष्याम एवमुक्तवतीश्च ताः । अन्वमन्यत धन्योऽपि धन्यंमन्यो महामनाः ॥ ७९ ॥ गिरावितश्च वैभारे श्रीवीरः समवासरत् । मनोऽभिमतसामग्री सतां हि परिपच्यते ॥ ८० ॥ दत्तदानः सदारोऽसावारुह्य शिबिकामथ । गत्वा श्रीवीरपादान्ते मुदाऽन्तेवास्यभूदयम् ॥ ८१ ॥ श्रुत्वेति शालिभद्रोऽपि धन्यंमन्योऽतिविस्तरम् । गत्वातिसत्वरं वीरपादान्ते व्रतमग्रहीत् ॥ ८२ ॥ ततः सपरिवारोऽपि विजहार जिनेश्वरः । महीं ग्रामाकरद्रोणमडम्बपुरमण्डिताम् ॥ ८३ ॥ धन्यश्च शालिभद्रश्च विश्रुतौ तौ बहुश्रुतौ । अभूतां तपसा क्षामौ श्यामौ दग्धाविव द्रुमौ ॥ ८४ ॥ तौ विश्वतिलकौ धर्मोद्यानपालेन सद्व्रतौ । आरोपितुमिवाङ्गारभावं नीतौ तपोऽग्निना ॥ ८५ ॥ अन्यदा श्रीमहावीरस्वामिना सह तौ मुनी । आजग्मतुः पुरं राजगृहं जन्मभुवं निजाम् ॥ ८६ ॥ ततो निकटारामस्थं प्रणन्तुं परमेश्वरम् । समीयुः परितः पौराः सुराज्यविपुलश्रियः ॥ ८७ ॥ तौ मासपारणे शालिभद्रधन्यावुभावपि । काले विहर्तुं भिक्षायै भगवन्तं प्रणेमतुः ॥ ८८ ॥ पारणं मातृहस्तेन तेऽद्येति स्वामिनोदितः । इच्छामीति भणन् शालिभद्रो धन्ययुतो ययौ ॥ ८९ ॥

महो महत् ॥ ४९ ॥ तन्मध्ये मुद्रिकां चन्द्रबिम्बाङ्कफलिकामिव । दृष्ट्वा स फुल्लनयनो विस्मयादुदधारयत् ॥ ५० ॥ किमेतदिति राज्ञोक्ता दास्यवादीदिहान्वहम् । निर्माल्यं शालिभद्रस्य सभार्यस्यापि धीयते ॥ ५१ ॥ सर्वथा धन्य एवायं धन्योऽहमपि यस्य मे । राज्ये येनेदृशाः सन्तीत्यन्तरा मुमुदे नृपः ॥ ५२ ॥ राजाथ बुभुजे जातसंमदः सपरिच्छदः । स्वालय च ययौ वस्त्ररत्नालङ्कारपूजितः ॥ ५३ ॥

शालिभद्रोऽपि संसारविरक्तः सुहृदाऽन्यदा । वर्धितो धर्मघोषस्य प्रभोरागतिवार्तया ॥ ५६ ॥ आरुह्य रथमभ्येत्याचार्यपादान् प्रणम्य च । निविष्टो देशनान्तेऽसौ पप्रच्छेति कृताञ्जलिः ॥५७॥ प्रभो ! के ते महापुण्या येषां स्वामी न विद्यते ? । भगवानप्युवाचैवं दीक्षां गृह्णन्ति ये जनाः ॥ ५८ ॥ आपृच्छ्याम्बां व्रतमहं ग्रहीष्यामीत्युदीरयन् । गुरूंन्नत्वा गृहं गत्वा सावित्रीमित्ययं जगौ ॥ ५९ ॥ अम्बाऽद्याशृणवं धर्मं धर्मघोषप्रभोरहम् । भद्राऽवादीद् वरं वत्स ! पितुस्तस्यासि नन्दनः ॥ ५९ ॥ नत्वोचे शालिभद्रश्चेद् मातरेव प्रसीद तत् । ग्रहीष्यामि परिव्रज्यां पितुस्तस्य सुतोऽस्म्यहम् ॥६०॥ भद्राऽभ्यधत्त ते योग्यो नास्ति साधुव्रतोद्यमः । किन्त्वात्र पुत्र ! पेयाग्निज्वालामाला निरन्तरम् ॥६१॥ कुमार ! सुकुमारस्त्वं दिव्यभोगैश्च लालितः । रम्भास्तम्भो गजालानमिव किं वाञ्छसि व्रतम् ? ॥६२॥ शालिभद्रोऽभ्यधाद् मातः ! सत्त्वस्य किमु दुर्घटम् । मृणालमृदुलः शेषः क्षमाभारं दधाति यत् ? ॥ ६३ ॥ भद्राऽवादीत् पुरो वत्स ! भोगाननुदिनं त्यज । सहस्व त्वं मनुष्याणां गन्धान् पश्चाद् व्रतं भज ॥ ६४ ॥ शालिभद्रस्ततो भद्रावचनं प्रतिपद्य तत् । भार्यां च तूलिकामेकां मुञ्चति स्म दिने दिने ॥ ६५ ॥

इतश्चासीत्पुरे तस्मिन् धन्यः सत्कर्मधन्यधीः । सुभगंभावुकः श्रीभिः शालिभद्रस्य भावुकः ॥६६॥ शालिभद्रस्वसा साश्रु स्नपयन्ती तु तं तदा । किं रोदिषीति तेनोक्ता जगादेति सगद्गदम् ॥६७॥ व्रतं ग्रहीता मे भ्राता मुञ्चत्येकां दिने दिने । भार्यां च तूलिकां चाहं तेन रोदिमि हेतुना ॥ ६८ ॥ धन्यः सनर्म तामूचे वराकः फेरुपोतवत् । हीनसत्त्वस्तव भ्राता य एवं कुरुते किल ॥ ६९ ॥ अन्याभिरिति च प्रोचे स

गोपुरोभयतः क्लृप्तेन्द्रनीलकदलीवनम् । मणिमयप्रतीहारस्ताम्भितेक्षणमङ्गिनाम् ॥ ३० ॥ परःसहस्रमाणिक्यस्तम्भं कनकभित्तिमत् । सुजात्यरूप्यवलभि कुरुविन्दाश्मकुट्टिमम् ॥ ३१ ॥ सप्तभूमितया सप्तलोक्या मण्डनिकामिव । साहस्रात्तमिवाङ्गं वा गवाक्षैर्गणनातिगैः ॥ ३२ ॥ नानादिव्यांशुकोल्लोचरोचमानं समन्ततः । प्रतिकोणं ज्वलद्धूपघटीधूमाधिवासितम् ॥ ३३ ॥ कृतकस्तूरिकालेपं स्वस्तिकन्यस्तमौक्तिकम् । स्वर्णपिप्पलस्रग्दामश्रेणिविश्राणितोत्सवम् ॥ ३४ ॥ विमानमिव जित्वेदं नृत्यत्कोटिध्वजाभुजैः । विलसद्विस्मयावेशस्तद्विवेश विशां पतिः ॥ ३५ ॥ षड्भिः कुलकम् ॥ तस्याधस्त्यान् क्षणान् धात्रीविभुरालोक्य विस्मयात् । तुरीयं क्षणमारुह्य सिंहासनमुपाविशत् ॥ ३५ ॥ सप्तम्यां भुवि भद्रेत्य शालिभद्रमजूहवत् । आयातः श्रेणिकोऽस्तीह वत्स! तं द्रष्टुमेह्यधः ॥ ३७ ॥ अम्ब! त्वमेव यद् वेत्सि तत् मूल्यं तस्य कारय । किं मया तत्र कर्तव्यमिति भद्रामुवाच सः ॥ ३८ ॥ अथाह भद्रा हे वत्स! क्रेतव्यं वस्तु न ह्यदः । किन्त्वसौ सर्वलोकानां युष्माकमपि च प्रभुः ॥ ३९ ॥ श्रुत्वेति शालिभद्रोऽन्तः सविषादमचिन्तयत् । धिक्सांसारिकमैश्वर्यं यद् ममाप्यपरः प्रभुः ॥४०॥ रोगैरिवाहिभोगैर्वा भोगैरलमतः परम् । करिष्यामि तथा स्वामी यथा नान्यो भवेद् मम ॥ ४१ ॥ अथोपरुद्धो मात्राऽयमुत्ततार शिरोगृहात् । समं वधूभिराकाशादप्सरोभिरिवामरः ॥ ४२ ॥ वेणीभुजगमञ्जीरभृङ्गसञ्जितसंयुताः । कर्पूरवृत्तं निकषा श्रीखण्डलतिका इव ॥ ४३ ॥ अन्वायान्तीर्वधूः शालिभद्रमैक्षिष्ट भूपतिः । अभ्येत्य सोऽपि राजानमनमद् विनयान्वितः ॥ ४४ ॥ युग्मम् ॥ सस्वजे शालिभद्रोऽथ स्वाङ्के सुत इवासितः । राज्ञा शिरसि चाघ्रातः खिन्नो म्लानोऽभवत् क्षणात् ॥ ४५ ॥ ततो भद्रा जगादैवं देवायं मुच्यतां यतः । मनुष्यमाल्यगन्धेन मनुष्योऽप्येष बाध्यते ॥ ४६ ॥ देवभूमिं गतः श्रेष्ठी सभार्यस्यास्य यच्छति । दिव्यनेपथ्यवस्त्राङ्गरागादि प्रतिवासरम् ॥ ४७ ॥ ततो राज्ञा विसृष्टेऽस्मिंश्चन्द्रशालामुपेयुषि । भोक्तुं भद्रार्थितः सस्नौ राजा मुद्राऽस्य चापतत् ॥ ४८ ॥ गवेषयति राज्ञीमां भद्रादेशेन दासिका । वाप्यम्भोऽन्यत्र निन्युः सोऽपश्यत्तत्र

भिर्यथा ध्यानं तपः समितिभिर्यथा । ववृधे पाल्यमानोऽसौ धात्रीभिरथ पञ्चभिः ॥ १० ॥ स पञ्चवर्षदेशीयोऽध्यापकानां समर्पितः । सिन्धोरापं इवागस्त्यो निष्पपौ सकलाः कलाः ॥ ११ ॥ अनङ्गीकृत्य पञ्चेषुं तदङ्गेनेव निर्मितः । स प्राप यौवनं स्त्रैणनेत्रालिलवलीवनम् ॥ १२ ॥ धन्या द्वात्रिंशतं कन्याः पित्रा सुत्रामसन्निभः । अथैष लक्ष्मीसंवासहरिणा परिणायितः ॥ १३ ॥ शालिभद्रः समं ताभिस्ताराभिरिव चन्द्रमाः । पितृभ्यां पूर्यमाणेष्टभोगो भोगानभुङ्क्त सः ॥ १४ ॥ दान्तः श्रीवीरपादान्ते गोभद्रो व्रतमग्रहीत् । कृत्वा चानशनं मृत्वाऽमर्त्यभूमिं जगाम सः ॥ १५ ॥ पूरयामास तत्पुण्याद् दिव्यभोगानथान्वहम् । आगत्य सवधूकाय शालिभद्राय सोऽमरः ॥ १६ ॥ कार्यं मर्त्योचितं यद्यद् भद्रा तत्तदसाधयत् । पूर्वपुण्यप्रभावेण भोगानेवैष भुक्तवान् ॥ १७ ॥ वणिजोऽन्येद्युराजग्मुर्गृहीत्वा रत्नकम्बलान् । महार्घानिति नादत्त नृपो भद्राऽग्रहीत्तु तान् ॥ १८ ॥ चिल्लणाप्रार्थितेनाथ राज्ञैकं रत्नकम्बलम् । याचिता वणिजोऽशंसन् भद्रा तानग्रहीदिति ॥ १९ ॥ प्रधानपुरुषेणाथ भूविभू रत्नकम्बलम् । महामूल्यं यथामूल्यमेकं भद्रामयाचयत् ॥ २० ॥ भद्रोचे तान् वधूपादप्रोञ्छनीकृतवत्यहम् । सन्त्येतानि तु जीर्णानीत्यतो विज्ञप्यतां विभुः ॥ २१ ॥ स गत्वैतज्जगौ राज्ञे राज्ञ्यूचे चिल्लणा त्वदः । पश्याऽस्मद्वणिजां काचवैडूर्याणामिवान्तरम् ॥ २२ ॥ तमेव पुरुषं प्रेष्य श्रेणिकेनातिकौतुकात् । शालिभद्रे समाहूते गत्वा भद्रेदमब्रवीत् ॥ २३ ॥ बहिर्न हि महीनाथ ! जातु निर्याति मेऽङ्गजः । प्रसादः क्रियतां देव ! तद्गृहागमनेन मे ॥ २४ ॥ कौतुकात् प्रतिपेदे तद् भूभुजा श्रेष्ठिनी ततः । आराजसौधं स्वगृहादतिशोभामकारयत् ॥ २५ ॥ तयाहूतस्ततो राजा पुष्पैराजानुराजिताम् । ज्वलद्धूपघटीधूमां क्षौमांशुकसमुच्छ्रयाम् ॥ २६ ॥ रम्भासमूहसंरम्भामतिजम्भारिपत्तनाम् । चन्द्रोदयचमूहृद्यामातिथ्यां च पुरः पुरः ॥ २७ ॥ विपञ्च्यमानसंगीतां प्रतिमञ्चं पदे पदे । स्थाने स्थाने च निष्पाद्यमाननीराजनोत्सवाम् ॥ २८ ॥ परिस्फूर्जत्पुरस्तोभां हट्टशोभां निभालयन् । प्राप संपत्कलाशालिशालिभद्रनिकेतनम् ॥ २९ ॥ कलापकम् ॥

अथ तद्गुणानुध्यानरसैकतानमानसतया पुरो दृष्टेवानुत्तरविमानमणिकिङ्किणीकणालयपरायणं शालिभद्रमुनिद्वयमाह,—

तह सुकुमालो तह भोगलालसो सालिभद्द ! कह णु तुमं । दुद्धरनियमधुरं पडिवन्नो नमिऊण वीरजिणं ? ॥ ४१ ॥

[ तथा सुकुमालस्तथा भोगलालसः शालिभद्र ! कथं नु त्वम् । दुर्धरनियमधुरां प्रतिपन्नो नत्वा वीरजिनम् ? ॥ ]

व्याख्या—हे शालिभद्र ! 'कह णु तुमं' 'नु' इति वितर्के, कथं त्वं दुर्धरनियमधुरां दुर्वहाभिग्रहधुरां पादपोपगमानशनरूपां 'पडिवन्नो' प्रतिपन्नः । किं कृत्वा । 'नमिऊण वीरजिणं' वीरजिनमपश्चिमतीर्थनाथं नत्वा, तदाज्ञामादायेति भावः । किंविशिष्टस्त्वम् । 'तह सुकुमालो' तथा तेन प्रकारेण सुकुमारो यथा महाराजश्रेणिकस्यापि वपुरुष्मणा त्वं व्यथां प्राप्तः । 'तह भोगलालसो' तथा तेन प्रकारेण भोगा विषयास्तेषु लालसो लम्पटः, यथा साक्षादात्मवपुर्लक्षणलक्ष्मीभिरिव द्वात्रिंशता वधूभिरसूर्यपश्याभिः सह सुरलोकादागतं गन्धमाल्यवसनमण्डनाऽशनरसमनुदिवसमवशमानसस्त्वं विलसन्नात्मनः स्वामिसत्तामपि नाज्ञासीरिति संक्षेपार्थः । व्यासार्थस्तु कथानकादवसेयः । तच्चैतत्,—

अस्ति राजगृहं हस्तिविराजद्गोपुरं पुरम् । धराहारसमाकारप्राकारपरिवारितम् ॥ १ ॥ चतुरङ्गरणक्रीडास्वजेयो द्यूतकारवत् । वशीभूताक्षचारोऽत्र नृपः श्रेणिक इत्यभूत् ॥ २ ॥ प्रिया तस्य प्रियालापचणाऽभूच्चिल्लणाभिधा । यस्या मुखस्य खण्डाभमचण्डद्युतिमण्डलम् ॥ ३ ॥ पुरे तत्र सुरेन्द्रश्रीकोशागारिकवैभवः । पुण्यैः षट्खण्डगो भद्रः श्रेष्ठी गोभद्र इत्यभूत् ॥ ४ ॥ गेहिनी गेहिनीतिज्ञा तस्य श्रीरिव जङ्गमा । निष्कलङ्कमहाशीलभद्रा भद्राभिधाऽभवत् ॥ ५ ॥ शालिक्षेत्रमहास्वप्नसूचितं गर्भमन्यदा । बिभरामास सा रत्नं रत्नभूधरभूरिव ॥ ६ ॥ उद्दामदानसद्धर्ममतिसंदोहदानथ । दोहदान् भद्रधीरस्या गोभद्रः पर्यपूरयत् ॥ ७ ॥ पूर्णे काले ततः पुत्रः पूर्णेन्दुरिव पूर्वया । तयाऽसूयत, सुश्रेष्ठं श्रेष्ठी जन्मोत्सवं व्यधात् ॥ ८ ॥ दृष्टस्वप्नानुसारेण चक्रतुः पितरावथ । सूनोः श्रीशालिनः शालिभद्र इत्यभिधां ततः ॥ ९ ॥ धारणा-

पृथिवीभृतः । सहदेवीति कान्ताऽऽसं मम पुत्रः सुकोशलः ॥ ३७ ॥ तौ व्रतं प्रतिपेदाते तद्वियोगादहं पुनः । आर्तध्यानाद् विपद्याऽस्मि जाता व्याघ्री वनान्तरे ॥ ३८ ॥ तदिदं मुखमेतद्धि सुकोशलमुखोपमम् । आः ! स्वपुत्रो मया प्राज्यपापया मारितः स्वयम् ॥ ३९ ॥ अयं कीर्तिधरः साधुर्यो मया मन्दभाग्यया । पारणार्थे भ्रमन् भिक्षां नगराद् निरवास्यत ॥ ४० ॥ अधिकाधिकपापिष्ठां धिग् धिग्मां पूर्वजन्मतः । धन्यावेतौ पितापुत्रौ पुनः सत्कर्मनिर्मलौ ॥ ४१ ॥ अधमा पापिनी दुष्टा तदहं करवाणि किम् ? । पतामि पर्वताद् येन प्रयामि विशरारुताम् ॥ ४२ ॥ विशामि ज्वलति क्वापि यद्वा दवहुताशने । भस्मीभवामि येनेति चिन्तयन्ती लुलोठ सा ॥ ४३ ॥ चक्रन्द दीनवदना स्वनखैर्विलिलेख च । दन्तैः पाणी चखादोच्चैः क्षितावास्फोटयच्छिरः ॥ ४४ ॥ अथाह केवली कीर्तिधरस्तां करुणापरः । शुभे ! संसारललितमीदृगेव शरीरिणाम् ॥ ४५ ॥ अविचारितरम्योऽयं भवोऽनर्थपदं पुनः । तृष्णा तस्यापि चूलेयं देवासुरविडम्बिनी ॥ ४६ ॥ जन्तवोऽपशवोऽप्येतद्वशाः स्युरविवेकिनः । पशुजन्मनि जातायाः शुभे ! तव किमुच्यते ? ॥ ४७ ॥ यत्त्वं चिन्तयसे पातं गिरेर्वह्नौ प्रवेशनम् । तन्न भद्रे ! समीचीनं धर्मध्यानं तु संश्रय ॥ ४८ ॥ दानशीलतपोभावभेदैस्तच्च चतुर्विधम् । पशोस्ते तु तपःशीलभावैस्त्रेधं विशुद्धिदम् ॥ ४९ ॥ तत्रापि भावनाशुद्धं तप एवाघमर्षणम् । यदाराध्य दिवं प्रापुः पञ्च पातकिनोऽपि हि ॥ ५० ॥

श्रुत्वा कीर्तिधरादिति व्यतिकरं धर्मस्य निर्माय च व्याघ्री सानशनं विपद्य च पदं वैमानिकानामगात् ।
राजर्षिः स तु धर्षितान्तररिपुस्तत्रैव शैले स्थितः शैलेशीकरणं विधाय करणं मुक्त्वा च मुक्तिं ययौ ॥ ५१ ॥

॥ इति सुकोशलमुनिकथा ॥ ४० ॥



गिरा ॥१७॥ राज्ये त्वां बालकं न्यस्य तव कीर्तिधरः पिता । प्राव्राजीदद्य सोऽविक्षद् भिक्षार्थमिह पत्तने ॥१८॥ तद्दर्शनात् तवाप्यद्य व्रतग्रहणशङ्कया । निर्वासितः स ते मात्रा दुःखेनानेन रोदिमि ॥१९॥ श्रुत्वा सुकोशलोऽप्येतद् गत्वा च पितुरन्तिके । प्रणम्य प्राञ्जली राज्यविरक्तोऽयाचत व्रतम् ॥२०॥ तत्प्रिया चित्रमालाथ गुर्व्येत्य सह मन्त्रिभिः । उवाचाऽस्वामिकं स्वामिन्! न राज्यं त्यक्तुमर्हसि ॥२१॥ नृपोऽप्युवाच गर्भस्ते गोपताविह नन्दने । त्यक्तगुर्व्यहं यामि राजा तत्रोचितं न किम्? ॥२२॥ इत्युक्त्वाऽमात्यसात् कृत्वा राज्यं स्वपितुरन्तिके । सुकोशलः प्रवव्राज कुशलो धर्मकर्मसु ॥ २३ ॥ तप्यमानौ तपस्तीव्रं सहमानौ परीषहान् । महीतले महर्षी तौ पितापुत्रौ विजह्रतुः ॥२४॥ तनुजस्य वियोगेन खेदभाक् सहदेव्यपि । आर्तध्यानपरा मृत्वा व्याघ्र्यभूद् गिरिगह्वरे ॥ २५ ॥

इतश्च तावपि मुनी कुत्रापि गिरिकन्दरे । स्थितौ वर्षाचतुर्मासीमासीनौ ध्यानवर्त्मनि ॥२६॥ प्रावृडन्ते प्रयान्तौ तौ पारणाय महामुनी । दृष्टौ मार्गे तया व्याघ्र्या कालरात्र्येव घोरया ॥ २७ ॥ व्यात्तवक्त्रान्तरा लोलजिह्वासौ दीप्रलोचना । घुर्घुरामुखरा घ्नन्ती पुच्छेनोर्वीमधावत ॥ २८ ॥ एतस्यामापतन्त्यां तावतिमात्रक्षमाधरौ । क्षमाधरौ यथाऽस्थातां कायोत्सर्गेण निश्चलौ ॥२९॥ सा तु व्याघ्री समुत्प्लुत्य पपाताद्यौ सुकोशले । दूरापातप्रहारेण पृथ्व्यां च तमपातयत् ॥३०॥ दारं दारं वपुस्तस्य रक्तं पापा पपावियम् । त्रोटं त्रोटं पलं चाश्नाद् भञ्जं भञ्जमथास्थ्यपि ॥ ३१ ॥ मर्माणि न हि कर्माणि सहायेयं भिनत्ति मे । इति भेजे मुदं मम्लौ स मुनिर्न मनागपि ॥ ३२ ॥ व्याघ्र्येति भक्ष्यमाणोऽपि शुद्धध्यानपरायणः । उत्पन्नकेवलो मोक्षं सुकोशलमुनिर्ययौ ॥ ३३ ॥ मुनिः कीर्तिधरोऽप्युच्चैस्तदा व्याघ्रीभयादिव । क्षपकश्रेणिमारूढः केवलज्ञानमासदत् ॥ ३४ ॥ सापि व्याघ्री तदङ्गानि खादं खादमशेषतः । तृप्ता सुकोशलस्यास्यं विलोक्येदमचिन्तयत् ॥ ३५ ॥

ईदृग्मुखं मया क्वापि विलोकितचरं किल । इत्यूहापोहतो जातिस्मृतिं शिश्राय सा क्षणात् ॥ ३६ ॥ अहं पूर्वभवे कीर्तिधरस्य

"सह कलेवरखेदमचिन्तयन् स्ववशतापि पुनस्तव दुर्लभा। चिरतरं च सहिष्यसि जीव हे परवशो न च तत्र गुणोऽस्ति ते॥"

इति भावनातिरिक्तं यथा भवतीति संक्षेपार्थः। व्यासार्थस्तु कथानकादवसेयः। तच्चैतत्,—

अस्ति श्रीदत्तसंकेतं साकेतमिति पत्तनम्। तत्रासीदिन्दुविशदकीर्त्तिः कीर्त्तिधरो नृपः॥ १॥ सहदेव्या महादेव्या सह वैषयिकं सुखम्। असक्तहृदयोऽभुङ्क्त हृषीकेशः श्रियेव सः॥ २॥ कालक्रमेण तनयः सहदेव्या सुकोशलः। असूयत सुधाम्भोधिवेलयेव सुधाकरः॥ ३॥ अथान्यसंयताभावादात्मानं भवचारकात्। मोचयिष्यन् नृपस्तत्र मुदितः पुत्रजन्मनि॥ ४॥ मोक्षार्थकुशलो बालमपि राज्ये सुकोशलम्। विन्यस्य विजयाचार्यपादान्ते व्रतमग्रहीत्॥ ५॥ युग्मम्॥ धात्रीभिः पञ्चभिः पाल्यमानो वृद्धिं सुकोशलः। भेजे समितिभिर्धर्मोऽनिशं कीर्त्तिधरस्य तु॥ ६॥ सुकोशलः क्रमेणाप वर्धमानः स यौवनम्। मुनिः कीर्तिधरो गुर्वनुज्ञया तु ययौ वनम्॥ ७॥ उद्योगवान् रिपून् जिग्ये बहिरङ्गान् सुकोशलः। मुनिः कीर्तिधरस्तूच्चैरन्तरङ्गान्निरन्तरम्॥ ८॥ एको गुणान् परो जीवनिकायान् षडपालयत्। उपायांश्चतुरश्चैकः सद्ध्यानांशान् परोऽश्रयत्॥ ९॥ एकः शक्तित्रयं चान्यो गुप्तित्रयमपालयत्। राज्यचिह्नान्यधादेकोऽपरः पञ्च व्रतानि च॥१०॥ साकेतनगरे मासोपवासी पारणेच्छया। भिक्षार्थमाजगामासौ मध्याह्ने तत्र चाभ्रमत्॥ ११॥ सहदेवी गवाक्षस्था तं च दृष्ट्वेत्यचिन्तयत्। पत्यौ प्रव्रजितेऽमुष्मिन् पतिहीना पुराऽभवम्॥१२॥ सुकोशलोऽपि दृष्ट्वैनं दैवतः प्रव्रजेद् यदि। निर्वीरायास्तदा मेऽद्य भुवि हस्तावुभावपि॥ १३॥ तस्मान्निरपराधोऽपि भर्तापि व्रतधार्यपि। राज्यस्थेमकृते सूनोर्निर्वास्योऽयं पुराद् मया॥ १४॥ इत्यन्यलिङ्गिभिः सार्धं राज्ञी तं निरवासयत्। किमेकमिव कुर्वीत नाकृत्यं जन्तुरात्मने?॥१५॥ धात्री सुकोशलस्याथ स्वामिनं व्रतधारिणम्। पुरान्निर्वासितं मत्वा रोदिति स्म दिवानिशम्॥१६॥ सुकोशलोऽथ तामूचे मातः! किमिति रोदिषि?। सापीति कथयामास तस्मै गद्गदया

मोहः किमभूस्ते यदुज्झिताः ? ॥ ५१ ॥ हा वत्स ! रात्रिः कल्याणी का भविष्यत्यतः परम् । स्वप्ने या दर्शयित्वा त्वामस्मान् संजीवयिष्यति ? ॥ ५२ ॥ अनेकशो विलप्येति भद्रा सिप्रानदीतटे । तस्यौर्ध्वदेहिकं चक्रे रुदती समयोचितम् ॥ ५३॥ भद्रासूनोर्गृहिण्योऽपि विलप्य च विलप्य च । सिप्रायां चक्रिरे शल्योद्धरणं क्लिन्नवाससः ॥५४॥ सुतमृत्युसमुद्भूतशोकानलकरालिता। भद्रा तदैच्छत्प्रव्रज्यां शमामृततरङ्गिणीम् ॥५५॥ समेत्य सदने साथ मुक्त्वैकां गुर्विणीं वधूम् । सवधूका परिव्रज्य व्यहरद् गुरुभिः समम् ॥५६॥

गुर्विण्यास्तनुभूः क्रमाच्च जनतः श्रुत्वेति यन्मे पिता चक्रे कालमहो महान्तमिह तन्मूर्त्या सनाथं ततः ।
प्रासादं तटिनीतटेऽतिविकटं निर्मापयामासिवानद्याप्यस्ति स विश्रुतः किल महाकालाख्ययाऽवन्तिषु ॥५७॥

॥ इत्यवन्तिसुकुमालकथा ॥ ३६ ॥

अथ सुकोशलमुनेर्वधपरीषहसहनकौशलकलाकिसलयेनात्मघार्णी वसन्तयन्नाह;—

जणणी जाया वग्घी तीए तह दारिओवि मुणिवसहो । अहियासिंतो अहिअं सुकोसलो निव्वुइं पत्तो ॥ ४० ॥

[ जननी जाता व्याघ्री तया तथा दारितोऽपि मुनिवृषभः । अधिसहमानोऽधिक सुकोशलो निर्वृतिं प्राप्तः ॥ ]

व्याख्या—जननी माता व्याघ्री सिंही जाता, तया तथा तेन प्रकारेण दारुणेनेत्यर्थः, दारितोऽपि खण्डशः कृतोऽपि 'मुणिवसहो' मुनिवृषभो मुनिषु प्रतिपन्नपरिषहोपसर्गनिर्वहणतया वृषभो धवलः स तथा, यद्वा, मुनिश्रेष्ठः, 'सुकोसलो' सुकोशलनामा 'निव्वुइं पत्तो' निर्वृतिं सुखं प्राप्तः । यः किल विदार्यते स कथं सुखमाप्नोति ? इति व्यतिरेकोऽयम् । अन्वयस्तु निर्वृतिं निर्वाणं प्राप्तः । किं कुर्वाणः । 'अहियासंतो' अधिसहमानः । किं तत् । 'अहियं' अहितं वपुर्विदारणस्वरूपं, यद्वा, अधिकं

कम् ॥ ३२ ॥ प्रतिस्थानं चितावह्निज्वालापल्लवितं ततः । सोऽगात्पितृवनं क्रीडावनं पितृपतेरिव ॥ ३२ ॥ युग्मम् ॥ कन्थारिकाकुडङ्गा-
न्तस्तस्थावनशनेन सः । समाहितः स्मरन् पञ्चपरमेष्ठिनमस्कृतिम् ॥ ३३ ॥ तत्पदान्यस्रविस्राणि लिहन्ती सह बालकैः । शृगाली कापि
तत्रागात् तत्कुडङ्गं विवेश च ॥ ३४ ॥ शोधयन्ती च सा प्राप तत्पदं चासृगास्पदम् । तं च खादितुमारेभे कृतान्तस्येव किङ्करा ॥ ३५ ॥
त्रोटं त्रोटं पलं पायं पायं रुधिरमन्तरा । तं भङ्क्तं भङ्क्तमस्थ्यश्नात् पादं सा कर्कटीमिव ॥ ३६ ॥ तस्यैकं भक्षयन्ती सा तं पदं निरशेपयत् ।
तडिम्भरूपाण्यपरं प्रथमे प्रहरे निशः ॥ ३७ ॥ तथापि न चकम्पे स दध्यौ प्रत्युत सात्त्विक. । शरीरं जीव ! कारामं भज्यते यदि भज्यताम्
॥ ३८ ॥ एवं द्वितीययामे तदूरू क्रुरा चखाद सा । जीवोऽयं क्षुधितस्तृप्यत्विति चक्रे कृपां स तु ॥ ३९ ॥ तत्तुन्दं भक्षयामास तृतीये प्रहरे
च सा । स तु दध्यौ तुदत्यंहोवृन्दं तुन्दमियं न मे ॥ ४० ॥ यामे तुर्ये च यामिन्या महासत्त्वो विपद्य सः । विमाने नलिनीगुल्मे महर्द्धिरम-
रोऽभवत् ॥ ४१ ॥ महाव्रती महापुण्यो महासत्त्वोऽयमित्यथ । तत्कालभूमौ तत्कालं विदधे महिमाऽमरैः ॥ ४२ ॥ तत्प्रियास्तमपश्यन्त्यः
पृच्छन्ति स्म सुहस्तिनम् । आख्याहि भगवन्नस्मत्पतिः कथमभूदिति ? ॥ ४३ ॥ उपयोगेन विज्ञाय सुहस्त्यपि च तत्तथा । तद्वृत्तं सर्वमा-
चख्यौ ताभ्यो मधुकिरा गिरा ॥ ४४ ॥ अवन्तीसुकुमालस्य वध्वो गत्वाथ धामनि । भद्रायाः पुरतः सर्वास्तं वृत्तान्तं न्यवीविदन् ॥ ४५ ॥
वज्रपातोपमं भद्रा तं निशम्य निशात्यये । स्मशाने प्रययौ तत्र कन्थारिवनभारिते ॥ ४६ ॥ आकृष्टं दिशि पूर्वस्यां दृष्ट्वा सूनोः कलेवरम् ।
रुरोद सवधूकापि भद्रेति विललाप च ॥ ४७ ॥ हा वत्स ! यदि वैराग्यादस्मांस्तृणवदत्यजः । शरीरं तत्किमत्याक्षीर्यदाद्यं धर्मसाधनम् ?
॥ ४८ ॥ हा वत्स ! दीक्षितोऽपि त्वमेकस्मिन्नपि वासरे । किं नाऽलमकृथाः स्वस्य विहारेण गृहाङ्गणम् ? ॥४९॥ हा वत्स ! शयने पुष्पपत्र-
पीडाऽसहिष्णु ते । वपुः कथं विषेहेऽद क्रोष्ट्रीदशनदारणम् ? ॥५०॥ हा वत्स ! यदि निर्मोहस्त्वमत्याक्षीः कुटुम्बकम् । तद् गुरुष्वपि नि-

निशि ॥१२॥ वधूभिः सह भाद्रेयः सप्तभूमगृहोपरि । क्रीडंस्तदा ददौ कर्णं तत्र कर्णरसायने ॥१३॥ अवन्तीसुकुमालस्तत् श्रुत्वा गीतमिवो-त्सुकः । कस्तूरिकामृगः सूरिवसतिद्वारमाययौ ॥१४॥ अनुभूतं मया क्वेदमिति चिन्तापरः स तु । जातजातिस्मृतिज्ञानो ययावाचार्यस-न्निधौ ॥१५॥ नत्वा चोवाच भगवन्! भद्रायास्तनयोऽस्म्यहम् । पुरा च नलिनीगुल्मविमाने त्रिदशोऽभवम् ॥१६॥ कदाचिद् यूयमप्यत्र तस्पादेव समागताः। जानीथ नलिनीगुल्मेतिवृत्तं कथमन्यथा ॥ १७ ॥ सूरिरूचे महाभाग! न तस्माद् वयमागताः। लोकालोकः समग्रोऽपि साक्षात् स्वा-ध्यायिनां पुनः ॥१८॥ श्रुत्वेत्युवाच भाद्रेयो यदीदं ब्रूत तत्प्रभो!। विमानं नलिनीगुल्मे पथा केन प्रयाम्यहम् ?॥१९॥ सूरिराह व्रतं वत्सोपात्तमेक-दिनेऽपि हि । अनन्यमनसो मोक्षं न चेद्दत्ते दिवं ध्रुवम् ॥२०॥ सोऽप्याह नलिनीगुल्मं जातिस्मृत्याऽहमस्मरम् । तत्रैव गन्तुं भूयोऽपि परिविव्राजिषाम्यतः ॥२१॥ प्रव्राजयत मामेवमार्थयत् तममुं गुरुः । जगादेदं वरं किन्तु सुकुमालोऽसि बालक ! ॥२२॥ सुचर्व्या लोहचणकाः सुपेया वह्निहेतयः । दुष्करं तु जिनोपज्ञमतीचारोज्झितं व्रतम् ॥२३॥ भाद्रेयोऽभिदधे भूम्ना प्रव्रज्योत्कण्ठितोऽस्म्यहम् । सामाचारीं चिरं कालं न च पालयितुं क्षमः ॥२४॥ आदावेव परिव्रज्यां तस्मादनशनान्विताम् । आदास्ये सत्त्वमालम्ब्य स्तोकखेदमिदं खलु ॥२५॥ गुरुरूचे महाभाग! जिघृक्षसि यदि व्रतम् । अनुज्ञापय तद् बन्धूनन्धूनिवान्धकारिणः ॥२६॥ सोऽप्याह किमनुज्ञातैरेतैर्विघ्नविधायिभिः । एष व्रती भवन्नस्मीत्युच्चखान शिरोरुहान् ॥२७॥ स्वेनैवोपात्तलिङ्गोऽसौ मा भूदिति सुहस्त्यपि । तं परिव्राजयामास प्रव्रज्यावि-धिमुच्चरन् ॥२८॥

चिरकालं तप कष्टनिर्जरं कर्तुमक्षमः । गुरूनापृच्छ्य सोऽन्यत्र ययावनशनं चिकीः ॥२९॥ अवन्तीसुकुमालस्य पादयोः सुकुमारयोः। असृग्बिम्बैरभूत् क्षोणिः शोणाब्जैर्मालभारिणी ॥ ३० ॥ शृगालाकृष्टकङ्कालमृदङ्गरवडम्बरम् । नृत्यद्वेतालमुत्तालशिवारुदितगीति-

जं दुट्ठसिगालीए ववसिअमसमंजसं तए सहियं । तं मह सुअंपि सामिय ! अवंतिसुउमाल ! भयजणयं ॥२९॥

[ यद् दुष्टशृगाल्या व्यवसितमसमञ्जसं त्वया सहितम् । तद् मम श्रुतमपि स्वामिन् ! अवन्तिसुकुमाल ! भयजनकम् ॥ ]

व्याख्या—हे स्वामिन् ! अवन्तीसुकुमाल ! 'जं दुट्ठसिगालीए ववसिय' यद् दुष्टशृगाल्या क्षुधा परिक्षीणतया निष्करुणफेरुण्डरण्डया व्यवसितं कृतं आपादान्ताङ्गोपाङ्गभक्षणमिति भावः । किंविशिष्टम् । असमञ्जसमरीतिकम् । शृगाला हि जीवतो वपुषि न लगन्तीत्यमीषां नीतिः, तया तु जीवतोऽपि तव वपुरुपाजीव्यतेत्यतोऽसमञ्जसम्, 'तए सहियं' त्वया सहितं मर्षितम्, 'तं मह सुयंपि' तद् मम श्रुतमप्याकर्णितमपि 'भयजणयं' भयजनकमातङ्कहेतुरित्यक्षरार्थः । व्यासार्थस्तु कथानकादवसेयः, तच्चैतत् ,—

अस्त्यवन्तिषु विख्यातोज्जयिनीति पुरी वरा । पुरन्दरपुरोदारसंपदुज्जयिनी श्रिया ॥१॥ त्रिखण्डभोक्ता भक्ताऽरिभूविभूग्रभुजोष्मणः । संप्रतिस्तत्र नाम्नाऽभूद् गुणैरप्रतिमो नृपः ॥२॥ इभ्यपुत्रोऽभवत्तत्र सुत्रामसुतसन्निभः । अवन्तीसुकुमालाख्यः सुकुमालः प्रसूनवत् ॥३॥ यस्य कोटिध्वजच्छायाः कामं मायामशिश्रियन् । वेश्मनि द्रविणद्रोहरक्षादक्षाऽहिंसततेः ॥४॥ भाग्यलक्ष्मीरिवामुष्य प्राचीनभवसंभवा । माता भद्रेति सर्वाणि गृहकार्याण्यचिन्तयत् ॥५॥ स्वदेहलक्षणश्रीभिरिव मूर्त्ताभिरेष तु । द्वात्रिंशता स्त्रीभिः प्रेमवतीभिः सुखमन्वभूत् ॥६॥ सूरिरार्यसुहस्त्यागादन्यदा तत्र पत्तने । जीवन्तस्वामिनं नन्तुं मुनिपञ्चशतीयुतः ॥७॥ बाह्योद्याने च भगवान् सुहस्ती समवासरत् । मध्ये पुरि च स प्रैपीद्वसतिं याचितुं मुनी ॥८॥ तौ तु भद्राभिधानायाः श्रेष्ठिन्या जग्मतुर्गृहे । पप्रच्छ सापि तौ नत्वा किं नामाऽऽदिशतां युवाम् ? ॥ ॥९॥ तावप्यूचतुरावां हि शिष्यावार्यसुहस्तिनः । तदादेशेन कल्याणि ! वसतिं प्रार्थयावहे ॥१०॥ अथैकां सार्पयामास वसत्यै विकटां कुटीम् । चारित्रनृपहस्तीति सुहस्ती तामशिश्रियत् ॥११॥ परावर्तितुमारेभे स्वाध्यायसमयेऽन्यदा । आचार्यैर्नलिनीगुल्माभिधमध्ययनं

।२५॥ शिरः प्रधानं गात्रस्येत्युक्त्वात्याऽऽदत्त तन्मुखम्। वीक्षमाणस्ततस्तूर्णं पलायिष्ट प्लवङ्गवत् ॥२६॥ युग्मम् ॥ सुंसुमायाः कबन्धस्यान्तिके स्थित्वा रुदन् धनः। वारीव बाष्पदम्भेन नयनाञ्जलिभिर्ददौ ॥२७॥ तच्च संस्कार्य तत्रैव पुरे गत्वौर्ध्वदेहिकम्। कृत्वा वैराग्यतो वीरपादान्ते व्रतमग्रहीत् ॥२८॥ चैलातेयोऽपि संतापहरं छायातरुं यथा। मुनिमेकं ददर्शाग्रे कायोत्सर्गस्थितं पथि ॥२९। स स्वेन कर्मणा तेन किञ्चिदुद्विग्नमानसः। तमुवाच समाख्याहि धर्मं संक्षेपतो मम ॥३०॥ अन्यथा सुंसुमाशीर्षच्छेदोत्कर्षवताऽसिना। शिरस्ते पातयिष्यामि फलं तालतरोरिव ॥३१॥ स ज्ञानाद् मुनिरज्ञासीद् बोधिबीजमिहाहितम्। सरजस्केऽपि सत्क्षेत्र इव स्फातिं गमिष्यति ॥३२॥ विधेह्युपशमं छेक! विवेकमथ संवरम्। इत्युक्त्वा स मुनिर्व्योम्न्युत्पपाताकाशचारणः ॥३३॥ पदानि मन्त्रवत्तानि परावर्तयतस्ततः। जज्ञे चिलातीपुत्रस्य पदार्थोल्लेख ईदृशः ॥३४॥ भवेदुपशमः क्रोधे क्षयमीयुषि तत्करे। तन्मूलं शस्त्रमेतद् मे यत्त्याज्यमिति सोऽत्यजत् ॥३५॥ भवेद् विवेको रागस्य विलये तत्करेऽस्ति मे। तत्त्याज्यमङ्गनावक्त्रमिति तच्चापि सोऽमुचत् ॥ ३६ ॥ भवेच्च संवरः सर्वेन्द्रियाणामिह संवृतौ। सा तु योगनिरोधे स्यादित्युत्सर्गेण सोऽस्थित ॥३७॥ ततोऽस्य विस्रगन्धास्रमिश्रे वपुषि कीटिकाः। रन्ध्राणि पापनिस्सारद्वाराणीव वितेनिरे ॥३८॥

सकीटिकः क्षीणविकर्मसेनाजयप्रशस्तिं परितो दधानः। चारित्रभूपालपवित्रकीर्त्तिस्तम्भो यथाऽराजत सुप्रतिष्ठः ॥३९॥

दत्त्वा सुरङ्गा इव कीटिकाभिः छिद्रश्चिलातीतनयस्य जीवः। पुरान्तरायुर्विधृतोऽपि सार्धाहोरात्रयुग्मेन ययावथ द्याम् ॥४०॥

इति चिलातीपुत्रकथा ॥३७।३८॥

अथावन्तीसुकुमालमुत्तालभक्तिभरसिद्धाङ्गजनोज्जृम्भमाणान्तश्चक्षुषा पुरःस्थमिव पश्यन्नाह,—

स्वर्गमासदत् । तत्प्रियाथ परिव्रज्य तदनालोच्य देव्यभूत् ॥५॥ यज्ञदेवस्य जीवोऽथ च्युत्वा राजगृहे पुरे । धनसार्थपतेश्चेट्याश्चिलात्यास्तनयोऽभवत् ॥६॥ यज्ञदेवप्रिया जीवश्च्युत्वाऽनुसुतपञ्चकम् । भद्राया धनभार्यायाः सुंसुमेति सुताऽजनि ॥७॥ धनो नियोजयामास चिलातीतनयं च तम् । सुंसुमायाः स्वदुहितुर्बालग्राहककर्मणि ॥८॥ शैशवे वर्तमानामप्यसौ प्राग्भवसंस्कृतः । नीलीरागो बभाजैतां रोलम्ब इव मालतीम् ॥९॥ तदन्यायरतो दासः श्रेष्ठिना निरवासि सः । गवां स्तनानभिलिहन्निव दूरेण कुक्कुरः ॥१०॥ सोऽथ सिंहगुहां चौरपल्लीं गत्वा तदीशितुः । पुत्रकोऽभूदपुत्रस्य चौरमुख्यो बभूव च ॥११॥ यौवनं सुंसुमाऽप्यापदसमा रूपसंपदा । दूरस्थोऽपि स तां दध्यौ मत्तेभ इव नर्मदाम् ॥१२॥ चिलातेयोऽन्यदोचे स्वानस्ति राजगृहे पुरे । सान्तर्धनो धनः श्रेष्ठी दुहिता चास्य सुंसुमा ॥१३॥ तस्कराः ! तत्र गच्छामो धनं वः सुंसुमा च मे । आस्थायेति व्यवस्थां सोऽपतद्धनगृहे निशि ॥१४॥ प्रस्वाप्याऽवस्वापिन्यां विद्यां चौरैरग्राहयद्धनम् । ग्राहयित्वा स्वमायातं सुंसुमां स्वयमग्रहीत् ॥१५॥ हृदि स्मरास्त्रभिन्नोऽथ स कृत्वा सुंसुमौषधीम् । चिलातेयः पलायिष्ट सलोप्त्रैः सह दस्युभिः ॥१६॥ आहूयारक्षपुरुषान् धनश्रेष्ठीत्यभाषत । वित्तं वस्तस्करोपात्तं समानयत मे सुताम् ॥१७॥ ततो धनः सहारक्षैः पुत्रैश्चायुधपाणिभिः । पुरोगः स्वमनःस्पर्धयेव त्वरितमन्वगात् ॥१८॥ इतः पीतमितो भुक्तमितः स्थितमितो गतम् । एवं वदद्भिः पदिकैः स दस्यून् समया ययौ ॥१९॥ हंहो ! हत हताद्धाय गृह्णीतेति च भाषिणः । मलिम्लुचानाममिलन्नारक्षपुरुषास्ततः ॥२०॥ काकनाशं ननाशुस्ते हित्वा लोप्त्रं मलिम्लुचाः । सुंसुमां स तु नामुञ्चत् पुरश्चेवाप्तपूपिकाम् ॥२१॥ आरक्षपुरुषास्ते तु तद्धनं प्राप्य पुष्कलम् । व्यावर्तन्त कृतार्थो हि सर्वः स्यादन्यथामतिः ॥२२॥ कृपाण्यां पाणिनैकेन द्वितीयेन च सुंसुमाम् । उद्वहन्नविशत्पल्लीं चिलातीतनयः पुनः ॥२३॥ धनस्तु तदनु प्राप सूनुभिः सह पञ्चभिः । मोचयिष्यन् सुतां तस्माद् मृगीमिव मृगादिव ॥२४॥ धने सविधमायाते रागान्धोऽथ मलिम्लुचः । सारग्राही भवामीति तत्क्षणोत्पन्नया धिया

अथ गाथायुगेन चिलातीपुत्रचरित्रसद्भावमुद्भावयन्नाह;—

सोणियगंधविणिग्गयपिवीलिया वज्जकीलियाउव्व । जस्स पविट्ठा चलणेहिं णिग्गया सीसदेसम्मि ॥३७॥
अहह ! मह पावदुव्विलसियाणमेयं कियत्ति चिंततो । पत्तो चिलाइपुत्तो सुरलोअं निच्चउज्जोयं ॥३८॥

[ शोणितगन्धविनिर्गतपिपीलिका वज्रकीलिका इव । यस्य प्रविष्टाश्चरणेषु निर्गताः शीर्षदेशे ॥
[ अहह ! मम पापदुर्विलसितानामेतत् कियदिति चिन्तयन् । प्राप्तश्चिलातीपुत्रः सुरलोकं नित्योद्द्योतम ॥ ]

व्याख्या—शोणितगन्धेन कृत्तसुंसुमाशिरःप्रसरद्रुधिरपरिमलेन विनिर्गता निःसृताश्च ताः पिपीलिकाः कीटिकाश्च शोणितगन्धविनिर्गतपिपीलिकाः कर्त्र्यः । का इव । 'वज्जकीलियाउव्व' वज्रकीलिका इव 'जस्स पविट्ठा' यस्य प्रविष्टाः । केषु । 'चलणेहिं' चरणेषु न केवलं प्रविष्टाः किन्तु 'निग्गया' निर्गता निःसृताः । क्व । 'सीसदेसम्मि' शीर्षस्य देशः प्रदेशस्तत्र ॥ 'यत्तदोर्नित्यसंबन्ध.' इति वाक्यात् स चिलातीपुत्रः सुरलोकं देवलोकं नित्योद्द्योतं सततप्रकाशभासमानं 'पत्तो' प्राप्तः । किं कुर्वन् । 'चिंततो' चिन्तयन् । किम् । 'अहह' इति खेदे, 'मह पावदुव्विलसियाणमेयं कियत्ति' मम पापदुर्विलसितानामेतत् पिपीलिकोपसर्गवेदनारूपं कियत् ? न कियदेवेति संक्षेपार्थः । व्यासार्थस्तु कथानकादवसेयः । तच्चैतत्;—

क्षितिप्रतिष्ठितपुरे यज्ञदेवो द्विजः पुरा । विजित्य पण्डितंमन्यो सूरिणाकेन दीक्षितः ॥१॥ ततः शासनदेव्याऽसौ चित्ताह्लादकिरा गिरा । दृढीकृतो व्रते विन्ध्यानीतो गज इवानिशम् ॥२॥ ततः प्रभृति चारित्रं विपुलं पालयन्नयम् । दीनः प्राचीनसंस्काराद् हीनदेहमलोऽभवत् ॥३॥ तस्य प्रियाऽनुरागार्त्तिमनुज्झन्त्यन्यदा पुनः । वश्यो मेऽस्त्विवति मूढाऽस्मै पारणे कार्मणं ददौ ॥४॥ क्षीयमाणोऽमुना मृत्वा स मुनिः

कुर्युर्दुर्जना जनयातनाम् । हरेर्दंष्ट्राङ्कुराः किं न निघ्नन्तीन्दुकलाकला ? ॥२३॥ प्रत्येपि यदि मे न त्वं स्वयं तदवधारय । सन्त्यायुधानि यद्येषां तत्प्रमाणं वचो मम ॥२४॥ श्रुत्वेति तद्गिरं राजा शङ्कितस्तत् तथाऽकरोत् । दृष्ट्वा च भुवि शस्त्राणि कुप्यति स्माविचारकः ॥२५॥ ऊचे च पालकं साधु साधु जातमिदं त्वया । अतः परं त्वमेवैतान् निगृहाण यथारुचि ॥२६॥ संसिद्धेप्सितमानी स कीनाश इव निर्घृणः । मुनीनां पीलनायाथ वने यन्त्रमसूत्रयत् ॥२७॥ प्रत्येकं पीलयामासातीवदुष्टो यतीनयम् । तेषां तु स्कन्दकाचार्यः पर्यन्ताराधनां व्यधात् ॥२८॥ अथैकं क्षुल्लकं दृष्ट्वा पर्यन्ताराधनोद्यतम् । जगाद स्कन्दकाचार्यः शिष्यवात्सल्यमोहित' ॥२९॥ बालकस्यास्य पुरतो यन्त्रे मां क्षिप पालक ! । यथात्मलोचनैरस्य पश्यामि मरणं न हि ॥३०॥ श्रुत्वेति पालकस्तस्य विशेषार्त्तिकृते शठः । तमेव क्षुल्लकं यन्त्रे क्षिप्त्वा पूर्वमपीलयत् ॥३१॥ यतीनां पील्यमानानां कपालैः साकमत्रुटन् । कर्माणि सर्वथा शुद्धभावनाभावितात्मनाम् ॥३२॥ संप्राप्य केवलालोकं लोकंपृणगुणश्रियः । ते सर्वेऽपि सदानन्दं महानन्दं प्रपेदिरे ॥३३॥ अथोत्पन्नमहाकोपो निदानं स्कन्दकोऽकरोत् । पालकेऽस्मिन् वधाय स्यां दुष्टे राष्ट्रे च राजनि ॥३४॥ इत्थं कृतनिदानोऽसौ सद्यो यन्त्रातिथीकृतः । स्कन्दकस्तु विपद्याग्निकुमारेषूदपद्यत ॥३५॥ नयन्त्यस्राविलं तस्य रजोहरणमम्बरे । पुरन्दरयशःसौधे शकुनी समपातयत् ॥३६॥ पुरन्दरयशा वीक्ष्योपलक्ष्य च तदग्रतः । रुरोद रोदयन्ती सा प्रासादं प्रतिनिःस्वनैः ॥३७॥ विलपन्त्याह भर्तारं हा पाप ! किमिदं कृतम् । रजोहरणमेतन्मे बन्धोस्तत्किं हतस्त्वया ? ॥३८॥ त्वां विना तव संकेतं विना यात्रैव पत्तने । को हन्ति हन्त ! वैरीति निरीहस्यास्य कः पुनः ? ॥३९॥ बहुधा विलपन्तीति रुदती सातिदुःखतः । सद्यो निहन्तुमात्मानं भूम्यां चास्फोटयच्छिरः ॥४०॥ अत्रान्तरे समागत्य स्कन्दकोऽग्निकुमारकः । नीत्वा सुव्रतपादान्ते व्रतिनीं तामकारयत् ॥४१॥

ततः सदेशं सपुरं च सप्रजं सपालकं दण्डकिनं प्रकोपवान् । प्राच्छाद्य संवर्तकमारुताहृतैः काष्ठैः स देवः कुरुते स्म भस्मसात् ॥४२॥

॥ इति स्कन्दककथा ॥ ३६ ॥

वल्लभा । तस्यां च स्कन्दकः पुत्रः पुरन्दरयशाः सुता ॥२॥ कुम्भकारकृताभिख्यपुरक्षोणीभृता वृता । राज्ञा दण्डकिसंज्ञेन नीता च परिणीय सा ॥३॥ एकदा पालको नाम मन्त्री दण्डकिभूपतेः । श्रावस्त्यामाययावात्मराज्यकार्येण केनचित् ॥४॥ जितशत्रुमहीभर्तुः प्रतीहारनिवेदितः । स विवेश सदःलक्ष्म कासारमिव कासरः ॥५॥ तदा तु राजा सर्वज्ञोपज्ञतत्त्वविशारदः । आसीत् कुर्वन् समं सभ्यैर्धर्माधर्मविचारणाम् ॥६॥ पालकः स तु चार्वाकचातुरीं तत्र सूत्रयन् । छिन्नजिह्व इवाकारि स्कन्दकेन निरुत्तरः ॥७॥ ततः सभाजनैः सर्वैरपि गर्वस्य पाततः । हसितो न्यङ्मुखीभूय विलक्षः स्वपुरं ययौ ॥८॥ श्रावस्त्यामन्यदा स्वामी सुव्रतः समवासरत् । स्कन्दकेन समं राजाऽभ्येत्य तं प्रणनाम च ॥९॥ प्रणम्योचितभूपीठप्रतिष्ठेषु नृपादिषु । भगवान् भववैराग्यजननीं देशनां व्यधात् ॥१०॥ श्रुत्वाथ भगवद्व्याख्यां स्कन्दको नृपनन्दनः । राजपुत्रैः समं पञ्चशत्या व्रतमुपाददे ॥११॥ भगवानथ सद्भव्यराजीराजीवभास्करः । विजहार भुवं ग्रामनगराकरमण्डिताम् ॥१२॥ तप्यमानस्तपस्तीव्रमधीयानः श्रुतं महत् । कालक्रमेण गणभृत्पदस्थः स्कन्दकोऽभवत् ॥१३॥ स राजपुत्रमुनिभिस्तैरेव सह दीक्षितैः । पञ्चशत्या वृतोऽदीपि यूथाधिप इव द्विपः ॥१४॥ अन्येद्युः प्रतिबोधाय पुरन्दरयशःस्वसुः । स्कन्दको नाथमापृच्छत् कुम्भकारकृतं प्रति ॥१५॥ स्वाम्यूचे वत्स ! भावी तेऽनर्थस्तत्र व्ययात्मकः । त्वां विनाऽऽराधकाः सर्वे भवितारश्च संयताः ॥१६॥ यदमी साधकाः सर्वे तदा प्राप्तं न किं मया ? । चिन्तयित्वेति चलितः स्कन्दकस्तत्पुरं प्रति ॥१७॥ पालकस्तु समाकर्ण्य समायान्तं स्फुरत्तमाः । आयुधानि न्यधाच्छन्नं प्रासुकोद्यानभूमिषु ॥१८॥ एत्य च स्कन्दकाचार्यो मुनिपञ्चशतीवृतः । तत्रैव समवासार्षीत् तं नन्तुं चाययौ नृपः ॥१९॥ श्रुत्वा तद्देशनां क्षीराश्रवलब्ध्यातिवन्धुराम् । प्रशंसन् दण्डकी राजा प्रविवेश पुरं ततः ॥२०॥ याचित्वैकान्तमेकान्ते मत्सरी पालको नृपम् । जगाद स्कन्दकोऽयं ते राज्यार्थ्यस्ति समागतः ॥२१॥ अनेन सह योद्धारः सर्वे पाखण्डधारिणः । शस्त्राणि गोपयित्वोर्व्यां सर्वे त्वां हन्तुमुद्यताः ॥२२॥ सज्जनाकृतयः

इत्थं तेन दृढप्रहारिमुनिना कर्मेधचक्रे तपोवह्निना भवभीतिशीतजनितात् त्रातुं स्वमुत्कम्पतः।
लोकालोकतमोऽपहेन महसा तत्कालमुन्मीलता दृष्ट्वैवैष पुरो विमुक्तिवनितामाकृष्य भेजेऽपि च ॥५१॥

॥ इति दृढप्रहारिकथा ॥३५॥

अथ स्कन्दकाचार्यशिष्यचरित्रचित्रीयमाणचित्तः प्रवक्ति;—

खंदगसीसेहिं तहा पीलिज्जंतेहिं अहह जंतेहिं। जं तेहिं पीलियाइ नियकम्माइं तमच्छेरं ॥३६॥

[ स्कन्दकशिष्यैस्तथा पीड्यमानैरहह ! यन्त्रैः। यत् तैः पीडितानि निजकर्माणि तदाश्चर्यम् ॥ ]

व्याख्या—स्कन्दकाचार्यशिष्यैस्तथा तेन प्रकारेण घोरेणेत्यर्थः, "पीलिज्जंतेहिं" पीड्यमानैः, अहहेत्यनेकार्थत्वात् तादृग्निरपराधमुनिविनाशविडम्बनानुस्मरणात् खेदे अद्भुते च, वक्ष्यमाणमाह—"जंतेहिं" "द्वितीयातृतीययोः सप्तमी" (हैं० प्रा० ३।१३५।) इति प्राकृतलक्षणाद् यन्त्रेषु पीलनोपकरणेषु 'जं तेहिं' यत्तैः पीलितानि पेषितानि 'नियकम्माइं' निजानि च तानि कर्माणि च निजकर्माणि, 'तमच्छेरं' तदाश्चर्यम्। अपि चोक्तमस्माभिः—

"कल्याणवर्णिकामृद्धचै गरीयान् सहजानरीन्। क्लिश्यमानोऽपि क्लिश्नाति नागो धातूनिवाखिलान् ॥"

इति संक्षेपार्थः। व्यासार्थस्तु कथानकादवसेयः। तच्चैतत्;—

श्रावस्ती नाम भरतभूमावस्तीह पूर्वरा। जितशत्रुरिति ख्यातस्तत्र धात्रीधवोऽभवत् ॥१॥ धारिणीति कलामालधारिणी तस्य

ब्रह्मस्त्रीभ्रूणगोघातपातकान्यक्रपोऽकल्पम् ॥३०॥ मामीदृशमपि त्रातुं साधवो यूयमर्हथ । किमपि स्थानमस्थानं भानोर्भासयतो भुवम् ॥३१॥ अथ ते यतयस्तस्मै यतिधर्ममुपादिशन् । सर्वपापक्षयोपायमखिलापायनाथिनम् ॥३२॥ भो भद्र ! कियदेवैतद्दैहिकं तव पातकम् ? । तपसा हन्यतेऽनन्तभवसंभृतमप्यदः ॥३३॥ नीचोऽपि क्रियते मूर्ध्नि पात्रीभूय कृतव्रतः । विषोढानलसंपर्कः पङ्क एव निरूपणम् ॥३४॥ तपः संपल्लतामूलं प्रतिकूलं शुचां तपः । तपो भवाम्बुधेः कूलं कुकूलं कर्मणां तपः ॥३५॥ मनःक्षेत्रे शुभध्यानकृपिर्मोक्षफला तदा । एधतेऽघतृणौघं चेत् क्षेत्रज्ञो ननु निन्दति ॥३६॥ इति श्रुत्वा श्रुतिसुधाकिरस्तेषाममूं गिरः । व्रतं निर्वृतिकामोऽथ समादत्त समाहितः ॥३७॥ न भोक्ष्ये तत्र यत्राह्नि स्मरिष्याम्यस्य पाप्मनः । करिष्ये सर्वथा क्षान्ति सोऽग्रहीदित्यभिग्रहौ ॥३८॥ पूर्वावस्कन्दिते तस्मिन्नेव ग्रामे कुशस्थले । विवेकी विजहारात्मकर्मक्षयचिकीरसौ ॥३९॥ स एवायं बकध्यानी पापः पापीयसामपि । इत्यभर्त्स्यत लोकेन स तस्मिन् विहरन् मुनिः ॥४०॥ ब्रह्मस्त्रीभ्रूणगोघातपातकी बत कीदृशः । निस्त्रपो दर्शयत्यास्यमूर्ध्वस्फोटं न याति किम् ? ॥४१॥ परतः स्फिट पापिष्ठ ! व्रती केनासि निर्मितः ? । दूष्यते व्रतमप्येतद् गरेणेव पयस्त्वया ॥४२॥ जल्पतेति जनेनोच्चैः श्वेव लोष्टैरकुट्यत । विशन् गृहेषु भिक्षार्थं स ईर्यासमितो मुनिः ॥४३॥ विशेषकम् ॥ स्मार्यमाणो जनेनेति तत्पापमयमन्वहम् । शान्तस्वान्तो न भुङ्क्ते स्म तादृशां किमु दुष्करम् ? ॥४४॥ लेष्टुभिर्मुष्टिभिः पांशुवृष्टिभिर्यष्टिभिर्जनाः । यजघ्नुः सोऽधिसेहे तत् सम्यक् चैवमभावयत् ॥४५॥ आत्मन् ! मा खेदमायासीरमी कर्मप्रदीपनम् । शमयन्तीति कुर्वाणास्त्वयि तेनोपकारिणः ॥४६॥ शापाभिचारमन्त्रेण कर्मदोषं तवोत्कटम् । अमी स्वयं निगृह्णन्तः किं न स्युरुपकारिणः ? ॥४७॥ दूये तु कर्मदोषोऽयं मां विमुच्य कथञ्चन । निष्कारणोपकर्तॄणाममीषां यल्लगिष्यति ॥४८॥ एवं मैत्रीपवित्रेण मुदितामोदशालिना । उपेक्षापद्मलेनाऽन्तःकरुणाशरणात्मना ॥४९॥ क्षुत्तृषालाभशीतोष्णवधाक्रोशपरीषहान् । सहता तेन षण्मासी दिनैकवदलङ्घ्यत ॥५०॥

विलपन्ति निशम्य च। देवशर्मा क्रुधा घोरः परिघेण जघान तान् ॥११॥ शस्यानीव खले तेन कुट्यमानान् विलोक्य तान्। त्रस्यतश्च स्थिरीकुर्वन् प्राप चौरचमूपतिः ॥१२॥ तत्रागत्यासिदण्डेन द्विजमुण्डमखण्डयत्। तदस्रगन्धविभ्रान्ता त्रोटयामास दाम गौः ॥ १३ ॥ शृङ्गाग्रैरुल्लिखन्ती सा दस्यून् पूत्कारभीषणा। उल्ललाल खुरोदग्रा पताकीकृत्य वालधिम् ॥ १४ ॥ तामप्येषोऽर्ज्जुनीं विश्वदुर्जनीभाव-दुर्मदः। द्विधा कृत्वाऽसिघातेन पातयामास पातकी ॥ १५ ॥ आ' पाप ! निष्कृप ! कृतं किमेतदिति वादिनी। वेलामासवती तेनाभ्या-यान्ती ब्रह्मणी हता ॥ १६ ॥ ततो जरायुमध्यस्थ तस्या गर्भ द्विधा कृतम्। विस्फुरन्तमुदैक्षिष्ट स पापिष्ठशिरोमणिः ॥ १७ ॥ दृष्ट्वेति विह्वलस्यास्य निस्त्रिंशो न्यपतत्करात्। तन्मूलेव मनःस्थानेऽशुष्यन्निस्त्रिंशतापि सा ॥ १८॥ ततः प्रोद्भूतकारुण्यपरिवाहैरिवाश्रुभिः। पूर्य-माणेक्षणः सोऽयं चिन्तयामासिवानिति ॥१९॥ आस्तदेतद् मयाऽकारि कुर्यान्न श्वपचोऽपि यत्। दर्शयिष्ये च कस्याहमद्रष्टव्यमुखो मुखम् ? ॥ २० ॥ अस्यैकस्यात्मजीवस्य कृते किं किं कृतं मया। इदं तु तत्कृत यस्य फलं दुर्गतिरप्यणु ॥ २१ ॥ सगोभ्रूणौ हतौ हन्त ! मयैतौ द्विजदम्पती। अमून्येतदपत्यानि जीवन्त्यपि हतानि हा ! ॥ २२ ॥ वराकाणाममीषां कः पालको हा ! भविष्यति ?। ममापि कः शरण्यः स्याद् घोरदुर्गतिपातिनः ? ॥२३॥ ध्रुवमेतन्न मे कोऽपि प्रायश्चित्तं प्रदास्यति । ज्वलन्तमग्निमात्मीयगेहे क्षिपति कः किल ? ॥ २४ ॥ ईदृक्पापकृतः प्राय प्रायश्चित्तं न मे भवेत्। श्वेतिमा क्वापि जायेत नीलीरक्तस्य वाससः ? ॥ २५ ॥ तदहं भैरवं पातं करिष्यामि गिरेरत । शरीरं पापकारीति खण्डशो येन जायते ॥ २६ ॥ दृढप्रहारी सुदृढ चिन्तयन्निति यातवान् । प्रत्यासन्ने गिरौ तत्र मुनीन् दृष्ट्वा ननाम च ॥ २७ ॥ धर्मलाभाशिषं दत्त्वा समभाषन्त तेऽपि तम्। परिम्लानमुखो भद्र ! भग्नमान इवासि किम् ? ॥ २८ ॥ स तूवाचेत्यहं पापी भाष्यमाणोऽपि पाप्मने। मलिनः स्पृश्यमानोऽपि मलिनीकुरुते परम् ॥ २९ ॥ येषामेकतममपि श्वभ्रपाताय तान्यहम्।

क्रमादथाचार्यपदे निवेश्य श्रीस्थूलभद्रस्त्रिदिवं जगाम ॥१७०॥

॥ इति श्रीस्थूलभद्रकथा समाप्ता ॥३४॥

अथ दृढप्रहारिमुनिपरिदृढतामभिष्टौति—

छम्मासनिराहारो तवसोसियघोरकम्मपब्भारो । सिद्धिसुहं संपत्तो दढप्पहारी महासत्तो ॥३५॥

[ षण्मासानिराहारस्तपःशोषितघोरकर्मप्राग्भारः । सिद्धिसुखं संप्राप्तो दृढप्रहारी महासत्त्वः ॥ ]

अस्याः पदार्थः स्पष्टः, व्यासार्थस्तु कथानकादवसेयः । तच्चैतत्—

पुरा सुसीमनि ग्रामे भूतशर्माऽभवद् द्विजः । तस्यासीत्कपिला विद्युदिव वारिमुच प्रिया ॥१॥ छायार्कयोरिव शनिस्तयोरजनि नन्दनः । पिङ्गलः स पिवत्क्रीडाकम्पिताखिलबालकः ॥२॥ तद् दुष्कर्मोपतप्ताभ्यां पितृभ्यामयमन्यदा । गृहाद् निर्वासितश्चौरपल्लीमेकां समासदन् ॥३॥ नृशंसचरितैस्तैस्तैरात्मनस्तुल्य इत्यसौ । चौरसेनाधिपतिना पुत्रत्वेनाऽन्वमन्यत ॥ ४ ॥ चौरपल्लीपतौ तस्मिन् यातेऽथ यमधामनि । तत्पुत्र इति चौरैस्तत्पदेऽसौ विनिवेशितः ॥५॥ निस्त्रिंशघातैरुद्दण्डैर्गण्डशैलानपि क्षिपन् । असौ दृढप्रहारीति नाम्ना निजगदे जनैः ॥६॥ अन्यदा विश्वलुण्टाकः स लुण्टाकचमूवृतः । ग्रामं कुशस्थलं लुण्टालम्पटो लुण्टितुं ययौ ॥७॥ ब्राह्मणो देवशर्मेति तत्रासीत् तस्य मन्दिरे । धेनोर्नवप्रसूताया राद्धं दुग्धेन पायसम् ॥८॥ भाजनेषु शिशूनां तद् गेहिनी पर्यवेषयत् । यावत्तावदमी चौरास्तत्रैव समुपाययु. ॥९॥ युग्मम् ॥ चक्रुर्डिम्भरूपाणां भुञ्जतां भाजनानि ते । तत्पायसं चखादुश्च दुश्चरित्रा द्विका इव ॥१०॥ दृष्ट्वेति डिम्भरूपाणि

स्त्रीगीयमानतपोगुणः ॥१५१॥ नगरीमध्यचैत्यानि वन्दमानः पदे पदे । जगाम पूर्वसुहृदो धनदेवस्य धामनि ॥१५२॥ युग्मम् ॥ विशंस्तत्र धनेश्वर्या धनदेवगृहस्थया । अभ्युत्थाय ववन्देऽसावासितश्च महासने ॥१५३॥ भगवानप्यथो धर्मवार्ताभिरनुगृह्य ताम् । पप्रच्छ धर्मशीले ! किं धनदेवो न दृश्यते ॥१५४॥ धनेश्वर्यप्यदोऽवादीत् भगवन्! श्रावको धनम् । व्ययते स्म, निधिं पश्चादपश्यद् न च पैतृकम् ॥१५५॥ ततोऽर्थ-हीनस्तृणवल्लघुम्मन्योऽत्र पत्तने । ययौ देशान्तरमसौ द्रविणार्जनहेतवे ॥१५६॥ ज्ञात्वोपयोगाद्धर्मोपदेशव्याजादथ प्रभुः । अधःस्थितनिधि-स्तम्भं दर्शयन् हस्तसंज्ञया ॥१५७॥ व्याहार्षीदयि ! संसारस्वरूपं पश्य कीदृशम् । गृहमीदृग्भवद्भर्तुर्वाणिज्य तस्य तादृशम् ॥१५८॥ युग्मम्॥ भगवानेवमाख्याय धनेश्वर्यै मुहुर्मुहुः । ययौ विहर्तुमन्यत्र जिनधर्मं प्रभावयन् ॥१५९॥ यथागतागतस्याख्यद् धनदेवस्य तत्प्रिया । धर्म्यां स्तम्भं समुद्दिश्य स्थूलभद्रकथां तथा ॥१६०॥ व्यमृशद्धनदेवोऽपि स्तम्भमुद्दिश्य देशनाम् । चक्रे यद्भगवान्नूनमिह भाव्यो निधिस्ततः ॥१६१॥ बुद्ध्वेति तत्क्षणात्तेन स्तम्भमूलमखन्यत । निधिश्चाविरभूत्तत्र कन्दः पुण्यतरोरिव ॥१६२॥ धनदेवोऽभवत्तेन धनेनातिधनेश्वरः । स्थूलभद्रप्रसादोऽयमिति च व्यस्मरद् न हि ॥१६३॥ धनदेवोऽन्यदा गत्वा पाटलीपुत्रपत्तनम् । स्थूलभद्रमवन्दिष्ट तमूचे च कृताञ्जलिः ॥१६४॥ त्वत्प्रसादेन दारिद्र्यसमुद्रं तीर्णवानहम् । त्वं गुरुस्त्वं च मे स्वामी तदादिश करोमि किम् ? ॥१६५॥ भूयास्त्वमार्हत इति स्थूल-भद्रस्य भाषितम् । धनदेवोऽभिगृह्याथ स्वस्थानमगमत्पुनः ॥१६६॥ स्थूलभद्रोऽथ शिष्यौ द्वौ महागिरिसुहस्तिनौ । यक्षार्यापालितावेता-वित्यार्योपपदौ व्यधात् ॥१६७॥ तौ स्थूलभद्रहेमाद्रिसूर्याचन्द्रमसाविव । साङ्गानि दश पूर्वाणि महाप्रज्ञावधीयतुः ॥१६८॥ विश्वदर्शितया नेत्रे बहुश्रुततया श्रुती । जनोद्धारतया हस्तौ तौ श्रुतस्य विरेजतुः ॥१६९॥

तपोनिधी तौ समधीतविद्यौ शान्तौ च दान्तौ गुरुलब्धिमन्तौ ।

ताः स्थूलभद्रं वीक्ष्य ववन्दिरे ॥१३१॥ यक्षोचे श्रीयको दीक्षां मया सह समाददे । क्षुधालुः कारितश्चायं तपः पर्युषणादिने ॥१३२॥ पौरुष्या सार्धपौरुष्याऽपार्धेनानशनं क्रमात् । बालवत्कवलैर्भोज्यं कारितोऽसौ मया मुनिः ॥१३३॥ निशीथे स ततो धर्मध्यानान्मृत्वा दिवं गतः । मया च याचितः संघः प्रायश्चित्तं तदेनसः ॥१३४॥ अदुष्टभावात्त्वं शुद्धेत्युक्ताऽनेन तथाप्यहम् । ताम्यन्ती प्रापिता देवतया सीमन्धरं जिनम् ॥१३५॥ भरतादागताऽऽर्येयं निर्दोषेत्यवदज्जिनः । कृपया मन्निमित्तं च व्याचक्रे चूलिकाद्वयम् ॥१३६॥ ततोऽहं छिन्नसंदेहा देव्यात्र प्रापिता पुनः । श्रीसंघस्यार्पितवती चूलिकाद्वितयं च तत् ॥१३७॥ उक्त्वेति स्थूलभद्राय ययुस्ताः सोऽप्यगाद् गुरुम् । न ददौ वाचनां तस्यायोग्योऽसीति गुरुर्जगौ ॥१३८॥ दीक्षादिनात्प्रभृत्येषोऽप्यपराधानचिन्तयत् । ऊचे च न स्मराम्यागो गुर्वादिष्टोऽस्मरच्च तत् ॥१३९॥ न करिष्यामि भूयोऽद इत्युदित्वा नमन्नयम् । गुरुणोचेऽथ ते दास्ये न पुरो वाचनामहम् ॥१४०॥ स्थूलभद्रार्थितेनाथ संघेन भणितो गुरुः । जगौ यथा विचक्रेऽनेनान्योऽपि विकरिष्यति ॥१४१॥ स संघेनाग्रहादुक्तो विवेदेत्युपयोगतः । न मत्तः शेषपूर्वाणामुच्छेदो भाव्यतोऽस्तु तत् ॥१४२॥ अन्यस्मै शेषपूर्वाणि प्रदेयानि त्वया न हि । इत्यभिग्राह्य भगवान् स्थूलभद्रमवाचयत् ॥१४३॥ सर्वपूर्वधरमथ स्थूलभद्रमहामुनिम् । तमाचार्यपदे श्रीमान् भद्रबाहुरतिष्ठपत् ॥१४४॥ गते वर्षशते वीरमोक्षात्सप्ततिकाधिके । भद्रबाहुरथ स्वामी ययौ स्वर्गं समाधिना ॥१४५॥ आचार्यः स्थूलभद्रस्तु श्रावस्त्यामन्यदा ययौ । उद्यानेऽस्थाच्च तं नन्तुमागमच्च पुरीजनः ॥१४६॥ नत्वा पुरो निविष्टेषु भव्येषु भगवानपि । चिरं चकार संसारत्रासिनीं धर्मदेशनाम् ॥१४७॥ देशनान्ते स्वसुहृदं श्रावस्तीवासिनं विभुः । धनदेवमनायातं विज्ञायैवमचिन्तयत् ॥१४८॥ स नः प्रियः सुहृन्नूनमिह नास्ति कुतोऽन्यथा । पुर्लोकः सकलोऽप्यागाच्च पुनः स्नेहलोऽपि सः ॥१४९॥ गतो देशान्तरं वा स्याद् रोगी वा स्यादिति स्वयम् । गच्छामस्तद्गृहमपि सोऽनुग्राह्यो विशेषतः ॥१५०॥ इति निश्चित्य भगवान् संघलोकसमन्वितः । वन्दिभिः स्तूयमानः

जगदेकमुनेस्तस्य संसर्गेण ममाप्यहो ! । नृपादिष्टं विनाऽन्यस्य पुंसोऽस्ति नियमः खलु ॥११२॥ श्रुत्वेति सोऽवदद् भद्रं स्थूलभद्राय साधवे । यास्यामि तस्य पन्थानं भवत्यैव निवेदितम् ॥ ११३ ॥ भद्रमस्तु च ते भद्रे ! पालय स्वमभिग्रहम् । उक्त्वैवं सुगुरोः पार्श्वे स गत्वा व्रतमाददे ॥११४॥ द्वादशाब्दीयदुष्कालसंकटे गलितं श्रुतम् । संभूयाऽमीमिलल्लघ पाटलीपुत्रपत्तने ॥११५॥ संघेन प्रहितौ गत्वा नेपाले यतिनावुभौ । दृष्टिवादभृतं भद्रबाहुमाह्वयतामथ ॥११६॥ सोऽप्युवाच महाप्राणध्यानसिद्धौ समेष्यते । तद्वचस्तौ मुनी संघस्यागत्या-शंसतामथ ॥११७॥ संघेन प्रहितावन्यौ शिक्षयित्वेत्यथो मुनी । संघाज्ञालोपिनो दण्डः कः स्यादिति स वाच्यताम् ॥११८॥ संघाद् बहिः स कर्तव्य इति वक्ति यदा तु सः । तर्हि तद्दण्डयोग्योऽसीत्याचार्यो वाच्य एव सः ॥११९॥ ताभ्यां गत्वा तथैवोक्तो भद्रबाहुरथावदत् । मैवं करोतु भगवान् संघः किंतु करोत्वदः ॥१२०॥ मयि प्रसादं कुर्वाणः श्रीसंघः प्रहिणोत्विह । शिष्यान् मेधाविनस्तेभ्यो दास्यामि खलु वाचनाः ॥१२१॥ ताभ्यामेत्य तथाऽऽख्याते श्रीसंघोऽपि प्रमोदभाक् । प्राहिणोत् स्थूलभद्रादिमुनिपञ्चशतीमथ ॥१२२॥ सूरिस्तान् वाचयामास तेऽप्यानन्त्यात् श्रुताम्बुधेः । उद्भज्येयुर्निजं स्थानं स्थूलभद्रस्त्ववास्थित ॥१२३॥ उद्भज्यसे किमित्युक्तः सूरिणा सोऽब्रवीदिदम् । नोद्भज्ये भगवन् ! किन्तु समाल्पा एव वाचनाः ॥१२४॥ सूरिरूचे मम ध्यानं पूर्णप्रायमिदं ततः । तदन्ते वाचनास्तुभ्यं प्रदास्यामि त्वदिच्छया ॥१२५॥ पूर्णे ध्याने ततः सूरिर्भूरिशस्तमपाठयत् । द्विवस्तूनानि पूर्वाणि दश यावत्पपाठ सः ॥१२६॥ सूरयः पाटलीपुत्रमथाजग्मुः सहामुना । तस्थुश्चोपवने प्रापुश्चात्र वन्दारवो जनाः ॥१२७॥ व्रतिन्यः स्थूलभद्रस्य भगिन्यो वन्दनागताः । गुरु प्रणम्य पप्रच्छुः स्थूलभद्र ! क्व नु प्रभो ! ॥१२८॥ इह यत्तालयेऽस्तीति गुरूक्ते ता उपेयुषीः । दृष्ट्वा चित्रयितुं स्थूलभद्र शार्दूलतामधात् ॥१२९॥ वीक्ष्य सिंहं तु भीतास्ताः सूरिमेत्य व्यजिज्ञपन् । ज्येष्ठार्य जग्रसे सिंहस्तत्र सोऽद्यापि विद्यते ॥१३०॥ ज्ञात्वोपयोगादाचार्योऽप्याह सिंहो न सोऽस्ति तु । अथोपेताश्च

भगवन्! वयम्। वेश्या धनस्य वश्याः स्मो मन्मथस्यापि नान्यथा ॥९४॥ स मुनिः प्राह लोलाक्षि! प्रसीद मयि सीदति। अस्ति द्रव्यं किमस्मासु तैलं च चणकेष्विव ॥ ९५ ॥ नेपालभूधवोऽपूर्वसाधवे रत्नकम्बलम्। दत्ते तमानयेत्यूचे सापि खेदयितुं मुनिम् ॥ ९६ ॥ तत्राकालेऽपि गत्वा भूपालात्कम्बलमाप्य च। स मुनिर्ववले तत्र वर्त्मन्यासंश्च तस्कराः ॥ ९७ ॥ आयाति लक्षमित्याख्यात्तेषां सिद्धाञ्जनः शुकः। तैरप्युपेक्षिते भित्तौ याति यातीति चावदत् ॥ ९८ ॥ मुनिं चौरपतिः प्राह सत्यं वद किमस्ति ते?। तेन वंशान्तरस्तीति ख्याते सोऽमुच्यताऽमुना ॥९९॥ समागत्य च कोशायै स ददौ रत्नकम्बलम्। साऽक्षिपत् क्षालपङ्के तं सोऽब्रवीत् किमिदं शुभे! ॥१००॥ सोचे शोचसि मूढेदं न स्वं नरकपातिनम्। सोऽवदद् बोधितः साधु साध्वहं रक्षितो भवात् ॥ १०१ ॥ शुद्ध्यै गुरुं प्रयास्यामि धर्मलाभोऽस्तु तेऽनघे!। साह क्षमेथा बोधाय मया यदसि खेदितः ॥ १०२ ॥ इच्छामीति भणित्वा स गुर्वन्तिकमुपेत्य च। गृहीत्वालोचनां तीव्रमाचचार पुनस्तपः ॥ १०३ ॥ राज्ञादीयत कोशापि तुष्टेन रथिनेऽन्यदा। नृपायत्तेति सा रागं विनापि तमुपाचरत् ॥ १०४ ॥ स्थूलभद्रगुणस्तोत्रपरायै शयितो रथी। बाणाल्यानीतमाकन्दलुम्ब्याऽस्यै स्वमरोचयत् ॥ १०५ ॥ सापि सर्षपराश्युप्तसूचीन्यस्तसुमोपरि। ननर्त स्म नो सूच्या विद्धा राशिश्च न क्षतः ॥ १०६ ॥ स ततः प्राह तुष्टोऽस्मि दुष्करेणामुना तव। सोवाच विस्मयेथा मा किमभ्यासस्य दुष्करम्? ॥ १०७ ॥ माकन्दलुम्बीच्छेदस्ते नृत्यं मे च न दुष्करम्। अशिक्षितं स्थूलभद्रश्चक्रे यत्तत् तु दुष्करम् ॥ १०८ ॥ द्वादशाब्दानि बुभुजे यत्र भोगान् मया सह। तत्रैव चित्रशालायां तस्थौ सोऽखण्डितव्रतः ॥ १०९ ॥ स्थूलभद्रं विनान्येषां मनो मथ्नाति मन्मथः। न सुरा नासुराः केचिदत्र भग्ना महारथ! ॥ ११० ॥

श्रीनेमितोऽपि शकटालसुतं विचार्य मन्येत को न भुवने भटमेकमेव।
देवोऽद्रिदुर्गमधिरुह्य जिगाय मोहं यन्मोहनालयमयं त्वधिगम्य धीरः? ॥ १११ ॥

मेऽभिग्रहः प्रभो ! । ज्ञात्वोपयोगाद् योग्यं तं गुरुस्तत्रान्वमन्यत ॥७४॥ साधवोऽथ ययुः सर्वे स्वं स्वं स्थानं प्रतिश्रुतम् । स्थूलभद्रोऽपि च प्राप कोशावेश्यानिकेतनम् ॥ ७५ ॥ तमभ्युदस्थात्कोशापि विकोशाब्जमुखी ततः । ऊचे च स्वागतं स्वामिन् ! किङ्करी किं करोमि ते ? ॥ ७६ ॥ चतुर्मासीवसत्यै मे चित्रशालेयमर्प्यताम् । इत्याह स्थूलभद्रस्तां सा तूचे गृह्यतामिति ॥ ७७ ॥ तया प्रगुणिते सद्यो बालवेश्मन्युवास सः । मुनिरूप इवोर्वाग्निस्तत्र कामरसार्णवे ॥ ७८ ॥ अथ सा षड्रसाहारभोजनस्यापि नाशकत् । मनः क्षोभयितुं तस्य विश्वचेतोहरापि हि ॥ ७९ ॥ मुनेस्तस्येन्द्रियजयप्रकर्षेण चमत्कृता । प्रपेदे श्रावकत्वं सा गृहीत्वेममभिग्रहम् ॥ ८० ॥ तुष्टः कदापि कस्मैचिद्ददाति यदि मां नृपः । विना पुमांसमेकं तमन्यत्र नियमो मम ॥ ८१ ॥ निर्व्यूढाभिग्रहांस्त्रींस्तान् प्रावृषोऽतिक्रमाद् यतीन् । स्वागतं दुष्करकरा इत्यूचे गुरुरागतान् ॥ ८२ ॥ अथायान्तं स्थूलभद्रमुत्थाय गुरुरब्रवीत् । दुष्करदुष्करकर ! स्वागतं ते महामुने ! ॥ ८३ ॥ सासूयाः साधवस्तेऽथाचिन्तयन्नित्यहो ! गुरोः । इदमामन्त्रणं मन्त्रिपुत्रताहेतुकं खलु ॥ ८४ ॥ यद्यसौ तत्तथा वृत्त्या कृतदुष्करदुष्करः । इदं वर्षान्तरे तर्हि प्रतिज्ञास्यामहे वयम् ॥ ८५ ॥ क्रमादथाष्टमासान्ते प्रणिपत्य पुरो गुरोः । साधुः सिंहगुहावासी चकारेति प्रतिश्रवम् ॥ ८६ ॥ कोशावेश्यागृहे नित्यं षड्रसाहारभोजनः । भगवन् ! समवस्थास्ये चतुर्मासीमिमामहम् ॥ ८७ ॥ स्थूलभद्रस्य मात्सर्यादेतदङ्गीकरोत्ययम् । विचार्येत्युपयोगेन ज्ञात्वा च गुरुरब्रवीत् ॥८८॥ वत्स ! माभिग्रहं कार्षीरतिदुष्करदुष्करम् । क्षमः कर्तुममुं स्थूलभद्र एवाद्रिनिश्चलः ॥८९॥ न हि मे दुष्करोऽप्येष कथं दुष्करदुष्करः । तदवश्यं करिष्यामीत्युक्त्वा कोशामगाद् मुनिः ॥ ९० ॥ स्पर्धया स्थूलभद्रस्यायाति मन्ये तपस्व्यसौ । भवे पतन् रक्षणीय इत्युत्थाय ननाम सा ॥ ९१ ॥ वसत्यै याचितां चित्रशालां तस्य समर्प्य सा । चक्रे भुक्त्वोर्ध्वमागत्य क्षणं सत्त्वपरीक्षणम् ॥ ९२ ॥ चुक्षोभ स मुनिः प्रेक्ष्य तत्क्षणं तां मृगेक्षणाम् । स्मरसंधुक्षणं तादृग् भोज्यं हि स्त्री च तादृशी ॥ ९३ ॥ स्मरार्त्या याचमानं तं कोशाह

तेनोचेऽसौ वररुचिः पापो नस्तातघातकः । स्थूलभद्रवियोगं ते विदधे दावदारुणम् ॥५५॥ त्वद्यास्यामुपकोशायामासक्तो यावदस्त्ययम् । तावत्प्रतिक्रियां काञ्चिद् विचिन्तय मनस्विनि ! ॥ ५६ ॥ तदादिशोपकोशां यत् प्रतार्य कथमप्यसौ । विधीयतां वररुचिर्मद्यपानरुचिस्त्वया ॥ ५७ ॥ प्रेयोवियोगजाद् दुःखाद्दाक्षिण्याद्देवरस्य च । तत्प्रतिज्ञाय सा सद्यस्तत्तथा सर्वमातनोत् ॥ ५८ ॥ अथ कोशामुखान्मत्वा श्रीयकस्तं सुरारतम् । लेभे जनकवैरस्य विदितं प्रतियातनम् ॥ ५९ ॥ शकटालमहामात्यात्ययात्प्रभृति सोऽप्यभूत् । भट्टो वररुचिर्भूपसेवावमरतत्परः ॥ ६० ॥ अन्यदा नन्दभूपालः शकटालस्य संस्मरन् । सदसि श्रीयकामात्यमित्युवाच सगद्गदम् ॥ ६१ ॥ भक्तिमान् शक्तिमान्मन्त्री शकटालो ममाभवत् । दिवस्पतेरिव प्राज्यप्रज्ञोपेतो बृहस्पतिः ॥ ६२ ॥ एवमेव विपन्नोऽसौ दैवादथ करोमि किम् ? । मन्ये शून्यमिवास्थानमहं तेन विनात्मनः ॥ ६३ ॥ उवाच श्रीयकोऽप्येवमिह किं देव ! कुर्महे ? । इदं वररुचिः सर्व पापं व्यधित मद्यप. ॥ ६४ ॥ सत्यमेष सुरां भट्टः पिबतीति नृपोदिते । श्वोऽमुं दर्शयितास्मीति श्रीयकः प्रत्यवोचत ॥ ६५ ॥ प्रातः सोऽथ सदस्यानां पद्ममेकैकमार्पयत् । तस्मै भट्टाय मदनफलाम्भोभावितं पुनः ॥ ६६ ॥ भट्टः सोप्यनयद् घ्रातुं घ्राणाग्रे पङ्कजं निजम् । चन्द्रहाससुरां रात्रिपीतां सद्यो ववाम च ॥ ६७ ॥ सर्वैराक्रुश्यमाणोऽथ निर्ययौ सदसो द्विजः । विप्रेभ्यश्च सुरापानप्रायश्चित्तमयाचत ॥ ६८ ॥ तापितत्रपुणः पानमेतस्मै ते न्यवेदयन् । तदाचर्य विपेदेऽसावमोघास्त्रं हि धी· सताम् ॥ ६९ ॥

स्थूलभद्रोऽपि संभूतिविजयाचार्यसन्निधौ । अपालयद् व्रतं पारदृश्वा विश्वागमाम्बुधेः ॥ ७० ॥ प्रावृष्यथ गुरुं नत्वाऽभ्यगृह्णन् यतयः क्रमात् । सिंहदृग्विषसर्पौक·कूपेष्वनशनां स्थितिम् ॥७१॥ योग्यान् मत्वा गुरुः साधून् यावत्तानन्वमन्यत । स्थूलभद्रः पुरोभूय नत्वैवं तावदब्रवीत् ॥ ७२ ॥ कोशाभिधाया वेश्याया गृहे या चित्रशालिका । तत्राकृततपःकर्मविशेषः षड्रसाशनः ॥ ७३ ॥ स्थास्यामि चतुरो मासानिति

पितापीति वदेस्ततः ॥ ३४ ॥ जरसापि यियासौ मय्येवं याते परासुताम् । त्वं मत्कुलगृहस्तम्भो नन्दिष्यसि चिरं ततः ॥ ३५ ॥ श्रीयकोऽपि रुदन्नेवमाह गद्गदया गिरा । तात ! घोरमिदं कर्म कुर्वीत श्वपचोऽपि किम् ? ॥ ३६ ॥ अमात्योऽथाब्रवीदेवमेवं कुर्वन् विचारणाम् । मनोरथान् पूरयसि वैरिणामेव केवलम् ॥ ३७ ॥ पितृहत्यापि ते नात्तविषं मां हिंसतस्तदा । पित्रैवं बोधितोऽसौ तत् प्रतिपेदे चकार च ॥ ३८ ॥ किमकारि त्वयेत्युक्तः क्ष्माभुजा श्रीयकोऽवदत् । अभक्तो यत्प्रभोस्तेन पितापि निहतो मया ॥ ३९ ॥ कृतौर्ध्वदेहिकं नन्दस्ततः श्रीयकमब्रवीत् । सर्वव्यापारसहिता मुद्रेयं गृह्यतामिति ॥४०॥ व्यजिज्ञपदिति क्ष्मापं श्रीयकोऽस्ति ममाग्रजः । स्थूलभद्रः समः पित्रोपकोश भोगलालसः ॥ ४१ ॥ आहूयाथ स्थूलभद्रस्तमर्थं भूभुजोदित । पर्यालोच्यामुमादेशं करिष्यामीत्यभाषत ॥ ४२ ॥ अद्यैवालोचयेत्युक्तः स्थूलभद्रोऽथ भूभुजा । अशोकवनिकां गत्वा विममर्शेति चेतसा ॥ ४३ ॥ अशनं शयनं स्नानमन्यच्च सुखहेतुकम् । कालेऽपि नानुभूयेत दुर्गतैरिव सेवकैः ॥ ४४ ॥ त्यक्त्वा निजार्थमत्यर्थं राजार्थं कुर्वतामपि । उपद्रवन्ति पिशुना उद्बद्धानामिव द्विका ॥ ४५ ॥ यथा स्वदेहसर्वस्वव्ययेनापि प्रयत्यते । राजार्थे तद्वदात्मार्थे यत्यते किं न धीमता ? ॥ ४६ ॥ विमृश्यैवं व्यधात्केशोत्पाटनं पञ्चमुष्टिभिः । दत्तं देवतया शेषमुनिवेषमथाददे ॥ ४७ ॥ ततश्च स महासत्त्वो गत्वोपनृपति ब्रुवन् । आलोचितमिदं धर्मलाभः स्तादिति निर्ययौ ॥ ४८ ॥ किमेष कपट कृत्वा यायाद् वेश्यागृहं पुनः । इत्यप्रत्ययतः क्ष्मापः सौधाग्रस्थस्तमैक्षत ॥ ४९ ॥ प्रदेशे शवदुर्गन्धेऽप्यकूणितविकूणिकम् । यान्तं दृष्ट्वा यतीन्द्रं तं नरेन्द्रोऽघूर्णयच्छिरः ॥५०॥ भगवान् वीतरागोऽसावस्मिन् धिग्मे कुचिन्तितम् । इत्यात्मानं निनिन्दोच्चैर्नन्दस्तमभिनन्दयन् ॥ ५१ ॥ स्थूलभद्रोऽपि गत्वा श्रीसंभूतिविजयान्तिके ॥ दीक्षां सामायिकोच्चारपूर्विकां प्रत्यपद्यत ॥५२॥ उपरुध्य नृपेणापि कृत श्रीकरणाधिपः । चकार श्रीयको राज्यचिन्तामवहितः सदा ॥ ५३ ॥ कोशाया नित्यमावासे विनीत श्रीयको ययौ । स्थूलभद्रवियोगार्ता सापि त वीक्ष्य चाऽरुदत् ॥५४॥

वानुपलक्षितः ॥ १५ ॥ तदा वररुचिर्गत्वा मन्दं मन्दाकिनीजले । दीनाराष्टोत्तरशतग्रन्थिं न्यस्य ययौ गृहे ॥ १६ ॥ दीनारग्रन्थिमादाय तज्जीवितमिवैष तु । चरः समर्पयामास गत्वा तां लघु मन्त्रिणे ॥ १७ ॥ स्वयं गुप्तात्तदीनारस्ततोऽमात्यो निशात्यये । ययौ राज्ञा समं गङ्गामागाद् वररुचिश्च सः ॥ १८ ॥ द्रष्टुकामं नृपं दृष्ट्वोत्कृष्टमानो विकृष्टवाक् । गङ्गामढौकत स्तोतुं मूढो वररुचिस्ततः ॥ १९ ॥ स्तोत्रान्तेऽचालयद् यन्त्रमंह्रिणासौ परन्तु न । दीनारग्रन्थिरुत्पत्य पपात करकोटरे ॥ २० ॥ तत्ततोऽन्वेषयन्नेष मन्त्रिणाऽभाषि किं न ते । दत्ते न्यस्तमपि द्रव्यं गङ्गा यन्मुहुरीक्षसे ? ॥ २१ ॥ उपलक्ष्य गृहाणेदं निजद्रव्यमिति ब्रुवन् । तस्मै दीनाय दीनारग्रन्थिमर्पयति स्म सः ॥ २२ ॥ निशि विन्यस्य विप्रोऽयं विप्रतारयितुं प्रजाः । द्रव्यं प्रातरसौ गृह्णातीति च प्राह भूपतिम् ॥ २३ ॥ छद्मेदं साधु विज्ञातमिति मन्त्रिणमालपन् । आययौ विस्मयस्मेरः स्ववेश्म वसुधाधवः ॥ २४ ॥ अमर्षणो वररुचिः प्रतिकाराय मन्त्रिणः । पृच्छन् गृहकथामित्थमज्ञासीच्चेटिकामुखात् ॥ २५ ॥ श्रीश्रीयकविवाहेऽथ नृपामन्त्रणतत्परः । मन्त्री प्रगुणयन्नस्ति[1] शस्त्रादि प्राभृताय च ॥ २६ ॥ छलज्ञस्तच्छलं प्राप्य वरं वररुचिस्ततः । चणकादि प्रदायेति डिम्भरूपाण्यपाठयत् ॥ २७ ॥ न वेत्ति राजा यदसौ शकटालः करिष्यति । नन्दं व्यापाद्य राज्येऽस्य श्रीयकं स्थापयिष्यति॥ २८ ॥ एवं दिने दिने डिम्भान् पठतः प्रतिचत्वरम् । जनश्रुत्या ततोऽश्रौषीदिति चाचिन्तयद् नृपः ॥२९॥ बालका यच्च भाषन्ते भाषन्ते यच्च योषितः। औत्पातिकी च या भाषा मृषा भवति सा न हि ॥ ३० ॥ तत्प्रत्ययाय राज्ञाथ प्रेषितो मन्त्रिवेश्मनि । पुरुषः सर्वमागत्य यथादृष्टं व्यजिज्ञपत् ॥ ३१ ॥ नमतो मन्त्रिणोऽथाभूद् भूपः कोपात्पराङ्मुखः । तद्भाववेदी वेश्मैत्याऽमात्यः श्रीयकमब्रवीत् ॥ ३२ ॥ राज्ञेऽस्मि कथितः केनाप्यभक्तोऽहं द्विषन्निव । असावकस्मादस्माकमुदयौ तत्कुलक्षयः ॥ ३३ ॥ रक्षंस्तं नमतो राज्ञे शिरश्छिन्द्या ममासिना । अभक्तः स्वामिनो वध्यः

१ क. ख. यन्नृपः श्रीयकोद्वाहे भोक्ष्यते मन्त्रिवेश्मनि । तड्ढौकनाय शस्त्रादि सज्ज्यमानमिहास्ति च ॥२६॥

डवायभंजण' मदनस्य मन्मथस्य भटवादः सुरासुरनरेश्वरविजयरूपा चारभटी मदनभटवादः तं भनक्ति विसूत्रयतीति स तथा तस्य संबोधनं हे मदनभटवादभञ्जन! 'तं' तद् 'गुरुवयणं' गुरोः श्रीविजयसंभूतिनाम्नो वचनं गुरुवचनं पूर्वोक्तम्, यद्वा, गुरु सिंहगुहादृग्विषाहिकूपोपकण्ठकृतस्थितिषु यतिषु दुष्करकारकेतिस्वागतवाक्यातिरेकेण गरीयो वचनं गुरुवचनं 'तुह' तव 'कुज्जइ' राजते इति संक्षेपार्थः। व्यासार्थस्तु कथानकादवसेयः। तच्चैतत्;—

देवसौधमणिज्योत्स्नापटलैः पाटलीकृतम्। पाटलीपुत्रमित्यस्ति पुरं पुरमिवामरम् ॥१॥ त्रिखण्डशासिता चण्डवैरिमुण्डविखण्डनः। गुणैर्विश्वजनानन्दो नन्दोऽभूदिह भूपतिः ॥ २ ॥ प्रकटः सेवधिः श्रीणां धियां कुट्टिम संकटम्। शकटाल इति ख्यातस्तस्यामात्यवरोऽभवत् ॥३॥ सुतावजनिषातां द्वौ तस्यार्केन्दू इव त्विषा। स्थूलभद्रस्तयोर्ज्येष्ठः कनिष्ठः श्रीयकः पुनः ॥ ४ ॥ यक्षा यक्षदत्ता भूता भूतदत्ता तथैव च। सेणा वेणा तथा रेणा प्राज्ञाः पुत्र्योऽस्य मन्त्रिणः ॥ ५ ॥ उर्वशीवावतीर्णोर्व्यां वशीकृतजगन्मनाः। वेश्याऽऽसीत् तत्र कोशेति रतिकोशो मनोभुवः ॥ ६ ॥ प्रत्यहं स्थूलभद्रोऽनुकूलभोगपरायणः। वसति स्म तदावासे समा द्वादश तन्मनाः ॥ ७ ॥ श्रीयकस्त्वङ्गरक्षोऽभूद्दक्षो नन्दस्य भूपतेः। जृम्भमाणोरुविश्रम्भस्तस्य स्वान्तमिवाङ्गवत् ॥ ८॥ अभूच्च तत्र कवितारुचिर्वररुचिर्द्विजः। नन्दमानन्दयत्काव्यैर्नवैरयमहर्निशम् ॥९॥ मन्त्री त्वेकादिसंस्थाभिः स्वपुत्रीभिस्तमन्यदा। परामूय प्रभोस्तुष्टिदानापात्रमसूत्रयत् ॥ १० ॥ ततो वररुचिश्चक्रे गङ्गान्तर्यन्त्रमत्र च। वस्त्रे वद्ध्वा न्यधाद् यष्टौ दीनारशतमष्टयुक् ॥ ११ ॥ प्रगे गङ्गामयं स्तुत्वा यन्त्रमाक्रमदंह्रिणा। दीनारास्ते च तस्यास्मादुत्पत्य न्यपतन् करे॥१२॥ एवं स विदधेऽकस्मादू विस्मापितजनोऽन्वहम्। राजा तच्च समाकर्ण्य कथयामास मन्त्रिणे ॥ १३ ॥ इदं यद्यस्ति सत्यं तत् प्रातर्वीक्षामहे स्वयम्। इत्युक्तो मन्त्रिणा राजा तथेति प्रत्यपद्यत ॥ १४ ॥ दत्त्वा शिक्षां चरः सायं प्रेषितस्तत्र मन्त्रिणा। शरस्तम्बनिलीनोऽस्थात् पत्ती-

कृतकेवलिमहिमा सुरसार्थैः श्रीनेमिना समं विहरन्। कालक्रमेण मोक्षं गतवान् ढण्ढणकुमारोऽयम् ॥ २६ ॥

॥ इति ढण्ढणकुमारकथा ॥ ३२ ॥

अथ स्थूलभद्रमुनिसुभटचारभटीं प्रकटीकुर्वन्नाह;—

उब्भडवेसा वेसा सा कोसा तस्स थूलभद्दस्स। किं कुणइ जस्स न मणं मणंपि धीरत्तणं मुअइ ? ॥ ३३ ॥

[ उद्भटवेषा वेश्या सा कोशा तस्य स्थूलभद्रस्य। किं करोति यस्य मनो मनागपि धीरत्वं न मुञ्चति ? ॥ ]

व्याख्या—तस्य जगद्विदितमहिम्नः स्थूलभद्रस्य शकटालसुतमहामुनेः सा 'कोसा' कोशानाम्नी 'वेसा' वेश्या 'उब्भडवेसा' उद्भटः स्फारः कोटीरहारकेयूरकर्णपूरतिलकताडङ्कचीरमञ्जीरमेखलाकनकशृङ्खलावलयाङ्गुलीयकाद्यशेषो वेषो मण्डनं यस्याः सा तथा, 'किं कुणइ' किं करोति, न किमपीति भावः। यस्य किम्। 'जस्स मणं' यस्य मनश्चित्तं 'मणंपि' मनागपि लेशमात्रमपि 'न धीरत्तणं मुयइ' न धीरत्वं न धैर्यं मुञ्चति। यतः,

"विषयगणः कापुरुषं करोति वशवर्तिनं न सत्पुरुषम्। बध्नाति मशकमेव हि लूतातन्तुर्न मत्तेभम्" ॥ ३३ ॥

अथ तमेव भक्तिभरतरलतया पुरःस्थमिव पश्यन्नुपश्लोकयति;—

जं दुक्करदुक्करकारउत्ति भणिओ सि थूलभद्द ! तुमं। मयणभडवायभंजण ! तं छज्जइ तुज्झ गुरुवयणं ॥ ३४ ॥

[ यद् दुष्करदुष्करकारक इति भणितोऽसि स्थूलभद्र ! त्वम्। मदनभटवादभञ्जन ! तद् राजते तव गुरुवचनम् ॥ ]

व्याख्या। हे स्थूलभद्र 'जं' यत् 'तुमं' त्वं 'भणिओ सि' भणितोऽसि। किम्। 'दुक्करदुक्करकारउत्ति' दुष्करदुष्करकारकेति। 'मयणभ-

देशनां व्यधात् ॥ ८ ॥ देशनान्ते गतौ पुर्यामापृच्छ्य पितरावथ । कुमारो ढण्ढणः स्वामिसविधे व्रतमग्रहीत् ॥ ९ ॥ तप्यमानस्तपस्तीव्रं सहमानः परीषहान् । स्पष्टं सोऽध्यैष्ट सिद्धान्तं स्थविरेभ्यः स्थिराशयः ॥१०॥ अन्यदा कर्म तस्योच्चैरान्तरायकमुदयौ । हन्ताऽयं लाभहन्ताऽभूद् येन स्वस्य परस्य च ॥११॥ साधवोऽथ जगन्नाथमपृच्छन् किं न ढण्ढणः । कुत्रापि लभते किञ्चिन्नगर्यामृद्धिभाज्यपि ॥१२॥ अथावदद् विभुर्ग्रामे धान्यपूराभिधे पुरा । विप्रो मगधदेशेऽभूदयं नाम्ना परासरः ॥ १३ ॥ ग्रामे राजनियुक्तोऽसौ ग्राम्यैः क्षेत्राणि वापयन् । सीतामाकर्षयद्भक्तेऽभ्युपेतेऽपि पृथक्पृथक् ॥ १४ ॥बुभुक्षितानपि श्रान्तानपि तृष्णातुरानपि । वृषान् दासांश्च स क्रूरो न मुमोच कथचन ॥ १५ ॥ इत्यन्तरायमर्जित्वा कर्म भ्रान्त्या चिरं भवे । ढण्ढणो विष्णुपुत्रोऽभूत् पूर्वकर्मोदितं च तत् ॥ १६ ॥ समाकर्ण्येति संविग्नः कृष्णसूनुः पुरः प्रभोः । अभ्यग्रहीदिदं यद् नो भोक्ष्येऽहं परलब्धिभिः ॥ १७ ॥ परलब्धं न तद् भुङ्क्ते लभते न स्वयं क्वचित् । कालक्षेपमसावित्थं चक्रे दुष्करकारकः ॥१८॥ वासुदेवोऽन्यदाऽपृच्छद् नेमिनाथं सभास्थितम् । मुनीनामन्तरे ह्येषां को नु दुष्करकारकः? ॥१९॥ स्वाम्याह दुष्करकराः सर्वेऽमी ढण्ढणस्त्वति । इयन्तं योऽत्यगात्कालं सोढा लाभपरीषहम् ॥ २० ॥ नत्वाथ स्वामिनं कृष्णः पुरीं द्वारवतीं विशन् । मुनिं ढण्ढणमालोक्याऽनमदुत्तीर्य कुञ्जरात् ॥ २१ ॥ विष्णुनापि ववन्देऽसाविति केनापि मोदकैः । ढण्ढणो गृहमायातः श्रेष्ठिना प्रत्यलाभ्यत ॥ २२ ॥ ढण्ढणोऽभ्येत्य सर्वज्ञं नत्वा चैवं व्यजिज्ञपत् । किं मेऽन्तरायकं कर्म क्षीणं भिक्षां यदाप्नवम् ? ॥२३॥ जिनो जगाद नो कर्म क्षीणं लब्धिश्च नैव ते । वन्दमानं हरिं दृष्ट्वा यत्त्वां स प्रत्यलाभयत् ॥२४॥ रागादिरहितः सोऽथ परलब्धिरसाविति । परिष्ठापयितुं भिक्षां प्रारेभे स्थण्डिलावनौ ॥२५॥ मोदकानिष्टकादाहचूर्णेन सह चूर्णयन् । सशब्दमयमात्मारिगात्रभङ्गमिवातनोत् ॥ २६ ॥ कराभ्यां मोदकानेष कणशः कणशो बहिः । कर्माणि चूर्णयामास शुक्लध्यानेन चान्तरा ॥ २७ ॥ किमन्यदथ स आप ज्ञानं मोदकमद्भुतम् । एकोऽपि मण्डकः पञ्च पलानि किमु वा बहु? ॥२८॥

अथ दौर्गत्यदलनदृढसारढण्ढणकुमारगुणरत्नभारमुदाहरन्नाह—

घोरंतरायकम्माणुसएणं सोवि ढंढणकुमारो । उम्मूलइ उज्जुत्तो सव्वाइं चेव कम्माइं ॥ ३२ ॥

[ घोरान्तरायकर्मानुशयेन सोऽपि ढण्ढणकुमारः । उन्मूलयत्युद्युक्तः सर्वाण्येव कर्माणि ॥ ]

व्याख्या । अपीति संभावनायाम् । यस्य यदुवंशनभोरत्नं नवमोऽर्धचक्री पिता, द्वाविंशतितमश्च जिनेश्वरो गुरु, अतः सुप्रसिद्धो ढण्ढणकुमारः 'उज्जुत्तो' उद्युक्तोऽङ्गीकृताभियोगभङ्गीकः, 'सव्वाइं चेव' सर्वाण्येव कर्माणि ज्ञानावरणादीनि 'उम्मूलइ' उन्मूलयति समूलकाषं कषति, गुम्फनकाले कविमनसि वर्तमानत्वादस्येति वर्तमाना । केन हेतुना । 'घोरंतरायकम्माणुसएण' घोरे भयंकरे अन्तरायकर्मणि योऽनुशयो दृढमत्सरः स तथा तेन; यदुक्तमस्माभिः,—

"एकापराधे तद्गोत्रं निर्मूलं कुरुते जयी । निहन्ति यत्तमोजातं तमसार्कः खलीकृत. ॥"

इति संक्षेपार्थो, व्यासार्थस्तु कथानकादवसेयः, तच्चैतत्;—

द्वारकेत्यस्ति नगरी गरीयःश्रीनिकेतनम् । स्फारहारायिताम्भोधि निकषा नाभिवद् भुवः ॥ १ ॥ तत्रार्धचक्री नवमः कृष्णनामाऽभवद् नृपः । यत्प्रतापप्रदीपस्य कज्जल मण्डलं दिवः ॥ २ ॥ द्वात्रिंशच्च सहस्राणि तस्यासन् शासितुः प्रियाः । तास्वभूद् ढण्ढणा नाम राज्ञ्येकाऽनेकसद्गुणा ॥ ३ ॥ तत्कुक्षिशुक्तिकारत्नं तस्य त्रासविवर्जितः । पुत्रो बभूव ढण्ढणकुमार इति विश्रुतः ॥ ४ ॥ उद्यौवनः क्रमेणायं करिणीभिरिव द्विप. । कन्याभिरवनीशानां हरिणा परिणायितः ॥ ५ ॥ श्रीनेमिरेकदा विश्व बोधयन् रैवताचले । समेत्य समवासार्षीद्दषीन्द्रपरिवारितः ॥ ६ ॥ श्रुत्वेति द्वारकानाथः सनाथः संमदश्रिया । सान्तःपुरपरिवारो विभुं वन्दितुमाययौ ॥ ७ ॥ यथाविधि नमस्कृत्य निविष्टेषु नृपादिषु । स्वामी मुक्तिपुरीमार्गदर्शिनीं

स्य नेमिनाथजिनेशितुः। नत्वा पादौ समायान्ती याप्ययानमधिष्ठिता ॥४॥ निजसौधतले काञ्चित् पुत्रं पुत्रवतीं निजम्। चुम्बन्तीं लालयन्ती चोल्लापयन्तीमलोकत ॥५॥ युग्मम् ॥ ततोऽसौ चिन्तयामास बाष्पाविलविलोचना। धन्येयं या स्वयं स्वीयमेवं लालयते सुतम् ॥६॥ धिक्पुनः पुण्यविकलां किल मां कोकिलामिव। यदपत्यान्यपाल्यन्त यदन्यैश्चिरजीविभिः ॥ ७ ॥ युग्मम् ॥ मत्वा मातुरभिप्रायं श्रीकृष्णो नैगमेषिणाम्। देवमाराधयामास तुष्टः सोऽप्येवमब्रवीत् ॥ ८ ॥ भावी तवानुजः किन्तु यौवने प्रव्रजिष्यति । तस्मिन् गते ततः कृष्णः प्रातर्मातुर्न्यवेदयत् ॥ ९ ॥ तदा च देवकीकुक्षौ देवः कोऽपि दिवश्च्युतः । अवतीर्णो गजस्वप्नसूचितादुभुतवैभवः ॥ १० ॥ बभूव समये विश्वरूपरूपस्ततः सुतः। नाम्ना गजसुकुमालो देवक्या लालितः स्वयम् ॥ ११ ॥ उपयेमे क्ष्मापसुतामेष नाम्ना प्रभावतीम्। सोमां च क्षत्रियाजातां सोमशर्मद्विजाङ्गजाम् ॥ १२ ॥ उद्यौवनः समं ताभ्यां प्रियाभ्यामन्यदा गजः। श्रीनेमिव्याख्यया जातवैराग्यो व्रतमग्रहीत् ॥ १३ ॥ पृष्ट्वा प्रभुं श्मशाने स मतिमान् प्रतिमां व्यधात्। दृष्टः श्वशुरकेणात्र ब्रह्मणा सोमशर्मणा ॥ १४ ॥ नैष प्रव्रज्य मत्पुत्रीं व्यडम्बयदिति क्रुधा। तन्मूर्ध्नि विदधे पालीं मृदाऽमृदुमना द्विजः ॥ १५ ॥ चिताङ्गारचितां चक्रे तामसौ तामसौजसा। गजस्तया ज्वलन्त्याऽऽसीदोषध्येव नगो निशि ॥ १६ ॥ उत्तमाङ्गे ज्वलत्युच्चैर्गजो गजनिमीलिकाम्। चक्रे शरीरं मन्वानः सर्वथा पृथगात्मनः ॥ १७ ॥ वह्निर्यथा यथा तस्याऽज्वलद् मूर्ध्नि तथा तथा। पातालयन्त्रवच्चेतः शमामृतमजीजनत् ॥ १८ ॥ अन्यत्र कारणं कार्यमन्यत्रास्य तदाऽभवत् । जज्वालास्य शिरस्यग्निः कर्माऽदह्यत चेतसि ॥ १९ ॥ अन्यच्च कारणं पश्चात् कार्यं चित्रमभूत्पुरः। तमो विलीनमग्रेऽस्य पश्चाज्ज्ञानेन्दुरुद्ययौ ॥ २० ॥

उदूढज्ञानश्रीप्रणयरसनिर्वासितरजा गजात्मा शैलेशीविधिमयवधूप्रोषितवपुः।
कपाले दीप्राग्नौ त्रुटदिति विभिन्ने किल तदा मुदा ब्रह्मद्वारादविशदपुनर्जन्मभवनम् ॥ २१ ॥

॥ इति श्रीगजसुकुमालकथा ॥३१॥

ततश्चमत्कृतावेतौ चलत्कुण्डलधारिणौ। प्रत्यक्षीभूय तं योगिनाथमस्तुवतामिति ॥ २२४ ॥ यथाऽसि द्रव्यरोगाणामतिशायी चिकित्सकः। तथैव भावरोगाणामपि त्वं योगिनां वर ! ॥ २२५ ॥ धन्यस्त्वं सुकृती सत्त्वश्लाघां यस्य पुरन्दरः। चक्रे, त्वां द्रष्टुमायावस्तेनावामपि कौतुकात् ॥ २२६ ॥ लौकिका योगिनः कायस्थैर्योपायशिलोञ्छिनः। रङ्का इव न कर्मारिमारिमाधातुमीशते ॥ २२७ ॥ भवांस्तु लब्धिमानेवमपि देहानुपेक्षया। समितावुद्यमन् कर्मानीकमर्माणि भेत्स्यति ॥ २२८ ॥ तदुग्रमतिशीर्यन्तीं तनूं स्वामपि योऽन्वहम्। उपेक्षतेऽन्तरङ्गारीञ्जेतुं तस्मै नमोऽस्तु ते ॥ २२९ ॥

तौ स्तुत्वेति सनत्कुमारममरौ नत्वा च सत्त्वात्मतां तत्वा चास्य तथा यथागतमगच्छातां सुधर्मामभि।
सोऽपि स्वं शमिराट् समाप्य शरदां लक्षैस्त्रिभिः संभृतं सर्वायुः समये विपद्य च सुरः कल्पे तृतीयेऽभवत् ॥ २३० ॥

॥ इति सनत्कुमारकथा ॥ ३० ॥

अथ भवभ्रमणोपजातखेदविच्छेदनिबन्धनं गजसुकुमालच्छायाशालमभिश्रयन्नाह;—

जस्स जलणेण सीसं झाणेण य झत्ति कम्म नीसेसं। पज्जलियं समकालं गयसुकुमालं च तं नमिमो ॥३१॥
[ यस्य ज्वलनेन शीर्षं ध्यानेन च झटिति कर्म निःशेषम्। प्रज्वलितं समकालं गजसुकुमालं च तं नमामः ॥ ]

संक्षेपार्थोऽस्या व्यक्त एव, व्यासार्थस्तु कथानकादवसेयः, तच्चेतत्;—

पुरी द्वारवतीत्यस्ति पश्चिमाम्भोधिरोधसि। हेमहर्म्या हरिहयो हरिहेतोर्न्यधत्त याम् ॥१॥ दशार्हो दशमस्तत्र वसुदेवो वसूपमः। आसीत् स्तत्रशिरोरत्नं पिता पिताम्बरस्य यः ॥२॥ देवकी सेवकीभूतभूर्भुवःस्वर्वधूजना। तत्प्रियाऽजनि यत्कुक्षावुवास गरुडध्वज.॥३॥ सान्यदा यदुरत्न-

सटीक

॥३

इत्थमुल्लसितस्वान्तवोधशान्तमना नृपः । सद्यो विहाय साम्राज्यं पटप्रान्तपरागवत् ॥ २०५ ॥ सत्वरं व्रतमादाय सुस्थिताचार्यसंनिधौ । मृगराज इवैकाकी विजहार वनाद् वनम् ॥२०६॥ युग्मम् ॥ चतुःषष्टिसहस्रान्तःपुरस्त्रीपरिवारिता । निरानन्दा सुनन्दा स्त्रीरत्नं चाट्रूनि तन्वती ॥ २०७ ॥ स्तुवन्तो दिव्यरूपेण पद्माद्या निधयो नव । द्वात्रिंशच्च सहस्राणि भूपा मुकुटवर्धनाः ॥ २०८ ॥ रत्नान्यपि चिरत्नानि चक्रादीनि चतुर्दश । आषण्मासीं वशिनं तमन्वगुः प्रतिकाननम् ॥ २०९ ॥ विशेषकम् ॥ पुण्यकर्मणि तं राज्यमिति प्राज्यमनुव्रजत् । सिंहावलोकितेनालुलोके स्तोकं स तु प्रभुः ॥ २१० ॥ असौ कोद्रवकूरेण च्छगीतक्रेण पारणम् । चतुर्थतपसो लेभे ततः षष्ठतपोऽकरोत् ॥२११॥ ततः प्रभृति वेलातिक्रमैः कदशनैरपि । रोगास्तस्याभवन् काशकच्छूश्लेष्मज्वरादयः ॥ २१२ ॥ शिरोऽक्षिकर्णहृत्कुक्षिनखपृष्ठेषु जज्ञिरे । तस्य शूलानि सप्तेति पूर्वकर्मविपाकतः ॥ २१३ ॥ सतवर्षशतीमस्य सहतः शूलवेदना । कफविप्रुण्मलामर्शाद्योऽजायन्त लब्धयः ॥२१४॥ स योगी निःस्पृहो देहे विषेहे रोगविप्लवम् । लब्धिमानपि दुष्कर्मविजयध्यानतन्मनाः ॥ २१५ ॥

अस्मिन्नवसरे शक्रः सुधर्मायामवस्थितः । प्राशंसत् तं शिरो धुन्वन् पुरतः स्वर्गिणामिति ॥ २१६ ॥ सनत्कुमारयोगीन्दोरहो ! साहसमद्भुतम् । चिकित्सयति नो रोगान् प्रार्थितस्त्रिदशैरपि ॥ २१७ ॥ जयश्च विजयश्चेति श्रुत्वा तावेव नाकिनौ । सत्त्वं सनत्कुमारस्य द्रष्टुमुत्तेरतुर्दिवः ॥ २१८ ॥ वैद्यवेषधरौ गत्वा नत्वा तमिदमूचतुः । त्वामुल्लाघं मुने ! कुर्वोऽनुजानीहि चिकित्सितुम् ॥ २१९ ॥ एवं पुनः पुनस्ताभ्यामर्थितः स महामुनिः । समाधिं पारयित्वाह भाषासमितिसंमितः ॥ २२० ॥ धर्मशीलौ ! युवां वैद्यौ मम रोगांश्चिकित्सथः । पुनः कथयतं पूर्वं द्रव्यतो भावतोऽथवा ? ॥ २२१ ॥ काशकुष्ठादयश्चैते द्रव्यात्, कर्माणि भावतः । तद् द्रव्यरोगानहमप्यलमूष्णुश्चिकित्सितुम् ॥ २२२ ॥ तथाहि पश्यतमिति ब्रुवाणः स्वाङ्गुलीमथ । श्लेष्मणा मर्दयित्वाऽयं चक्रे दीपशिखासखीम् ॥ २२३ ॥

वीशः स्मित्वाऽवोचद् द्विजोत्तमौ ! । युवामसमये रूपं निरूपितुमुपागतौ ॥ १८६ ॥ अतः क्षणं प्रतीक्षेथां स्नात्वा यावदहं तनूम् । अलंकुर्वे सभां चापि प्रतिहारादिनोद्भटाम् ॥ १८७ ॥ ततस्तौ पट्टशालैकदेशे राज्ञोदितौ स्थितौ । स्नात्वा भूमानपि स्फारं चक्रे शृङ्गार-मादरात् ॥ १८८ ॥ चामरैर्वीज्यमानश्च स्तूयमानश्च वन्दिभि । वन्द्यमानश्च भूपाद्यैरथासावासदत् सदः ॥ १८९ ॥ कनकस्थालमारोप्य कर्णिकादीपिकास्ततः । चक्रे वारवधूमुख्यास्तस्य नीराजनाविधिम् ॥ १९० ॥ अथाहूताविमौ विप्रौ चक्रिणं वीक्ष्य तत्क्षणात् । जातौ दुःखाग्निधूम्याभिरिव कृष्णमुखच्छवी ॥ १९१ ॥ अथाह विस्मितश्चक्री युवां किं विमुखाविव ? । तावूचतुरमित्यत्वं दृष्ट्वा रूपश्रियस्तव ॥ १९२ ॥ यतो देव ! यदाऽभ्यङ्ग्यमानोऽभूस्त्वं तदा तव । आसीदप्रतिरूपस्य रूपलक्ष्मीरनश्वरी ॥ १९३ ॥ अधुना तु धुनात्येषा मनसो मुदमावयोः । कुष्ठेनोत्तिष्ठमानेन लुप्यमाना शनैः शनैः ॥ १९४ ॥ नृपोऽब्रवीद् युवां विप्रौ ! जानीथः कथमप्यहो ! । तावूचतुः सुरावावां जानीवो दिव्यचक्षुषा ॥ १९५ ॥ तव रूपश्रियं शक्रादाकर्ण्यावां समागतौ । विप्रवेषधरावेतौ कौतुकेन विलोकितुम् ॥ १९६ ॥ दृष्टा चेयं विनष्टा च धिग् नृणामस्थिरं वपुः । इत्युक्त्वा तौ सुरीभूय मङ्क्षूदपततां दिवि ॥ १९७ ॥

ततो नरपतिः पश्यन् विस्मयेन निजं वपुः । ददर्शायं गतच्छायं भूषितं भूषणैरपि ॥ १९८ ॥ अथैष जातवैराग्यश्चिन्तयामासिवा-निति । खलमैत्रीव देहोऽयमहो ! क्षणविनश्वरः ॥ १९९ ॥ यत् प्रातः सिद्धमाहार्यापराह्णेऽन्नं विनश्यति । तदाधारं वपुर्नृणां किल स्थैर्य कुतोऽश्नुताम् ? ॥ २०० ॥ नवश्रोत्रविलेऽमुष्मिन् कलेवरगृहे किल । जीवस्य वसतः कालव्यालतः कुशलं कियत् ? ॥ २०१ ॥ यद्भोगा-दन्नमुच्छिष्टं विनष्टं द्रव्यमुच्यते । मलिनं च पयोऽप्यस्य वपुषः केव शोचना ? ॥ २०२ ॥ यो देवसाधुबन्धुभ्योऽप्यधिकं वीक्ष्यते जनैः । दृष्टः पत्तिरिवानिष्टे स देहो नात्मनः सखा ॥ २०३ ॥ तदस्य नश्यतो लाभं ग्रहीष्ये धर्मकर्मणा । अवक्रयकुटीवायं दह्यतां किमनेन मे ? ॥ २०४ ॥

धानयम् । प्रस्तावे क्वापि विज्ञप्तः शौरिर्णेति ससौष्ठवम् ॥ १६७ । तव देव ! वियोगेन पितरावतिदुःखितौ । तत् तयोर्दर्शनं कर्तुं प्रसादः क्रियतां मयि ॥ १६८ ॥ श्रुत्वेति तत्क्षणादेष विमानैश्छादयन् नभः । प्राप्तः सनत्कुमारोऽथ हस्तिनाग्रपुरं पुरम् ॥१६९॥ प्रजाः पुरप्रवेशोऽस्य मुदा स्थूलंभविष्णवः । असंमान्त्य इवामीषु वेश्मनामारुहन् शिखाः ॥ १७० ॥ कुमारं पितरौ दृष्ट्वाऽभजतां परमां मुदम् । ऋद्धिमस्य विलोक्यैतौ तद् न विद्मो यदूहतुः ॥ १७१ ॥ अथासौ साधयामास द्विस्त्रिखण्डामपि क्षितिम् । अखण्डितप्रतापश्च साम्राज्यं समपालयत् ॥१७२॥

अथास्य चक्रिणो भोगान् भुञ्जानस्यान्यदा भुवि । सौधर्मेन्द्रसभां प्रापेशानतः संगमः सुरः ॥ १७३ ॥ सौधर्मवासिनो देवाः प्रभया तस्य निष्प्रभाः । जज्ञिरे भास्वतो भासा भर्त्सितास्तारका इव ॥ १७४ ॥ पृष्टोऽथ निखिलैर्देवैर्देवेन्द्रः सान्द्रविस्मयैः । कथं संगमदेवस्य स्वामिंस्तेजोऽतिदुस्सहम् ? ॥ १७५ ॥ शक्रोऽभ्यधत्त विदधे तपोऽनेनातिदुस्तपम् । आचाम्लवर्धमानाख्यं तेजस्तेनौजसायते ॥ १७६ ॥ तथेति पुनरूचुस्ते कोऽप्यन्योऽपि क्वचिद् विभो ! । विद्यते हृद्यतेजोभिर्भासुरोऽयं सुरो यथा ? ॥ १७७ ॥ ततः शक्रोऽब्रवीदस्ति हस्तिनाग्रपुरेश्वरः । क्षितौ सनत्कुमारोऽस्मादपि रूपमहोमहान् ॥ १७८ ॥ जयश्च विजयश्चाथ देवौ शक्रस्य तद्वचः । अश्रद्दधानौ तं द्रष्टुं स्वर्लोकादवतेरतुः ॥ १७९ ॥ विप्रवेषधरावेतौ प्रतीहारनिवेदितौ । प्रविष्टौ स्नानशालायां तदोर्वीशमपश्यताम् ॥ १८० ॥ अथो मिथोऽपि तौ तस्य रूपातिशयरञ्जितौ । रोमाञ्चोद्धुषितौ मौलिं धुन्वानाविदमूचतुः ॥ १८१ ॥ अहो ! तैलाभिषक्तस्याप्यभूषणभृतोऽपि हि । वराशिपरिधानस्याप्यस्य रूपं निरूप्यते ॥ १८२ ॥ रूपं सनत्कुमारे यत् तद् न वैमानिकेष्वपि । इति शक्रवचो नूनममृषोद्यमजायत ॥ १८३ ॥ अथाह चक्री हे विप्रौ ! किमागमनकारणम् ? । तावूचतुर्नृपान्यद् न तव रूपनिरूपणात् ॥ १८४ ॥ तद् भूप ! रूपयुक्तस्योच्चार्य वेधास्तवोपरि । अक्षिपल्लवणं दिक्षु तेन क्षारपयोधयः ॥ १८५ ॥ रूपगर्वादथो-

सुनन्दानुमतेनेयमप्युदुह्यत चामुना ॥१४८॥ अत्रान्तरे समायातौ खेचरौ द्वौ सुराविव । आर्यपुत्रं प्रणम्येति प्राञ्जली समभाषताम् ॥ १४९ ॥ हरिचन्द्रचन्द्रसेनौ देवाऽऽवामभिधानतः । चन्द्रवेगभानुवेगखेचराधिपयोः सुतौ ॥ १५० ॥ तातावपि समायान्तौ तिष्ठतस्त्वामुपासितुम् । त्वदर्थं प्रहिते ताभ्यामेते च रथवर्मणी ॥ १५१ ॥ यस्मादशनिवेगाख्यः खेचरेन्द्रस्तवोपरि । आगच्छन् सबलोऽस्त्यात्मसुतं श्रुत्वा त्वया हतम् ॥ १५२ ॥ इति यावत् कुमाराग्रे शुद्धिमावेद्य तौ स्थितौ । चन्द्रवेगभानुवेगौ तावत् तावप्युपागतौ ॥ १५३ ॥ प्रज्ञप्तिमार्यपुत्राय तदा संध्यावली त्वदात् । वेगादशनिवेगश्च परिपन्थी समागमत् ॥ १५४ ॥ चन्द्रवेगभानुवेगौ ससैन्यावतिदुर्धरौ । बलेनाशनिवेगस्य सह योद्धुमढौकताम् ॥ १५५ ॥ सैन्ययोरुभयोः शस्त्राशस्त्रिवह्निकणच्छलात् । तदा संग्रामभीत्येव तत्रसुस्तारका दिवि ॥ १५६ ॥ मसृणा घुसृणेनेवास्त्रेण विस्रेण युध्यताम् । पाणिपादाननैः पद्मैरिव रेजे तदाजिभूः ॥ १५७ ॥ कुमारोऽशनिवेगेनाङ्घ्रिशस्त्रास्त्रदारुणम् । रणं चकार परितो वीक्ष्यमाणः सुरासुरैः ॥ १५८ ॥ अत्रान्तरे कुमारस्य पूर्वपुण्यमिवाङ्गवत् । चक्रमागात् करे तेन लूनं वैरिशिरोऽमुना ॥ १५९ ॥ चक्री सनत्कुमारोऽयं चतुर्थो जयतादिह । इति देवाः स्तुवन्तोऽस्मिन् पुष्पवृष्टिं व्यधुस्तदा ॥ १६० ॥ ततः कुमारमशनिवेगविद्याधरेशितुः । राज्यलक्ष्मीरुपेयाय बालादित्यमिव द्युतिः ॥ १६१ ॥ ततो वैताढ्यमगमच्चक्री विद्याधरैः सह । तत्र विद्याधराधीशपदे तैरभ्यषिच्यत ॥ १६२ ॥ नन्दिनीश्चन्द्रवेगस्य शतमन्याः सहस्रशः । पर्यणैषीदसौ विद्याभृतां हृद्याः कुमारिकाः ॥ १६३ ॥ वैताढ्यगिरिकूटेषु जिनायतनकोटिषु । कुमारः कारयामास ततोऽष्टाह्नीमहोत्सवान् ॥ १६४ ॥ स्वैरं क्रीडन् कुमारोऽयमिहायातोऽद्य विद्यते । भवांश्च दत्तसंकेत इवास्य मिलितः पुनः ॥ १६५ ॥

उक्ते बकुलमत्येति स्वचरित्रेऽखिलेऽपि हि । मुक्तनिद्र इवोदस्थात् कुमारस्तल्पतस्तदा ॥ १६६ ॥ ततश्चमूसमूहेन वैताढ्यं गत-

पाणिग्रहस्वरूपः किं स्वप्नोऽभूदथवाऽस्त्ययम् । यद्वाऽयं न यतोऽश्वेनापहृतोऽस्म्येक एव हि ॥ १२९ ॥ पाणिग्रहस्वरूपस्तद् नून स्वप्नोऽभवद् मम । सत्य एव पुनः पाणिकङ्कणेनामुना मनाक् ॥ १३० ॥ कुमारश्चिन्तयित्वैवमविखिन्नमनास्ततः । धम्मिल्लं परिधानं च दृढीकृत्याग्रतोऽचलत् ॥ १३१ ॥ यावत् किञ्चिदसौ वर्त्म ययौ तावत् पुरो वने । दिव्यं भवनमद्राक्षीदेकमद्रितटीगतम् ॥ १३२ ॥ इन्द्रजालं किमप्येतदपि स्यादिति जग्मिषान् । यावत् तावदिहाश्रौषीदेष स्त्रीरुदितध्वनिम् ॥ १३३ ॥ अथ यावच्च कारुण्यात् केयं कि रोदितीत्ययम् । दध्यौ तावद् व्यलापीच्च सेति दीनतराक्षरम् ॥ १३४ ॥ कुरुवंशनभश्चन्द्र ! विश्वसेननृपाङ्गज ! । सनत्कुमार ! चेद् नेह भर्ताऽभूर्मे कथचन ॥१३५॥ तत् परत्र भवेरित्थमुदीर्येति स्थिता तत । कुमारो विस्मितोऽधावत् तत्स्वरूपं निरूपितुम् ॥ १३६ ॥ उत्फालश्चन्द्रशालायां गतश्चायमलोकत । उद्बन्धनगतामेतामनिमेषां सुरीमिव ॥ १३७ ॥ आर्यपुत्रस्तु तत्पाशग्रन्थिं छुरिकया रयात् । छित्वा तामङ्कमारोप्य वीजयामास वाससा ॥ १३८ ॥ विलोक्य सापि मूर्च्छान्ते कुमारमिति साध्वसात् । अङ्कात् नोत्थातुमशकत् पङ्कादिव जरद्गवी ॥ १३९ ॥ आर्यपुत्रोऽब्रवीदेतां स्मितविच्छुरिताधरः । किं ते सनत्कुमारः स्यादिति यस्य कृतेऽक्लथाः ? ॥ १४० ॥ साऽप्यधत्त स मे भर्ता मनोरथनिवेशितः । पितृभ्यां यदहं तस्योदकपूर्वमदायिषि ॥ १४१ ॥ असंवृत्तविवाहां तु मामेकः खेचराङ्गजः । कुट्टिमादपहृत्येहानीय शून्याश्रयेऽमुचत् । १४२ । आत्मना तु गत क्वापीत्युक्तमात्रेऽनया तदा । कुमारः खेचरेणैत्योल्लालितः कन्दुको यथा ॥ १४३ ॥ हाहारवपरा सा तु मूर्च्छिता पतिता भुवि । वज्रेणेव कुमारेण पतता स तु मारितः ॥ १४४ ॥ आर्यपुत्रः समाश्वस्य तामथ स्वं न्यवेदयत् । स्त्रीरत्नं पर्यणैषीच्च सुनन्दाख्यामिमां मुदा ॥ १४५ ॥ कुमारमारितस्यास्य स्वसा संध्यावलीत्यथ । प्राप्ताऽद्राक्षीद् निजं विद्युद्वेगाख्यं मृतमग्रजम् ॥ १४६ ॥ क्रुद्धा साऽऽदौ ततोऽस्मार्षीदिति नैमित्तिकोदितम् । यद् भ्रातृवधकोऽमुष्याः परिणेता भविष्यति ॥ १४७ ॥ विमृश्येति विवाहार्थमार्यपुत्रमुपास्थित ।

च्छदच्छायां मूर्च्छितो न्यपतद् भुवि ॥ १०९ ॥ तद्वृक्षवासिना यक्षेणोक्षितोऽयं ततोऽम्भसा । लब्धसंज्ञो जलं पीत्वाऽपृच्छत् कस्त्वं कुतो जलम् ? ॥ ११० ॥ निष्कारणोपकारी स कुमारेणोदितोऽवदत् । अहं यक्षः समानैषं मानसात् त्वत्कृते जलम् ॥ १११ ॥ ऊचे कुमारस्तापो मे शाम्यस्तत्रैव मज्जनात् । यक्षश्चक्रे तथाऽमज्जदयं सज्जश्च जातवान् ॥ ११२ ॥ तत्रासिताक्षयक्षेण वीक्षितः पूर्ववैरिणा । खलीकृतश्च, यत्प्रेमद्वेषौ जन्मानुगामिनौ ॥ ११३ ॥ कुमारयक्षौ तौ कल्पाम्भोदसोदरगर्जितौ । युध्यन्तौ मल्लयुद्धेन ददृशाते सुरैरपि ॥ ११४ ॥ यक्षो मुष्टिप्रहारेण कुमारेण हतोऽनशत् । हृष्टाश्चास्योपरिष्टाच्च पुष्पवृष्टिं व्यधुः सुराः ॥ ११५ ॥ मानसादवतीर्णोऽयमथ स्त्रीपदपद्धतिम् । अद्राक्षीत् पथि पञ्चेषुतूणालीमिव सर्जिताम् ॥११६॥ विस्मितोऽग्रे गतोऽपश्यदसावष्टौ कुमारिकाः । आसामाशाधिदेवीनामिवामज्जञ्च मानसे ॥ ११७ ॥ अतिसृत्य कुमारस्ता नन्दनोद्यानमध्यगाः । अपृच्छद् नाम का यूयं किमरण्येऽत्र तिष्ठथ ? ॥ ११८ ॥ ताः प्रोचुरित एवाऽस्ति पुरी नः प्रियसंगमा । विद्याधरपतिर्भानुवेगोऽस्यां तद्भुवो वयम् ॥ ११९ ॥ अस्तं रविरुपैत्येप भद्र ! तस्माद् भवानपि । विश्रामं कुरुतामेत्य नगर्यां नः, क्व यास्यति ? ॥ १२० ॥ इत्युक्त्वा ताभिरात्मीयकिंकरैर्दर्शिता ततः । नीतो नगर्यां चण्डांशुरपि द्वीपान्तरं ययौ ॥ १२१ ॥ ततः कञ्चुकिना ताभिर्नायितो राजमन्दिरम् । असावभ्युत्थितो भानुवेगेनापि महीभुजा ॥ १२२ ॥ विहितोचितसन्मानो राज्ञाऽसौ भणितस्ततः । कुमार ! विक्रमाधार ! ममाष्टौ कन्यका इमाः ॥ १२३ ॥ जेता तदसिताक्षस्य तामसस्येव भानुमान् । पतिर्दिशामिवैतासां त्वं दिष्टोऽस्यर्चिमालिना ॥ १२४ ॥ इमास्तदुद्वहेत्युक्तः कुमारस्तत् तथाऽकरोत् । ताभिः सहैकपल्यङ्के वासवेश्मन्यशेत च ॥ १२५ ॥ अत्रान्तरे छलान्वेषी निद्राणं तं परिश्रमात् । असिताक्षः समुत्पाट्याक्षिपद् गिरिसरित्तटे ॥ १२६ ॥ यावज्जागर्ति वयसां विरावैर्विगमे निशः । कुमारस्तावदात्मानं शयितं भुवि दृष्टवान् ॥ १२७ ॥ न ताः कन्या न तद् वेश्म न तद् राज्यं न सा पुरी । किमेदित्यसावन्तर्विस्मितोऽथ व्यचिन्तयत् ॥१२८॥

च स स्फारस्फरानैक्षिष्ट खड्गिनः । अर्केन्दुकलितांल्लोकालोककूटानिवोद्भटान् ॥९०॥ कारयन्तं च संगीतं तदन्तः स्फीतवैभवम् । वारस्त्री-चामरोद्वीज्यमानं सानन्दमानसम् ॥ ९१ ॥ दृष्ट्वा शौरिस्तदाकारं सर्वथा पृथिवीपतिम् । किं कुमारोऽयमित्यन्तश्चिन्तयामास विस्मितः ॥ ९२ ॥ युग्मम् ॥ एकाकिनोऽस्य तुरगापहृतस्य कुतो ह्यदः । साम्राज्यमथवा कश्चिद् नृपोऽन्योऽयं तदाकृतिः ॥ ९३ ॥ इत्ययं संशयानोऽत्र ग्रागो बन्दिवचोऽशृणोत् । सनत्कुमार ! नन्द त्वं विश्वसेननृपाङ्गज ! ॥ ९४ ॥ श्रुत्वेति मुदितः शौरिर्ननर्त विलसद्भुजः । धन्योऽहमद्य धन्योऽहमित्युच्चैरुच्चरन् वचः ॥ ९५ ॥ श्रुत्वेति तं च दृष्ट्वोपलक्ष्य चैपोऽभ्यधावत । परिरब्धुं कुमारोऽब्धिरिव राकानिशाकरम् ॥ ९६ ॥ मिथः स्वजन्तौ तौ बाष्पाम्बुभिः स्नेहमहीरुहम् । चक्रतुर्विरहप्लुष्टं रोमाञ्चैः पत्रलं किल ॥ ९७ ॥ अन्तः प्रवेष्टुमनसौ किल तौ मिलितौ मिथः । भुजार्गलापिनद्धौ न व्यघटेतां कपाटवत् ॥ ९८ ॥ शूरसूनुरनूनेन विनयेन नृपाङ्गजम् । अथो ननाम रजसा स्वं ललाम ललामयन् ॥ ९९ ॥ यथासनमथासीनौ तावुभावथ भूपभूः । उवाच शौरिं कच्चित् ते शुभं तातम्बयोरपि ॥ १०० ॥ सोऽप्यूचे देव ! विश्वस्य विश्व-स्याप्यद्य विद्यते । शुभं त्वयि जगज्जीवे दिष्ट्या दृष्ट्या विलोकिते ॥ १०१ ॥ इति क्रमेण कथिताशेषवार्तोऽस्मादरात् । कुमारादेशतो वार-स्त्रीभिः स्नानमकारयत् ॥ १०२ ॥ भुक्तोत्तरमथाथोचत् कुमारमिति शूरसूः । स्वामिन्नश्वापहारोर्ध्वं यथावत् कथयस्व मे ॥ १०३ ॥ स्वयं स्ववृत्तमाख्यातुं नोचितं महतामिति । कुमारो बकुलमतीं दयितामादिशद् दृशा ॥ १०४ ॥ सा तु प्रज्ञप्तिविद्याया· प्रभावात् परिभाव्य तत् । कुमारे किल निद्राणेऽस्मै तद्वृत्तमचीकथत् ॥ १०५ ॥ शृणु देवर ! देवोऽयमपहृत्यार्वणा तदा । क्षिप्तः पापात्मनाऽरण्यं भवी भवमिवासखः ॥ १०६ ॥ कर्षं कर्षमयं वल्गां विभुः खिन्नकरोऽमुचत् । अश्वोऽपि सोऽन्यथाशिक्षस्तैरेव चरणैः स्थितः ॥ १०७ ॥ ततोऽवतीर्य पर्याण-मुन्मोच्य सुहृदा तव । यदाऽमोचि तदा प्राणैरपि स्वामिद्विषन्निति ॥ १०८ ॥ आर्यपुत्रस्ततस्तृष्णातुरोऽनाप्तजलः क्वचित् । गच्छन् सप्त

मिति स्वयम् । मिथः स्वप्नान् विचार्याऽन्वमोदेतां राजदम्पती ॥ ६६ ॥ अथो नवसु मासेषु पूर्णेषु नृपवल्लभा । विश्वजैत्रमियं पुत्रमसूत श्रीरिव स्मरम् ॥ ७० ॥ जन्मोत्सवं विधायोच्चैः पितरौ दुस्तरौजसः । सनत्कुमार इत्यस्य व्यधातामभिधामथ ॥ ७१ ॥ पञ्चोच्चग्रहजन्माऽसौ पुत्रः पञ्चजनेशितुः । धात्रीभिः पञ्चभिः पाल्यमानोऽभूत् पञ्चवार्षिकः ॥७२॥ शस्त्रशास्त्रकलापात्रं वर्धमानः क्रमादयम् । रमारामाभिरामाङ्गोऽभवद् यौवनमाश्रितः ॥ ७३ ॥ महेन्द्रसिंहनामाऽस्य सपांशुक्रीडितः सुहृत् । बभूव शूरकालिन्दीसुतः सत्प्रीतिविश्रुतः ॥ ७४ ॥ अन्यदा वन्यदावाग्निर्व्यंशुकानिह किंशुकान् । तन्वंस्तापयितुं पान्थान् वसन्तर्तुरवर्तत ॥ ७५ ॥ समं सनत्कुमारेण समहेन्द्रेण भूपतिः । उद्यानमगमत् क्रीडाविधौ तत्र मधूत्सवे ॥ ७६ ॥ कुमारः सारवीक्षार्थं निजाश्वस्य कशामदात् । यावत् तावदसौ भेजे मनसोऽपि नवं जवम् ॥ ७७ ॥ तस्मिन्नदर्शनीभूते वृत्तान्तं विश्वसेनराट् । ज्ञात्वाऽनुयान् महेन्द्रेण निषिद्धः स्वपदग्रहम् ॥ ७८ ॥ देव ! प्रसादमाधाय निवर्तस्व पुरं प्रति । अहं शुद्धिं कुमारस्यानेष्ये कतिपयैर्दिनैः ॥७९॥ एवमुक्त्वा नृपं म्लानमुखाब्जं शूरनन्दनः । जगाम मित्रमन्वेष्टुं संध्याराग इव क्षणात् ॥८०॥ स भ्राम्यन्मन्युहृत्पूरपूरितः परितोऽपि हि । सनत्कुमारमग्रस्थं जातरूपमथैक्षत ॥ ८१ ॥ प्रतिग्रामं प्रतिपुरं प्रत्यद्रि प्रतिपत्तनम् । पर्यटन्नटवीं चापि विशश्राम न नाम सः ॥ ८२ ॥ यावत् संवत्सरं भ्राम्यन् सनत्कुमारदिदृक्षया । प्रवृत्तिमपि न प्राप क्वापि दुःस्थ इव श्रियम् ॥८३॥ सदा भ्रमन्नरण्यानीं सदागतिरिवान्यदा । क्षीरार्णवमिवाद्राक्षीदग्रतो विपुलं सरः ॥८४॥ स-हंसवयसं स्वच्छं प्रकृत्या विपुलाशयम् । दृष्ट्वैष मुमुदे सारं कासारं तं कुमारवत् ॥८५॥ तत् प्रविश्य सरो यावज्जलकेलिं चकार सः । तावदस्याभवत् कर्णसङ्गी संगीतकध्वनिः॥८६॥ ततस्तदनुसारेण व्रजन्नेण इवोत्सुकः । शिबिरं सरसः सेतुसृष्टेरेणु स दृष्टवान् ॥८७॥ उल्ललत्पुच्छकल्लोलं वाजिवृन्दं समुद्रवत् । तत्रैकतो ददर्शैष गजानपि घनानिव ॥८८॥ शिबिरद्क्षिणेनैक्षि तेनाशोकवनीतले । आस्थानी च सुधर्मेव शस्या कस्यापि भूपतेः ॥८९॥ परितस्तां

सटीक

॥२

राज्ञा ज्ञापितः सत्त्ववानयम् । सद्धर्मद्वेषिणो तस्मै ग्रष्ठः पृष्ठमदाद् मुदा ॥ ५० ॥ स ततपायसोत्तप्तपात्रप्लोषितपुद्गलः । सत्त्वकाष्ठां परां प्राप सुवर्ण इव वर्णिकाम् ॥ ५१ ॥ अचिन्तयश्च रे जीव ! पूर्वजन्मनि जन्मिनाम् । हृत्तापकारिन् ! किं पृष्ठतापं न सहसेऽधुना ? ॥ ५२ ॥ अग्निकर्म विना कर्म कर्मरोगस्य किं स्पृशेत् ? । रे जीव ! तव वक्रस्य कथं वाऽऽर्जवसंभवः ? ॥ ५३ ॥ इत्यर्दीनेन लीनेन सत्त्वे सत्त्ववताऽमुना । सुस्थितेन स्थितं यावत् परिव्राजकभोजनम् ॥ ५४ ॥ कल्याणपात्रं कल्याणपात्रस्यास्य त्वचेतनम् । भागीव भागमादाय पृथग् जज्ञे नृपाग्रतः ॥ ५५ ॥ अथागत्य निजागारमापृच्छ्य स्वजनानयम् । दीक्षां गृहीत्वाऽभ्यारोहद् विवेकमिव पर्वतम् ॥ ५६ ॥ साक्षादिवाप्रमत्तत्व-शिखरं मुनिशेखरः । तत्रारुह्य किलामुत्रायासावनशनं व्यधात् ॥ ५७ ॥ अन्वर्धमासं प्रत्याशं परां काष्ठां चकार सः । लोकपालैः समं सख्यं भावीन्द्रो घटयन्निव ॥ ५८ ॥ तस्योत्सर्गजुषो गृध्रा. पृष्ठमांसादनं व्यधुः । अतः सत्यं चकाशे यद् मुनेरपि वनेऽरयः ॥ ५९॥ तत्रैवं सुत्रयन्तस्ते क्षते क्षारमिव न्यधुः । महात्मा सोऽधिसेहे तु निजदेहेऽपि निःस्पृहः ॥ ६० ॥ षष्टिं दिनान्यनाहारः प्राप्यायुःपारमात्मनः । इन्द्रो बभूव सौधर्मे जिनधर्मो महामुनिः ॥६१॥ त्रिदण्ड्यप्याभियोग्येन कर्मणोपार्जितेन सः । मृत्वाऽस्य वाहनत्वेन तत्राभूदभ्रमूपतिः ॥६२॥ कदाचित् कर्मणा जीवस्तेन कर्म कदाचन । यथाऽध. क्रियतेऽमूतां तौ भवान्तरितौ तथा ॥ ६३ ॥ गजश्च्युत्वा भवं भ्रान्त्वा मर्त्ये चाज्ञानकष्टतः । यक्षोऽसिताक्ष इत्यासीदसौ कैलासभूधरे ॥ ६४॥

इतश्च भारते क्षेत्रे कुरुमण्डलमण्डनम् । इहास्ति हास्तिनपुरं पुरं सुरपुरोपमम् ॥ ६५ ॥ शुनासीरनिभस्तत्रारिभूभृत्पक्षशातनः । विश्वव्याप्यश्वसेनोऽभूद् विश्वसेनो नरेश्वरः ॥ ६६ ॥ सहदेवीति तस्यासीद् देवी देवीव रूपतः । दासो यदाननस्येन्दुरङ्कित. शङ्कितो जनैः ॥ ६७ ॥ च्युत्वाऽथ जिनधर्मेन्द्रस्तस्याः कुक्षिकुशेशये । चतुर्दशमहास्वप्नसूचितः समवातरत् ॥ ६८ ॥ जिनो वा चक्रवर्ती वाऽवतीर्णोऽय-

उपरोत्स्यामहे पश्चादागत्य वयमप्यमूम् ॥ ३० ॥ मन्त्रिभिः प्रेरितो राजा तत् कुञ्जं यावदभ्यगात् । पवनापूर्णभस्त्रावदुच्छूनं तावदग्रतः ॥ ३१ ॥ चलत्कृमिकुलाकीर्णं फलमौदुम्बरं यथा । नवश्रोत्रमुखोद्वान्तविस्रपूयास्रकिल्बिषम् ॥ ३२ ॥ फेरुण्डखण्डितोपाङ्गं शकुन्याकृष्टलोचनम् । अद्राक्षीदेष बीभत्सतमं विष्णुश्रियः शवम् ॥ ३३ ॥ विशेषकम् ॥ स दृष्ट्वेदं सनिर्वेदं चिन्तयामासिवानिति । वराकीयं मृता हन्त ! नाज्ञासिषमिदं हहा ! ॥ ३४ ॥ अहं कदाग्रही बाल इव मूर्ख इवान्धवत् । शुचिभिः सचिवैरस्मि साधु साधु विबोधितः ॥ ३५ ॥ रे जीव ! यत्कृते जातिर्लज्जा शीलं कुलं यशः । त्वया त्यक्तं तया त्यक्तो भवानेकपदेऽपि हि ॥ ३६ ॥ त्यक्तोऽनया यथाऽकस्मादायुषापि भवांस्तथा । त्यक्ष्यतेऽसौ यथा त्यक्ता तज्जीव ! सुकृतं कुरु ॥ ३७ ॥ विचिन्त्येति निवर्त्याघं स्वमनोऽश्वं च चञ्चलम् । सौधमागत्य सामन्तचक्रे चक्रेऽधिपं सुतम् ॥ ३८ ॥ सुव्रताचार्यतः प्राप्य स व्रतं संवृतेन्द्रियः । मृत्वा कल्पेन कल्पेऽभूत् तृतीये त्रिदशस्ततः ॥ ३९ ॥

इतश्चास्ति पुरं रत्नपुरं तत्राभवद् नृपः । नरवाहन इत्येष भिक्षुकाणां मते रतः ॥४०॥ तत्र च्युत्वा स देवत्वाज्जिनधर्मदृढाशयः । जिनधर्माभिधानोऽभूद् महेभ्यतनयो नयी ॥ ४१ ॥ संसारसागरे मर्त्यरत्नद्वीपमुपागतः । स दौर्गत्यच्छिदे रत्नत्रयार्जनपरोऽभवत् ॥ ४२ ॥ इतश्च नागदत्तः स्त्रीवियोगार्तो मृतस्ततः । भ्रान्त्वा तिर्यक्षु विप्रोऽग्निशर्मा सिंहपुरेऽभवत् ॥ ४३ ॥ त्रिदण्डिव्रतमासाद्य द्विमासक्षपणादिकृत् स रत्नपुरमायासीदज्ञासीद् नृपतिश्च तम् ॥ ४४ ॥ स राजपूजितः पूजां लोकतो लभते पुरे । श्राद्धस्तु जिनधर्मोऽस्य भ्रूमात्रेणापि नानमत् ॥ ४५ ॥ त्रिदण्डी पूर्ववैरात् तमनमन्तं विशेषतः । रक्ताक्षो रोषतः सैष विकटादकटाक्षयत् ॥ ४६ ॥ अन्यदा पारणे भूपामन्त्रितः सोऽब्रवीदिति । मां भोजयसि चेत् तन्मेऽभिग्रहं भूपते ! शृणु ॥ ४७ ॥ जिनधर्माभिधश्रेष्ठिपृष्ठविन्यस्तभोजनः । पारये परमान्नेनावसथे तव नान्यथा ॥ ४८ ॥ राज्ञोचेऽन्यस्य पृष्ठेऽस्तु त्रिदण्डी नेति सोऽवदत् । द्विधापि जिनधर्मस्य नामन्यपि वहन् रुषम् ॥ ४९ ॥ तदा तदाग्रहं

चिन्तयति स्म च ॥ १० ॥ स कामं करणाचारं मुक्त्वान्यमविचारकः । सकामं करणाचारं तयैव सह तेनिवान् ॥ ११ ॥ एवं विष्णुश्रिया साधं मग्नस्य रतिसागरे । जगाम क्षणवत् क्षोणिपतेः कालः कियानपि ॥ १२ ॥ अन्याभिरथ राज्ञीभिस्तस्याः कार्मणमादधे । सपत्न्येकापि दुःखाय तावत्यः किं पुनश्च ताः ॥ १३ ॥ ततः श्रद्धालुनेवास्यामन्तकेनापि सा हृता । राजा तु तच्छवं कृत्वोत्सङ्गे मूढोऽब्रवीदिति ॥ १४ ॥ विनयातिक्रमः कोऽपि कोपने ! विहितो मया । यदद्य योगिनीव त्वं कृतमौना न भाषसे ॥ १५ ॥ निजं स्मरामि येनागस्तद् मनोऽग्रे त्वया हृतम् । आदेशं देहि मे देवि ! किंकरः किं करोमि तत् ? ॥ १६ ॥ इत्यनेकप्रकारं स प्रणमन् मानिनीमिव । सान्त्वयामास तां मोहग्रहिलो महिलां नृपः ॥ १७ ॥ तं तथा विकलं वीक्ष्य मन्त्रव्याजेन मन्त्रिणः । अनयन्नन्यतो मन्त्रिनरास्तच्च शवं बहिः ॥ १८ ॥ नृपतिर्यावदायासीदालोच्य सचिवैः सह । वासौकस्तावदद्राक्षीद् मृगाक्षीशून्यमञ्जसा ॥ १९ ॥ अथ क्रोशन्नमूंस्तेषामधावत वधाय सः । उल्लण्ठोल्लण्ठवद् दूरं मुमुचे सचिवैस्त्वयम् ॥ २० ॥ द्वित्रैर्दिनैः समागत्यामात्या वात्यायितं नृपम् । प्रहासगर्भितैर्भक्तियुक्तिवाक्यैरसान्त्वयन् ॥ २१ ॥ किमर्थं देव ! कोपोऽयं कृतकोपशमे त्वयि । कश्च ते मनसो मोहः परमोहभिदाभृतः ? ॥ २२ ॥ जितविश्वकलाकेले ! कलाकेलिरयं किमु । बाधते त्वां निजक्षत्रवंशकेतो ! विशारद ! ॥२३॥ देव ! त्वमसि नो नाथः सदादेशं तवान्वहम् । वयं विदध्महे तस्मात् प्रसीद किमु सीदसि ? ॥२४॥ श्रुत्वेति वचनं तेषां स्वाग्रहग्रहिलो नृपः । विष्णुश्रीर्दर्श्यतां मह्यमुवाच सचिवानिति ॥ २५ ॥ प्रोचुस्ते देव ! सा चण्डकोपाऽध्यास्ते पुराद् बहिः । मानिनीं मानयामस्तां संभूय चलताऽधुना ॥ २६ ॥ इत्युक्त्वा नृपतिर्नीतो विनीतैरिव मन्त्रिभिः । तत्र, राज्ञीशवं यत्रारक्षै रक्षितमस्ति तत् ॥ २७ ॥ तत्र दुर्गन्धमाघ्राय सर्वे नाशापुटं व्यधुः । हा ! किमेतदिति प्रोक्ता मन्त्रिणोऽप्यूचिरे नृपम् ॥ २८ ॥ देव ! कोपेन क्वथिता देवी कुञ्जेऽत्र वर्तते । गन्धोऽयं दुस्सहोऽन्येषां तस्य गन्धकरेरिव ॥ २९ ॥ तद् यूयमेव गत्वा तां पुरः सान्त्वयत क्षणम् ।

अथ सनत्कुमारगुणसारमसमानमनुमोदन्नाह—

सुच्चिय सणंकुमारो सलहिज्जइ जो तहा समत्थोवि । मोत्तूण दव्वरोगे चिगिच्छगो भावरोगाणं ॥ ३० ॥

[ स एव सनत्कुमारः श्लाघ्यते यस्तथा समर्थोऽपि । मुक्त्वा द्रव्यरोगांश्चिकित्सको भावरोगाणाम् ॥ ]

व्याख्या—'सुच्चिय' स एव 'सणंकुमारो' सनत्कुमारनामा राजर्षिः 'सलहिज्जइ' श्लाघ्यते स्तूयते । 'जो तहा समत्थोवि' यस्तथा तेन जयविजयवैमानिकसुरपुरतः करकनिष्ठाङ्गुलीपुनर्नवीकरणरूपिणा प्रकारेण समर्थोऽपि खेलौषधीप्रभृतिलब्धिरत्नाब्धिरपि 'मुत्तूण दव्वरोगे' द्रव्यरोगान् कासकुष्ठादीननेकशो मुक्त्वाऽवधीर्य 'चिगिच्छगो' विचिकित्सकः । केषाम् । 'भावरोगाणं' भावरोगाणां दुष्कर्मणामिति संक्षेपार्थः । व्यासार्थस्तु कथानकादवसेयः । तच्चैतत्—

स्वस्तिभागस्ति कनकपुरं पुरमिवामरम् । विक्रमी विक्रमयशास्तत्राजनि रसापतिः ॥ १ ॥ शतानि पञ्च तस्यासन् राज्यः स्त्रीरसिकात्मनः । तथाप्यतृप्तस्ताभ्योऽग्निः समिन्द्ध इव सोऽभवत् ॥ २ ॥ एकदाऽसौ व्रजन् राजपाटिकायामलोकत । विष्णुश्रियं गवाक्षस्थां नागदत्तेभ्यवल्लभाम् ३॥ श्रीधाम्नोऽस्य प्रविश्यान्तः सा मोहतिमिरोदये । प्राणेन पञ्चवाणस्य चित्तरत्नमचूचुरत् ॥ ४ ॥ कामादात्मसनाभेस्तां विदित्वा चित्तचौरिकाम् । वृत्ताक्षेपेण चिक्षेपान्तःपुरे पृथिवीपतिः ॥ ५ ॥ अलङ्कारान्वितां बाहुपाशबद्धामिमामयम् । चकार विलसद्मूर्ति महत्कूटाश्रयात् ततः ॥ ६ ॥ लम्पाकाया वियोगेऽस्या राकाया इव चन्द्रमाः । तमसा स्कन्दितो नागदत्तोऽभूद् विकलः किल ॥ ७ ॥ हा ! हंसगमने ! चन्द्रवदने ! पद्मलोचने !। प्रिये ! विष्णुश्रि ! विष्णुलक्ष्मि ! क्वासि मे देहि दर्शनम् ॥ ८ ॥ क्रोशन्निति वृतो बालैर्मशकैरिव गौरसौ । संभ्रमी वंभ्रमीति स्म चतुष्के चत्वरे त्रिके ॥ ९ ॥ युग्मम् ॥ राजा पुनस्तदासक्तस्तत्याजान्तःपुरं परम् । नेहलोकं न च परं लोकं

ह्रसितज्योतिश्चक्रां चक्रायुधाग्रणीः ॥ ११६ ॥ ग्रीवां विमुक्तमाणिक्यग्रैवेयामपश्यत्तत । शलाकामिव चैत्यस्य गलितामलसारिकाम् ॥ ११७ ॥ स भुजौ च्युतलक्ष्मीकौ निरैक्षिष्ट निरङ्गदौ । प्रतिमानविनिर्मुक्तौ दन्तीन्द्रदशनाविव ॥११८॥ हस्तावपास्तमाणिक्यकङ्कणौ पश्यति स्म सः । अनालवालवलयाविव किङ्किल्लिकन्दलौ ॥ ११९ ॥ शेषा अप्यङ्गुलीर्मुक्ताङ्गुलीयाः स व्यलोकयत् । अपुष्पाश्चम्पकतरोः शाखा इव गतत्विषः ॥ १२० ॥ एवं विमुक्तालङ्कारं सोऽपश्यद् वपुरप्रभम् । फाल्गुने मासि विस्रस्तपलाशमिव पादपम् ॥ १२१ ॥ अचिन्तयच्च देहोऽयं भूषणैरेव भासते । पलालपूरिता चर्मवर्णकैरिव गब्दिका ॥ १२२ ॥ शरीरं मलमञ्जूषा बहिर्दुर्गन्धभीरुभिः । मूढैः कर्पूरकस्तूरीचन्दनैरधिवास्यते ॥ १२३ ॥ मलोत्पन्नाद् मलैः पूर्णादतोऽङ्गाल्लीनमन्तरा । बोधिजं ज्ञानमादेयं सरसो जलजं यथा ॥ १२४ ॥ स्वकीयान् बान्धवानेष मन्ये धन्यतमानिमान् । यैरिदं राज्यमुत्सृज्य लेभे लोकोत्तरं पदम् ॥ १२५ ॥ अहं तु विषयास्वादपङ्कनिःशूकशूकरः । गणयामि न नामैवमात्मानं मानुषेष्वपि ॥ १२६ ॥ चिन्तयन्नित्ययं धीमानपूर्वकरणक्रमात् । भावनां भवनाशाय भावयामास भूपतिः ॥ १२७ ॥ अथाचैः सिद्धिसौधाग्रसङ्गजायन्मनोरथः । क्षितीशः क्षपकश्रेणीनिःश्रेणीमारुरोह सः ॥१२८॥ मुनिस्तदानीमानीतकेवलश्रीकरग्रहः । उत्सवोत्सुकचित्तेन सुरेन्द्रेणाभ्यगम्यत ॥ १२९ ॥ ख्यापयित्वा बलीयस्त्वं व्यवहारनयस्य सः । शक्रेणाभिदधे दीक्षालिङ्गग्रहणहेतवे ॥ १३० ॥ केशसंभारमुत्पाट्य मुष्टिभिः पञ्चभिर्नृपः । दत्तं देवतया शेषं मुनिवेषमुपाददे ॥ १३१ ॥ सममेव महीशानां सहस्रैर्दशभिस्तदा । साग्रहैर्जगृहे दीक्षा दक्षैः स्वाम्यनुवृत्यते ॥ १३२ ॥ तदानीं केवलज्ञानमहिमानं महामनाः । व्यधत्त तस्य नाभेयप्रभोरिव क्रतुप्रभुः ॥ १३३ ॥ भरतोऽपि ततस्तातवर्तनीमनुवर्तयन् । असिञ्चद् देशनासारसुधाभिरवनीवनीम् ॥ १३४ ॥ अतिक्रम्य ततः पूर्वलक्षं दीक्षादिनादसौ । आरोहद् मुषिताशेषकष्टमष्टापदाचलम् ॥ १३५ ॥ तत्रैष मासक्षपणं विधाय शैलेशिकायोगपरायणोऽथ । जगाम सिद्धिं सुरसार्थनाथनिर्वृत्तनिर्वाणमहोत्सवश्रीः ॥ १३६ ॥

॥ इति भरतभूषणनामनि महाकाव्ये चतुर्थः सर्गः ॥

मास पूजया त्रिप्रकारया ॥ ९७ ॥ स चक्री चैत्यमुत्पश्यन् मुहुर्वलितकन्धरः । वस्त्रान्तमार्जितोन्मज्जद्वाष्पाविलविलोचनः ॥ ९८ ॥ निभृतं मौनिभिर्भूपैर्वृतोऽप्येक इव व्रजन् । मन्दं मन्दांह्रिसंचारमुत्ततार गिरेस्ततः ॥ ९९ ॥ युग्मम् ॥ असौ सैन्यजनैः स्वस्ववाहनत्वरणालसैः । शोकप्रच्छादितोत्साहमयोध्यामागमत् पुरीम् ॥ १०० ॥ नाभेयप्रभुपादानां दिवानिशमसौ स्मरन् । त्यक्तान्यव्यापृतिस्तत्र तस्थावस्वस्थमानसः ॥ १०१ ॥ तममात्यजनो वीक्ष्य सर्वकृत्यपराङ्मुखम् । इति प्रबोधयामास पितृभ्रातृशुचाकुलम् ॥१०२॥ जगतोऽपि कृतालोकं लोकाग्रपदसंस्थितम् । तातं हतविपत्पातं शोचितुं तव नोचितम् ॥ १०३ ॥ मृत्युनापहृते बन्धुजने रोदिति बालिशः । कृती तु तद्विघाताय धर्ममादाय धावति ॥ १०४ ॥ त्वमप्याक्रान्तलोकेन शोकेन यदि जीयसे । शौण्डीर्यगर्जितं तत्ते न धत्ते ध्रुवमूर्जितम् ॥ १०५ ॥ शक्रोऽप्यक्रीडयत् पीडाविस्मारणविधित्सया । एवं प्रतिदिनं नानाविनोदैरात्तसंमदम् ॥ १०६ ॥ सांसारिकसुखाम्भोधिमग्नो भरतभूपति । विभोर्मोक्षदिनात् पञ्च पूर्वलक्षाण्यवाहयत् ॥ १०७ ॥

अन्येद्युः स्नात्रनिर्णिक्तगात्रयष्टिरिलापतिः । अन्तरन्तःपुरावासं भूरिभूषणभूषितः ॥ १०८ ॥ रत्नादर्शगृहं प्राप वारस्त्रीपरिवारितः । तारिकानिकरोद्भासी शशीव गगनाङ्गणम् ॥ १०९ ॥ युग्मम् ॥ तदा विलोकमानस्य नृपस्य मणिदर्पणम् । रूपादप्रतिरूपस्य प्रतिरूपमजायत ॥ ११० ॥ न्यस्तं मोहेन हिङ्गीरमिव तस्य महीशितुः । तदा लीलालुलत्पाणेर्निर्जगामाङ्गुलीयकम् ॥ १११ ॥ विना तेनाङ्गुलीयेन तदादर्शे कनिष्ठिका । निःश्रीका निष्कलेवेन्दुमूर्तिस्तेन विलोकिता ॥ ११२ ॥ सौभाग्यं भूषणैरेव बिभर्ति वपुरङ्गिनाम् । निश्चेतुमिति मोक्तुं स प्रारेभे भूषणावलीम् ॥ ११३ ॥ विमुच्य मुकुटं हैममयं मौलिं व्यलोकयत् । च्युतार्कबिम्बमुदयगिरिशृङ्गमिवास्तरुक् ॥ ११४ ॥ मुक्ते मौक्तिकताडङ्कयुगे च मुखमार्पभिः । अहंसमिथुनोद्भासिपार्श्वमब्जमिवैक्षत ॥ ११५ ॥ व्यलोकयत् परित्यक्तहारां स हृदयावनीम् । द्यामिवो-

नोत् ॥ ७८ ॥ लब्धसंज्ञोऽथ राजापि रुदन्नुच्चैः स्वर चिरम् । विह्वलं शोकपूरेण विलापानकरोदिति ॥ ७९ ॥ नाथ ! त्यक्तः कुतो दोषादनाथोऽयं जनस्त्वया । युष्मद् विना कथं भावी भवारण्येऽशरण्यकः ? ॥ ८० ॥ वियोगः सह्यते भानोः पुनरुद्गमनाशया । अनावृत्तिपदस्थस्य भवतस्तु सुदुःसहः ॥ ८१ ॥ मूलतोऽपि न यैर्दृष्टस्तेऽस्मत्तोऽतिवरं प्रभो ! । अदृष्टेऽर्थे न तद् दुःखं दृष्टनष्टे हि यद् भवेत् ८२ ॥ बन्धवोऽप्यनुगन्तारस्त्वाममी मम सर्वथा । एक एवाहमत्रास्मि त्वया पङ्क्तिवहिष्कृतः ॥ ८३ ॥ भूत्वापि तत्सुतश्च किमिति शोकवशंवदः । अपि मुक्तिपदप्राप्तं किं व्रीडयसि तं प्रभुम् ? ॥ ८४ ॥ नृपः प्रलापान् कुर्वाणः स्वयं गीर्वाणभूभुजा । इत्थं प्रबोधितः स्तोकशोकशङ्कुर्बभूव सः ॥ ८५ ॥ युग्मम् ॥

अथादिनाथतज्ज्ञातीतरसिद्धाङ्गसंस्कृतिम् । यथाविधि विधायेन्द्रास्तत्र स्तूपत्रयं व्यधुः ॥ ८६ ॥ ततश्चाष्टाहिकां नन्दीश्वरे कृत्वाऽऽश्रयं गताः । न्यस्य माणवकस्तम्भे विभुदंष्ट्रामपूपुजन् ॥ ८७ ॥ भरतोऽपि विभोरङ्गसंस्कारासन्नभूतले । त्रिगव्यूतोन्नतं चैत्यं चक्रे योजनविस्तृतम् ॥ ८८ ॥ तत्र चैत्ये चतुर्द्वारे प्रतिद्वारं स मण्डपान् । विचित्रान् सूत्रयामास मणिभिर्मांसलप्रभैः ॥ ८९ ॥ प्रत्येकं तत्पुरः प्रेक्षामण्डपांश्चतुरो व्यधात् । अक्षपाटकचैत्यद्रुपीठपुष्करणीयुतान् ॥ ९० ॥ तं गिरिं दण्डरत्नेन समीकृत्य स तेनिवान् । सोपानैर्योजनोच्छ्रायैरष्टाभिः परिवेषितम् ॥ ९१ ॥ लोहयन्त्रमयानेष्यज्जनाशातनशङ्कया । रक्षकानार्पभिस्तत्राकार्षीदुद्दीर्णमुद्गरान् ॥ ९२ ॥ तस्य सिंहनिषद्याख्यप्रासादस्य च मध्यतः । देवच्छन्दं व्यधाच्चक्री रत्नपीठप्रतिष्ठितम् ॥ ९३ ॥ प्रभूपदिष्टपूर्वैस्तद्वर्णचिह्नप्रसादिभिः । बिम्बानि ऋषभादीनां चतुर्विंशतिमातनोत् ॥ ९४ ॥ कृत्वा रत्नमयीः सर्वभ्रातॄणां प्रतिमा अपि । तत्रोपास्तिपरां चक्री स्वमूर्तिमपि निर्ममे ॥ ९५ ॥ बहिश्चैत्यं चितास्थाने प्रभोः स्तूपमपि व्यधात् । भ्रातॄणामपि च स्तूपान् नवतिं स नवाधिकाम् ॥ ९६ ॥ प्रतिष्ठाप्य च बिम्बानि तत्र चैत्ये यथाविधि । चक्रभृत् पूजया-

तस्य भुञ्जते । पठन्ति च वचस्तत् तद्वयामोहगरगारुडम् ॥ ६० ॥ सोऽपि श्रुत्वा प्रमादीदं व्यमृत्तद् विजितोऽस्मि कैः । कषायैर्भयमेतेभ्य-स्तद् वात्याः प्राणिनो न मे ॥ ६१ ॥ प्रमादजाड्ययुक्तस्य नित्यं भरतभूपते. । तद्वाक्यैरभवद् धर्मध्यानानलहसन्तिका ॥ ६२ ॥ श्राद्धाश्राद्ध-विवेकित्वे तन्नियोगिनिवेदिते । चक्री चक्रे परीक्षां तदणुव्रतगुणव्रतैः ॥ ६३ ॥ श्रावकाणां तदा चक्रे निर्व्यूढानां परीक्षणे । रेखात्रयं स काकिण्या ज्ञानादित्रयसूचकम् ॥ ६४ ॥ तत्स्वाध्यायकृते वेदान् यान् निश्चिक्ये स चक्रभृत् । तीर्थच्छेदे त्वनार्यत्वं मिथ्यात्वं चा-भजन्त ते ॥ ६५ ॥

इतश्च तीर्थमृषभसेनादिमुनिसिद्धितः । स्वपादस्पर्शनाच्चापि प्रकाश्य विमलाचलम् ॥ ६६ ॥ स्वामी मत्वा स्वनिर्वाणसमयं समया-गतम् । प्रत्यक्शैलमिवोष्णांशुरारूढोऽष्टापदाचलम् ॥ ६७ ॥ प्रत्यपद्यत साधूनां सहस्रैर्दशभि. सह । चतुर्दशतपोयोगात् पादपोपगमासनम् ॥ ६८ ॥ विशेषकम् ॥ तथावस्थितमद्रीशपालो व्यालोक्य तं प्रभुम् । गत्वा विज्ञपयामास भूमिवासवमार्षभिम् ॥ ६९ ॥ श्रुत्वा चतुर्दशाहार-परिहारं जगद्गुरोः । न चतुर्दशभिर्भेजे रत्नैरपि नृपो मुदम् ॥ ७० ॥ ततश्चरणचारेण चचाल भरतेश्वरः । परितो हरितो रुन्धन्नष्टावष्टापदं प्रति ॥ ७१ ॥ वेगादयमथारूढस्तं तथावस्थितं प्रभुम् । अपश्यत् प्रसभोन्मीलद्बाष्पावलिविलोचनः ॥ ७२ ॥ स प्रणम्याभवद् याव-दुपास्तिप्रस्तुताशयः । अपश्यत् तावदायातान् सर्वान् गीर्वाणनायकान् ॥ ७३ ॥ भक्तिशोकभरस्तोमभङ्गुरैः कृतकन्धरैः । तैः समं शमिनामीशमुपासामासिवानसौ ॥ ७४ ॥ माघकृष्णत्रयोदश्यां पूर्वाह्णेऽभीचिगे विधौ । विध्वस्तकल्मषो मोक्षं स्वाम्येकसमयादयात् ॥७५॥ क्षपकश्रेणिमारुह्य बाहुबल्यादयोऽपि च । मुक्तिं दश सहस्राणि मुनयः प्रभुवद् ययुः ॥ ७६ ॥ प्रभोर्मोक्षक्षणे तत्र नारकेष्वपि सौख्यदे । अज्ञातरुदितश्चक्री मूर्च्छितः क्ष्मातलेऽपतत् ॥ ७७ ॥ शोकग्रन्थिविभेदाय रुदितं शिक्षयन् हरिः । तस्य कण्ठमथालम्ब्य पूत्कारं तारमात-

सख्यमित्यमानेन सस्वजे ॥ ४० ॥ दिवि दुन्दुभयो नेदुरासेदुः पुष्पवृष्टयः । प्रापुस्तं च तदा भक्तिभासुरा वन्दितुं सुराः ॥ ४१ ॥ अथैष सुरसार्थेन स्तूयमानो मुनीश्वरः । जगाम देशनाधाम युगादिजगदीशितुः ॥ ४२ ॥ प्रभुं प्रदक्षिणीकृत्य गत्वा केवलिपर्षदि । केवली निषसादोडुमण्डले सितरश्मिवत् ॥ ४३ ॥ अन्यदा समवासार्षीदष्टापदगिरौ विभुः । समं समीयतुश्चात्र भरतेश्वरवासवौ ॥ ४४ ॥ देशनान्ते ततश्चक्री बन्धूनालोक्य वत्सलः । तेषां भोगविभागाय जिनराजं.व्यजिज्ञपत् ॥ ४५ ॥ अथादिदेश भगवान् भूपते ! बन्धवस्तव । भोगान् रोगानिवापास्य किं भूयोऽभिलषन्त्यमी ? ॥ ४६ ॥ आनाय्य भोज्यमथ भूनाथो नाथं व्यजिज्ञपत् । भोजनायादिश स्वामिन् ! तर्हि मे वान्धवानमून् ॥ ४७ ॥ अथावादीज्जिनो नेदं प्रकारै. कल्पते त्रिभिः । कारिताभ्याहृतत्वाभ्यां राजपिण्डत्वतोऽपि च ॥ ४८ ॥ स्वामिनेति निषिद्धेऽस्मिन् सर्वथा तन्खिदाभिदे । अवग्रहभिदाः पृष्टः शक्रेणाख्यज्जगद्गुरुः ॥ ४९ ॥ शक्रस्य चक्रिणो राज्ञः स्थानेशस्य गुरोरपि । पञ्चधाऽवग्रहो, भावात् पञ्चानामपि पुण्यकृत् ॥ ५० ॥ अथ शक्रः प्रणम्याह प्रभो ! क्षेत्रेऽत्र भारते । मया वासाय साधूनां प्रदत्तोऽयमवग्रहः ॥ ५१ ॥ आकर्ण्य भरतोऽपीति प्रीतो नत्वा जगद्गुरुम् । अनुजज्ञे निवासाय साधूनां भारतीं भुवम् ॥ ५२ ॥ अथापृच्छद् द्युभर्तारं महीभर्ता ससंमदः । देयं कस्यान्नमानीतमिदमेवं निवेद्यताम् ॥ ५३ ॥ गुणाधिकेषु कर्तव्या पूजेत्युक्ते बिडौजसा । साधून् विना गुणी कोऽस्ति मत्तोऽपीति विचिन्तयन् ॥ ५४ ॥ ज्ञातं सन्तितमां मत्तः श्रावकाः सद्गुणाधिकाः । तेषां पूजा विधेयेति भरतो निश्चयं व्यधात् ॥ ५५ ॥ युग्मम् ॥ अथ नत्वा जिनं शक्रो धामयोध्यामिलापतिः । भगवानपि चान्यत्र जगामाष्टापदाचलात् ॥ ५६ ॥ भरतोऽपि रतो धर्मे श्राद्धानाहूय भूयसः । इदं जगाद भोक्तव्यं भवद्भिर्मम मन्दिरे ॥ ५७ ॥ क्रियासु कृषिमुख्यासु कार्यं चेतोऽपि न क्वचित् । भवद्भिः केवलं भाव्य धर्मकर्मसु कर्मठैः ॥ ५८ ॥ पाठ्यमेतच्च निश्राव्यं भोजनान्ते मदग्रतः । जितो भवान् भयं चास्ति तस्माद् मा हन मा हन ॥ ५९ ॥ मत्वेदमथ ते श्राद्धा भवने

इतश्च भगवान् वाहुवलिः कलितनिश्चयः । तस्थौ स्तम्भमिवारोप्य जेतुमान्तरवैरिणः ॥ २१ ॥ जयतस्तस्य षड्वर्गं दृढासनपरिग्रहात् । ऋतवस्तेनिरे पार्ष्णिघातं षडपि दुःसहम् ॥ २२ ॥ हिमाद्रिवाणयन्त्रोत्थैराशुगैः स तथाऽऽशुगैः । हेमन्तः काणयन्नस्थीन्युल्ललास दिवानिशम् ॥ २३ ॥ वायव्याञ्चैरपाकुर्वन् सालेषु-दलमालिकाम् । शिशिरः प्रासरत् सूरमण्डलं रजसा गिलन् ॥ २४ ॥ प्रावर्तत वसन्तोऽथ निःसरत्पल्लवच्छलात् । ग्राहयन्नेव संन्यस्तशस्त्रानप्यस्त्रमङ्घ्रिपान् ॥ २५ ॥ ग्रीष्मो भीष्मोल्लसल्लूकापावकास्त्रविसर्जनैः । चूर्णयन् भूभृतस्तूर्णमथ प्रादुरभूद् भुवि ॥ २६ ॥ स-रो-हितधनुर्मुञ्चन् धारानाराचधोरणिम् । तर्जयन् विद्युदङ्गुल्या प्रावृट्कालस्ततोऽभवत् ॥ २७ ॥ यत्रापि चक्रभृच्चक्रममोघमपि मोघताम् । शरासारः कथंकारमत्र मे प्रभवत्वयम् ? ॥ २८ ॥ प्रावृडेतद् विमृश्येव तं मुनिं विटपावनैः । नागपाशैरिवाबध्नात् क्षितिवन्धाद् विनिःसृतैः ॥ २९ ॥ युग्मम् ॥ वाहिनीर्निर्मलयन् बाणासनन्यस्तशिलीमुखः । राजहंसपरीतोऽथ शरत्कालः समाययौ ॥ ३० ॥ ऋतवोऽभ्येत्य सर्वेऽपि क्रमेण कृतविक्रमाः । तत्र न प्राभवन् मत्तद्विपा इव नगोत्तमे ॥ ३१ ॥ वर्षानशनयोगेन मत्वा तमथ निर्मलम् । तत्पथ्यहेतवे ब्राह्मीसुन्दर्यौ प्रैषयत् प्रभुः ॥ ३२ ॥ युवाभ्यामिति वाच्योऽयं 'मत्तेभाद् भ्रातरुत्तर' । इत्यादाय प्रभोः शिक्षां व्रतिन्यौ ते निरीयताम् ॥ ३३ ॥ स्थानं तदथ ते याते न तं मुनिमपश्यताम् । दृष्टो गुल्मस्तु वल्लीनां सोच्छ्वासः पुरुषाकृतिः ॥ ३४ ॥ तत्र संभाव्य तं ताभ्यां केवलाकृष्टिमन्त्रवत् । उक्तां निशम्य तां वाचं मुनिः सोऽपीत्यचिन्तयत् ॥ ३५ ॥ शब्दोऽयं नियतं ब्राह्मीसुन्दर्योः श्रुतिसुन्दरः । भाषेते नानृतं चैते न चारूढोऽस्मि हस्तिनम् ॥ ३६ ॥ विकल्पात् कल्पयन्नेवं दध्यौ वन्दे लघून् न यत् । मानोऽयमेव मे हस्ती तमारूढोऽस्मि दुर्विधः ॥ ३७ ॥ सत्यं मत्वेति तातेन मय्यतीव दयालुना । प्रेषिते प्रतिबोधाय महासत्याविमे उभे ॥ ३८ ॥ लघूनपि गुणज्येष्ठान् वन्धून् केवलवन्धुरान् । सिद्धार्थानिव तान् मूर्ध्नि करिष्ये सिद्धिहेतवे ॥ ३९ ॥ इत्यमानोऽवलद् यावज्ज्ञानेनापि स तत्क्षणात् । समानशीलयोः

तं तथाविधमालोक्य बान्धवं बाष्पमुद्गिरन् । विषण्णकर्मणा स्वेन चक्री चेतस्यचिन्तयत् ॥ १ ॥ धिग् धिग् मे चक्रवर्तित्वं बन्धुभिर्विरहो यतः । फलवत्त्वं मधूकद्रोः पत्रद्रोहि स्तवीति कः ? ॥ २ ॥ धुनबन्धुरहं निन्द्यः कालकुक्कुटयोरपि । यौ ग्रासमुपभुञ्जाते सममेव स्वबन्धुभिः ॥ ३ ॥ स्वपक्षमद्विषंस्तेजस्व्यपि राजति नान्यथा । सूर्याचन्द्रमसोश्चन्द्र एव राजा ग्रहेषु यत् ॥ ४ ॥ ध्यात्वेति चिरमध्यात्मबन्धुरं बन्धुमात्मनः । निपत्य पदयोश्चक्री निजगाद सगद्गदम् ॥ ५ ॥ भ्रातस्तातसुतोऽसि त्वं नैवाहमधमाधमः । वध्येऽपि मयि यः कुर्वन् कृपां शममशिश्रियः ॥ ६ ॥ हतकोऽहं पुरा त्यक्तः समग्रैरपि बन्धुभिः । त्यजंस्त्वमपि मामेकाकिनं संप्रति मा कृथाः ॥ ७ ॥ तातराज्यमिदं ताततुल्यस्त्वं पातुमर्हसि । चक्रवर्त्यपि वर्तिष्ये तवाहं दासलेशवत् ॥ ८ ॥ तात ! तात ! स्वकर्मानुशयाशनिहविर्भुजा । मह्यं प्रदह्यमानाय देहि वागमृतच्छटाम् ॥ ९ ॥ भरतो विलपन्नेवममात्यैरित्यबोध्यत । नाथ ! बाहुबलिर्नाऽथ वक्तासौ निश्चितव्रतः ॥ १० ॥ इति तद्वचनैश्चक्री जानन् बान्धवनिश्चयम् । उन्मुखः साश्रुदृक् पादन्यस्तहस्तोऽवदत् पुनः ॥११॥ न चेद् दास्यसि तद् मा दा वाचं वाचंयमोत्तम ! । प्रसाददृष्टिदानेऽपि किं कापि स्याद् व्रतक्षितिः ? ॥ १२ ॥ अथ दृष्ट्वा मुनीन्द्रेण सुधावृष्ट्येव किञ्चन । भूभृत् संभावितः सोऽयं जातरोमाङ्कुरोऽभवत् ॥ १३ ॥ ततो बाहुबलेः पादौ प्रक्षाल्याश्रुजलप्लवैः । धम्मिल्लेन च संमार्ज्य निर्ययौ भरतेश्वरः ॥ १४ ॥ अथ सोमयशा बाहुबले. सूनुरनूनरुक् । स्वयं तक्षशिलाराज्ये भरतेन न्यषिच्यत ॥ १५ ॥ ततः सकटकः कुर्वञ्जलस्थलविपर्ययम् । ययावयोध्यामध्यास्त चक्रमप्यायुधालयम् ॥ १६ ॥ चतु.षष्टिः सहस्राणि तस्यासन् शासितुः प्रियाः । द्वात्रिंशच्च सहस्रा भूभुजो मुकुटवर्धनाः ॥ १७ ॥ प्रत्येकं च रथाश्वेभं लक्षाश्चतुरशीतयः । षट्पञ्चाशत् कोटयश्चाभूवंस्तस्य पदातयः ॥ १८ ॥ निधयो नव रत्नानि चतुर्दश च जज्ञिरे । तस्य विश्वजयस्फातिसुभगंकरणौजसः ॥ १९ ॥ अनन्यशासनामब्धिमेखलामखिलामपि । स शशास महीमेतामहीनभुजविक्रमः ॥ २० ॥

लापः ॥ १४७ ॥ एतान् विश्वत्रयविजयिनो यद्यहं जेतुमीशे तत्तातस्य त्रिभुवनगुरोरस्मि तस्याङ्गजन्मा । इत्युन्मीलन्मतिरयमपाकर्तुमन्तर्द्विषन्तं तूलानीवोदखनदखिलान् पाणिना तेन केशान् ॥ १४८ ॥ वन्द्याः केवलिनः कथं नु लघवः स्वे बन्धवस्ते मया, तच्चैषां समतामवाप्य नियतं यास्यामि तातान्तिकम् । इत्यालोच्य समाधिसाधितशमानन्दः सुनन्दाङ्गजः संज्ञानं प्रतिपालयन्निव समागच्छत् तदोर्ध्वं स्थितः ॥ १४९ ॥ सानन्दं वादयन्तस्तदनु तनुमतां ध्वस्तकल्पान्तशङ्कैः शङ्कैणत्रासकृत्तद्ध्वनिभिरभिनभो दुन्दुभीरिन्दुभीमा । देवाः के वा न सेवाकुलदलिकलितस्फीतसंगीतबन्धां गन्धाम्भःपुष्पवृष्टिं विदधुरिह सुनन्दासुतस्योपरिष्टात् ? ॥ १५० ॥

॥ इति भरतभूषणनामनि महाकाव्ये तृतीयः सर्गः ॥

पुनरेव निर्जितो वचसा बाहुबलेर्बलीयसा ॥ १३१ ॥ अथ मुष्टिरणाय सोद्यमावपसृत्याशु नराधिपाविमौ । भयदौ भुवनेऽप्यधावतां करमुत्पाट्य वनद्विपाविव ॥ १३२ ॥ अनयोः पदपीडितस्थिराभरपेषेण फणः सहस्रधा । फणिनः स्फुटितः, करैर्मुखं विनतं, संकुचितश्च कच्छपः ॥ १३३ ॥ भरतस्य करप्रहारतः पुरतस्तक्षशिलानरेश्वरः । क्षणमेकममूर्च्छदन्तरा जयलाभौपयिकं मृशन्निव ॥ १३४ ॥ अथ तामवधूय तत्कराहतिमूर्च्छां, भरतं स मुष्टिना । निजघान तथाऽपतद् यथा सममेषोऽथ भटाश्रुबिन्दुभिः ॥१३५॥ अथ चन्दनवारिसेकतः प्रगुणं बाहुबलिर्व्यधादमुम् । हृदि मत्सरपूरितेऽप्यहो ! न हि नाभिः प्रतिबन्धचौरिका ॥ १३६ ॥ अथ संभृतदण्डसङ्गराथितया निर्मितसङ्गराविमौ । दृढदण्डकरावधावतां जगतां त्रासकरौ यमाविव ॥ १३७ ॥ बहलीपतिराशु ताडितः शिरसि श्रीभरतेन दण्डतः । घनघातितवज्रवत् तदाऽब्रुडदाजानु वसुन्धरोपरि ॥१३८॥ अथ पङ्किलत. किल क्ष्मातलतः स्वाववकृष्य च क्रमौ । भरतं दृढदण्डघाततस्तरसाऽऽकण्ठमसावमज्जयत् ॥ १३९ ॥ नृपरत्नमथैष रोहणादिव 'हा दैव !' गिराङ्कितानैः । प्रविदार्य महीमकृष्यताऽऽयतकुद्दालकरैः स किंकरैः ॥ १४० ॥ किमु नाहमिलातले त्वयं बत चक्रीति विषादमीयुषः । भरतस्य करे समाययावथ चक्रं ज्वलदर्कबिम्बवत् ॥ १४१ ॥ अनुजस्य वधाय तत्क्षणात्त्रिदशांस्त्रासयदम्बरस्थितान् । अविशङ्कमसौ मुमोच तत् प्रलयाम्भोद इवाशनिं नदन् ॥ १४२ ॥ तदनेकभटासिपट्टिसप्रकरप्रासनिरुद्धमप्यथ । बहलीपतिमापतद् भृशं भरतस्येव जयाशयोऽङ्गसन् ॥१४३॥ स्वकुले प्रभवेद् न चक्रमित्यभितो बाहुबलिं परीय तत् । भरतेशकरे पुनर्ययौ निशि पक्षीव कुलाय पादपे ॥ १४४ ॥ अयमेष करोमि भस्मसात् सहसाद्य सचक्रमप्यमुम् । अथ बाहुबलिः क्रुधा करं समुदस्याचलदग्रजं प्रति ॥ १४५ ॥ गत एव निकेतनान्तिकं हहहाऽसौ प्रतिचक्रवर्त्यसौ । इति नागमनुष्यनाकिनां तुमुलो व्योमतलं व्यगाहत ॥ १४६ ॥ अत्रान्तरे विलसितोरुविवेकसूरः शाम्यत्तमा विमृशति स्म स वीरमानी । क्रोधादिभिर्विजितमेनमिहाग्रजं मे जेतुं हहा ! विफल एव मनोऽभि-

॥ ११४ ॥ निजशासनमन्यमेदिनीपतिसामान्यचिकीरसौ मयि । समुपेत्य गिराविवास्फलन् रदभङ्गं करटीव लप्स्यते ॥ ११५ ॥ न भवेऽत्र भवे परत्र च प्रभुरन्यो मम तातमन्तरा । अभिगम्य रुचामधीश्वरं न विधीयेत बुधैः प्रदीपकः ॥ ११६ ॥ अथ बाहुबलिं जगुः सुरा जगतीमण्डलमौलिमण्डन ! । विशदापि सदापि शेमुषी नहि कार्ये भवतीह संमुखी ॥ ११७ ॥ भरतेश्वरचक्रमेकतो भवदीयप्रणतेः समीहया । न गुहामिव केशरी विशत्यकृतार्थं ध्रुवमायुधालयम् ॥ ११८ ॥ विनये वयमन्यतस्तवातिशयं वीक्ष्य न वक्तुमीश्महे । पुनरेकमिहार्थयामहे नहि योद्धव्यमसुव्यथायुधैः ॥ ११९ ॥ नयनादिरणैर्बलाबलं प्रसमीक्ष्याशु जयव्यवस्थितिः । युवयोः प्रविधास्यते, ध्रुवं वयमेवात्र भवाम साक्षिणः ॥ १२० ॥ प्रतिपन्नवतीदमत्र ते त्रिदशाः श्रीऋषभाज्ञया भटान् । विनिषिध्य युधः शुचिं व्यधुर्भुवमङ्गाङ्गिरणार्थमेतयोः ॥ १२१ ॥ उभयोरपि सैन्ययोर्भटा विनिषिद्धाः प्रभुपूरुषैरपि । समरादवलम्भरोषिता इव मुष्टा इव लज्जना इव ॥ ११२ ॥ अथ मङ्क्षु मिथो जयैषिणौ समयपाथोधितमीशमीयतुः । नभसीव विभाविभावरीरमणौ तौ रणमार्षभी नृपौ ॥१२३॥ स्फुटदृष्टिविवादसादरौ चिरमेतौ समतिष्ठतां ( ? ) स्थिरौ । घटिताविव चित्रिताविवाहितयोगाविव विस्मिताविव ॥१२४॥ अतिकौतुकतोऽनिमेषिभिस्तदनुध्यानवशादिवाथ तौ । अमरैर्नभसि स्थितैर्भुवि स्थितिविद्भिश्च नरैर्निरीक्षितौ ॥१२५॥ अथ बाहुबले रवेरिव प्रसरद्दीधितिदर्शनार्दिते । भरतः स्वदृशौ निमीलयन् विजयायाऽऽदित तोयमश्रुभिः ॥१२६॥ अवितर्कमहो जितं जितं बलिना बाहुबलिक्षितीन्दुना । नभसीति दिवौकसो व्यधु' स्तुतिघोषं जयसाक्षिणस्तदा ॥१२७॥ ॥२०

अथ दृष्टिजितेन चक्रिणा सह तेनासहनीयविक्रमः । सुरसार्थसमक्षमाधित क्षितिपस्ताक्षशिलः स्वमाहवम् ॥१२८॥ भरतस्य मृगेन्द्रगर्जितध्वनितेन प्रसभं विसर्पता । फणिनां च नृणां च नाकिनामपि बाधिर्यमजायत क्षणम् ॥१२९॥ अथ तक्षशिलापतिर्मृगाधिपतिध्वानमसूत्रयत् तथा । चलितं धरया यथाऽचलैः पतितं दिक्करिभिश्च मूर्च्छितम् ॥१३०॥ प्रलयाम्बुदशब्दबन्धुना परितः क्षुब्धपयोधिनाऽमुना । भरतः

समुपेत्य रंहसा वितरन्तोऽस्य जयाशिषं सुराः । इदमूचुरथौचितीचितं रचितप्राञ्जलय. प्रशान्तये ॥ ९९ ॥ तव साधयतोऽखिलामिलां यदि कश्चिद् नहि संमुखोऽभवत् । भुजखर्जुभिदे स्वबन्धुना रणकामः किमु लज्जसे न तत् ? ॥ १०० ॥ अथ भूपतिराह भारत- स्त्रिदशान् युक्तमिदं भवद्वचः । अधुना रणकारणं पुनर्वत जानीथ न यूयमावयोः ॥ १०१ ॥ भुजखर्जुभिदा निबन्धनं न युधः किन्तु रथाङ्गमङ्ग ! मे । न हि शस्त्रगृहे विशत्यदः शिशुरत्यन्तशठो यथा मठे ॥ १०२ ॥ अचिरात् तदनुप्रविश्य मामिदमप्यस्त्रगृहं प्रवेश्य च । सकलस्य किलास्य काश्यपीवलयस्यास्तु ममानुजः पतिः ॥ १०३ ॥ वत बोधयताऽमुना मनाग् वचसा बाहुवलिं महाबलम् । यदि युद्धनिषेधहेतवे भवतामस्ति मनस्युपक्रमः ॥ १०४ ॥ अथ ते पुनरूचुरेष चेद् नहि बुध्येत तथापि न त्वया । रणकर्म विधे- यमायुधैः शपथाः श्रीऋषभप्रभोरिह ॥ १०५ ॥ ननु दृष्टिवचःसुखप्रदोर्विलसन्मुष्टिसुयष्टियुद्धतः । युवयोरमरैर्बलाबलं परिभाव्यं, निशितैः किमायुधैः ? ॥ १०६ ॥ इति भूमिभृता प्रतिश्रुते वचने बाहुवलिं ययुः सुराः । समुदीर्य जयाशिषं पुरस्तमभाषन्त गिरा सुधाकिरा ॥ १०७ ॥ नयनिष्ठ ! तवैष बान्धवः प्रथमः सत्क्रियते न किं त्वया ? । भरतं प्रति देव ! संप्रति प्रधनारम्भमपोढुमर्हसि ॥१०८॥ ऋषभस्य विभोर्न संमता नियतं तावदमी क्रुधादयः । तदमीषु तदङ्गजस्य ते परिपोषः किमयं वतोचितः ? ॥ १०९ ॥ नतमात्रतया तवैष यः परितोषं भजते किलाग्रजः । प्रणिपत्य तमर्हमानतः कुरुषे किं न महीमिहात्मसात् ? ॥ ११० ॥ अथ बाहुबलिर्गभीरया गिरया प्राह स तानमी रयात् । कथमित्थमहो ! भवादृशैरपरिज्ञातकथैरिवोच्यते ? ॥ १११ ॥ वत बन्धुतया ममान्तिकाद् यदि सत्कारमय समीहते । उप- पन्नमिदं तदेव यद् मम तातप्रतिमोऽयमग्रज. ॥ ११२ ॥ जितकाशितया परं महस्वितया मामवकृत्य नामयेत् । न तदेतदहं सहे, सतां धन- मेकं भुवि मान एव यत् ॥ ११३ ॥ न विनष्टममुष्य किंचन स्फुटमद्यापि महौजसोऽथवा । अपसर्पतु सङ्गरादसावहमप्येष निवृत्त एव तत्

अथ भक्तिभरेण तावुभावृषभस्वामिनमार्षभी नृपौ । परिपूज्य रणोद्यतावथावीवदतां दुन्दुभिमात्मसैन्ययोः ॥ ८३ ॥ रणदुन्दुभिनादसंज्ञया समनह्यन्त तयोर्बलान्यथ । अभिलंघ्य युगान्तमत्तयोरिव पाथांसि मिथः समुद्रयोः ॥ ८४ ॥ सुभटैः सुभटा रथै रथास्तुरगैश्चापि तुरङ्गमास्तदा । करिभिः करिणो रणोत्सवं किल तुल्यप्रतिपन्थिनो व्यधुः ॥ ८५ ॥ प्रथमं रणतूर्यगर्जितैस्तदनु क्षोणिरजोभिरुद्धतैः । शरधोरणिभिस्ततोऽपि च प्रतिलेशं पिदधे नभस्तदा ॥ ८६ ॥ द्विषतां निधनाय धन्विभिः प्रहिता प्रोतधृतोद्धुदीपकाः । निजवध्यजनं रजस्तमस्यभिपश्यन्त इवेषवोऽभ्रमन् ॥ ८७ ॥ सुभटक्षतजस्रवन्तिका विलसन्त्यो वसुधातले बभुः । रणरेणुतमोऽन्धलैः शरैरवलूना इव सूर्यरश्मयः ॥ ८८ ॥ प्रहतेभरदाशनेस्त्रुटिं समवाप्योच्छलिता भटासयः । रणरेणुपयोदमण्डले दधुरुद्दण्डतडिल्लतायितम् ॥ ८९ ॥ द्विपदाहितकुन्तयष्टिभिः करिणः शल्यकशूजिता बभुः । उपरूढकुमारिकौषधीसमुदण्डप्रचिता इवाद्रयः ॥ ९० ॥ हतयुग्यहयाः कथंचनाप्यतिदूरे रथिनः पुरः स्थितान् । तरलास्त्रनदीतरङ्गयाः समुपेत्यात्मरिपून् न्यपातयन् ॥ ९१ ॥ करभद्वयसाल्पगापगातरदुत्तुङ्गतरङ्गशालिनाम् । गजमौलिगतैर्निषादिभिः सन्नकक्षाऽजनि सादिनामपि ॥ ९२ ॥ विकरालकरांह्रिपङ्कजे युधि कीलालचराचरे तदा । भटमस्तकनालिकेरके यमदूता निभृतोत्सवं व्यधुः ॥ ९३ ॥ अथ बाहुबलिचमूचरा भरताधीशपताकिनीभटान् । तरणेः किरणाग्रपल्लवास्तिमिराणीव तिरोदधुः क्षणात् ॥ ९४ ॥ अथ भारतभूमिवासवः स्वयमाटोपमवाप कोपजम् । प्रचचाल युधे चलच्चमूभरनिष्पीडितपन्नगेश्वरः ॥ ९५ ॥ अवधार्य निजार्यमात्मना विलसत्सङ्गरकर्मसङ्गरम् । समकालमहर्पहर्षयोरभवद् बाहुबलिः परं तदा ॥ ९६ ॥ अथ सोऽपि महाभुजः स्वयं रणदीक्षामधिगम्य रंहसा । उदयाद्रिमिवार्यमा क्षमापतिरारोहदिभेन्द्रमुच्चकैः ॥ ९७ ॥

स्वयमेव महाभुजाविमौ समराथातिनिरीक्ष्य सोद्यमौ । द्युसदोऽपि चकम्पिरे तदा प्रसभं हन्त ! युगान्तशङ्कया ॥ ९८ ॥ भरतं

करभैः क्व च वाजिभिः क्व च द्विरदैः क्वापि रथैरथ क्व च । तदनेहसि पादचारिणां निगमा दुर्गमतां प्रपेदिरे ॥ ६६ ॥ परितोऽपि तदाऽश्वदारितावनिधूलीमयधूमधोरणेः । भरतेशमहोहविर्भुजः किल कीलाः करिकेतवो बभुः ॥ ६७ ॥ क्षितिरेणुतमस्सु दुन्दुभिप्रतिनादैः परितोऽपि यान्त्यपि । कटकानि बहुत्वतोऽत्यजन्नवियोगं भरताग्रसेनया ॥ ६८ ॥ अविलम्बकृतैः प्रयाणकैर्निजदेश व्यतिलङ्घ्य कैश्चन । भरताधिपतिः समासदद् बहलीमण्डलमेदिनीमुखम् ॥ ६९ ॥

अथ बाहुबलिर्महाबलस्तरसाऽऽकर्ण्य तदा तदागमम् । जयडिण्डिमघोषडम्बरैरभियानाय बलान्यतत्वरत् ॥७०॥ अतिवीर्यतया चतुर्भुजश्चतुरम्भोधितटीषु विश्रुतः । अचलश्चतुरङ्गसेनया स चतस्रोऽपि दिशो विलोडयन् ॥ ७१ ॥ प्रविशन्तु भृशं कुहाण्यमी रिपवो बाहुबलेः प्रणश्य मा । शुषिराणि रजोभिरुद्धतैस्तिरयामासुरितीव वाजिनः ॥ ७२ ॥ करिकेतुसमन्वितं रजःपटलं व्योमतले तदा बभौ । फणिलोकयुता मही महाबलसंमर्दभयादिवोद्गता ॥ ७३ ॥ छिपतां वदनानि तद्वधूनयनानीह विहाय सर्वतः । तृणमम्बु च नान्यतो नरैर्ददृशे बाहुबलेः प्रयाणके ॥ ७४ ॥ अथ चक्रिचमूपकण्ठभूवलये बाहुबलेः पताकिनी । समुपेत्य निवासमग्रहीद् विगृहीतेरिव मूलमान्त्रिका ॥ ७५ ॥ अनयोर्जगदादिधीरयोः समरः प्रातरहो भविष्यति । इति वक्तुमिवागतस्तदा वरुणास्यारुणसारथिर्ययौ ॥ ७६ ॥ व्रजतोऽस्तमहपतेर्महःपटलैः पाटलितानि तान्यथ । कटकान्युभयान्यपि क्रुधा ज्वलितानीव मिथो विरेजिरे ॥ ७७ ॥ परिसंवृतवत्यहो महःपटमारफोटय दिवातन रवौ । तमसोच्छलितं पुराचलद्बलमालारजसेव तद्युता ॥ ७८ ॥ उडुभिः सममिन्दुरुद्ययौ परितो द्रष्टुमिवाथ कौतुकात् । असिजागरणानि दोर्भृतामुभयोरार्पभिसैन्ययोस्तयोः ॥ ७९ ॥ असिजागरवाद्यनिःस्वनश्रुतिवित्रस्तमिवैणमीक्षितुम् । निरगाद् मृगलाञ्छनो निशाविगमेऽस्ताचलचूलिकावनम् ॥ ८० ॥ सकलां रजनीं स्थितः क्वचिद् निजमन्त्राणि निमन्त्रयन्निव । रणवीक्षणहेतवे तयोरुदयाद्रावधिरूढवान् रविः ॥ ८१ ॥ उभयोरपि योद्धुकामयोरुदयास्ताद्रिगतौ खगान्विजौ । तृणमार्पभिसैन्ययोस्तयोः करदण्डाद् दधतुस्तदाऽन्तरा ॥ ८२ ॥

ग्रहमस्य तु शान्तये शरावलिवर्षी सधनुर्घनाघनः ॥ ४६ ॥ भुवनाधिपसेवितक्रमः सविता यस्य युगादितीर्थकृत् । भुजविक्रमतस्तृणीकृत-त्रिजगत्कोऽनुज एष मद्विधः ॥ ५० ॥ स सुरैरसुरैरजारतं वरिवस्यः कियदेतदभ्यधाः ? । इति दूत ! वदास्य दास्यकृत् ! यदसामान्यपराक्रमो वृथा ॥ ५१ ॥ युग्मम् ॥ तदमुष्य न सेवने त्रपा करुणा किन्तु ममाद्भुता हृदि । अवलोक्य यदेष मां पुरा खुरलीकेलिजितं ह्युपैष्यति ॥ ५२ ॥ उदलालि पुरा ततो दिवः स पतन् कन्दुकवद् धृतो मया । तदमुष्य किमद्य विस्मृतं स्मयमानस्य चटुप्रचाटुभिः ? ॥ ५३ ॥ अथवा तव दूत ! भूपतिः स्मयते चक्रवलेन संप्रति । तदितोऽपि वहत्वहंयुतां शकटं चक्रयुगं विभर्ति यत् ॥ ५४ ॥ व्रज तत् त्वमहोतिरंहसा स समायातु तव स्वयं विभुः । करवाणि यथा स्वसायकैः स्मयगम्भीरगडोश्चिकित्सनाम् ॥ ५५ ॥ सभयः स सभागृहादथार्षभिदूतस्त्वरितं विनिर्ययौ । अरुणोत्तणमीक्षितश्चिरं वलिभिर्बाहुवलेः पदातिभिः ॥ ५६ ॥ विविधायुधभीषणान् भटान् यमदूतप्रतिमान् विलोकयन् । नृपतेः सदनाद् निरीय तन्नगरीतोऽपि निरीयते स्म सः ॥ ५७ ॥ मनसालमरंहसा व्रजन् वहलीदेशमतीय कृच्छ्रतः । निजनायकदेशमाप्य च स्वमयं मानित-वान् पुनर्नवम् ॥ ५८ ॥ अथ वाहुवलेर्भयाकुलान् परतोऽप्युत्तरकोशलानयम् । रचयन् निजरंहसाऽऽगतो भरतायेति चरो व्यजिज्ञपत् ॥५६॥ यदि नाथ ! कथञ्चिदञ्जलेरपि धीयेत सहस्रदीधितिः । वनवह्निरपह्नुतेन्धनो यदि गृह्येत च मुष्टिना क्वचित् ॥ ६० ॥ न तथापि तवानुज-स्तृणीकृतविश्वत्रितयः स्वदोर्बलात् । विगृ [?] हीतुमहो महस्विभिः परिशक्येत सुरासुरैरपि ॥ ६१ ॥ समरैकरतेरमुष्य दोर्ध्वनिकोलाहल-काहलारवैः । श्रुतिमार्गमुपैति नापरः सुभटः स्वर्गिनरासुरेष्वपि ॥ ६२ ॥ वरिवस्यति मामयं पुरेत्यथ कुर्या मनसापि मा भ्रमम् । भरतोऽप्य-भिनामनकियातरलो यत्त्रपया निवार्यते ॥ ६३ ॥ इति मङ्क्षु निशम्य चारतो भरतः क्षोणिपतिः क्रुधा ज्वलन् । अभियातिमभि प्रयाणकाह-तढक्काभिरवोचदुत्तरम् ॥ ६४ ॥ रथचीत्कृतिवाजिहेषितैः करभक्रन्दितहस्तिबृंहितैः । पटुचेटरवैर्मिथस्तदा निनदाद्वैतमभूत् प्रयाणके ॥६५॥

यस्त्वं ष्वचनापि मा स्म भूः । विजिगीपुमतेषु राजसु क्व नु सवन्धकथोपयुज्यते ? ॥ ३४ ॥ अथवा यदि वीरमानिताग्रहिलो वीरममुं न मन्यसे । ज्वलनेऽत्र हविर्भुजीव तल्लभसे त्वं शलभत्वमञ्जसा ॥ ३५ ॥ अथ जीवितराज्ययोः स्पृहा यदि काचित् तव विद्यते हृदि । भरतेश्वरशासनं तदा परभूपैरिव मूर्ध्नि धार्यताम् ॥ ३६ ॥ ननु यत्र विधीयतेऽन्वहं वरिवस्या त्रिदशासुरैरपि । तदिह प्रणतिं वितन्वतो नरमात्रस्य तवास्तु का त्रपा ? ॥ ३७ ॥

इति दूतगिरामनन्तरं स्वभुजौ वाहुवलिर्विलोकयन् । अधरद्युतिकैतवात् क्रुधारुणितां वाचमुवाच निश्चलः ॥ ३८ ॥ अयि दूत ! स मे समागमं यदि वन्धुः प्रथमः समीहते । उपपन्नमिदं यदेष नः परिपूज्यः खलु तातसंनिभः ॥ ३९ ॥ इदमप्यतिसुन्दरं तव प्रभुराह्वास्त यदेप वान्धवान् । महतां न हि कृत्यवस्तुषु स्मृतिवैकल्यमिहोपजायते ॥ ४० ॥ वत तातपदानुगामिषु स्वयमेतेषु तदीयसंपदः । यदयं गिलति स्म वान्धवः प्रतिवन्धोऽस्य स दूत ! नूतनः ॥ ४१ ॥ भरतक्षितिरूपमामिषं यदवाप्यैष तिरोदधेऽनुजान् । तदहं भवदीयभूपतेरिह गृद्धस्य च वेद्मि नान्तरम् ॥ ४२ ॥ किल भूदिह मा स्म निर्जितो लघुभिर्ज्येष्ठ इति प्रजारवः । यदि तातमशिश्रियन्नमी जितकाशी किमयं तव प्रभु ? ॥ ४३ ॥ सकलामवजित्य मेदिनीमवनीशस्तव मां विरोधयन् । वहुगर्भितशस्यमात्मनः छपिकर्माऽद्य मलीकरोत्ययम् ॥ ४४ ॥ अयि दूत ! जनो विभाषते वत मय्येव तव प्रभोर्न किम् ? । लघुवान्धववैभवानि योऽग्रसदुद्भ्रान्तमिवाशु कुक्कुरः ॥४५॥ मम दूत ! युगादितीर्थकृद् वरिवस्यः प्रभुरेक एव नु । किमनेन स लप्स्यते यदि प्रणतिं ज्येष्ठतयाऽन्यथा तु न ॥ ४६ ॥ यदि चैष महोऽभिनाथते यदि मत्तोऽपि तवावनीपतिः । निशि दीपचिकीः फणीशितुः शिरसस्तन्मणिमात्तुमीहते ॥ ४७ ॥ विजिगीपुमतेपु राजसु क्व नु संवन्धकथोपयुज्यते । इति ते वचनं वृथा, यतो मयि सत्येप कुतो विजृम्भते ? ॥ ४८ ॥ ज्वलनेऽत्र हविर्भुजीव ये शलभत्वं कलयन्ति ते परे ।

न भवन्ति विषादभाजनं दधतोऽप्यस्य सदैव शासनम्? ॥ १७ ॥ समशीर्षिकया प्रवर्धिसद्भुवनानामनुरागवैभवैः । अपि तस्य न बाधते क्वचित् पुरुषार्थत्रितयं परस्परम्? ॥ १८ ॥ इति वाचमुदीर्य भूपतौ स्थितिमासेदुषि सोऽब्रवीत् पुनः । कुशलं क्व नु तस्य पृच्छ्यते कुशलं हन्त भुवोऽपि यः स्वयम् ॥ १९ ॥ अपि चाकुशलं प्रजासु तास्वथ राज्ये क्व नु तत्र संभवेत्? । ननु यत्र समस्ति शास्तिकृद् द्विपदाकान्तिगजस्तवाग्रजः ॥ २० ॥ ननु तिष्ठतु वीरमण्डलीजयिनो दिग्विजये पुरोऽस्य कः । क्रमते तिमिरस्य विक्रमः कुत एव प्रतपत्यहर्पतौ? ॥ २१ ॥ ननु तस्य दिगन्तपार्थिवैः सममाज्ञैकतमाप्यनेकशः । शिरसा नियतेव जन्मिभिर्भृशमिच्छा नियतेरिवोह्यते ॥२२॥ 'अविबाधितवृत्तिभिर्मिथः पुरुषार्थैस्त्रिभिरेष सेव्यते । भुवनैरिव हेमभूधरो दिवसः सान्ध्यविभागकैरिव ॥ २३ ॥ अपरैः परितो नृपैः परःशतसंख्यैः परिषेवितोऽप्ययम् । अनुजानतिदूरगान् निजानविपश्यन् न कदापि मोदते ॥ २४ ॥ जगतीमवजित्य भारतीं भरतस्यात्मपुरीमुपेयुषः । नृपराजपदोत्सवं नृपाः समुदो द्वादशवार्षिकं व्यधुः ॥ २५ ॥ अवबुध्य निजाननागताननुजांस्तत्र महे महीयसि । अयमेकनृपः स्वपूरुषान् द्रुतमाह्वातुममूननोदयत् ॥ २६ ॥ अथ ते तु महाधियोऽन्तरा सविकल्पाः परिकल्प्य किञ्चन । बत तातपदद्वयान्तिके द्रुतमेत्य व्रतमेव भेजिरे ॥ २७ ॥ तदपारवियोगविभ्रवव्यसनावर्तविवर्तगर्तत । तदमुं तव देव! सांप्रतं द्रुतमुद्धर्तुमुपेत्य सांप्रतम् ॥२८॥ ननु यद्यपि तत्र बन्धुताविवशस्त्वं न पुरा समागमः । परिवक्ति तथापि तेऽन्यथा सहजादेव दुराशयो जनः ॥ २९ ॥ महतोऽप्यपये यथा तथाप्युपरागादपचीयते महः । तपनो हि तुलाविशुद्धिमानपि कन्यां गत इत्यताद्दशः ॥ ३० ॥ तदहं नृप! वच्मि ते हितं भरताधीश्वरलोचनाञ्चलैः । जनवादरजःप्रमार्जनं कुरु संप्रत्यपि नापराध्यसि ॥ ३१ ॥ स्वयमेव सदाऽनुजीविनामसमानार्थविसर्जनापरः । अभिमानधनप्रियस्तव प्रणतेर्नान्यदयं समीहते ॥ ३२ ॥ द्रविणाय न किन्तु तेजसे किल धीराः कलयन्ति विक्रमम् । विनिहन्ति पतङ्गिपुङ्गवः फणिनः किं फणरत्नवाञ्छया? ॥ ३३ ॥ मम बन्धुरसाविति भ्रमादभ-

अथ दूतपुमानशोभनैः शकुनैः सोऽध्वनि वारितोऽप्यगात् । निजनाथनियोगकारितापरतन्त्रा हि सदाऽनुजीविनः ॥ १ ॥ व्यतिलङ्घ्य नदीनगावलीनगरग्रामधरां वसुंधराम् । बहुलं बहुलम्पटैर्भटैर्बहलीदेशमसावथासदत् ॥ २ ॥ सुषमानृपतेरिव स्थलैरथवा क्रीडनगैरिव श्रियः । अनुगोष्ठमहो महोन्नतैः कलितं धान्यकदम्बराशिभिः ॥ ३ ॥ अनुशालिवनं च गोपिकानिवहैरिक्षुतले निषादिभिः । बलिबाहुबलिक्षितीशितुश्चरितोद्गानपरैः परिष्कृतम् ॥ ४ ॥ प्रतिशालमनाविलादिकृद्गुणगीतिप्रवणैः सुरीगणैः । कनकाचलतोऽभ्युपागतैरविशून्यद्रुमराजिराजितम् ॥ ५ ॥ मणिभूषणकान्तिमञ्जरीवितमिस्रासु तमस्विनीष्वपि । दिवसेष्विव पान्थवाणिनीगणपाणिंधमवर्त्मघोरणिम् ॥ ६ ॥ समुपेत्य सरोजलोचनाद्भुतलावण्यदिदृक्षया दिवः । त्रिदशैरतिशायिभोगतो मुदितैर्दुष्परिहार्यभूतलम् ॥ ७ ॥ पञ्चभिः कुलकम् ॥ अकृशाद्भुतवैभवान्वितं बहलीदेशमसाववाप्य तम् । स्वमिहैव भवे जवाद् भवान्तरमायातमिवोदमन्यत ॥ ८ ॥ अथ तक्षशिलाभिधामसौ वसुधाशेखरशालशोभिताम् । दृढबाहुबलस्य संपदा बहुलां बाहुबलेः पुरीमगात् ॥ ९ ॥ परितोऽपि निभालयन्नयं वचनागोचरमत्र वैभवम् । पुरवासिभिरुन्मुखो निरैक्ष्यत विक्रीतजनादिवोद्धृतः ॥ १० ॥ घटिकागृहमेत्य भूपतेः क्षणमुत्तीर्य रथादथास्थित । स निजेश्वरवाचिकं तथाद्भुतवीक्षाविगतं स्मरन्निव ॥ ११ ॥ अथ ससदि स प्रवेशितः प्रतिहारेण नृपस्य शासनात् । मणिकुट्टिमसंभृताम्भसंभ्रमसंकोचितचीरपल्लवः ॥ १२ ॥ तरणेरिव तेजसा हरेरिव लक्ष्म्याऽहिपतेरिवौजसा । दृढ बाहुबलेः क्षितीशितुः प्रणिपत्यैष पुरो निविष्टवान् ॥ १३ ॥ मुखपद्मनिविष्टभारतीकरवीणाक्वणकेलिबान्धवीम् । इति वाचमुवाच विस्मितद्युतिसच्चामरवीजितां नृपः ॥ १४ ॥ अयि शस सुवेग ! वेगतः कुशली सांप्रतमग्रजो मम । अयि तेन च शासिताः प्रजाः कुशलिन्यो गुरुसंपदश्च ताः ? ॥ १५ ॥ अजितस्य च राज्यमुन्नतिं भजतेऽङ्गेषु सदैव सप्तसु । अयि भारतभूमिमण्डलं कुशलेनैष जिगाय वाऽखिलम् ? ॥ १६ ॥ अयि भूमिभुजोऽग्रजेन मे विजितावर्जितदासिताः क्रमात् ।

सूरस्य दूरप्रसरः कथं स्यात्? ॥ १०९ ॥ शौण्डीरदोर्दण्डममुं त्वजित्वा दिग्जेत्रयात्राक्रमकैतवेन । त्वयैकराज्याय विभो! वणिज्याकृतेव देशान्तर एव चक्रे ॥ ११० ॥ तत् तुल्यसंबन्धपराक्रमस्ते नोपेक्षितुं युज्यत एव देव! । आलानदण्डे किमुभौ मदेभौ स्यातां किमेकत्र वने च सिंहौ? ॥ १११ ॥ अथादितस्त्वं यदि योद्धुमीहसे न बान्धवं त किल बन्धुवत्सलः । तथापि दूतोऽस्य मनस्विनीतिभिः परीक्षितुं कश्चिदपि प्रहीयते ॥ ११२ ॥ दूताहूतः सामदानादिभिस्त्वां वीरंमन्यो मन्यते नो यदा तत् । गौरव्योऽपि द्विष्टदन्तीव यन्तुर्देवस्यास्ते स क्षणं शिक्षणीयः ॥ ११३ ॥

इति सचिवचयेन्दोर्मन्त्रमुत्साहकन्दोपममवनिसुधांशुः प्राप्य तस्मादुपांशुः ।
वचनरचनपूतं शिक्षयित्वाऽथ दूतं तमभि च वसुवेगं प्रैषयत् तार्क्ष्यवेगम् ॥ ११४ ॥

॥ इति भरतभूषणनामनि महाकाव्ये द्वितीयः सर्गः ॥



लिन्यमस्मिञ्जनितं तया यत् ॥९४॥ सुताः प्रमत्ता निपुणा अपीह यथा तथा वा बहु किं ब्रवीमः। श्रिया पुमांसश्चलयाऽनुवेलं न वञ्चिताः के शठयोषयेव ? ॥ ९५ ॥ इदं वपुर्मे मम राज्यमेतत् पुत्रा ममैते मम योषितोऽमूः। रत्नभ्रमादू मन्दधियामिहात्मीकारो मुधाऽयं भवबुद्बुदेषु ॥ ९६ ॥ हीनैर्विलीनैरसनातमैश्च संसारभोगैः परहन्तकारैः। तुष्यन्ति रङ्का इव देहिनोऽमी न मोक्षसाम्राज्यमुपार्जयन्ति ॥ ९ ॥ ऊर्मिर्यथा कातरको इरिन्द्रिर्यथालसस्तृप्यति नापि मृद्भिः। संसारभोगैर्न तथा जडात्माऽनुजन्म तिष्ठेत च मृत्यवेऽसौ ॥ ९८ ॥ असेवमानः पुरुषः पुमर्थं चतुर्थमन्यार्थविमोहितात्मा। उत्पद्यते चापि विलीयते च जले यथा पूतरको भवेऽत्र ॥ ९९ ॥ अनेकशो ये किल घृष्टपृष्ठा भोगास्तदर्थं विमुखाभिलाषाः। मोक्षाय दत्ता भृशमुत्सहन्ते सोऽनन्तसुखज्ञानमयो ह्यपूर्वः ॥ १०० ॥ इत्त्क्षामशेषां समपास्य वत्सा मोक्षाय तद् यूयमपि त्वरध्वम्। असद्गतौ शश्वदुपस्थितायां क्वेदृक् पुनः क्षेत्रकुलादिलाभः ? ॥ १०१ ॥ श्रुत्वेत्यमी स्वामिवचः प्रबुद्धाः शुद्धाशयाः संयममाद्रियन्त। विवृत्य दूता अपि विस्मयेन स्वस्वामिने तत् प्रथयांबभूवुः ॥ १०२ ॥ प्राज्यानि राज्यानि ततः समृद्ध्याऽखर्वाणि सर्वाण्यपि सार्वभौमः। स जग्रसे वह्निरिवेन्धनानि भूयांसि भोज्यानि च भस्मकीव ॥ १०३ ॥ अथैकदा दिक्पतिमौलिमाल्यमधूदकस्नातपदारविन्दम्। संसद्गतं श्रीभरतं सुषेणः सेनापतिः प्राञ्जलिरित्युवाच ॥ १०४ ॥ स्वामिन्नसामान्यमहःप्रतिष्ठानिकेतकाष्ठाविजयेऽपि फल्गसे। नैतद् विशत्यायुधवेश्म चक्रमद्यापि मत्तः करटीव शालाम् ॥ १०५ ॥ अथावदद् बुद्धिनिधिः सुबुद्धिरमात्यनाथो भरताधिनाथम्। कोऽद्यापि नाथ ! त्वयि विश्वजेत्रे तिष्ठेत पूष्णीव तमिस्रलेशः ? ॥ १०६ ॥ आ ज्ञातमेको न वशंवदोऽस्ति तवैव देव ! प्रथमोऽनुजन्मा। बाह्वोर्वली बाहुबली रसायामसावसामान्यपराक्रमो यत् ॥१०७॥ राज्याङ्गसप्तार्चिरहो ! महासिविलासिधूमान्धितवैरिवर्गः। अमर्षवायूल्लसितः कथंचिदयं दिगन्तानपि दग्धुमीशः ॥ १०८ ॥ निस्तेजयित्वापि दिगन्तभर्तॄनमुं धरित्रीधरमुच्चशृङ्गम्। स्वामिन्ननाक्रम्य तव प्रताप-

दिग्विस्तृतैरिन्दुरिवोडुभिर्यो घनीमिवेभश्च लताप्रसूनैः ॥ ७९ ॥ स माङ्गलिक्यान् प्रतिमञ्चमुच्चैर्गृह्णन् विधीन् पौरविधीयमानान्। पूर्वाचलं भानुरिवात्मसौधमसौ धरावज्रधरो जगाम ॥ ८० ॥ अभ्येत्य चाभ्येत्य महोत्सवेन विधीयमानं विधिवद् नरेन्द्रैः । स चक्रवर्तित्वपदाभिषेकं भेजे भृशं द्वादश वत्सराणि ॥८१॥ कृशां शशाङ्कस्य कलामिवाथ स सुन्दरीं सादरमीक्षमाणः । तत्कार्श्यहेतूनि (?) नियोगिनः स्वान्यपृच्छ-तेऽपीति शशंसुरस्मै ॥८२॥ स्वामिन् ! भवद्दिग्विजयादिघस्रात् षष्टिं सहस्राणि समाः समाधात्। मतग्रहाभिग्रहसंचयाचामाम्लान्यसौ म्लानि-कराण्यघस्य ॥ ८३ ॥ श्रुत्वेति भूमीपतिना विसृष्टा नष्टापदष्टापदपर्वतेऽथ । युगादिदेवस्य पितुः करेण जग्राह दीक्षां गृहनिःस्पृहा सा ॥ ८४ ॥

अनागतान् द्वादशवार्षिके साम्राज्याभिषेके भरतेश्वरोऽथ । आह्वातुमष्टानवति निजानुभुवः प्रभूतान् प्रजिघाय दूतान् ॥८५॥ राज्यानि कर्तुं यदि वोऽस्ति वाञ्छा तदेत्य नाथं भरतं श्रयध्वम् । निशम्य दूतोदितमित्यमी त्वरूक्षाक्षरं मद्बलु वभाषिरेऽदः ॥८६॥ अस्माकमस्यापि भवत्प्र-भोर्भोः ! प्रादायि तातेन विभज्य राज्यम् । अस्मच्छकाशात् स किमिच्छतीदमाच्छेत्तुमच्छेतरलोभपुष्टः ॥ ८७ ॥ नास्माकमस्मादधिकेन कार्यं स्वं रक्षितुं च स्वयमेव शक्ताः । तद् दूत ! भर्ता भवतामयोगक्षेमङ्करः स्यात् कथमेष नाथः ? ॥ ८८ ॥ अयं च यद्यस्ति समस्तवीराव-लीवलीयानऽनलीकमेव । तदेतु युद्धेन वयं परास्वास्तस्यैव तातस्य यतः सुताः स्मः॥ ८९ ॥ स्वच्छन्दसः किन्तु न विद्यमाने ताते नितान्तेन वयं भवामः । तत् तं समापृच्छ्य सहाग्रजेन योत्स्यामहे तेन युयुत्सुनापि ॥ ९० ॥ उक्त्वेत्यथाष्टापदपर्वतेऽमी गत्वा जिनं निर्वृजिनं प्रणम्य । सर्वं तमस्मै भरताभियोगं विज्ञाय ते विज्ञपयांबभूवुः ॥ ९१ ॥ सिञ्चन्निवैतानमृताम्बुवृष्ट्या दृष्ट्या प्रसादाञ्चितया च वाचा । तत्कालमु-न्मीलितकोपवह्निरह्नाय शान्त्यै भगवानुवाच ॥९२॥ वत्साः ! किमिच्छाऽसुकृतैकलक्ष्मीभूतेहलक्ष्मीमधिगन्तुमेताम् ?। चलाचलेयं कपिकामि-नीव स्वा स्याद् न कस्यापि भवान्तरेऽपि ॥ ९३ ॥ कृत्वा क्षयं स्नेहदशागुणानां प्रदीपलेखेव पलायते श्रीः । अवश्यमेकं त्ववशिष्यते तन्मा-

बभार ॥ ६३ ॥ भूस्थो नभःस्थानभितोऽपि राधावेधं वितन्वन्निव चक्रवर्ती । विव्याध विद्याधरसैन्यवीरान् धीराशयो व्योमसदां समन्तम् ॥ ६४ ॥ स्वस्मिन् खगेशौ विवशेऽथ सैन्ये प्रह्वौ सुवह्वौजसिकावपीमौ । पत्यार्षभिं तं विनमिर्नमिश्च प्रणम्य साष्टाङ्गमसान्त्वयेताम् ॥ ६५ ॥ नाभेयजन्मन्निदमावयोस्त्वं क्षमापते ! दुर्ललितं क्षमस्व । सतां हि भूयानपि गाढरूढाटोपः प्रणामावधिरेव कोपः ॥ ६६ ॥ अथ प्रसन्नस्य नमिश्चिरत्नान्यमुष्य रत्नान्युपदीचकार । स्त्रीरत्नमेकं विनमिः सुभद्रां पुत्रीं तु मूर्तामिव चक्रिलक्ष्मीम् ॥ ६७ ॥ तुष्टाशयेनार्षभिणा विसृष्टाविमौ विशिष्टाशयकौ स्वराज्ये । सुतौ निवेश्य व्रतमादिषातां युगादिनाथस्य विभोः समीपे ॥ ६८ ॥ चक्री पुनः सिन्धुवदात्मवश्यां विधाय गङ्गामनुरागसङ्गात् । समासहस्रं बुभुजे सुषेणजितैर्नदीयोत्तरतीरदेशः ॥ ६९ ॥ खण्डप्रपाताख्यगुहाधिनाथं प्राग्वद् व्यजैषीद (?) थ नाट्यमालम् । गुहामतिक्रम्य च तां निवास्य गङ्गातटे प्राप निधीन् नवापि ॥ ७० ॥ जित्वा सुषेणेन जयैकतानीभागीरथीदक्षिणनिष्कुटं सः । मृगाधिपः स्वीयगुहामिवैकभूमानयोध्यां प्रति संचचाल ॥ ७१ ॥ अस्मत्प्रभोस्तेजसि जृम्भमाणे तमोपहे कोऽयमनात्मवेदी ? । इतीव सद्यस्तिरयांबभूवुस्त्विषां पतिं पादरजोभिरश्वाः ॥ ७२ ॥ करेणवो दानभरेण दत्तच्छटामिवोर्वीं विदधुस्तदाऽस्य । खलीनखिन्नाननपातिभिश्च फेनैः सपुष्पप्रकरामिवाश्वाः ॥ ७३ ॥ हयांह्रिनिस्तक्षणकर्षितोर्वीं सुखश्रवामात्मभुजप्रशस्तिम् । शृण्वन् भुजङ्गीगणगीयमानामियाय मानी निजराजधानीम् ॥ ७४ ॥ तदागमे पौरकृतावचूलदुकूलवन्व्योमनि हट्टमार्गे । तन्मञ्जुरत्नेषु कर न चक्रे व्यलीकभीत्येव दिवाकरोऽपि ॥७५॥ भूपं स्वकान्तप्रतिमल्लरूपं विलोकितुं पौरवधूमिषेण । मञ्चेषु पञ्चेषुवधूरिवास्थादेकाप्यनेकाः परिकल्प्य मूर्तीः ॥ ७६ ॥ नरेन्द्रवीक्षाकुतुकी प्रमोदादमानिवान्तर्नगरं जनौघः । अभ्रंकषागारशिखाधिरूढश्चतुर्थलोकायितमाततान ॥ ७७ ॥ श्रुत्वाब्दशब्दानिव पञ्चशब्दान् नृत्यद्भिरुत्तम्भितपिञ्छभारैः । तदा मयूरैस्तरवोऽपि चक्रधरा इवासन् भरतानुषङ्गात् ॥ ७८ ॥ पुरीमथ प्राविशदेष योषिद्भिक्षिप्तलाजैरवकीर्यमाणः ।

ब्रह्माण्डसंज्ञा भुवनेऽत्र शङ्के विलोक्य लोकेन तदादि चक्रे ॥४८॥ सप्ताश्वतेजाः क्रिल सप्तमेऽह्नि चकार चिन्तामिति चक्रवर्ती । यत्प्रत्यनीकं प्रथते ममापि कः प्रत्यनीकोऽजनि धूमयोनेः? ॥ ४९ ॥ इत्यस्य चिन्तामवधार्य चित्तानुवर्तनध्यानपरास्तदेवाः । सुराः सहस्राः खलु षोडशापि वभाषिरे मेघमुखानुपेत्य ॥ ५० ॥ रे रे शठाः! केन हठाशयेन दैवेन दत्ता मतिरीदृशी वः ?। चक्री भवद्भिर्यदि नेक्षितोऽयं तत् किं समाकर्ण्यत नाख्ययापि ? ॥ ५१ ॥ तद् यात ,तद्देवहताः सुदूरमरे ! नरेन्द्रो नहि यावदेषः । चक्रेण शक्रायुधदुःसहेन भिनत्ति भीमो भवतां शिरांसि ॥ ५२ ॥ श्रुत्वेत्यमी यक्षवचांसि काकनाशं प्रणेशुर्द्रुतमेव देवाः । घनौघमुक्तः प्रतताप चार्कस्तदार्षभेर्मूर्त इव प्रतापः ॥५३॥ म्लेच्छाधिपास्ते सह वाजिहस्तिप्रष्ठैः कनिष्ठाङ्गुलिमात्रदानात् । पत्यार्षभि क्रुद्धमतीव दत्त्वा निजोत्तमाङ्गानि ततो ररक्षुः ॥५४॥ अथोत्तरं सिन्धुतटं सुखेन सुषेणसेनापतिना विजित्य । अक्षुद्रधीः क्षुद्रहिमालयं स चक्री गुणक्रीतयशा जगाम ॥५५॥ गिरेर्नितम्बे किल दक्षिणेऽस्य निवेश्य विष्वक् शिविरं नरेशः । कृत्वाष्टमं स्यन्दनसंस्थितोऽथ ससर्ज वाणं हिमवत्कुमारे ॥५६॥ द्वासप्ततिं तं खलु योजनानि गत्वा पतन्तं हिमवत्कुमारः । दृष्ट्वाऽत्र नामापि निरीक्ष्य शान्तकोपो नृपं प्राप समं शरेण ॥५७॥ विनिर्मितोपायनमार्षभिस्तं विसृज्य तत्रर्षभकूटकूटे । जयप्रशस्तिं निजनामचिह्नामह्नाय चक्रे किल काकिणीतः ॥ ५८ ॥ अष्टाह्निकां तत्र समाप्य चक्री चक्रानुगो दिग्विजयाद् निवृत्तः । उदग्नितम्बे कटकानि कान्त्याद्वैतानि वैताढ्यगिरेरनैषीत् ॥ ५९ ॥ तस्मिन् विजेतुं विनमिं नमिं चोदग्दक्षिणश्रेणिखगाधिनाथौ । अभ्यक्षिपत् क्षोणिभृतां प्रतीक्षः क्षणादभग्नप्रसरं शरं सः ॥ ६० ॥ क्रुद्धावथ द्वावपि वीक्ष्य सद्यस्तं सायकं भूपतिनायकस्य । विद्याधरानीकयुतौ समीकमाधातुमेतेन समीयतुस्तौ ॥ ६१ ॥ दलान्ययुध्यन्त समत्सराणि तेषां मिथो द्वादश वत्सराणि । एकानि भूमौ दिवि चापराणि नाराचतीरीशरचापराणि ॥ ६२ ॥ अथार्षभिः सङ्गरतर्षभिन्नमनाः पुनानः स्वयमात्मसैन्यम् । कोदण्डमुद्दण्डपराक्रमोऽरीञ्जेतुं भुजे तुङ्गरथो

ग्रन्थिदले यथैवापूर्वेण कर्णो करणेन तूर्णम् ॥३२॥ अथ प्रतीपत्वरिताश्वरत्नैनैत्येत्यनेनात्मविभोर्न्यवेदि । चक्री त्वचालीद् मणिरत्नमस्य निवेश्य कुम्भेऽधिगतो महेभम् ॥३३॥ गुहां तमिस्रामविशत् तमिस्रावलीं विलुम्पन् मणिरत्नभासा । स्वसैनिकैः साकमयं शशाङ्क इवोडुभिः क्रोडमिवाम्बरस्य ॥३४॥ अनुप्रयातां ध्वजिनीजनानामालोकहेतोः पविकाकिणीतः । एकोनपञ्चाशतमर्कभांसि चक्री चकारापि च मण्डलानि ॥३५॥ पाषाणतार्यां रयभीषणां चोन्मग्नामदीनानुचरो नदीं सः । अलङ्घयद् वार्धकिवद्धसेतुमतूलतार्यामिह निम्नगां च ॥३६॥ उदग्गुहाद्वारकपाटदत्तविनिर्गमोऽसौ विलसत्प्रतापः । चक्रेण राजन् दिवसोंऽशुनेवोत्तरं विजेतुं भरतार्धमाटत् ॥३७॥ संपातसंक्षैरिह भिल्लभूपैरदृष्टपूर्वाभिभवैरदान्तैः । तस्यातिघोरोऽजनि सङ्गरस्तत्तातस्य दुष्टैरिव कर्मवीरैः ॥३८॥ तैरग्रसैन्ये तरलीकृतेऽस्याश्वरत्नमारुह्य धृतासिरत्नः । चचाल सेनापतिरत्नमेतान् हन्तुं सितध्यानमिवान्तरारीन् ॥३९॥ तेन व्यधीयन्त गतप्रपञ्चाः पञ्चाननेनेव गजा द्विषन्तः । गत्वा च ते सिन्धुतटान्तमारादाराधयन्नात्मकुलाधिदेवान् ॥४०॥ तदा तदाराधनतोऽभ्युपेत्येत्याहुः सुरा मेघमुखाभिधास्तान् । हंहो ! महोत्साहभरेण वत्सा विधानमारम्भि मुधा किमेतत् ? ॥४१॥ दूरे वयं जेतुमयं न शक्यः पुरन्दरेणापि कृतादरेण । तथापि युष्मज्जनितानिरोधाद् विधास्यते कश्चिदुपप्लवोऽस्य ॥४२॥ पुरः प्रतिश्रुत्य तदेतदेषां ते व्यन्तरा मेघमुखाभिधानाः । विकृत्य मेघान् नवचक्रिसैन्योपरि व्यधुर्वृष्टिमतीव घोराम् ॥४३॥ वर्षद्भिरुच्चैर्मुशलप्रमाणधाराभिरन्धातमसं सृजद्भिः । अराणि मेघैः श्रुतिकोटराणि विदारयद्भिस्ताडितो धमद्भिः ॥ ४४ ॥ जाते तदानीं कटकस्य कण्ठदघ्ने घनाम्भस्यभितः क्षणेन । चक्री स्वहस्तेन स चर्मरत्नं व्यस्तारयद् द्वादश योजनानि ॥ ४५ ॥ तस्योपरिष्टात् कटकेऽधिरूढे सच्छत्ररत्नं च ततान तद्वत् । तद्दण्डमौलौ मणिरत्नमात्मलोकावलोकाय ततान देवः ॥ ४६ ॥ उप्तानि धान्यानि कुटुम्बिरत्नेनाह्नो मुखेऽन्ते च गतानि सिद्धिम् । प्राप्तानि शश्वत् प्रतिवेश्म सैन्यजनस्य दैन्यप्रसरं ममन्थुः ॥ ४७ ॥ चर्मातपत्रद्वयसंपुटं तत्तोयान्तरालेतरदण्डतुल्यम् ।

सूत्कारभरेण भीमः शरो गरुत्मानिव चण्डवेगः । गत्वा सभां मागधतीर्थभर्तुर्भर्तुर्जयस्तम्भ इवोल्ललास ॥१७॥ उद्वीक्ष्य तं कोपकडारचक्षुरित्यब्रवीत् पूर्वपयोधिपाता । अरे ! सभायां मम कः ससर्ज शरं करं मौलिमणाविवाहेः ? ॥१८॥ इति ब्रुवाणः स्वयमेव बाणमुत्थाय तं पाणितले चकार । प्रकोपकम्प्राधरपल्लवस्तत्पुङ्खाक्षरश्रेणिमवाचयच्च ॥१९॥ नाभेयजन्मा भरताभिधानः समेत्य शास्ता दिशतीति चक्री । यच्छन्तु दण्डं मम रत्नराज्या राज्यानि कर्तुं यदि वोऽस्ति वाञ्छा ॥२०॥ इत्यक्षरालीमवलोक्य मन्त्रमिवोरगस्तत्क्षणमाप्य शान्तिम् । रत्नौघमादाय च मागधेशस्तमादिचक्रायुधमाजगाम ॥२१॥ तत्काण्डदण्डेन समं स दण्डं समर्प्य तं प्राञ्जलिरित्युवाच । अद्याद्यहं देव ! तव प्रसादवशाद् वसामीह निदेशकारी ॥२२॥ श्रुत्वेति तद्भक्तिवचः प्रसन्नचेताः स चक्री तमथो विसृज्य । निवर्तयामास रथं पयोधेः संरम्भतः स्वस्य मनोरथं च ॥ २३ ॥ निष्कण्टकोऽसौ कटकं समेत्य द्विड्वारणो निर्मितपारणोऽथ । अष्टाहिकां मागधतीर्थनाथमुद्दिश्य चक्री रचयाञ्चकार ॥ २४ ॥ क्रमादपाच्यां वरदामतीर्थाधिपं प्रभासाधिपतिं प्रतीच्याम् । सिन्धुस्रवन्तीपतिमप्यजैषीत् प्राग्वद् मनीषी भरतो नृपेन्द्रः ॥ २५ ॥ सैन्यैरदैन्यैरनुचक्ररत्नं गन्ता दिगन्तानपि गाहमानः । वैताढ्यशैलं भरतार्धफालीद्वयान्तरासीमनिकामगात् सः ॥ २६ ॥ सैन्यं निवेश्यास्य च दक्षिणस्यामुपत्यकायामथ पार्थिवेन्द्रः । विशिष्टभासा तपसाऽष्टमेनाचकर्ष वैताढ्यकुमारदेवम् ॥ २७ ॥ आगत्य सद्यश्चलितासनोऽस्मै प्रौढानि कृत्वापि च ढौकनानि । अद्यादि दासोऽस्मि तवेत्युदित्वा यथागतं सोऽपि जगाम धाम ॥२८॥ कृत्वा नृपः पारणमाहिताष्टाहिकोऽथ सेनापतिरत्नमूचे । सखे ! सुषेणाभिध ! शाधि सिन्धुवैताढ्ययोर्दक्षिणनिष्कुटं त्वम् ॥२९॥ उत्तीर्य सिन्धुं कृतचर्मरत्नसेतुं सुषेणोऽपि ततः सुखेन । म्लेच्छान् विजित्यैत्य च सर्वदण्डं दण्डाधिपो ढौकयति स्म तस्मै ॥३०॥ दिष्टः पुनश्चक्रभृता तमिस्रां गुहामथोद्घाटयितुं सुषेणः । उद्दिश्य चक्रे कृतमालयक्षमष्टाहिकां तत्र कृताष्टमान्ते ॥३१। ततोऽश्वरत्नाधिगतः कपाटे त्रिर्दण्डरत्नेन जघान तस्याः । भिन्ने च ते

॥१

- अथायुधागारमुपेत्य चक्ररत्नं नभोरत्नमिवावतीर्णम् । युक्तं सहस्रेण करैरिवारैर्ननाम भूमान् भरतोऽभितुष्टः ॥ १ ॥ नैवेद्यजातैर्नवभिर्वितन्वन् पूजामघं पार्थिवपूजनीयः । तस्याहितद्माभृदनिष्टमष्टाहिकोत्सवं सारमतिश्चकार ॥ २ ॥ अथानुचक्रं दिशि जृम्भजेतुर्मद्देभरत्नेन महीमहेन्द्रः । प्रास्थानिके लग्नदिने स जातप्रस्थानकल्याणविधिः प्रतस्थे ॥३॥ छत्राश्वसेनान्यसिदण्डचर्मपुरोधसः काकिणिवर्धकी च । मणिः कुडुम्बीत्यपराणि रत्नान्यनेकशोऽमूनि तमन्वगुश्च ॥४॥ प्रयाणढक्का भरताग्रसैन्यनरैरताड्यन्त भृशं रसन्त्यः । तदा रिपूणां हृदयानि किन्त्वाश्चर्यं व्यदीर्यन्त दिगन्तरेषु ॥ ५ ॥ सेनाशतव्रोदितभूमिगोलप्रेङ्खोलधूलीस्थगितस्तदाऽर्कः । भेरीरवत्रस्ततुरङ्गकृष्टरथः पपातेव कुहापि कुञ्जे ॥ ६ ॥ अस्मत्प्रभोः सैन्यभरेण भग्नफणः फणीन्द्रो म्रियते वराकः । इतीव तद्घ्नन्त इलां किलाश्ववराः खुराग्रैस्तालिमां वितेनुः ॥ ॥ ७ ॥ रथा रथाङ्गध्वनिभिर्मिहेभा गर्जाभिरश्वा अपि हेषितेन । जनो जनैः शब्दपरम्पराभिरलक्ष्यत क्षोणिरजोऽन्धकारे ॥ ८ ॥ ध्वस्तालकेव ग्लपितैर्वनान्तैः खुरैर्हरीणां सनखक्षतेव । प्रम्लानमाल्येव जलैर्विदूनैर्भुक्तोज्झिता भूः कटकैस्तदाऽऽसीत् ॥ ९ ॥ अथानुचक्रं भरतेश्वरस्य यान्ती द्विगव्यूतिमितैः प्रयाणैः । सा वाहिनी पूर्वपयोधिकान्तोपकण्ठसंश्लेषवती बभूव ॥ १० ॥ तत्कालमाद्वादशयोजनान्तं समन्ततो वर्धकिनिर्मितेषु । समावसन्नाशु निवासकेषु तत्सैनिकाः स्वेष्विव मन्दिरेषु ॥ ११ ॥ तत्रादधात् पौषधशालिकां च रत्नोच्चयैर्वार्धकिरत्नमुच्चैः । महेभशैलादवतीर्य तस्यां देवो व भास्वान् भरतो विवेश ॥ १२ ॥ कुशीलशास्ता कुशसंस्तरे स कृतोपवासत्रितयोऽह्नि तुर्ये । स्नात्वाऽथ कृत्वा बलिकर्म शस्त्रपूर्णं रथं सौर्यमिवारुरोह ॥१३॥ स वीरघण्टायुगयुग्मरम्यं द्वीन्दुं द्विभास्वन्तमिवामराद्रिम् । महारथः सारथिना प्रगुणरथ्यं समुद्रेऽथ रथं निनाय ॥१४॥ नाभेयसूरम्भसि नाभिदघ्ने रथं समुद्रान्तरथो निवेश्य । अधिज्यकोदण्डगुणप्रणादाद् यादांसि चक्रे चकितश्रवांसि ॥१५॥ पयोनिधेर्मागधतीर्थनाथदेवं वशीकर्तुमसौ नृदेवः । स्वनामचिह्नं किल धूतवाणमुद्भूतरुद्रुतमिवोत्ससर्ज ॥१६॥ स पत्त-

भेदाभ्यां सा द्विरूपभाक् । शीघ्राद्यभेदा व्यस्तान्यभेदा मोक्षाय गच्छति ॥१३७॥ दानशीलतपोभावफलकैः परिकल्पिता । सुसम्यक्त्वप्रतिष्ठाना-सदा चारित्रशोभिता ॥१३८॥ गुरूपदेशनिर्यामवाचा संचारिता जनैः । कर्मावर्ताष्टकं हित्वा परं पारं प्रयात्यसौ ॥१३९॥ युग्मम् ॥ तद् मोक्ष इति विख्यातमनन्तमपुनर्भवम् । अनामयमनावाधमचलं शिवमक्षयम् ॥ १४० ॥ श्रुत्वेति स्वामिनः शर्मदेशिनीमिति देशनाम् । यति-धर्ममधुः केऽपि श्राद्धधर्मं च केचन ॥ १४१ ॥ व्रतिनः पुण्डरीकाद्याः साध्व्यो ब्राह्मीपुरस्सराः । श्राद्धाः श्रेयांसमुख्याश्च श्राविकाः सुन्दरी-मुखाः ॥ १४२ ॥ इत्थं चतुर्विधः संघः स्थापितः प्रभुणा तदा । पूज्यतेऽद्यापि लोकेषु देवदानवमानवै. ॥ १४३ ॥ तदोत्पत्तिव्ययध्रौव्यत्रिपदीतो विनिर्ममे । द्वादशाङ्गी गणधरैः पुण्डरीकादिभिः प्रभोः ॥ १४४ ॥

अथ स्वामी चामीकरगिरिवरो जङ्गम इवासुरेन्द्रैर्देवेन्द्रैर्मुनिभिरपि तैस्तैः परिवृतः ।
व्यहार्षीदुत्कर्षी प्रमदभरतः किंच भरतः, क्षमाचन्द्रोऽतन्द्रोदयनिधिरयोध्यामधिययौ ॥ १४५ ॥

॥ इति भरतभूषणनामनि महाकाव्ये प्रथमः सर्गः ॥



श्चक्रं च क्वेदमैहिकम् ? ॥ ११६ ॥ ध्यात्वेति तुष्टिदानेन कृष्टवन्तौ विसृज्य नौ । मरुदेवामिति प्रीतिभरतो भरतोऽभ्यधात् ॥११७॥ मातः ! सुतवियोगेन दुःखिता त्वं पुरा चिरम् । रुदात्तरं समादिक्षः परं पश्य सुतश्रियम् ॥ ११८ ॥ पितामहीं महीन्द्रोऽभिधायेत्यारोप्य च द्विपम् । आत्मनापि समारोहत् कृतकौतुकमङ्गलः ॥११९॥ सान्तःपुरपरीवारो नगराद् निरगादयम् । हास्तिकाश्वीयपादातसैन्यसंचलितावनिः ॥१२०॥ अथ व्रजन् गजारूढो मरुदेवामुवाच सः । मातराकर्ण्यतामात्मसुतवैभवमद्भुतम् ॥ १२१ ॥ रूप्यकल्याणमाणिक्यमयशालत्रयं सुराः । इदं यद्देशनासद्म चक्रिरे शक्रशासनात् ॥१२२॥ अथ वन्दारुभिर्वृन्दारकैर्वन्दिवरैरिव । त्वत्पुत्रस्य पुरो मातः ! क्रियते विजयध्वनिः ॥१२३॥ अयं दुन्दुभिराकाशे घनाघन इव ध्वनन् । मातस्त्वत्पुत्रसेवार्थमिवाह्वयति दिक्पतीन् ॥१२४॥ श्रुत्वेति मरुदेवाया हर्षबाष्पामृतैस्तदा । नेत्रयोर्नीलिकापङ्कः साक्षात् प्रक्षालितः क्षणात् ॥१२५॥ स्वयमेवाथ पश्यन्ती सा तादृग्विभुवैभवम् । आनन्दविस्मयस्मेरलोचनेदमचिन्तयत् ॥१२६॥ अये ! वैभवमस्तीदृग् मद्भुवो भुवनाद्भुतम् । भरतस्य वराकस्य वृथा दोषमदामहम् ॥१२७॥ शयिनो यावदुत्सङ्गे सुतास्तावत् किलात्मनः । यदीदृग्वैभवः पुत्रो मय्यौदासीन्यवानयम् ॥१२८॥ मुधा तदहमप्यासं पुत्रमोहकदर्थिता । स्वार्थं विनाऽत्र संसारे न स्वः कस्यापि कोऽपि यत् ॥१२९॥ इत्यस्याः सह मोहेन विलीनं चित्तमप्यथ । तद्विप्रतारकस्थानसरदानभयादिव ॥१३०॥ परमे परमेश्वर्यास्तस्या ज्ञानेविजृम्भिते । आत्मा शरीरमप्यौज्झद् न स्वमेतदपीति वा ॥१३१॥ अस्यामस्यावसर्पिण्यां प्राच्यसिद्धस्य तद् वपुः । अभ्यर्च्य निदधुस्तूर्णं विबुधाः क्षीरनीरधौ ॥१३२॥ भरतः शोकहर्षाभ्यां कवोष्णाश्रुविमिश्रदृक् । स्वामिनो देशनासद्म प्रविवेश यथाविधि ॥१३३॥ त्रिः परीय जगन्नाथं प्रणिपत्य च भूपतिः । निषसाद यथास्थानं पद्मकोशीकृताञ्जलिः ॥१३४॥ आयोजनविसर्पिण्या सर्वभाषानुरूपया । भारत्या भगवान् धर्मदेशनामिति निर्ममे ॥१३५॥ असावपारसंसारपारावारान्तरा तरी । धर्मप्रवृत्तिरेकैव युज्यते कर्तुमात्मसात् ॥१३६॥ सर्वदेशविरत्यात्म-

अथ वर्षसहस्रान्ते विश्रान्तेषु विकर्मसु । फाल्गुने मासि कृष्णायां प्रहरेकादशीतिथौ ॥९८॥ चन्द्रे च सोत्तराषाढे न्यग्रोधस्य तरोस्तले । अवाप केवलज्ञानं शुक्लध्यानधनो जिनः ॥९९॥ युग्मम् ॥ तदैत्य वासवा भक्तिकलिताञ्जलितासनाः । स्वामिनः केवलोत्पत्तिमहिमानं वितेनिरे ॥ १०० ॥

इतश्च भक्तिभरतो भरतो मातरं पितुः । तदागमद् नमस्कर्तुं कुलदेवीमिवात्मनः ॥ १०१ ॥ तां च पुत्रवियोगार्त्या कुर्वन्तीमश्रुवर्षणम् । नीलीलुप्तदृशं मेघच्छन्नार्केन्दुं यथा दिवम् ॥ १०२ ॥ पौत्रोऽयाऽऽयानयं मातस्त्वत्पादानभिवन्दते । विज्ञप्यैवं प्रणम्यास्या न्यविक्षद् भरतः पुरः ॥ १०३ ॥ अथ तेनात्मपुत्रेण समं प्रोषितसंमदा । तदा सा निजगादेति शोकगद्गदया गिरा ॥ १०४ ॥ अवनं श्रितवान् वत्स ! त्वमतुच्छपरिच्छदः । मदीयपुत्रको गात्रमात्रस्तु वनमासदत् ॥१०५॥ शरीरे सुकुमारे यत् तपस्तेन निवेशितम् । पद्मपत्रपुटीपात्रे तत् प्रदीपः प्रवर्तितः ॥१०६॥ क्व तास्तस्याद्भुताभोगभोगमुख्याः सुखश्रियः ? । क्वेदानीं शीतवातादिपुष्टाः कष्टास्तपःश्रियः ? ॥१०७॥ नाशनं नासनं नैव प्रच्छदं न परिच्छदम् । अवगच्छामि वत्सस्य जीवाम्यद्यापि पापिनी ॥१०८॥ भरतस्तामथावादीदनादीनवया गिरा । मातः ! प्रसीद तस्य त्वं मत्तातस्य जनन्यसि ॥ १०९ ॥ विज्ञापि किमविज्ञेव पुत्रवात्सल्यमोहिता । विचिन्तयसि तातेऽपि मातर्मानवमात्रताम् ? ॥ ११० ॥ स हित्वा लौकिकीं लक्ष्मीं लिप्सुर्लोकोत्तरां श्रियम् । यद् विधत्तेऽधुना मातस्त्वं फलं तस्य पश्यसि ॥ १११ ॥ पवित्रामिति पौत्रस्य समासाद्य सरस्वतीम् । सा विषादनिषादस्य मालिन्यं यावदत्यजत् ॥११२॥ ज्ञापितौ वेत्रिणा तावत् पुरुषौ द्वावथैयतुः । तयोरेकोऽवदत् प्रीतिरोचितो रचिताञ्जलि ॥ ११३ ॥ दिष्ट्याऽद्य वर्धसे देव ! कानने शकटानने । उत्पेदे केवलज्ञानं युगादिजगदीशितुः॥११४ ॥ अथावदद् द्वितीयस्तमद्वितीयगुणं नृपम् । आविरासीत् प्रभो ! चक्ररत्नमायुधवेश्मनि ॥ ११५ ॥ पूर्वं तातस्य कुर्वेऽहं महं चक्रस्य वाऽथवा । क्व परत्र हितस्तात-

॥७८॥ चीर्णाष्टमतपाः स्वामी कृत्वा सिद्धनमस्क्रियाम् । सर्वसावद्ययोगानां प्रत्याख्यानमुदीरयन् ॥७९॥ अङ्गीचकार चारित्रं वहित्रं भवनीरधेः । तन्मनःपर्यवज्ञानमरित्रमिव चाददे ॥८०॥ विशेषकम् ॥ चतुःसहस्रसख्यैश्च समं भर्त्रा समन्ततः । भूपैः कच्छमहाकच्छमुख्यैर्दीक्षा तदाददे ॥८१॥ स्तुत्वा नत्वा च यातेषु सुतेषु त्रिदशेष्वपि । मौनेन जगदाधारो विजहारोर्वरातले ॥८२॥ विभुना भ्रमता प्रापि भिक्षा न क्वापि पारणे । भिक्षानभिज्ञः स्वर्णादि तदा लोको ह्यढौकयत् ॥८३॥ तथाप्यनार्तः क्षुत्तृष्णाघातैः कच्छादिभिः प्रभु' । आलोच्याऽमोचि तस्थे च गङ्गाप्रस्थे फलाशनैः ॥८४॥

अथ कच्छमहाकच्छसुतौ पूर्वनियोजितौ । तदा नमिविनम्याख्यौ पित्रोः पादान्तमीयतुः ॥८५॥ अथैतौ प्रेषितौ ताभ्यां सेवितुं भरतेश्वरम् । अभ्यधत्तां गिरं गर्वगिरिस्रोतस्विनीमिति ॥८६॥ विभु विहाय नाभेयं नावां सेवावहे परम् । घनाद् विनाऽन्यतस्तोयं किं बप्पीह समीहते ? ॥८७॥ संधामिति विधायाथ पित्रोरापृच्छ्य च क्रमान् । प्रभुं गत्वा च नत्वा च तौ व्यजिज्ञपतामिति ॥८८॥ क्षेत्रमात्रापि किं तात ! भागेऽस्माकं न भूरभूत् ? । विज्ञप्तोऽपीत्यदाद् वाचं ताभ्यां वाचंयमो न सः ॥८९॥ अथ भक्तिमतन्वातां तौ भर्तर्यवक्तर्यपि । नेत्रैः कक्षापटः स्वर्गवासो वेति कृताग्रहे ॥९०॥ तत्कृपाणद्वयीमध्यगतो विभुरशोभत । जलकान्त इवापास्तपापनीरो भवाम्बुधौ ॥९१॥ प्रभुं प्रणन्तुमायातोऽन्यदाऽहीन्दुरुवाच तौ । कौ युवां संश्रितौ किंवा मौनध्यानधनं जिनम् ? ॥९२॥ पृष्टाविति फणीन्द्रेण हृष्टावेतस्य तावपि । एकस्वामिव्रतावात्मवित्ताग्रहमशंसताम् ॥९३॥ तयोः फणिपतिः प्रीतः प्रज्ञप्तिप्रमुखां ददौ । पाठसंसिद्धविद्याष्टचत्वारिंशत्सहस्रिकाम् ॥९४॥ विद्याः किलैता वैताढ्यं दक्षिणोत्तरपक्षयोः । प्राभवं प्रथयिष्यन्ति भवतोरित्युवाच च ॥९५॥ प्रभुप्रभावसंप्राप्तविद्यौ ह्योजसाविमौ । गतौ वैताढ्यमावेद्य पितृभ्यां भरताय च ॥९६॥ वर्षान्तेऽथ विभुः श्रेयान् श्रेयांसेनाद्भुतश्रिया । अकार्यतेक्षुसारेण पारणं पुण्यकारणम् ॥९७॥

दमादिशत् । वत्स ! राज्यमिदं धत्स्व प्रविव्रजिषवो वयम् ॥५८॥ प्राह वाणीमिमां पाणी संपुटीकृत्य सोऽप्यथ । राज्यं त्वत्सेवनादन्यत् तातेच्छामि न किञ्चन ॥५९॥ त्वदग्रे प्लवमानस्य स्वेदाम्भोऽभिमतं यथा । तथा तात ! न मे राज्याभिषेकावर्जितं पयः ॥६०॥ तात ! त्वच्चरणाम्भोजरजसा मे यथा मुदः । न तथा पट्टबन्धेन मूर्ध्नि साम्राज्यशंसिना ॥६१॥ यथा तुष्यामि ते तात ! सुप्रसादविलोकितैः । तथा न वारवनितोल्लासितैः सितचामरैः ॥६२॥ छायां पुरो निविष्टस्ते हस्तेन स्पृशता शिरः । यथा भजे तथा नाहमातपत्रेण कर्हिचित् ॥६३॥ त्वदीयशासनगिरा प्रीयेते मे यथा श्रुती । न तथा तात !-संभ्रान्तवन्दिवृन्दसुभाषितैः ॥६४॥ सेवारम्भरतं प्राह भरतं प्रभुरप्यथ । वत्स ! सेवा पितुः सेयमाज्ञाऽवज्ञायते न यत् ॥६५॥ अन्वर्था नन्दनास्ते ये सितासितकृतः पितुः । परेऽङ्गजत्वमात्रेण द्वेष्याः खलु मला इव ॥६६॥ निश्चिन्ता मुक्तिहेतूनि कुर्वन्तो न पतन्ति यत् । पूर्वजा वत्स ! तनयस्तेनापत्यमितीष्यते ॥६७॥ पुरुषार्थत्रयीभारमाद्रियस्व तदद्य मे । निश्चिन्तोऽहं चतुर्थाय पुमर्थाय यते यतः ॥६८॥ आज्ञां सुरासुरैर्मान्यां निशम्येति निशातधीः । द्विधाऽप्यवाङ्मुखस्तस्थौ भरतः पुरतः प्रभो. ॥६९॥ स्वाम्यादिष्टास्ततो हृष्टाः सचिवाः शुचिवारिभिः । भरतं परतन्त्रेच्छमभ्यषिञ्चन् पितुः पदे ॥७०॥ तद्बाहुबलिमुख्यानामपि बाहुबलिस्पृशाम् । विभुर्विभज्य भूभागानङ्गजानामदाद् मुदा ॥७१॥ दत्तवार्षिकदानोऽथ चैत्रश्यामाष्टमीतिथौ । दिवाचन्द्रोत्तराषाढायोगे यामे च पश्चिमे ॥७२॥ सुरासुरनरैः सेन्द्रैः कृतनिष्क्रमणोत्सवः । व्रतकामी वनं स्वामी सिद्धार्थाभिधमभ्यगात् ॥७३॥ युग्मम् ॥ शिविकायास्तदोत्तीर्य तले किङ्किल्लिमूरुहः । स्वयं जगदलङ्कारोऽलङ्कारानमुचद् विभुः ॥७४॥ शृङ्गे सुवर्णशैलस्य सिद्धासिन्धुप्रवाहवत् । वासवोंसेऽथ देवस्य देवदूष्यं न्यवेशयत् ॥७५॥ दशमद्वाररोधेन सापराधानिव प्रभुः । ततश्चतसृभिः केशानुच्चखानैष मुष्टिभिः ॥७६॥ स्कन्धकल्याणकुम्भाग्रपल्लवाः सन्त्वमी कचाः । इत्यसौ पञ्चमीं मुष्टिममोचि वृत्रविद्विषा ॥७७॥ ततः क्षीरार्णवे क्षिप्त्वा केशमुष्टिचतुष्टयम् । तुमुले कुलिशास्त्रेण सकले मुकुरीकृते

टङ्कणौ । टक्को डियाणडाहालतङ्गतायकतोसलाः ॥ ३७॥ दशार्णदण्डकौ देवसभनेपालनर्तकाः । पञ्चालपल्लवौ पौण्ड्रपाण्डथप्रत्यग्रथार्बुदाः ॥३८॥ वर्बराभीरभट्टीयमाहिष्मकमहोदयाः । मेरण्डमरुलौ मेदमरुमुद्गरमङ्कनाः ॥ ३९ ॥ मल्लवर्तमहाराष्ट्रयवनारामराढकाः । लाटब्रह्मोत्तरब्रह्मावर्तब्राह्मणवाहकाः ॥ ४० ॥ विदेहवङ्गवैराटवनवासवनायुजाः । वाह्लीकवल्लवावन्तिवह्नयः शकसिंहलौ ॥ ४१ ॥ सुह्मसूर्परसौवीरसुराष्ट्रसुहडास्मकाः । हूणहूरकहम्र्यौजहंसा हुडुकहंरकौ ॥ ४२ ॥ इत्यष्टानवतिः सर्वेऽप्यभ्यधीयन्त ते सुताः । स्वामिना कृततज्जन्मोत्सवेनोत्सवपूर्वकम् ॥ ४३ ॥ स्वामिनस्तान्यपत्यानि धात्रीभिः पञ्चपञ्चभिः । पाल्यमानान्यवर्धन्त भावनाभिर्व्रतानि वा ॥ ४४ ॥ विभोर्धर्मशताङ्गस्याङ्गानीव शतमङ्गजाः । रेजिरे ते च ते च द्वे वैजयन्त्याविवाङ्गजे ॥४५॥ भरताय कला बाहुबलयेऽश्वादिलक्षणम् । ब्राह्मयै लिपीरपीक्ष्वाकुः सुन्दर्यै गणितं ददौ ॥ ४६ ॥ सदानक्षत्ररोचिष्णुकटकश्रेणिशोभिताः । विराजन्ति विभोः पुत्राः पादा इव गिरीशितुः ॥ ४७ ॥

अथैकदा समुन्मील्य चक्षुरान्तरमात्मनः । विभुर्व्यभावयद् दुःखवेष्टितं भवचेष्टितम् ॥ ४८ ॥ गतसारेऽत्र संसारे सुखभ्रान्तिः शरीरिणाम् । लालापानमिवाङ्गुष्ठे बालानां स्तन्यविभ्रमः ॥ ४९ ॥ उत्पद्यन्ते विपद्यन्ते तद्रसास्वादसादराः । शरीरिणोऽत्र संसारे कृमयो गोमये यथा ॥ ५० ॥ लोकः परिचितद्वेषी नवेच्छश्चेत्यहो ! मृषा । यद् भवे न विरज्येत न रज्येतापुनर्भवे ॥ ५१ ॥ दुःखात्मनि भवे सक्ताः शलभा इव दीपके । न कल्याणे तु वैकल्यादङ्गिनोऽमी सुखात्मनि ॥५२॥ सरस्तोयमिवास्थास्नु भवसौख्यमुपाधिजम् । निरुपाधि शिरानीरमिव मुक्तिसुखं स्थिरम् ॥५३॥ तदाश्रित्य व्रतं पारवत्मेव भवनीरधेः । मोक्षं यामि जनोऽप्येष यथा मामनुवर्तते ॥५४॥ अत्रान्तरेऽन्तरुद्भूतालोको लोकान्तिकैः सुरैः । व्यज्ञप्यतेति कल्पज्ञैः समयज्ञोऽपि स प्रभुः ॥५५॥ वसर्पिण्यामिहाज्ञानतमःप्रकरभास्कर ! । राज्यवत् प्रथमं नाथ ! धर्मतीर्थं प्रवर्तय ॥५६॥ इति विज्ञप्य यातेषु तदा तेषु जगत्पतिः । भरतं बाहुबल्यादियुतं सुतमजूहवत् ॥५७॥ प्रणम्याग्रे निविष्टाय तस्मै स्वामी-

शोभेव शेषकौलेन्द्रकुलाद्रिकमठादिभिः । धरेयं धार्यतेऽद्यापि प्रभावेणैव तस्य तु ॥ १७ ॥ तारापुष्पोपहारेण मण्डितेऽम्बरमण्डपे । यत्कीर्तिनर्तकीरङ्गविटवद् भाति चन्द्रमाः ॥ १८ ॥ सुमङ्गला सुनन्दा च तस्य पत्न्यावुभे शुभे । विरिञ्चनस्येव सावित्री गायत्री च बभूवतुः ॥१९॥ ताभ्यां सोऽयमनासक्तमना वैषयिकं सुखम् । भेजे भोगफलं कर्मौदासीन्येनैव सादयन् ॥ २० ॥



इतो बाहुः सुबाहुश्च भक्तविश्रामणे क्रमात् । यतिपञ्चशतीवैयावृत्त्यं नित्यं वितेनतुः ॥ २१ ॥ शुभेन विधिना तेन बाहुश्चक्रिपदप्रदम् । सुबाहुस्तु बलाधायि कर्म निर्मितवान् मुनिः ॥ २२ ॥ प्रशंसां च तयोश्चक्रे वज्रनाभमुनीश्वरः । तेन पीठमहापीठौ जातौ दुर्मनसौ मुनी ॥२३॥ तदीर्ष्याजनितं कर्म ताभ्यामालोचनं विना । स्त्रीभावफलदं चक्रे मायामिथ्यात्वयोगतः ॥ २४ ॥ वज्रनाभमुनीन्द्रोऽर्हद्भक्त्यादिस्थानकैः पुनः । विंशत्याऽऽराधयामास तीर्थकृन्नामकर्म सः ॥२५॥ क्रमात् पञ्चापि ते पूर्वलक्षान् दीक्षां चतुर्दश । पालयित्वाऽथ सर्वार्थसिद्धश्रियमशिश्रियन् ॥२६॥ ततोऽसौ वज्रनाभात्मा च्युत्वाऽऽत्मा जगतामयम् । श्रीनाभिमरुदेवाङ्गजन्मा श्रीऋषभोऽभवत् ॥२७॥ सुमङ्गलासुनन्दे ते नन्दतः स्म सविस्मयम् । प्रियात्वं तस्य विश्वैकप्रभोः प्राप्य कथंचन ॥ २८ ॥ अधादपूर्णषट्पूर्वलक्षा गर्भे सुमङ्गला । तौ बाहुपीठयोर्जीवौ च्युतौ सर्वार्थसिद्धतः ॥ २९ ॥ सुनन्दापि कृतानन्दा तदानीमुदरे दधौ । तौ सुबाहुमहापीठौ तत एव दिवश्च्युतौ ॥ ३० ॥ दृष्ट्वा चतुर्दश स्वप्नानथ देवी सुमङ्गला । स्वाम्युक्तचक्रिमातृत्वप्रीता युग्ममसूत सा ॥ ३१ ॥ सुतो भरत इत्यस्या ब्राह्मीति च सुताऽभवत् । सुनन्दा बाहुबलिनं सुन्दरीमप्यजीजनत् ॥ ३२ ॥ पुनरेकोनपञ्चाशत्पुत्रयुग्मानि जीवसूः । असूत सुकृताहूतमङ्गलानि सुमङ्गला ॥ ३३ ॥ काश्मीरकीरकावेरकाम्बोजकमलोत्कलाः । करहाटकुरूत्काथक्रथकेशिककोशलाः ॥ ३४ ॥ केशकारुतकारूपकच्छकर्णाटकाकटाः । केककोल्लगिरी कामरूपकङ्कणकुन्तलाः ॥ ३५ ॥ कलिङ्गकलकूटौ च करकण्ठश्च केरलः । खसखर्खरखेटाश्च गौडाङ्गौ गोप्यगाङ्गकौ ॥ ३६ ॥ चौडचिल्लरचैद्याश्च जालन्धरक-

मणामकार्षीत् 'पूर्वजन्मनि' इति शेषः। केषाम्। 'साहूणं' साधूनाम्। किंविशिष्टानाम्। 'बालाण' बालानां शैक्षकाणाम्। न केवलमेषाम्, 'तवस्सीण य' तपो विद्यते येषां ते तपस्विनस्तेषां च। न केवलममीषां 'थविरगिलाणाण' स्थविरा वयोवृद्धाः, ग्लाना स्वाध्यायाध्ययनानुष्ठानखिन्ना रोगपीडिता वा ते तथा तेषामिति संक्षेपार्थः। व्यासार्थस्तु कथानकादवसेयः, तच्चैतत्,—

अस्त्ययोध्येति संपद्भिरूरीकृतजना पुरी। यद्वधूमुखलावण्यहन्तकारिनिशाकरम् ॥ १ ॥ तारकाः प्रतिरूपन्ते नक्तं यन्मणिवेश्मसु। संगीतलब्धचन्द्रैणमुपलब्धुमिवागताः ॥ २ ॥ जिनधर्मक्रियासूरान् पौरान् सौराद्यदर्पितान्। कामार्थावनुवर्तेते यत्रैतौ किङ्कराविव ॥ ३ ॥ यत्र कल्पद्रुमानेवोपादानीकृत्य निर्मिताः। पौरास्ते दानिनस्तेन दृश्यन्ते च द्रुमा न ते ॥ ४ ॥ भोगिनस्तरुणा यत्र प्रियासंगमलालसाः। मुनयोऽपि महात्मानः प्रियासङ्ग-मलाऽलसाः ॥ ५ ॥ सदा-समदयापूर्णाशयाऽत्र वहुशो-भया। देदीप्यते मुनिश्रेणी-क्षोणीन्दोरपि ससदा ॥ ६ ॥ ( उक्तानुक्तकर्तृपदः श्लोक ) परितः परिखाम्भोधिवेलाशैल इवोच्चकैः। गुहागृहायितैः शालः शालते यत्र गोपुरैः ॥ ७ ॥ पवनोल्लासितैः पापगलग्रहभुजैर्ध्वजैः। आनयन्तीव चैत्यानि यत्र दिग्भ्योऽपि संपदः ॥ ८ ॥ एकसत्येकमित्त्रैकबुधैकपुरुषोत्तमा। द्यौर्जितैकधनाध्यक्षा तदनेकजुषा यया ॥ ९ ॥ तस्यामिक्ष्वाकुवंशादिकन्द श्रीऋषभः प्रभुः। आसीज्जिनोऽवसर्पिण्यास्तृतीयारे नरेश्वरः ॥ १० ॥ समस्ताचारचातुर्यशिष्याचार्यतया तया। स्रष्टत्यरूपि पुरुषोत्तमनाभिप्रसूरसौ ॥ ११ ॥ मरुदेवा नृदेवानामपि वन्द्या कथं न सा। ययाऽऽदिक्षोणिमानाऽऽदिजिनश्चायमजन्यत ॥ १२ ॥ निरागसो निरातङ्का निराशङ्का निरीतयः। सुप्रजाः सुप्रजास्तत्र प्रजापाले बभुः प्रजाः ॥ १३ ॥ नरव्यन्तरविद्याभृद्देवदानवमानव.। यदाज्ञामवहन् दक्षा रत्नामिव शिर स्थिताम् ॥ १४ ॥ मारिःसारिफलं बन्धः स्रज रोधश्च निम्नगाम्। कलिर्वनं विनाऽन्यत्र तस्मिन् नाजनि राजनि ॥ १५ ॥ दूरेऽन्ये धन्विनः सन्तु भ्रूमात्राद् यत्र शास्तरि। इन्द्रस्तमुग्रधन्वापि नत्वाऽधत्त निजं धनुः ॥ १६ ॥

साधूनां यतीनां शुद्धशीलानामजिह्मब्रह्मचारिणां वैयावृत्त्यं भक्तपानीयादिसंपादनरूपं विहितं निर्मितम्। केन। 'विहिणा' विधिना पिण्डैषणाध्ययनप्रणीताचारेण, यदुक्तम् "दाणेणं हुंति उत्तमा भोगा" इति ॥ २ ॥

सो पढमचक्कवट्टी भरहो भवियाण कुणउ कल्लाणं। आयरिसघरे केवललच्छीए जो सयं वरिओ ॥ ३ ॥

[ स प्रथमचक्रवर्ती भरतो भविकानां करोतु कल्याणम्। आदर्शगृहे केवललक्ष्म्या यः स्वयं वृतः ॥ ]

व्याख्या। सोऽनन्यसामान्यगुणगरिम्णा जगद्विख्यातः प्रथमचक्रवर्ती भरतो भविकानां कल्याणं शिवं करोतु। यः किम्। य स्वयमात्मना रुच्येति भावः, 'वरिओ' वृतोऽङ्गीकृतः। कया। 'केवललच्छीए' केवलज्ञानलक्ष्म्या। किमुपशमस्थाने क्वापीत्याह—'आयरिसघरे' आदर्शगृहे। तच्च मोहस्यैकं निकेतनम्। यतोऽत्र विनश्वराशुचिकृतघ्नविभिन्नस्वरूपेऽपि वपुषि वैपरीत्येनाभिमानो भृशमुज्जृम्भते। अत एव स्वयं वृतोऽसौ, न तु तेन सा वृता। एतावता किमुक्तम्। पूर्वस्मिन् भवे शुद्धशीलसाधुवैयावृत्त्यं यथाविधि वितन्वताऽनेन तत्पुण्यमगण्यमुपार्ज्यत, येन त्रिलोकीतिलकैरभिगम्ययापि केवललक्ष्म्या स स्वयमभिसृत इति ॥ ३ ॥

अथात्मभाषाविभूषाय बाहुबलिगुणविलयं कलयन्नाह—

बालाण तवस्सीण य थविरगिलाणाण जेण साहूणं। वीसामणयं काही बाहुबली तेण बाहुबली ॥ ४ ॥

[ बालानां तपस्विनां च स्थविरग्लानानां येन साधूनाम्। विश्रामणामकार्षीद् बाहुबलिस्तेन बाहुबली ॥ ]

व्याख्या। बाहुबलिर्भरतेश्वरलघुभ्राता बाहुबली बाह्वोर्बलमतीव श्रेष्ठं यस्येति बाहुबली, तेन हेतुना, येन 'वीसामणयं काही' विश्रा-

---

१ दानेन भवन्त्युत्तमा भोगाः। २ क. ग. आयंस।

अथ गुणानुमोदनाद्वारमाह—

भरहाईण मुणीणं गुणगारववण्णणेण पावमलं । पक्खालेमि य सव्वं पवित्ततित्थोदएणंव ॥ १ ॥

[ भरतादीनां मुनीनां गुणगौरववर्णनेन पापमलम् । प्रक्षालयामि च सर्वं पवित्रतीर्थोदकेनेव ॥ ]

व्याख्या । न केवलमर्हदादीन् चतुःशरणं प्रपद्ये, किन्तु 'पक्खालेमि य' प्रक्षालयाम्यपनयामि च । किं तत् । पापं, अलमतिशयेन । नैहिकभवमेवेत्याह 'सव्वं' सर्वं पूर्वभवसंततिविततमपीति भावः । केन । 'गुणगारववण्णणेण' गुणानां गौरवं महिमा गुणगौरवं तस्य वर्णा-नमुत्कीर्तनं तेन । केषाम् । 'मुणीणं' मुनीनाम् । किंविशिष्टानाम् । 'भरहाईण' भरतः श्रीयुगादिजिनसूनुरादौ येषां ते तथा तेषाम् । केन । 'पवित्ततित्थोदएणंव' पवित्रं पङ्कपटलपिच्छलतारहितं च तत् तीर्थं नद्यादेरवतारस्थानं च पवित्रतीर्थं तस्य उदकं जलं तत्तथा तेनेव । कोऽत्र भावः ? । यथा पवित्रतीर्थोदकेन पापमलो निन्द्यमलः सर्वोऽपि वस्त्रदेहादेः प्रक्षाल्यते केनचित्, तथाहं भरतादिमुनिगणगौरववर्णनेन पापमधर्म्यं कर्म अलमतिशयेनापनयामीति ॥ १ ॥

अधुना भरतगुणान् गाथायुगेनाह—

विहियं वेयावच्चं विहिणा साहूण सुद्धसीलाण । सिरिरिसहसुओ भरहो जाओ भरहाहिवो तेणं ॥ २ ॥

[ विहितं वैयावृत्त्यं विधिना साधूनां शुद्धशीलानाम् । श्रीऋषभसुतो भरतो जातो भरताधिपस्तेन ॥ ]

व्याख्या । श्रीऋषभसुतो भरतो भरताधिपः षट्खण्डभरतक्षेत्रभूमण्डलाखण्डलस्तेन जातः संवृत्तः । यत्तदोर्नित्यसंबन्धित्वाद् येन

[ तीव्रतपःखड्गखण्डितभवपादपविकटप्रकटितप्रभावाः । शरणं नव बलदेवा वरगुणरत्नाकरा मम ॥ ]

व्याख्या । नव च ते बलदेवा नवबलदेवा अचलविजयभद्रसुप्रभसुदर्शनआनन्दनन्दनपद्मरामनामानो बलदेवा राजर्षयो 'मज्झ' मम शरणं 'भवन्तु' इति शेषः । किंविशिष्टाः । 'वरगुणरयणायरा' वराणि निर्दूषणानि च तानि तपोदमजपोद्यमसंयमस्वाध्यायध्यानरूपा गुणा एव रत्नानि तेषामाकरा. प्रभवभूमयः । पुनः किंविशिष्टाः । 'तिव्वतव'-इति पूर्वार्धम्, तीव्रं तीक्ष्णं च तत् तपश्च तीव्रतपस्तदेव खड्गस्तरवारिस्तेन खण्डितश्चासौ भवपादपः संसारतरुश्च स तथा तेन विकटं विपुलं प्रकटितः प्रकाशितः प्रभावो महिमा यैस्ते तथा ॥ २५ ॥

इत्याचार्यश्रीबालचन्द्रविरचितायां विवेकमञ्जरीवृत्तौ चतुःशरणप्रतिपत्ति-

द्वारविवरणं नाम प्रथमः परिमलः समाप्तः ॥

शेषाहिमूलकलितः सुरशैलशाखी ताराप्रसूनकलितोरुदिगन्तशाखः ।
सूर्येन्दुमण्डलफलः स्फुटमेष यावत् तावज्जयं कलयतादिह जैत्रसिंहः ॥ १ ॥



तिस्रो गुप्तयस्तु विश्रुताः । अपि चाभिग्रहा द्रव्यक्षेत्रकालभावभेदैश्चत्वार इत्येकत्र संमीलितं करणमपि सप्ततिधा । पुनः किंविशिष्टो भगवान् गौतमः । 'भयभयहरो' भवात् संसाराद् भयं भवभयं तद् हरत्यपनयतीति भवभयहरः । केषाम् । 'भवियाणं' भविकानामिति ॥ २२ ॥

अथ बाहुल्येन सर्वानपि गणभृतः स्तौति—

सिरिपुंडरीयगोयमपमुहा गणहारिणो महामुणिणो । तिहुयणपणमियचरणा सरणं मम मोहनिट्ठवणा ॥२३॥

[ श्रीपुण्डरीकगौतमप्रमुखा गणधारिणो महामुनयः । त्रिभुवनप्रणतचरणाः शरणं मम मोहनिष्ठापनाः ॥ ]

स्पष्टा ॥ २३ ॥

अथेह भरते द्वादश चक्रिणोऽभूवन्, तेषु च त्रयः शान्तिकुन्थुअरनाथास्तीर्थनाथा अपि बभूवुः । ते तु जिनाधिनाथवीथीषु शरणीकृतपूर्वाः । द्वौ च सुभूमब्रह्मदत्तनामानौ दुर्गतिगतत्वादयोग्यौ । शेषांश्चक्रिराजर्षीन् शरणीकुर्वन्नाह—

भरहो सणंकुमारो सगरो मघवं जओ य हरिसेणो । तह सुपउमो य सत्तवि चक्कवईमुणिवई सरणं ॥२४॥

[ भरतः सनत्कुमारः सगरो मघवा जयश्च हरिषेणः । तथा सुपद्मश्च सप्तापि चक्रवर्तिमुनिपतयः शरणम् ॥ ]

इयमपि सुगमैव ॥ २४ ॥

अथ बलभद्रमुनीन् शरणीकुर्वन्नाह—

तिव्वतवखग्गखंडियभवपायववियडपयडियपहावा । सरणं नव बलदेवा वरगुणरयणायरा मज्झ ॥२५॥

---

१ ग. घ. °मीलने ।

पिंडविसोही समिई भावण पडिमा य इंदियनिरोहो। पडिलेहणगुत्तीओ अभिग्गहा चेव करणं तु॥

तत्र पिण्डादीनां चतुर्णां पिण्डवस्त्रशय्यापात्राणां विशिष्टा शुद्धिः पिण्डविशुद्धिः, यदाहुः;—

" पिंडं वत्थं च सेज्जं च चउत्थं पायमेव य। अकप्पियं न गिण्हिज्जा पडिगाहिज्ज कप्पियं॥"

अपि च। ईर्याभाषैषणादाननिक्षेपोत्सर्गसंज्ञिताः पञ्च समितयः। भावनाश्चानित्यतादयो द्वादश वक्ष्यन्ते। प्रतिमाश्च भिक्षूणां द्वादश। तत्र स्वनामसदृशार्था प्रथमा एकमासिकी, द्वितीया द्विमासिकी, तृतीया त्रिमासिकी, चतुर्थी चतुर्मासिकी, पञ्चमी पञ्चमासिकी, षष्ठी षाण्मासिकी, सप्तमी सप्तमासिकी, अष्टमी नवमी दशमी च सप्तसप्ताहोरात्रिकी, एकादशी तु अहोरात्रिकी, द्वादशी चैकरात्रिकी; यदाहुः

"मासाई सत्तंता पढमा दु तईय सत्तराइंदी। अहराई एगराई, भिक्खुपडिमाण बारसगं॥"

इन्द्रियनिरोधस्तु पञ्चविधः स्पष्टः। प्रतिलेखनाश्च पञ्चविंशतिर्वस्त्रस्य वपुषः पात्रस्य च, तद्यथा,—

"ईग दिट्ठी छप्पुरिमा नव अखोड पखोड वत्थपणवीसा। भुयजुयसिरमुहहियए तिय तिय चउ पुट्ठि छ पय पणवीसा॥
बारस बाहिं ठाणा बारस ठाणा य हुंति मज्झम्मि। पत्तपडिलेहणाए पणवीसयमो करप्फंसो॥"

---

१ पिण्डविशुद्धिः समितिर्भावना प्रतिमा चेन्द्रियनिरोधः। प्रतिलेखनगुप्ती अभिग्रहाश्चैव करणं तु॥

२ पिण्डं वस्त्रं च शय्यां च चतुर्थं पात्रमेव च। अकल्पितं न गृह्णीयात् परिगृह्णीयात कल्पितम्॥

३ मासादयः सप्तान्ताः प्रथमा द्वितीया तृतीया सप्तरात्रिदिवसिकी। अहोरात्रिक्येकरात्रिकी, भिक्षुप्रतिमानां द्वादशकम्॥

४ एका दृष्टिः षट् पूर्वभागा नवेतस्ततो वस्त्रपञ्चविंशतिः। भुजयुगशिरोमुखहृदयस्य त्रयस्त्रयश्चत्वारः पृष्ठस्य षट् पादस्य पञ्चविंशतिः॥
द्वादश बहिः स्थानानि द्वादश स्थानानि च भवन्ति मध्ये। पात्रप्रतिलेखनायां पञ्चविंशतितमः करस्पर्शः॥

" वेयसमणधम्मसंजमवेयावच्चं च बंभगुत्तीओ । नाणाइतियं तवकोहनिग्गहा इइ चरणमेयं ॥ "

तत्र व्रतानि अहिंसानृतास्तेयब्रह्मचर्यापरिग्रहनामानि पञ्च । श्रमणधर्मस्तु क्षान्तिमार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिञ्चन्यब्रह्मचर्यादिभेदैर्दशधा । अन्यच्च पञ्चाश्रवाद् विरमणम्, पञ्चेन्द्रियनिग्रहः, कषायजयः, दण्डत्रयविरतिश्चेति संयमः सप्तदशभेदः । वैयावृत्त्यं त्वाचार्योपाध्यायतपस्विशैक्षग्लानकुलगणसङ्घसाधुसमानाज्ञेषु शुश्रूषाभेदैर्दशधा । अपरं च

" वंसहिकहनिसिज्जिंदियकुड्डंतरपुव्वकीलियपणीए । अइमायाहारविभूसणाइं नव बंभचेरगुत्तीओ ॥ "

ज्ञानादित्रिकं तु विदितम् । तपस्तु बाह्याभ्यन्तरषट्षड्भेदैर्द्वादशधा, यथा,—

"अणसणमूणोयरिया वित्तिसंखेवणं रसच्चाओ । कायकिलेसो संलीणया य बज्झो तवो होइ ॥

पायच्छित्तं विणओ वेयावच्चं तहेव सज्झाओ । झाणं उस्सग्गोवि य अब्भिंतरओ तवो होइ ॥ "

अपि च क्रोधादीनां चतुर्णां कषायाणां निग्रहः क्रोधनिग्रहः । अत्र शाकपार्थिवादिदर्शनाद् मध्यमपदलोपी समास इति संपिण्डितं चरणं सप्ततिधा ।

---

१ व्रतश्रमणधर्मसंयमवैयावृत्त्यं च ब्रह्मचर्यगुप्ती । ज्ञानादित्रिकं तपःक्रोधनिग्रहाविति चरणमेतत् ॥

२ वसतिकथानिषद्येन्द्रियकुड्यान्तरपूर्वक्रीडितप्रणीतम् । अतिमायाहारविभूषणानि नव ब्रह्मचर्यगुप्तयः ॥

३ अनशनमूनोदरिता वृत्तिसंक्षेपण रसत्यागः । कायक्लेशः संलीनता च बाह्य तपो भवति ।

प्रायश्चित्तं विनयो वैयावृत्त्य तथैव स्वाध्यायः । ध्यानमुत्सर्गोऽपि चाभ्यन्तरं तपो भवति ॥

"वुब्भंति नाम भारा तच्चिय वुब्भंति वीसमंतेहिं । सीलभरो वोढव्वो जावज्जीवं अविसामो ॥"

तेन लब्धं माहात्म्यं महिमा यैस्ते तथा । अत एव 'कंदप्पदप्पदलणा' कन्दर्पस्य सुरासुरविजयिनो मन्मथस्य दर्पं गर्वं दलयन्ति चूर्णयन्तीति कन्दर्पदर्पदलनाः । 'तेसिं चलणा' तेषामेवंविधानां गुणरत्नसिन्धूनां साधूनां चलनाः पादाः 'सुहं दिंतु' सुखं समाधानं ददत्विति ॥ २० ॥ २१ ॥

अथासन्नोपकारिणः श्रीवर्धमानविभोः प्रथमगणधरमुपश्लोकयन्नाह—

सिद्धंतसुत्तहारो पयडियवरचरणकरणववहारो । भवियाण भवभयहरो सिरिगोयमगणहरो जयइ ॥२२॥

[ सिद्धान्तसूत्रधारः प्रकटितवरचरणकरणव्यवहारः । भविकानां भवभयहरः श्रीगौतमगणधरो जयति ॥ ]

व्याख्या । श्रिया ज्ञानलक्ष्म्या उपलक्षितो गौतमो गौतमगोत्रसंभवश्चासाविन्द्रभूतिनामा श्रीगौतमगणधरः, जयति सर्वोत्कर्षेण वर्तते । किंविशिष्टः । 'सिद्धंतसुत्तहारो' सिद्धान्तो द्वादशाङ्गं गणिपिटकं तस्य सूत्रं त्रिपदी तां धारयति विस्तारयतीति सिद्धान्तसूत्रधारः; यदुक्तमस्माभिर्गणधरावल्याम्—

"श्रीमाननेकपभटैकपतिर्नवीनः पायादपायगहनाज्जगदिन्द्रभूतिः ।
विस्तार्य मञ्जुलपदत्रीपदीमदीनजातिर्न जातु वत यः शिथिलीचकार ॥"

पुनः किंविशिष्टः । 'पयडियवरचरणकरणववहारो' प्रकटितः प्रकाशितो वरः शुद्धश्चरणकरणयोर्व्यवहारः क्रिया येन स तथा । चरणकरणे च प्रत्येकं सप्ततिधा, यथा;—

१ उह्यन्ते नाम भारास्त एवोह्यन्ते विश्राम्यद्भिः । शीलभरो वोढव्यो यावज्जीवमविश्रामः ॥

अथ गाथायुगलेन साधूनुपश्लोकयति—

अड्ढाइज्जा दीवा पन्नरस तेसु कम्मभूमीओ । जे केवि तत्थ साहू पंचमहव्वयधरा धीरा ॥२०॥
अट्ठारससीलंगसहस्सधुराधरणलद्धमाहप्पा । कंदप्पदप्पदलणा तेसिं चलणा सुहं दिंतु ॥२१॥

[ अर्धतृतीयौ द्वीपौ पञ्चदश तयोः कर्मभूमयः । ये केऽपि तत्र साधवः पञ्चमहाव्रतधरा धीराः ॥
अष्टादशशीलाङ्गसहस्रधुराधरणलब्धमाहात्म्याः । कन्दर्पदर्पदलनास्तेषां चरणाः सुखं ददतु ॥ ]

व्याख्या । 'अड्ढाइज्जा दीवा' "द्विवचनस्य बहुवचनम्" (हे० प्रा० ३।१३०।) इति प्राकृतलक्षणात्, अर्धं तृतीयः पुष्करवरनामा द्वीपो ययोस्तावर्धतृतीयौ द्वीपौ धातकीखण्डजम्बूनामानौ 'पन्नरस तेसु कम्मभूमीओ' कर्मणां शुभानामशुभानामपि भूमयो जन्मस्थानानि कर्मभूमयः । तत्र जनितानि किमुच्यन्ते, अन्यत्रोपार्जितान्यपि कर्माणि तासूत्पद्य जीवैर्भोगभूमिगतैरुपभुज्यन्त इति । क सन्ति ताः । 'तेसु' तयोरर्धतृतीययोर्द्वीपयोः । कति । 'पन्नरस' पञ्चपञ्चभरतैरवतमहाविदेहसंज्ञिताश्च ताः पञ्चदश । 'जे केवि तत्थ साहू' ये केऽप्यनिर्वचनीयमहिमानस्तत्र साधवो मुनयः सन्ति । किंविशिष्टाः । 'पंचमहव्वयधरा' पञ्चमहाव्रतधराः । अत एव धीरा धिया बुद्ध्या राजन्त इति धीराः । पुनश्च किंरूपाः । 'अट्ठारससीलंगसहस्सधुराधरणलद्धमाहप्पा' शीलानि सच्चरितानि तेषामङ्गान्यवयवाः शीलाङ्गानि, तेषां सहस्राः शीलाङ्गसहस्राः, अष्टादश ते च शीलाङ्गसहस्राश्च अष्टादशशीलाङ्गसहस्राः । तथाच वाचकः[1]—

"धर्माद् भूम्यादीन्द्रियसंज्ञाभ्यः करणतश्च योगाच्च । शीलाङ्गसहस्राणामष्टादशकस्य निष्पत्तिः" ॥

इति । तेषां धुर्भारोऽष्टादशशीलाङ्गसहस्रधुरा, तस्या धरणं यावज्जीवमुद्वहनम्, यदाहुः—

---

१ प्रशमरतिप्रकरणे गाथा २४४ ।

सिरिउसभवद्धमाणयचंदाणणवारिसेणनामाणो । सासयजिणालयेसुं वंदे हं सासए जिणिंदे ॥ १५ ॥

[ श्रीऋषभवर्धमानचन्द्राननवारिषेणनाम्नः । शाश्वतजिनालयेषु वन्देऽहं शाश्वताञ्जिनेन्द्रान् ॥ ]

स्पष्टा ॥१५॥

अथ गाथायुगेन विहरमाणानर्हतः स्तौति;—

पुव्वविदेहे सीमंधरसामी विहरमाणतित्थयरो । अवरविदेहे जुगमंधरसामी मम सिवं दिसउ ॥ १६ ॥

मुक्खपहं पयडंतो वाहुजिणिंदो तहा सुवाहू य । अन्नेवि अरहंता हरंतु दुरिआइं विहरंता ॥ १७ ॥

[ पूर्वविदेहे सीमन्धरस्वामी विहरमाणतीर्थकरः । अपराविदेहे युगमन्धरस्वामी मम शिवं दिशतु ॥

मोक्षपथं प्रकटयन् वाहुजिनेन्द्रस्तथा सुवाहुश्च । अन्येऽप्यर्हन्तो हरन्तु दुरितानि विहरन्तः ॥ ]

इमे अपि सुगमे ॥ १६ ॥ १७ ॥

अथ तीर्थानि शाश्वतान्यशाश्वतान्यपि गाथाद्वयेन वन्दते;—

नंदीसरअट्ठावयसत्तुंजयउज्जयंतसम्मेअ—पमुहाइं अहं वंदे तित्थाइं परमभत्तीए ॥ १८ ॥

सासयजिणालयाइं असासयाइंपि जाइं सव्वाइं । उड्ढमहतिरियलोए तेसिं पणमामि भावेणं ॥ १९ ॥

[ नन्दीश्वराष्टापदशत्रुञ्जयोज्जयन्तसम्मेत—प्रमुखान्यहं वन्दे तीर्थानि परमभक्त्या ॥

शाश्वतजिनालयान्यशाश्वतान्यपि यानि सर्वाणि । ऊर्ध्वाधस्तिर्यग्लोके तानि प्रणमामि भावेन ॥ ]

स्पष्टे ॥ १८ ॥ १९ ॥

सिद्धाश्च मङ्गलं सर्वे साधवो मङ्गलमुत्तमम् । धर्मः केवलिप्रज्ञप्तः सर्वजीवानां मङ्गलम् ॥
अर्हन्तो लोकोत्तमाः सिद्धा लोकोत्तमास्तथा । साधवो लोकोत्तमा एष धर्मो लोकानामुत्तमः ॥
अर्हन्तो मम शरणं शरणं सिद्धाश्च साधवः शरणम् । धर्मः करुणारम्यः शरणं जिननाथनिर्दिष्टः ॥ ]

सुगमाः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

अथेह भरतभुवो वर्तमानान्, अतीतान, अनागतांश्च जिनान् गाथाचतुष्टयेन शरण्यत्वेन प्रतिपद्यते; यथा—

सिरिरिसहअजियसंभवअभिनंदणसुमइपउमपहनाहा । जिणवरसुपासचंदप्पहसुविहिसीअलसिज्जंसा ॥ ११ ॥
वासुपुज्जविमलसामिअणंतपहुधम्मसंतिकुंथुजिणा । अरमल्लिसुव्वयनमी नेमी पासो अ वद्धमाणो अ ॥ १२ ॥
इअ चउवीसं तिहुयणनमंसिआ वट्टमाणतित्थयरा । केवलनाणदिणेसा हरंतु मम मोहतिमिरोहं ॥ १३ ॥
केवलनाणिपमुहा अईअतित्थंकरा य चउवीसं । तह पउमनाहपमुहा मम सरणमणागया अरिहा ॥ १४ ॥

[ श्रीऋषभाजितसंभवाभिनन्दनसुमतिपद्मप्रभनाथाः । जिनवरसुपार्श्वचन्द्रप्रभसुविधिशीतलश्रेयांसाः ॥
वासुपूज्यविमलस्वाम्यनन्तप्रभुधर्मशान्तिकुन्थुजिनाः । अरमल्लिसुव्रतनमयो नेमिः पार्श्वश्च वर्धमानश्च ॥
इति चतुर्विंशतिस्त्रिभुवननमस्यिता वर्तमानतीर्थकराः । केवलज्ञानदिनेशा हरन्तु मम मोहतिमिरौघम् ॥
केवलज्ञानिप्रमुखा अतीततीर्थङ्कराश्च चतुर्विंशतिः । तथा पद्मनाभप्रमुखा मम शरणमनागता अर्हन्तः ॥ ]

इमा अपि सुगमाः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

अथ शाश्वतस्थापनार्हतः स्तौति,—

एषा 'कायव्वा मणसोही' मन शुद्धिः कार्या, तपःश्रुतयमप्रायैः किमन्यैः कायदण्डैनैरिति भावः। यथा किम् । 'न होइ जह दुल्लहा वोही' यथा वोधिर्जिनधर्मावाप्तिर्न दुर्लभा भवतीति ॥ ५ ॥

अथ मनःशुद्धिकारणान्याह--

चउसरणे पडिवत्ती सम्मं अणुमोअणा गुणाण तहा। दुक्कडगरिहा तह भावणा य मणसुद्धिवीआइं ॥ ६ ॥

[ चतुःशरणस्य प्रतिपत्तिः सम्यगनुमोदना गुणानां तथा। दुष्कृतगर्हा तथा भावना च मनःशुद्धिवीजानि ॥ ]

व्याख्या। चतुर्णामर्हत्सिद्धसाधुकेवलिप्रज्ञप्तधर्माणां शरणं चतुःशरणं, तस्य प्रतिपत्तिः स्वीकारः । प्राकृतत्वात् सप्तमी षष्ठ्यर्थे। 'सम्मं अणुमोअणा गुणाण तहा' तथा सम्यग् मनोवाक्कायकर्मभिरिति भावः, अनुमोदना अनुस्मरणम्। केषाम्। गुणानां सत्यशौच-तपस्त्यागाकिञ्चन्यब्रह्मचर्यादीनाम्। तथा 'दुक्कडगरिहा' दुष्कृतानां पापानां गर्हा निन्दा सा। तथा 'भावणा य' भावना द्वादशधा सा। चः समुच्चये। एतानि चत्वार्यपि 'मणसुद्धिवीयाइं' मनःशुद्धेर्वीजानि कारणानीति भाव इति ॥ ६ ॥

चत्वार्येतानि प्रकरणेऽत्र द्वाराणि, तत्रादौ चतुःशरणप्रतिपत्तिद्वारं गाथाचतुष्केणाह—

निट्ठवियअट्ठकम्मा देसियदुल्लक्खमुक्खपुरमग्गा। तेल्लुक्कपरमबंधू अरहंता मंगलं पढमं ॥ ७ ॥

सिद्धा य मंगलं सव्वे साहू मंगलमुत्तमं। धम्मो केवलिपन्नत्तो सव्वजीवाण मंगलं ॥ ८ ॥

अरहंता लोगुत्तमा सिद्धा लोगुत्तमा तहा। साहू लोगुत्तमा एसो धम्मो लोगाणमुत्तमो ॥ ९ ॥

अरहंता मम सरणं सरणं सिद्धा य साहुणो सरणं। धम्मो करुणारम्मो सरणं जिणनाहनिद्दिट्ठो ॥ १० ॥

[ निष्ठापिताष्टकर्माणो देशितदुर्लक्षमोक्षपुरमार्गाः। त्रैलोक्यपरमबन्धवोऽर्हन्तो मङ्गलं प्रथमम् ॥

स

" भावे खओवसमिए दुवालसगंपि होइ सुयनाणं । केवलियनाणलंभो नन्नत्थ खए कसायाणं ॥ " इति ॥ ३ ॥

इह निसर्गमधुरमपि वस्तु कियतापि विभूषणेन विना न चमत्करोतीति, अतस्तस्य विभूषणमाह,—

तस्स विभूसणमेगं मणसुद्धी मंजरीव रुक्खस्स । तीइ समिद्धो एसो सुहफलरिद्धिं पयच्छेइ ॥ ४ ॥

[ तस्य विभूषणमेकं मनःशुद्धिर्मञ्जरीव वृक्षस्य । तया समृद्ध एष सुख(शुभ)फलर्द्धिं प्रयच्छति ॥ ]

व्याख्या । 'तस्य विवेकस्य एकमसाधारणं विभूषणमलंकरणम् । का । 'मणसुद्धी' मनसः शुद्धिर्मनःशुद्धिः कृष्णनीलकापोतलेश्यात्रितयकलङ्कपङ्करहितात्मसमुत्थमतिशयतश्चेतसो नैर्मल्यमिति भावः । केव । मञ्जरीव पुष्पगुच्छ इव । कस्य । ' रुक्खस्स ' वृक्षस्य । न केवलमियं मनःशुद्धिर्विवेकस्य वृक्षस्येव मञ्जरी विभूषणमात्रम्, किन्तु 'तीइ समिद्धो एसो ' तया मनःशुद्ध्या एष विवेकः समृद्धः सन् 'सुहफलरिद्धिं' सुखानि राज्यस्वर्गापवर्गसंभवानि, तान्येव फलानि तेषामृद्धिः संपत् सुखफलर्द्धिस्तां ' पयच्छेइ ' प्रयच्छति । वृक्षस्तु मञ्जर्या समृद्धः शुभफलर्द्धिं परिपाकपेशलफलस्फातिं प्रयच्छतीति गतम् ॥ ४ ॥

अथ सर्वोपदेशसंग्रहकारिकामाह—

तम्हा खलु आयहियं चिंततेणं विवेगिणा एसा । कायव्वा मणसोही न होइ जह दुल्लहा बोही ॥ ५ ॥

[ तस्मात् खल्वात्महित चिन्तयता विवेकिनैषा । कर्तव्या मनःशुद्धिर्न भवति यथा दुर्लभो बोधिः ॥ ]

व्याख्या । तस्मात् पूर्वोपदिष्टाद् हेतोः खलु निश्चितं 'आयहियं' आत्महितं स्वपथ्यम्, यद्वा, आयो ज्ञानादीनां लाभस्तस्मै हितं आयहितं,'चिंततेणं' चिन्तयता विमृशता विवेकिना विवेको रागद्वेषादिदोषेभ्यः पृथग्भावरूपो गुणो विद्यते यस्य स विवेकी तेन 'एसा'

१ भावे क्षायोपशमिके द्वादशाङ्गमपि भवति श्रुतज्ञानम् । कैवल्यज्ञानलाभो नान्यत्र क्षयात् कषायाणाम् ॥

दोषेभ्यः पृथग्भावरूपो निरन्तरान्तरतिमिरभरसंहरणप्रवणः प्रदीपो येषां ते तथा। भ्रंशश्चेह विश्लेषः । स च द्विविधः, असंपत्तौ प्रथमः, द्वितीयश्च कषायविषयविनिर्मितविहस्ततया विश्रस्तत्वलक्षण इति ॥ २ ॥

अधुना विवेकस्यैवान्वयेन माहात्म्यमुन्मीलयंस्तस्यैव हेतुमाह—

इह जीवाण विवेगो परमं चक्खू अकारणो बंधू । जइ कहमवि पाविज्जइ असरिसकम्मक्खओवसमा ॥ ३ ॥

[ इह जीवानां विवेकः परम चक्षुरकारणो बन्धुः । यदि कथमपि प्राप्यतेऽसदृशकर्मक्षयोपशमात् ॥ ]

व्याख्या। इहास्मिन् जगति जीवानां विवेकः परमं चक्षुः प्रकृष्टं लोचनम्, यदुक्तम्;—

"एकं हि चक्षुरमलं सहजो विवेकस्तद्वद्भिरेव सह संवसतिर्द्वितीयम्।
एतद्द्वयं भुवि न यस्य स तत्त्वतोऽन्धस्तस्याप्यमार्गचलने वद कोऽपराधः ? ॥"

तथा, अकारणो बन्धुः कारणनिरपेक्षः स्वजनः । बन्धुर्हि कारणमन्तरेण न कोऽपि सौजन्यभङ्गीमङ्गीकरोति, यदुक्तमस्माभिः सूक्तपङ्क्तौ—

"पद्माश्रय इति पद्मं धिनोति कुमुदं न यदब्जबन्धुरपि । अब्जत्वे तुल्येऽपि हि तज्ज्ञातिः कारणात्मैव ॥"

एवंविधो विवेकः 'जइ कहमवि पाविज्जइ' यदि कथमपि प्राप्यते, तदानीं 'असरिसकम्मक्खओवसमा' असदृशोऽनन्यसामान्यः कर्मणां मिथ्यात्वमोहनीयादीनामुदीर्णानां क्षयः, अनुदीर्णानां चोपशमः, क्षयेण युक्त उपशम. क्षयोपशमस्तस्मात्। विवेको हि श्रुतज्ञानभावना-समुत्थः। तच्च श्रुतज्ञानं क्षायोपशमिकभावनासंभवम्। यदाहु;—

तत्र सार्थो भव्यसत्त्वसंघातस्तं वाहयति प्रापयतीति सिद्धिपुरसार्थवाहस्तम् । भगवतः सार्थवाहत्वे निरूपणमिदमतिविशदमागमानुगामि, यदाहु• श्रीभद्रबाहुस्वामिपादाः—

" पांविति निव्वुइपुरं जिणोवइट्ठेण चेव मग्गेण । अडवीइ देसियत्तं एवं नेयं जिणिंदाणं ॥ "

सार्थवाहत्वे चास्य सामर्थ्यं नाम्नैव प्रकाशयति । किंनामानम् । वीरम् 'ईर गतौ कम्पने च' इत्यनेन विपूर्वेण विशेषेण ईरयति कम्पयति भावशत्रूनिति वीरस्तम् । भगवतः सत्स्वपि वर्धमानेतिप्रभृतिषु नामसु 'वीरम्' इत्यतः साभिप्राया कवेरुक्तिरिति । अत्राभिधेयं विवेकमञ्जरीप्रकरणम् । संबन्धो वाच्यवाचकरूपः, वाच्या उपदेशाः, वाचको ग्रन्थः । प्रयोजनं च कर्तुरिह महती कीर्तिः, श्रोतुश्च तत्त्वपरिज्ञानम् । उभयोरपि परम्पराफलं मुक्तिरिति ॥ १ ॥

अथ प्रतिज्ञातावतारणाय परमार्थसंपत्तावौपयिकमेकं विवेकं व्यतिरेकतः प्रस्तुवन्नाह;—

दुट्ठट्ठकम्मवसगा भमंति भीमे भवम्मि निस्सीमे । भट्ठविवेगपईवा जीवा न मुणंति परमत्थं ॥ २ ॥

[ दुष्टाष्टकर्मवशगा भ्रमान्ति भीमे भवे निःसीमे । भ्रष्टविवेकप्रदीपा जीवा न जानन्ति परमार्थम् ॥ ]

व्याख्या । जीवाः प्राणिनो भ्रमन्ति भ्राम्यन्ति पादावर्तवदूर्ध्वाधः कुलालचक्रवच्च तिर्यगनवस्थिता भवन्ति । क्व 'भवम्मि' भवे चतुर्गतिरूपे संसारे । किंविशिष्टे । 'निस्सीमे' न विद्यते सीमा पर्यन्तो यस्यासावसीमा तस्मिन् । अत एव भीमे भयंकरे । भ्रमणे च तत्र तेषां विशेषणेन पारतन्त्र्यमाह 'दुट्ठट्ठकम्मवसगा' दुष्टानि निष्कृपाणि च तान्यष्टौ कर्माणि ज्ञानावरणदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रान्तरायनामानि, तेषां वशगा आयत्ताः । न केवलं भ्राम्यन्तीति तेषां शोच्यम्, किन्तु 'न मुणंति' न जानन्तीत्यपि । कम् । 'परमत्थं' परमः पूज्यः शाश्वतानन्दमयमुक्तिपुरीपथरूपोऽर्थः परमार्थस्तम् । तदज्ञाने च तेषां विशेषणेन कारणमाह 'भट्ठविवेगपईवा' भ्रष्टो विवेको रागद्वेषमोहादि-

---

१ प्राप्नुवन्ति निर्वृतिपुरं जिनोपदिष्टेनैव मार्गेण । अटव्यां देशिकत्वमेव ज्ञेयं जिनेन्द्राणाम् ॥

ते वः शिवश्रियमपश्चिमतीर्थनाथपादारविन्दनखचन्द्रमसो दिशन्तु ।
कामं कलङ्कविकलाः सकलाङ्कसिंहभीप्रोषितोदरमृगा इव ये विभान्ति ॥ ५ ॥
नम्रासुरत्रिदशकोटिकिरीटकोटिशाणानिशातपदपद्मनखेन्दुकान्ताः ।
कान्तानि वः शिवसुखानि दिशन्तु शश्वदन्येऽपि तीर्थपतयोऽजितनाथमुख्याः ॥ ६ ॥
मोहान्धकारधिक्कारदीपिका मुक्तिवर्त्मनि । विवेकमञ्जरीवृत्तिरियं निर्वर्त्यते मया ॥ ७ ॥

इह हि महितगुणमहिमकुमुदहिमकरस्य मकरकेतुबाणवित्रस्तसमस्तजनपरित्राणवज्रपञ्जरस्य गूर्जरवसुन्धरावदनमण्डलमण्डली-नगरमण्डनश्रीमहावीरचैत्यप्रतिष्ठाकृतः सुकृतचरितचमत्कृतदेवेन्द्रस्य श्रीदेवेन्द्रगुरुस्वहस्तस्वपदविनिवेशितस्य भुवनभद्रंकरस्य श्रीभद्रेश्वरसूरिगुरोः पट्टनभस्तलालंकरणकिरणमालिना प्रतिवादिदैत्यदमनसौरिणा श्रीमदभयदेवसूरिणा समुपदिष्टसकलसर्वज्ञसिद्धान्तसारः संसार-वैराग्यरसप्रसरपुष्टचेताः शिष्टसमयसरसिजवनीविकाशनैकरविश्रीमदासडकविः कविसभाशृङ्गार इत्यपरनामधेयः श्रेयःप्रवृत्तिसुभगंभावुक-भविकजनचक्रप्रमोदसंपादनच्छेकरुचिर्विवेकमञ्जरीप्रकरणकरणमभीष्टदेवतानमस्कारपुरस्सरं प्रतिजानीते, यथा—

सिद्धिपुरसत्थवाहं वीरं नमिऊण चरिमजिणनाहं । सवणसुहारससरिअं वुच्छामि विवेगमंजरिअं ॥ १ ॥

[ सिद्धिपुरसार्थवाहं वीरं नत्वा चरमजिननाथम् । श्रवणसुधारससरितं वक्ष्यामि विवेकमञ्जरीम् ॥]

व्याख्या । अहं विवेकमञ्जरीं वक्ष्यामीति संबन्ध. । किंविशिष्टाम् । 'सवणसुहारससरिअं' श्रवणयोः कर्णयोर्विषयवार्ताविषम-विषसमुच्छलितातुच्छमूर्च्छाविच्छेदकत्वात् सुधारससरिद् अमृतनदी ताम् । किं कृत्वा । 'नमिऊण' नत्वा । कम् । 'चरिमजिणनाहं' चरमश्चासौ जिननाथश्च चरमजिननाथश्चतुर्विंशतितमस्तीर्थनाथस्तम् । किंविशिष्टम् । 'सिद्धिपुरसत्थवाहं' सिद्धिरेव पुरं मुक्तिरेव नगरं

सटीका ।

॥१॥

॥ अर्हम् ॥

श्रीबालचन्द्रसूरिविरचितवृत्तिसमुपेता

श्रीआसडकविकृता

# विवेकमञ्जरी ।

श्रीनाभिनन्दनविभोर्वदनं मुदेऽस्तु श्रीशारदासदनमक्षिगवाक्षरम्यम् ।
स्कन्धाचलोपरिकलश्रुतिदोलयोर्यत्पर्यन्तयोरुपवनीयति कुन्तलाली ॥ १ ॥
देवाधिदैवतमतीव ततानि शान्तिः श्रेयांसि वो दिशतु संहृतविश्वतान्तिः ।
यत्पादयोर्नखरुचः प्रणतेषु शान्तितोयच्छटात्वमरुणाच्छवयः प्रयान्ति ॥ २ ॥
मर्यादयापि कलितः प्रियनिम्नगोऽसौ कुग्राहवानतिगभीरपयोऽन्वितोऽपि ।
हित्वा समुद्रमिति कम्बुरगाद् यदङ्कं स श्रीजिनो वृजिनमस्यतु शङ्खलक्ष्मा ॥ ३ ॥
निर्मेघमेघपथमेचकदेहधामा वामासुतः स भवताद् भवतां विभूत्यै ।
यन्मौलिसीम्नि ऋषिमण्डलसप्तसप्तेः सप्तापि सप्तय इवाहिफणाः स्फुरन्ति ॥ ४ ॥

श्रीजैनशासननभोऽङ्गणभानुमाली
क्षान्त्याद्यनल्पगुणरत्ननिवासभूमिः ।
विद्यावदातहृदयो विजयं विभर्तु
सूरीश्वरो विजयवीर इति प्रसिद्धः ॥



जैनाचार्य्य—श्रीमद विजयवीर सूरीश्वरजी महाराज ।

जैनाचार्य श्रीविजयवीर सूरीश्वरजी म

| | | |
|---|---|---|
| जन्म | संवत् | १९२६ |
| दीक्षा | ,, | १९४६ |
| गणिपद | ,, | १९६१ |
| पंन्यासपद | ,, | १९६१ |
| सूरिपद | ,, | १९७२ |

जैन-विविध-साहित्य-शास्त्र-माला (६)

श्रीबालचन्द्रसूरिप्रणीतवृत्तिसमुपेता श्रीआसडकविविरचित

# विवेकमञ्जरी ।

## ( प्रथमो भागः )

गुर्जरदेशान्तर्गतराजधन्यपुरवास्तव्येन श्रेष्ठित्रिकमचन्द्रतनुजेन कलिकाताविश्वविद्यालये संस्कृतप्राकृताध्यापक-परीक्षकेण
न्याय-व्याकरणतीर्थपदवीकेन पण्डितहरगोविन्ददासेन संशोधिता संस्कृतच्छायया विभूषिता च ।



जैनाचार्यश्रीविजयवीरसूरीश्वरोपदेशेन आर्थिकसाहाय्यकर्ता आग्रानिवासी "श्रेष्ठी लक्ष्मीचन्द्र वेद"

वीर संवत् २४४५ मूल्यं रूप्यकद्वयम् । विक्रमसंवत् १९७५

